ह्येकाग्र आसीदिति वाक्येन ब्रह्म वा इदमग्र आसीदित्यादिसर्ववाक्यार्थसिद्धान्तमेव बोधितम् ॥ ७ ॥ परंपराक्रमेणापि सर्वकारणं शक्तेरेवेति हयग्रीवः ॥ ८ ॥

इति श्रीशाक्तदर्शने द्वादशाध्यायस्य चतुर्थः पादः ॥

द्वादशोध्यायः समाप्तः ॥

---

## अथ त्रयोदशोध्यायः ॥

चतुष्टयवैराग्यसंपन्नो योगाधिकारी ॥१॥ श्रवणमननसंपन्नाष्टाङ्गेन निर्विकल्पम् ॥ २ ॥ रहितः श्रवणादिषु ॥ ३ ॥ वैराग्ययोगी त्रिधा ॥४॥ हठराजमन्त्रयोगीति ॥५॥ हठमार्गादष्टाङ्गपरो हठयोगी ॥ ६ ॥ राजमार्गाद्राजयोगी ॥ ७ ॥ मन्त्रमार्गान्मन्त्रयोगी ॥ ८ ॥ यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसविकल्प-

---

प्रतिपादकानि । वस्तुतः शक्तिरेव निर्गुणं परं तत्त्वं देवी ह्येकाग्र आसीदिति वाक्येन बोध्यते । निर्गुणेयं शक्तिः साक्षिरूपात्मानि वर्तमाना सगुणा भवति। ततोनन्तरं चिदाभासयुतेश्वरी शक्तिरिति कथ्यते व्यक्तप्रपञ्चकारणं च भवति ।।

इति बादरिमतनिरासो नाम द्विषष्टितमं प्रकरणम् ॥

अथ शक्तिब्रह्मज्ञानसाधनं योगमाह—**चतुष्टयवैराग्यसंपन्न इति** । स्त्रियोन्नं पानमैश्वर्यमिति चत्वारि वस्तूनि चतुष्टयशब्देनाभिप्रेतानि । एतद्विषये वीतरागस्यैव योगाधिकार इति भावः । **श्रवणमननेति** । यमनियमासनेत्यादीन्यष्ट योगाङ्गानि प्रसिद्धान्येव । श्रवणमननाभ्यां सहितैरेतैरष्टभिरङ्गैः संपन्नो योगी निर्विकल्पस्य समाधेरधिकारी भवति । अनन्तरं श्रवणादीन्यप्यनपेक्षमाणो वैराग्ययोगी भवति । स च त्रिप्रकारः । हठयोगी राजयोगी मन्त्रयोगीति ॥

इति योगिप्रकारत्रयनिरूपणं नाम त्रिषष्टितमं प्रकरणम् ॥

अथाष्टाङ्गयोगं निरूपयति—**यमनियमेति** । एतान्यष्टाङ्गानि योगशास्त्रे प्रसिद्धानि ( पात. यो. सू. २।२९ ) । एषां स्वरूपमग्रे एव स्फुटीभविष्यति ।

समाधयोऽष्टाङ्गानि योगस्य ॥ ९ ॥ राजयोगस्तमः ॥ १० ॥ सर्वं खल्विदं ब्रह्मेति विषयेभ्य इन्द्रियनिग्रहो यमः ॥ ११ ॥ अन्तःकरणवृत्तिं प्रपञ्चान्निगृह्य ब्रह्मविषयीकरणं नियमः ॥ १२ ॥ सुखेन ब्रह्मचिन्तनप्रदस्थितिरासनम् ॥ १३ ॥ चित्तादिसर्वभावान् ब्रह्मभावनद्वारा निरोधः प्राणायामः ॥ १४ ॥ अहं ब्रह्मेति वृत्तिः पूरकः ॥ १५ ॥ अनात्मप्रपञ्चनिषेधो रेचकः ॥ १६ ॥ अखण्डाकारवृत्त्या निश्चलस्थितिः कुम्भकः ॥ १७ ॥ शब्दादिविषयेष्वप्यात्मदर्शनं प्रत्याहारः ॥ १८ ॥ मनोविषयेषु ब्रह्मदर्शनानुसंधानं धारणा ॥ १९ ॥ अहं ब्रह्म इत्यखण्डाकारवृत्त्यां निश्चलस्थितिर्ध्यानम् ॥ २० ॥ त्रिपुटिराहित्याखण्डाकारवृत्तिः समाधिः ॥ २१ ॥

इति श्रीशाक्तदर्शने त्रयोदशाध्यायस्य प्रथमः पादः ॥

अथ द्वितीयः पादः

विषयेभ्यश्चित्तवृत्तिनिरोधो योगः ॥ १ ॥ चित्तं पञ्च ॥ २ ॥

---

**राजयोगस्तमः** । पाठभ्रंशोत्र दृश्यते । तमः इति शब्दस्य कोर्थोभिप्रेत इति न ज्ञायते । नान्धकारवाचित्वम् । तम इति तमप्प्रत्ययसादृश्येन श्रेष्ठवाचीति भाति । तथा च राजयोगः सर्वश्रेष्ठ इति भावः । तस्य स्वरूपं यमादिभिरङ्गैर्निदर्शयति— **सर्वं खल्विदमिति** । सर्वं खल्विदं ब्रह्मेति निष्ठासंपन्नस्य बाह्येन्द्रियनिग्रहो यमः । अत्र सर्वत्र यमनियमादयो योगशास्त्रे व्याख्याता गृह्यन्ते । ( पात. यो. सू. २।३०–३।३ ) तेषु च प्रत्येकमपेक्षिता अन्तःकरणवृत्तयस्तत्र तत्र वर्ण्यन्ते । ताश्च यमनियमादिशब्दानां व्याख्यात्वेन कथ्यन्ते । **त्रिपुटिराहित्यादिति** । त्रिपुटीनिरासस्वरूपं मण्डलब्राह्मणोपनिषदि द्रष्टव्यम् ॥

इति राजयोगनिरूपणं नाम चतुःषष्टितमं प्रकरणम् ॥

अथ सामान्येन योगस्वरूपं निरूपयति—**विषयेभ्य इति** । योगश्चित्तवृत्तिनिरोध इति तु सर्वमान्या सामान्या योगशब्दस्य व्याख्या (पा. यो. सू. १।२) **चित्तं पञ्चेति** । चित्तशब्देनात्र चित्तवृत्तयो लक्ष्यन्ते । ताश्च प्रमाणविपर्यय-

**क्षेपमूढयोर्नाधिकारो योगे ॥ ३ ॥ अभ्यासयोगमयो विक्षेपः ॥ ४ ॥ एकाग्रभूमिकामयो भुवनराजः ॥ ५ ॥ गुदमेढ्रान्तरालगो मूलवह्निः ॥ ६ ॥ मूलप्रकृतिमय आधारः ॥ ७ ॥ साभासा शक्तिर्ब्रह्मरन्ध्रे ॥ ८ ॥ आधारे व्यावहारब्रह्म गणपतिः ॥ ९ ॥ राजसस्थाने नाभौ ब्रह्मा ॥ १० ॥ हृदि सत्त्वे विष्णुः ॥ ११ ॥ द्दक्चक्रे तामसो रुद्रः ॥ १२ ॥ ब्रह्मरन्ध्रे परा शक्तिः ॥ १३ ॥ मणिपूरे वा विष्णुः ॥ १४ ॥ अनाहते रुद्रः ॥ १५ ॥ विशुद्धयां जीवसाक्षी ॥ १६ ॥ आज्ञाया-मीशसाक्षी ॥ १७ ॥ ब्रह्मरन्ध्रे परा शक्तिः ॥ १८ ॥ ध्यानसिद्धया समाधिम् ॥ १९ ॥ सविकल्पान्निर्विकल्पम् ॥ २० ॥ तत्सिद्धो मुक्तः ॥ २१ ॥**

**इति श्रीशाक्तदर्शने त्रयोदशाध्यायस्य द्वितीयः पादः ॥**

---

विकल्पनिद्रास्मृतिरूपाः पञ्च ( पा. यो. सू. १।६ )। **क्षेपमूढयोरिति**। क्षेप-शब्देनात्र चित्तस्य क्षिप्तावस्थोच्यते यस्यां चित्तं स्वोपसर्जनरजस्तमःसंसर्गा-दणिमाद्यैश्वर्यशब्दादिविषयानुरक्तं भवति यथा दैत्यदानवादीनाम्। तच्च यदा आभिभूतरजस्कतमसानुविद्धं भवति तदा मूढावस्थमित्युच्यते। यथा रक्षः-पिशाचादीनाम्। तदेव चित्तं यदा प्रक्षीणतमस्करजोमात्रासंसर्गात्सर्वविषयाकार-वृत्तिमद्धर्मज्ञानवैराग्यैश्वर्यप्रियं तदा विक्षिप्तावस्थमित्युच्यते। एकाग्रं चित्तं भुवनराज इत्युच्यते। अत्र चित्तस्य चतस्र एवावस्था उच्यन्ते। पातञ्जलयोग-सूत्रवृत्तौ नागेशभट्टैः क्षिप्तं मूढं विक्षिप्तमेकाग्रं निरुद्धमिति चित्तस्य पञ्चावस्था उक्ताः ( योगसूत्रवृत्तिः १।२ )॥

इति चित्तावस्थानिरूपणं नाम पञ्चषष्टितमं प्रकरणम् ॥

अधुना देहस्थितषट्चक्रनिरूपणं प्रस्तौति--**गुदमेढ्रान्तरालग** इति। मूलाधारस्वाधिष्ठानमणिपूरानाहतविशुद्धाज्ञानामानि षट् चक्राणि योगशास्त्रे प्रसिद्धानि। तत्र मूलाधारं गुदमेढ्रयोर्मध्ये पृथ्वीतत्त्वकं पीतवर्णं गन्धगुणं वशष-सरूपं चतुर्दलं चक्रम्। स्वाधिष्ठानं मेढ्रस्योपरिवर्तमानं जलतत्त्वकं शुभ्रवर्णं रस-

अथ तृतीयः पादः ॥

**नानासिद्धिदो हठयोगः ॥ १ ॥ अहिंसाद्या यमा दश ॥ २ ॥ यज्ञव्यतिरिक्तविषयेषु हिंसावर्जनमहिंसा ॥ ३ ॥ दृष्टश्रुतज्ञानोक्तिः सत्यम् ॥ ४ ॥ पारकीयनिवृत्तिरस्तेयम् ॥ ५ ॥ परस्त्रीवर्जनं ब्रह्मचर्यम् ॥ ६ ॥ भूतानुज्ञा दया ॥७॥ शत्रुमित्रैकस्थितिरार्जवम् ॥८॥ शत्रुपीडायामपि क्षोभनिवृत्तिः क्षमा ॥ ९ ॥ विज्ञाननिष्पत्तिर्धृतिः ॥ १० ॥ त्रिभागोदरभोजनं मिताहारः ॥ ११ ॥ स्वदेहमलमोचनं**

---

गुणं बभमयरलरूपं षड्दलं चक्रम् । तृतीयं मणिपूरं नाभिदेशे स्थितं तेजस्तत्त्वकं रक्तवर्णं रूपगुणं डादिदशवर्णरूपं दशदलम् । चतुर्थमनाहतं हृद्देशे स्थितं वायुतत्त्वकं धूसरवर्णं स्पर्शगुणं कादिद्वादशवर्णरूपं द्वादशदलम् । पञ्चमं विशुद्धं कण्ठदेशे स्थितमाकाशतत्त्वकं शुभ्रवर्णं शब्दगुणं षोडशस्वररूपं षोडशदलम् । षष्ठमाज्ञाचक्रं भ्रुवोर्मध्ये स्थितं मनोवृत्तिरूपं हक्षवर्णात्मकं द्विदलम् । ब्रह्मरन्ध्रं तु सर्वेषामेषां षट्चक्राणामुपरि मूर्ध्नि स्थितम् । तत्र ब्रह्मरन्ध्रे साभासा शक्तिः । मूलाधारे गणपतिर्व्यावहारिकब्रह्मरूपः । नाभिचक्रे मणिपूरे ब्रह्मा । अनाहतचक्रे हृदि विष्णुः । दृक्चक्रे रुद्रस्तामसः । अथवा केषांचिन्मतेन ब्रह्मरन्ध्रे परा शक्तिः । आज्ञायामीशः साक्षी । विशुद्धौ साक्षी जीवः । अनाहते रुद्रः । मणिपूरे च विष्णुः । ध्यानसिद्ध्या सविकल्पः समाधिस्ततो निर्विकल्पः । निर्विकल्पकसमाधिसिद्धिरेव मुक्तिः ॥

इति षट्चक्रनिरूपणं नाम षट्षष्टितमं प्रकरणम् ॥

अथ हठयोगस्वरूपमाह—**नानासिद्धिदो हठयोगः** । नानासिद्धिद इति पदं हठयोगस्य वैशिष्ट्यं प्रतिपादयति । अस्मिन् योगे दश यमा वर्तन्ते ते च अहिंसासत्यास्तेयब्रह्मचर्यदयार्जवक्षमाधृतिमिताहारशौचनामका यज्ञव्यतिरिक्तेत्यादिदशसूत्र्या सलक्षणं व्याख्याताः । पातञ्जलयोगसूत्रे तु "अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः (योगसूत्र २-३०) इति सूत्रेण पञ्चैव यमा निर्दिष्टाः ॥

इति यमनिरूपणं नाम सप्तषष्टितमं प्रकरणम् ॥

शौचम् ॥ १२ ॥ संतोषाद्या नियमा दश ॥ १३ ॥ यदृच्छालाभप्रीतिः संतोषः ॥१४॥ श्रौतस्मार्तविश्वास आस्तिक्यम् ॥१५॥ सत्पात्रे दीयमानं दानम् ॥ १६ ॥ शक्त्यर्चनमीशपूजनम् ॥ १७ ॥ व्रतैः शरीरशोषणं तपः ॥ १८ ॥ कुत्सितकर्मलज्जा ह्रीः ॥ १९ ॥ वैदिकश्रद्धा मतिः ॥ २० ॥ मन्त्राभ्यासो जपः ॥ २१ ॥ व्रतदिवसेषु नियमस्थितिर्व्रतः ॥ २२ ॥

इति श्रीशाक्तदर्शने त्रयोदशाध्यायस्य तृतीयः पादः ॥

अथ चतुर्थः पादः ॥

पद्मादीन्यासनानि ॥१॥ ऊर्वोरुपरिकृतपादाङ्गुल्योर्हस्ताभ्यां व्युत्क्रमग्रहणं पद्मासनम् ॥ २ ॥ ऋजुकायेन दक्षिणोरुणि वामपादविन्यासो वीरासनम् ॥ ३ ॥ गुल्फौ सीवनीपार्श्वयोः

---

अथ हठयोगगतान् दश नियमानाचष्टे—**संतोषाद्या नियमा दशेति**। ते च संतोषास्तिक्यदानेशपूजनतपोह्रीमतिजपव्रतनामका दश व्याख्यापूर्वकं यदृच्छालाभेति दशसूत्र्या प्रतिपादिताः इति यद्यपि स्पष्टमत्रोक्तं तथापि वस्तुतोत्र नवैव नियमा व्याख्याता उपलभ्यन्ते। जाबालदर्शनोपनिषदि (२।१-१६) दश नियमा व्याख्याताः। तन्मध्ये दृश्यमानः सिद्धान्तश्रवणनामा वेदान्तश्रवणेति व्याख्यातो नियमोत्र न दृश्यते। कदाचिल्लेखकप्रमादाद् गलितो भवेत्। कदाचिंन्नियमा नव इति मूलपाठः स्यात्। योगसूत्रे तु शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः ( योगसूत्र २।३२ ) इति सूत्रेण पञ्चैव नियमाः प्रतिपादिताः। **व्रतदिवसेष्विति**। व्रत इति सौत्रं पुंस्त्वम् ॥

इति नियमनिरूपणं नामाष्टषष्टितमं प्रकरणम् ॥

अधुना आसनानि व्याचष्टे—**पद्मादीन्यासनानीति**। तत्र पद्मासनं व्याचष्टे—**ऊर्वोरुपरीति**। योगसूत्रवृत्तौ पद्मासनं व्याख्यातम्—"अङ्गुष्ठौ संनिबध्नीयाद्धस्ताभ्यां व्युत्क्रमेण तु। ऊर्वोरुपरि विप्रेन्द्र कृत्वा पादतले उभे" इति। तथैव "एकपादमथैकस्मिन्विन्यस्योरौ च संस्थितः। इतरस्मिंस्तथा पादं वीरासनमुदाहृतम्" इति वीरासनं व्याख्यातम्। भद्रासनं व्याचष्टे—**गुल्फाविति**।

**क्षिप्त्वा पार्श्वपादयोः पाणिभ्यां ग्रहणं भद्रम् ॥ ४ ॥ सुखधैर्यप्रदं सुखासनम् ॥ ५ ॥ षण्णवत्यङ्गुलात्मको देहः ॥ ६ ॥ वह्निशिखाग्रगो मूलाधारः ॥ ७ ॥ तस्मात्सर्वोत्पत्तिः ॥ ८ ॥ आधारज्ञाता परं पदम् ॥ ९ ॥ तत्रैव कुण्डलिनी शक्तिः ॥ १० ॥ व्यवहारब्रह्मसाक्षी गजाननः ॥ ११ ॥ आधारे नाडीकन्दम् ॥ १२ ॥ नाड्यो द्विसप्ततिसहस्राणि ॥ १३ ॥ चतुर्दश मुख्याः ॥ १४ ॥ सुषुम्ना ब्रह्मनाडी ॥ १५ ॥ वीणादण्डेन ब्रह्मरन्ध्रम् ॥ १६ ॥**

---

योगसूत्रवृत्तौ–"गुल्फौ च वृषणस्याधः सीवन्याः पार्श्वयोः क्षिपेत् । पार्श्वपादौ च पाणिभ्यां दृढं बद्ध्वा सुनिश्चलः । भद्रासनं भवेदेतत्सर्वव्याधिविषापहम्" इत्येवं भद्रासनमुपवर्णितम् । योगसूत्रव्यासभाष्ये तु पद्मासनं वीरासनं भद्रासनं स्वस्तिकं दण्डासनं सोपाश्रयं पर्यङ्कं क्रौञ्चनिषदनं हस्तिनिषदनम् उष्ट्रनिषदनं समसंस्थानं स्थिरसुखं यथासुखं चेत्येवमादीन्यासनानि वर्णितानि वाचस्पतिकृतटीकायां च व्याख्यातान्युपलभ्यन्ते ॥

इत्यासननिरूपणं नामैकोनसप्ततितमं प्रकरणम् ॥

अथ देहवर्णनपूर्वकं मूलाधारचक्रं वर्णयति–**षण्णवत्यङ्गुलेति** । स्वाङ्गुलिपरिमाणेन नरस्य षण्णवत्यङ्गुलिपरिमितोन्मानो देहः । तत्र सर्वोत्पत्तिकरं मूलाधारचक्रं मूलवह्निशिखाग्रे गुदमेढ्रान्तराले तिष्ठति । इदमेव कुण्डलिन्याः व्यवहारब्रह्मसाक्षिणो गजाननस्य च स्थानम् । इत एव सर्वा नाड्यो नाडीकन्दात् प्रवर्तन्ते कन्दोर्ध्वे च कुण्डलिन्याः स्थितिः । **नाड्यो द्विसप्ततिसहस्राणीति** । आसां नाडीनां संख्योद्गमस्थानं च भिन्नभिन्नत्वेन वर्णितं तत्रतत्रोपनिषत्सु । तथा च च्छान्दोग्योपनिषदि काठकोपनिषदि च दृश्यते–शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति (छा. ८।६।६; कठ ६।१६) इति । प्रश्नोपनिषदि चैषैव संख्या दृश्यते 'अत्रैतदेकशतं नाडीनाम्' (प्रश्न ३।६) इति । बृहदारण्यके तु 'हिता नाम नाड्यो द्वासप्ततिसहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते' (बृह. २।१।१९) इति । **सुषुम्ना ब्रह्मनाडीति** । अत्र सुषुम्नाया एव ब्रह्मनाडीत्वेनोल्लेखो दृश्यते ।

कन्दोर्ध्वे कुण्डलिनी ॥ १७ ॥ सुषुम्ना योगसिद्धिदा ॥ १८ ॥

इति श्रीशाक्तदर्शने त्रयोदशाध्यायस्य चतुर्थः पादः ॥

त्रयोदशोध्यायः समाप्तः ॥

---

अथ चतुर्दशोध्यायः ॥

ब्रह्मरन्ध्रमुखं स्वमुखेन समावेष्टय कन्दपार्श्वेषु निरुध्य संस्थिता कुण्डलिनी. ॥ १ ॥ सुषुम्नापार्श्वयोरिडापिङ्गले ॥ २ ॥ पृष्ठपार्श्वयोः कुहूसरस्वती ॥३॥ गान्धारहस्तिजिह्वा समायाः ॥४॥ पूषायशस्विनी पिङ्गलायाः ॥ ५ ॥ कुहूहस्तिजिह्वामध्ये विश्वोदरा ॥ ६ ॥ कुहूयशस्विन्योर्वरुणा ॥ ७ ॥ पूषासरस्वत्योः यशस्विनी ॥८॥ गान्धारसरस्वत्योः शङ्खिनी ॥९॥ वामनासान्तमिडा ॥१०॥

---

नागेशभट्टकृतयोगसूत्रवृत्तौ तु सुषुम्नायाः शाखात्वेन वर्ण्यते ब्रह्मनाडी (योगसूत्रवृत्ति १।३६)। सुषुम्णेत्यपि पाठः क्षुरिकोपनिषदि दृश्यते ॥

इति मूलाधारनाडीकन्दनिरूपणं नामैकसप्ततितमं प्रकरणम् ॥

अधुना चतुर्दशमुख्यनाडीस्तासां स्थानानि विस्तारं च वर्णयति—**ब्रह्मरन्ध्रमुखमिति**। एताश्चतुर्दश नाड्यस्तु—कुण्डलिनी सुषुम्ना इडा पिङ्गला कुहूः सरस्वती गान्धारी हस्तिजिह्वा पूषा यशस्विनी विश्वोदरा वरुणा यशस्विनी शङ्खिनी च। योगचूडामण्युपनिषदि तु किंचिद्भेदेनैतत्पठ्यते। तथा च—"तत्र नाड्यः समुत्पन्नाः सहस्राणां द्विसप्ततिः। तेषु नाडीसहस्रेषु द्विसप्ततिरुदाहृताः॥ प्रधानाः प्राणवाहिन्यो भूयस्तासु दश स्मृताः। इडा च पिङ्गला चैव सुषुम्ना च तृतीयगा॥ गान्धारी हस्तिजिह्वा च पूषा चैव यशस्विनी। अलम्बुसा कुहूश्चैव शङ्खिनी दशमी स्मृता॥ एतन्नाडीमहाचक्रं ज्ञातव्यं योगिभिः सदा। इडा वामे स्थिता भागे दक्षिणे पिङ्गला स्थिता॥ सुषुम्ना मध्यदेशे तु गान्धारी वामचक्षुषि। दक्षिणे हस्तिजिह्वा च पूषा कर्णे च दक्षिणे। यशस्विनी वामकर्णे चानने चाप्यलंबुसा। कुहूश्च लिङ्गदेशे तु मूलस्थाने तु शङ्खिनी" (योगचूडामणि

दक्षिणान्तं पिङ्गला ॥ ११ ॥ वामपादाङ्गुष्ठान्तं यशस्विनी ॥ १२ ॥ वामाक्ष्यन्तं पूषा ॥ १३ ॥ याम्यकर्णान्तं पयस्विनी ॥ १४ ॥ जिह्वान्तं सरस्वती ॥ १५ ॥ सव्यपादाङ्गुष्ठान्तं हस्तिजिह्वा ॥ १६ ॥ शङ्खिनी सव्यकर्णान्तम् ॥ १७ ॥ सव्यनेत्रान्तं गान्धारी ॥ १८ ॥ विश्वोदरा कन्दस्था ॥ १९ ॥

इति श्रीशाक्तदर्शने चतुर्दशाध्यायस्य प्रथमः पादः ॥

अथ द्वितीयः पादः

**नाडीसंचारका वायवः ॥ १ ॥ वायवो दश ॥ २ ॥ पञ्च मुख्याः ॥ ३ ॥ प्राणापानौ प्रवरौ ॥ ४ ॥ पूज्यः प्राणः ॥ ५ ॥**

---

१।१५–२० )। अत्र सूत्रेषु वामयाम्यशब्दौ वामपरौ सव्यशब्दस्तु दक्षिणार्थपरः प्रयुज्यमानो दृश्यते । कदाचिदपपाठः स्यात् ॥

इति चतुर्दशनाडीनिरूपणं नामैकसप्ततितमं प्रकरणम् ॥

अधुना नाडीषु वहमानान्वायून्निरूपयति—**नाडीसंचारका वायव** इति । **वायवो दशेति** । एते दश वायवो वर्णिता योगचूडामण्युपनिषदि—'प्राणापानसमानाख्या व्यानोदानौ च वायवः । नागः कूर्मोथ कृकरो देवदत्तो धनंजयः ॥' इति । तेषां च स्थानानि दर्शितानि—'हृदि प्राणः स्थितो नित्यमपानो गुदमण्डले । समानो नाभिदेशे तु उदानः कण्ठमध्यगः । व्यानः सर्वशरीरे तु प्रधानाः पञ्च वायवः । उद्गारे नाग आख्यातः कूर्म उन्मीलने तथा । कृकरः क्षुत्करो ज्ञेयो देवदत्तो विजृम्भणे । न जहाति मृतं वापि सर्वव्यापी धनंजयः' ( योगचूडामणि १।२२–२५ ) इति । **इडादित्रयाणां त्रिमूर्तय इति** । 'सोमसूर्याग्नयस्त्रिमूर्तयः । तथा च योगचूडामण्युपनिषदि—'इडापिङ्गलासुषुम्नाः प्राणमार्गे च संस्थिताः । सततं प्राणवाहिन्यः सोमसूर्याग्निदेवताः' ( योगचूडामणि १।२१ ) इति ॥

इति नाडीसंचारकवायुनिरूपणं नाम द्विसप्ततितमं प्रकरणम् ॥

इडाद्रित्रयाणां त्रिमूर्तयः ॥ ६ ॥ रेचकपूरककुम्भकात्मकः प्राणायामः ॥ ७ ॥ मूलमन्त्रात्मकः ॥ ८ ॥ हकारस्मरणपूर्वं कर्षणं षोडशमात्रैः पूरकः ॥ ९ ॥ रेफस्य चतुःषष्ट्या तु मात्रया कुम्भकः ॥ १० ॥ ईकारस्य द्वात्रिंशन्मात्रया रेचकः ॥ ११ ॥ क्रमव्युत्क्रमतः ॥ १२ ॥ धारणे मूलमन्त्रजपः ॥ १३ ॥ पूरके वेदसंख्या ॥ १४ ॥ कलाः कुम्भके ॥ १५ ॥ वसु रेचके ॥ १६ ॥ अपानोर्ध्वनयन आनन्दः ॥ १७ ॥ आधाररोधनेन वायुदीप्तो वह्नी रुहति कुण्डलीम् ॥ १८ ॥ सुषुम्नाया वायुर्वह्निनोर्ध्वं गच्छति ॥ १९ ॥ वायुर्जितः ॥ २० ॥ तेन चित्तशुद्धिः ॥ २१ ॥

इति श्रीशाक्तदर्शने चतुर्दशाध्यायस्य द्वितीयः पादः ॥

---

इदानीं प्राणायामस्वरूपं निरूप्यते—**रेचकपूरकेति**। रेचकपूरकेति क्रमो ह्यत्र योगग्रन्थाननुसृत्य कृतः। तथा चोक्तम्—'प्राणायामस्तु विज्ञेयो रेचकपूरककुम्भकैः' इति। तथैव 'रेचकं पूरकं त्यक्त्वा सुखं यद्वायुधारणम्। प्राणायामोयमित्युक्तः सर्वैः केवलकुम्भकः' इति। **मूलमन्त्रात्मक** इति। प्राणायामवेलायां मूलमन्त्रजपः कार्य इत्यर्थः। **हकारस्मरणेति**। तथा चोक्तं नागेशभट्टैर्योगसूत्रवृत्तौ—'तत्र मात्रा निमेषोन्मेषावच्छिन्नः कालः, लघ्वक्षरावच्छिन्नो वा। ...प्रणवोच्चारणावच्छिन्नकाल इत्यन्ये। तत्र त्रयोपि द्वादशमात्रावच्छिन्ना इत्यधमः पक्षः। षोडशमात्रावच्छिन्नः पूरकः। चतुःषष्टिमात्रावच्छिन्नः कुम्भकः। द्वात्रिंशन्मात्रावच्छिन्नो रेचक इति वसिष्ठसंहितायाम्' इति। अत्र तु पूरककुम्भकरेचकवेलायामनुक्रमेण हकाररेफेकाराणां स्मरणं विशेषः तथैव रेचककुम्भकपूरकक्रमेण व्युत्क्रमोप्युक्तः। धारणे इति। रेचकानन्तरं पूरणात्प्राग्यः कालः स धारणशब्देनोच्यते। अयमेव योगसूत्रे चतुर्थशब्देनोच्यते (योगसूत्र २।५१) **वेदसंख्येति**। वेदसंख्या चतुर्लक्षणा। कलाशब्देन षोडशसंख्योच्यते वसुशब्देन चाष्टौ। **अपानोर्ध्वनयन** इति। अपानवायोरूर्ध्वगमनसाधनं कष्टसाध्यमपि महानन्दजनकमिति योगशास्त्रे प्रसिद्धम् ॥

इति प्राणायामनिरूपणं नाम त्रिसप्ततितमं प्रकरणम् ॥

अथ तृतीयः पादः ॥

इन्द्रियाणां बलादाहरणं विषयेषु प्रत्याहारः ॥ १ ॥ आपादतलमस्तकमनिलमापूर्य पादद्वयाधारनाभिहृत्कण्ठतालुललाटभ्रूमध्यमूर्ध्नि निरोधश्च ॥ २ ॥ बाह्यभूतानि क्रमेणाभ्यन्तरबीजानुस्मरणपूर्वं धारणं धारणा ॥ ३ ॥ पञ्चभूतेषु पञ्च देवान् ॥ ४ ॥ मूलवह्निशिखाग्रे मूलप्रकृतिः ॥ ५ ॥ मूले कुण्डलिनी ॥ ६ ॥ कामदायिनी पीठम् ॥७॥ शक्तिः पद्मम् ॥ ८ ॥ वादिसान्तवर्णकम् ॥ ९ ॥ व्यावहारब्रह्मगणपतिशक्तिपुत्रो देवता ॥ १० ॥ स्वाधिष्ठानं योनिपीठम् ॥ ११ ॥ सादिवर्णकं राजसी ॥ १२ ॥ ब्रह्मा देवता

---

अथ प्रत्याहारो निरूप्यते—**इन्द्रियाणामिति** । तत्तद्विषयेषु तेषां तेषामिन्द्रियाणां विषयेभ्यो दूरीकृत्य स्थिरीकरणं प्रत्याहारः । चित्तं हि इन्द्रियाणि प्रवर्तयति । यदि चित्तं स्थिरीक्रियते तर्हि इन्द्रियाणि विषयेभ्यः प्रत्याहृतानि भवन्त्येव । तथा च योगसूत्रे 'स्वविषयासंप्रयोगे चित्तस्य स्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः इति प्रत्याहारलक्षणम् । कथं स प्रत्याहारः संपाद्यते तदाह—**आपादतलमस्तकेति** । प्राणायामबलात्सर्वं शरीरं वायुना ऽऽपूर्य तेषां तेषां शरीरस्थानानां वायुना निरोधः प्रत्याहार इति फलितम् ॥

इति प्रत्याहारनिरूपणं नाम चतुःसप्ततितमं प्रकरणम् ।

अधुना धारणां व्याचष्टे—**बाह्यभूतानीति** । भूतानीत्यस्य स्थाने भूतानामिति पाठः सुगमः । आभ्यन्तरबीजस्मरणपूर्वकं बाह्यभूतेषु चित्तसंस्थापनं धारणेत्युच्यते ॥ तथा च योगसूत्रम्-देशबन्धश्चित्तस्य धारणेति । कथं सा धारणा क्रियते तदाह—**पञ्चभूतेष्विति** । मूलाधारादीनि पञ्च चक्राणि यथाक्रमं पृथिव्यादिपञ्चभूतात्मकानि गणपत्यादिदेवताकानि । **वादिसान्तेति** । वशषसवर्णाः मूलाधारचक्रस्थपद्मस्य चत्वारि दलानि । **स्वाधिष्ठानमिति** । एतच्चक्रस्थपद्मं वादिषड्वर्णमयषड्दलम् । **सादिवर्णकमिति** । अपपाठोयम् ।

॥१३॥ मणिपूरमुड्याणम् ॥१४॥ सात्त्विकी विष्णुर्देवता ॥१५॥ कादिठान्तमनाहतम् ॥ १६ ॥ तामसी रुद्रः ॥ १७ ॥ तालुमूलं जालंधरम् ॥ १८ ॥ स्वरात्मकम् ॥ १९ ॥ महेशः ॥ २० ॥ आज्ञा द्विदलम् ॥ २१ ॥ सदाशिवः ॥ २२ ॥ ब्रह्मरन्ध्रं सहस्रारम् ॥ २३ ॥ देवता परा शक्तिः ॥ २४ ॥

इति श्रीशाक्तदर्शने चतुर्दशाध्यायस्य तृतीयः पादः ॥

अथ चतुर्थः पादः॥

ओंकारमाधारे ॥ १ ॥ हकारं स्वाधिष्ठाने ॥ २ ॥ रेफं

---

वादिवर्णकमिति समीचीनम् । **मणिपूरमुड्याणमिति** । ओड्याणं ओड्डियाणं वा मणिपूरस्य पर्यायः । तथा च योगचूडामण्युपनिषदि–‘ ओड्याणं कुरुते यस्माद-विश्रान्तं महाखगः । ओड्डियाणं तदेव स्यान्मृत्युमातङ्गकेसरी । उदरात्पश्चिमं ताणमधोनाभेर्निगद्यते । ओड्याणमुदरे बन्धस्तत्र बन्धो विधीयते ’ इति । अस्मि-न्मणिपूरे डादिफान्तदशवर्णात्मकं दशदलमोड्याणं चक्रम् । मणिपूरवर्णसंख्यात्र सूत्रकारैर्न निर्दिष्टा । कदाचित्तन्निर्देशकं सूत्रं भ्रष्टं स्यात् । अनाहते चक्रे कादि-ठान्तद्वादशवर्णात्मकं द्वादशदलं पद्मं वर्तते ॥ **तालुमूलं जालंधरमिति** । वस्तुतो जालंधरमिति बन्धनाम यथोड्डियाणं मणिपूरस्य । तथा च योगचूडा-मण्युपनिषदि–‘ ततो जालंधरो बन्धः कष्टदुःखौघनाशनः । जालन्धरे कृते बन्धे कण्ठसंकोचलक्षणे । न पीयूषं पतत्यग्नौ न च वायुः प्रधावति ’ ( योगचूडा-मणि १।५१ ) इति । जालंधरशब्देनात्र षोडशदलं विशुद्धिचक्रं षोडशस्वरात्मकं महेशदेवताकं निर्दिश्यते । **आज्ञा द्विदलमिति** । हक्षेतिवर्णद्वयात्मकं सदाशिव-देवताकम् । **ब्रह्मरन्ध्रं सहस्रारमिति** । षट्चक्रोपरिस्थितं ब्रह्मरन्ध्रं सहस्रारम् । अस्य शक्तिरेव देवता । विस्तरस्तु चक्राणां पद्मानां बन्धानां च योगचूडामण्युप-निषदोऽवगन्तव्यः । प्राक् षट्षष्टितमप्रकरणनिरूपणं चावलोकनीयम् ॥

इति धारणानिरूपणं नाम पञ्चसप्ततितमं प्रकरणम् ॥

अथ ब्रह्मरन्ध्राधःस्थितषट्चक्रेषु बीजमन्त्रस्य ध्यानं निरूपयति–**ओंकार-**

मणिपूरे ॥ ३ ॥ ईकारमनाहते ॥ ४ ॥ बिन्दुं विशुद्धयाम् ॥ ५ ॥ ध्वनिमाज्ञायाम् ॥ ६ ॥ सतारं मायां ब्रह्मरन्ध्रे ॥ ७ ॥ कुण्डलोर्ध्व-नयनाधःस्थापनात्मकं सकृद् ध्यानम् ॥ ८ ॥ परजीवैकतां प्रति संविदुत्पत्तिः समाधिः ॥ ९ ॥

इति श्रीशाक्तदर्शने चतुर्दशाध्यायस्य चतुर्थः पादः ॥

चतुर्दशोऽध्यायः समाप्तः ॥

---

अथ पञ्चदशोऽध्यायः ॥

शान्तिमूलप्रकृतिमय आधारः ॥ १ ॥ नाभिचक्रं राजसम् ॥ २ ॥ हृच्चक्रं सत्त्वम् ॥ ३ ॥ दृक्चक्रं तामसम् ॥ ४ ॥ सत्त्वोद्रिक्त-गुणमयं ब्रह्मरन्ध्रम् ॥ ५ ॥ गणपतिराधारस्य ॥ ६ ॥ नाभेर्ब्रह्मा ॥ ७ ॥ हृदो विष्णुः ॥ ८ ॥ दृशो रुद्रः ॥ ९ ॥ शक्ती रन्ध्रस्य ॥ १० ॥ आधारे प्रणवः ॥ ११ ॥ नाभौ हकारः ॥ १२ ॥ हृदि रेफः ॥ १३ ॥ दृशि ईकारः ॥ १४ ॥ ह्रींकारो रन्ध्रे ॥ १५ ॥ त्रिसाहस्रसंख्यान्तं वृत्तिराधारे ॥ १६ ॥ सहस्रं नाभौ ॥ १७ ॥ हृदि दृशि च ॥ १८ ॥

---

माधारे इति । ओंकाराक्षरस्य संपूर्णस्य मूलाधारे ध्यानं कुर्यात् । तत्स्थस्य च हकारस्य स्वाधिष्ठाने इति क्रमेण विशुद्धिचक्रे मकाररूपबिन्दुध्यानानन्तरमनुरण-नात्मकध्वनेराज्ञाचक्रे ध्यानं कुर्यात् । ततोपि परं मायाध्यानं ब्रह्मरन्ध्रे कुर्यात् । तत्प्रभावतश्च कुण्डलिन्या ऊर्ध्वाधोनयनं कर्तुं ध्यानी प्रभवति समाधावधिकारी च भवति समाधिना सर्वश्रेष्ठं जीवैक्यं च साक्षात्करोति ॥

इति ध्याननिरूपणं नाम षट्सप्ततितमं प्रकरणम् ॥

अधुना षण्णां चक्राणां गुणान्देवता मन्त्रवर्णाक्षराणि जपसंख्यां निदर्श्य ध्यानं निरूपयति—शान्तिमूलेति । मूलप्रकृतिमयं गणपतिदेवताकं प्रणवस्वरूपं मूलाधारचक्रम् । तथैव नाभिचक्रं राजसं ब्रह्मदेवताकं हकाररूपम् । अत्र प्रकरणे स्वाधिष्ठानविशुद्धचक्रे न निदर्श्येते । तद्व्यतिरिक्तान्याधारनाभिहृद्दृक्चक्रा-

षट्साहस्रं रन्ध्रे ॥ १९ ॥ वृत्तिरेषा मन्त्रयोगः ॥ २० ॥ एष एकः ॥ २१ ॥ ध्यानमेतत् ॥ २२ ॥ ऐक्यभावनं समाधिः ॥ २३ ॥ यमः सामान्यधर्मः ॥ २४ ॥ नियमो वर्णधर्मः ॥ २५ ॥ यथासुखमासनम् ॥ २६ ॥ मूलेन प्राणायामः ॥ २७ ॥ प्रत्याहारो मन्त्रसन्ध्या ॥ २८ ॥ धारणमर्चनम् ॥ २९ ॥ यन्त्रोत्तमबिम्बेषु ॥ ३० ॥ हृदि च ॥ ३१ ॥ ध्यानं जपेन ॥ ३२ ॥ ऐक्यानुसंधानं समाधिः ॥ ३३ ॥ आभ्यन्तरपरो राजयोगी ॥ ३४ ॥ हठाद्याभ्यन्तरपरो हठयोगी ॥ ३५ ॥ बाह्याभ्यन्तरपरो मन्त्रयोगी ॥ ३६ ॥

इति श्रीशाक्तदर्शने पञ्चदशाध्यायस्य प्रथमः पादः ॥

---

ण्यन्ते च ब्रह्मरन्ध्रं वर्ण्यते । एषु चक्रेषु तत्स्वरूपविषये प्रत्ययैकतानता ध्यानमिति भावः ॥

इति मन्त्रयोगनिरूपणं नाम सप्तसप्ततितमं प्रकरणम् ॥

अथ योगित्रयं व्याचष्टे तदङ्गतया च यमनियमप्रयोजनमाह— **यमः सामान्यधर्म इति** । अहिंसादयो यमाः मनुष्यमात्रेण सर्वेण पालनीयाः । नियमाः प्रतिवर्णं किंचिद्भिन्नाः स्ववर्णाचारानुरूपं पालनीयाः । प्राणायामार्थं स्थैर्यसंपादकमासनं सर्वेषामावश्यकम् । **मूलेन प्राणायाम** इति । मूलमन्त्रं मनसि कृत्वा प्राणायामः कार्य इत्यर्थः । इन्द्रियनिग्रहरूपः प्रत्याहारो मन्त्रसन्ध्यारूपो मन्तव्यः । तथैव धारणमर्चनरूपं मन्वीत । तदर्चनरूपं चित्तधारणं यन्त्रेषु उत्तमबिम्बेषु च कार्यम् । ध्यानं जपेन कुर्यात् । सर्वस्यास्य परिणामः शक्त्यैक्यानुसंधानं, स एव समाधिः । एवं समन्त्रं योगाचरणं कुर्वन्नाभ्यन्तरा मानसीः सर्वाः क्रियाः प्राधान्येन कुर्वन् राजयोगीति कथ्यते । हठेन सर्वमेतच्छरीरेन्द्रियैः संपादयन् हठयोगीति कथ्यते । बाह्या आभ्यन्तराश्च द्वितया अपि योगक्रियाः कुर्वन् मन्त्रयोगीति कथ्यते ॥

इति मन्त्रपूर्वकाष्टाङ्गयोगनिरूपणं नाम अष्टसप्ततितमं प्रकरणम् ॥

# ॥ अथत्रयोदशम प्रकाशः ॥

## स्वरोदय निरूपणं

अजोऽकलोऽविनाशी यः, यः समता सरित्पतिः ।
निष्कलङ्को विशुद्धश्च, पातुवः श्रीजिनाधीशः ॥१॥
निरञ्जनश्च नैगुण्यः, सगुणो निर्मलः सदा ।
निर्भयो निरहङ्कारः, निर्ग्रन्थो जगदीश्वरः ॥२॥
जन्मजरात्वरोगादि, क्लेशकर्मबहिर्मुखम् ।
प्रातिहार्य समायुक्तः, सर्वज्ञः परमेश्वरः ॥३॥
पार्श्वेश जिनदेवानां, मूर्त्तिः कल्याणकारिणी ।
सम्मेताचलप्रासादे, स्थितां वन्दे निरन्तरम् ॥४॥
कालज्ञान प्रभावेन, आगमस्यानुसारतः ।
हृदिगुरुकृपां धृत्वा, स्वरज्ञानं निरूप्यते ॥५॥
सर्वत्रैवोपयुज्येत, धर्मकार्येऽपरे तथा ।
अतस्तदपि प्रोच्येत, मयाज्ञानानुसारतः ॥६॥
अत्यन्तस्थिरचित्तेन, ज्ञायते च स्वरोदयम् ।
ततः शुभाशुभं कार्यं, भाविलाभस्य सूचकम् ॥७॥

शरीरे नाडिकाः सन्ति, अनेका गुणधारिकाः ।
तासुतिस्रः प्रधानाःस्युः,कथ्यन्ते चाभिधाः खलु ॥८॥
इङ्गलापिङ्गले चैव, सुषुम्ना च तृतीयका ।
विभिन्नाश्च गुणास्तासां, कथ्यन्ते सुखहेतवे ॥९॥
भवति भ्रकुटी चक्रे, प्रकाशः प्राणवायूनाम् ।
बङ्कनाड्याश्च मार्गेण, नाभौ निवसनं भवेत् ॥१०॥
नाभिप्रदेश सञ्चारा, दक्षिणं इङ्गलागृहम् ।
वामतः पिङ्गलास्थानं, द्वयोर्मध्ये तृतीयकम् ॥११॥
वामस्वरस्य सञ्चाराच्चन्द्रोदयं विज्ञायताम् ।
यदा दक्षिणसञ्चारः, तदा सूर्यो निगद्यते ॥१२॥
निशाकरः सुकार्याय, दुष्कार्याय रविः पुनः ।
एवं विधे च कर्त्तव्ये, जायते सुखशांतिता ॥१३॥
द्विस्वरस्यैव सञ्चारः, समकाले यदा भवेत् ।
तृतीया नाडिका ज्ञेया, कार्ये हानिर्भवेत्तदा ॥१४॥
चन्द्रस्वरस्य सञ्चारे, स्थिरकार्यं दृढं भवेत् ।
सूर्यस्वरस्य सञ्चारे, चरकार्यं सुयोगतः ॥१५॥
कृष्णपक्षपतिस्सूर्यः, शुक्लपक्षपतिस्तथा ।
चन्द्रश्च परिज्ञातव्यः,लात्वा तिथिविभागकम् ॥१६॥

कर्त्तव्यकार्यकर्त्तव्ये, तत्रैव लाभता भवेत् ।
कृष्णपक्षेषु चाद्यास्ताः,तिथितिसश्चसंमताः ॥१७॥
तत्पश्चाच्चन्द्रस्था ज्ञेया, तिस्रश्च तिथयः खलु ।
ततः सूर्यस्य ज्ञातव्याः चन्द्रस्यापि ततो मता॥१८॥
एवं रीत्या च पक्षान्तपर्यन्तं परिज्ञायताम् ।
शुक्लपक्षस्य रीतिश्च, कथ्यते सुखहेतवे ॥१९॥
शुद्धपक्षेषु चाद्यास्ताः, चन्द्रस्य तिथियो मताः ।
ततः सूर्यस्य चन्द्स्य,ज्ञातव्याः स्युश्च भावतः॥२०॥
भौमशनिश्चरादित्य, वाराणां च रविः पतिः ।
सोम बुध गुरूणां च, शुक्राणां चन्द्रमा पतिः॥२१॥
एवं रीत्या च ऋक्षाणां, पति विषय भावनम् ।
पश्चात्कार्यस्य कर्त्तव्ये,लाभस्तु बहुलो भवेत् ॥२२॥
कृष्णपक्ष तिथीनामारम्भे, सूर्यस्वरो भवेत् ।
तत्पक्षः सुखकारी, स्यात्प्रवीणस्य न संशयः ॥२३॥
शुक्लपक्ष तिथौ प्रातः, चन्द्रस्वरोदयो भवेत् ।
तदा पक्षः स शान्तित्वा,ऽऽधायकः परिज्ञायताम्॥२४॥
चन्द्र तिथौ स्वरश्चन्द्रः, सूर्ये सूर्य उदाहृतः ।
वहेद्यदि तदाकार्यें, पुष्टिः सुखं च जायते ॥२५॥

चन्द्रतिथौ स्वरः सूर्यः, यदि प्रकाश्यते तदा ।
कायपीडा च संक्लेशः, वित्तनाशश्च जायते ॥२६॥

सूर्यतिथिदिने प्रातः, चन्द्रस्वरश्च ज्ञायते ।
राजभयादि संक्लेशः,स्वान्ते चञ्चलता भवेत्॥२७॥

प्रतिपदि द्विपक्षाणां, सुषुम्नायाः स्वरो भवेत् ।
न लाभो हानिता नैव, भवेदत्र न संशयः ॥२८॥

सिंह वृषभ वृश्चिकाः,कुम्भश्चैताश्च राशयः ।
चन्द्रस्वरस्य विज्ञेया, कथ्यन्ते च पुना रवेः ॥२९॥

अन्यथा कार्यकर्त्तव्ये, हानिर्भवति सर्वथा ॥३०॥

कर्क मकर तूलाश्च, मेष एताश्च राशयः ।
तत्सूर्य योगसद्भावे, चरकार्यं प्रशान्तिदम् ॥३१॥

मीनमिथुनकन्याश्च, धनमेताश्च राशयः ।
द्विस्वाभावाश्च विज्ञेयाः, कार्ये हानिप्रदा मताः॥३२॥

चन्द्र सूर्यस्य ये मासाः, स्वरशास्त्रे प्रकाशिताः ।
प्रथग्रूपेण विज्ञेयाः, राशिवर्गित भास्करात् ॥३३॥

कोऽपि प्रश्न विधानाय, आगतः शुभभावतः ।
पृच्छकश्च दिशायाश्च, विचारः खलु कथ्यते ॥३४॥

सम्मुखे वामके चोर्ध्वं, द्विस्थिते नैव पृच्छ्यते ।
तदा तु चन्द्रयोगश्चे,त्कार्यसिद्धौ न संशयः ॥३५॥
दक्षिणस्यामधश्चैव, पश्चिमायां स्थितेन वै ।
पृच्छ्यते सूर्य, योगश्चेत्कार्य सिद्धिर्भवेद्धुवम्॥३६॥
वामेतरे च स्थित्वा वै, सूर्यस्वरेषु पृच्छ्यते ।
लग्नवारतिथेर्योगे, मीलने कार्यता भवेत् ॥३७॥
वामेतरे च स्थित्वानु, प्रश्नः प्रासङ्गिको भवेत् ।
पूर्णश्चन्द्रः स्वरस्तत्र, कार्यसिद्धिस्तु जायते ॥३८॥
वामेतरे च स्थित्वा वै, चन्द्रस्वरेण पृच्छ्यते ।
रवि तत्त्वतिथिर्वारान्विना, कार्यं भवेत्कथम् ॥३९॥
अधः पश्चात्स्थितः कोपि, प्रश्नश्चागत्य पृच्छ्यते ।
उदयश्चन्द्रतायाश्चेत्फलं, किञ्चिन्न जायते ॥४०॥
स्थित्वा वामेतरे भागे, सूर्यस्वरेण पृच्छ्यते ।
चन्द्रयोगं विना तस्य, कार्यसिद्धिर्न सम्भवेत् ॥४१॥
सन्मुखोर्ध्वदिशां स्थित्वा, सूर्यस्वरेण पृच्छ्यते ।
चन्द्रयोगं विना तस्य, कार्यसिद्धिर्भवेन्नहि ॥४२॥
समाक्षराणि चन्द्रस्य, विषमानि रवेः सदा ।
तेषां सङ्ख्या विधानाय, पद्धतिः परिदृश्यते ॥४३॥

चतुःषडष्ट द्विः सप्त; दशद्वादश स्युस्तथा ।
समाक्षराणि ज्ञायन्तां, चन्द्रस्य[1] हि तदानि च ॥४४॥
एक त्रिपञ्चसप्तत्वं, नवैकादशसंख्यका ।
अक्षराणां च ज्ञातव्याः, विषमरूपयोगतः ॥४५॥
सूर्ययोगस्य ज्ञेयानि, विषमान्यक्षराणि च ।
स्वरं प्रश्नाक्षरं चैव, विज्ञाय निर्णयः खलु ॥४६॥
सर्वलौकिककार्याणि, त्यक्त्वा ध्याने दृढो भवेत् ।
श्रवणमननादीनां, करणे स्वरज्ञानता ॥४७॥
प्राणायामं तु योगाङ्ग, स्थिरचित्तेन साधयेत् ।
प्रथमभूमिकाः तस्य, स्वरोदयस्तु ज्ञायताम् ॥४८॥
प्राणायामविचारश्च, कठिनः सर्वदा मतः ।
द्वौ भेदौ तस्य विज्ञेयौ, निश्चय व्यवहारजौ ॥४६॥
स्वरूपे च स्वरूपेण, लीनो निश्चयतो भवेत् ।
सञ्चरेच्च यथाश्रेणि, सयोगी कुशलो मतः ॥५०॥
क्षपकोपशमे श्रेणी, कथिते जैन शासने ।
तयोः कालाद्यभावेन, साधना नैव विद्यते ॥५१॥

---

१—चन्द्रस्वरस्य ।

प्रत्यहं ध्यानताऽभ्यासे, मनः स्थैर्यं तु चेद्भवेत् ।
तदाऽनुभव लेशं च, अद्य प्राप्नोति कश्चन ॥५२॥
स्वानुभवस्य लेशेन, कठिनं कर्म नश्यति ।
अल्पभवे स भव्यात्मा, सिध्यति नात्र संशयः॥५३॥
व्यवहारानुसारेण, ध्यानभेदो न कथ्यते ।
पृथक्पृथक्स्वरूपेण, कथने ग्रन्थवृद्धिता ॥५४॥
अष्टौ भेदाश्च योगस्य, प्राणायामश्चतुर्थकः ।
तस्य सप्तप्रभेदाः स्युः, सकलसिद्धिदायकाः ॥५५॥
रेचकपूरके ज्ञेये, कुम्भकश्च तृतीयकः ।
शान्तिकसमते ज्ञेये, एकता लीनता तथा ॥५६॥
द्रव्यभावप्रभेदेन, रेचकादेश्च भिन्नता ।
देहस्थाशुद्धवायूनां, निष्कासने तु रेचकः[१] ॥५७॥
हिंसाऽसत्यादि पापानां, कषायाणां तथैव च ।
दुर्गुणानाञ्च निष्कासे, रेचको भावतो मतः ॥५८॥
शुद्धवायुप्रवेशेन, पूरको द्रव्यतः किल ।
दयासत्यादि भावानां, क्षमामार्दववस्तूनाम् ॥५९॥

१—रेचको द्रव्यतोभवेद् ।

सर्वोत्तमगुणानां च, प्रवेशो भावपूरकः ।
दुर्गुणानां च निष्कासे, गुणानां च प्रवेशने ॥६०॥
सर्वथा गुणवत्त्वं स्या, त्कदाचिद्दैव योगतः ।
वायुस्थिरत्व कर्त्तव्ये, कुम्भको द्रव्यतो मतः ॥६१॥
वैराग्याभ्यासद्वारेण, गुणस्थैर्यं यदा भवेत् ।
भावकुम्भकता तत्र, अन्यथा नाममात्रतः ॥६२॥
वायूनां च प्रवेशेन, कश्चात्मनि गुणो भवेत् ।
पुद्गलरूपता वायोः, आत्मनि च निरूपता ॥६३॥
द्वयोश्चनैव सम्बन्धः, केनापि रूपतो भवेत् ।
अतः कथं द्वयोश्चैवं, मीलनं परिसम्भवेत् ॥६४॥
किमुद्दिश्य च वायूनां, प्रोक्तात्मशुद्धिहेतुना ।
शङ्कायाश्च समाधानं, प्रोच्यते जैनशास्त्रतः ॥६५॥
जैनेतरीय—शास्त्रेषु, समाधानं न विद्यते ।
विचारः सूक्ष्मश्चैव, कृतः केनापि नो कदा ॥६६॥
द्रव्यरेचकवायूनां, देहे सम्बन्धता मता ।
वायुशुद्धप्रवेशेन, शरीरे स्वस्थता भवेत् ॥६७॥
आसनादिक योगाङ्ग, विना शरीरयोगतः ।
कदापि सम्भवेन्नैव, अतः स्वस्थत्व सिद्धये ॥६८॥

साधनता च वायूनामतः, कारणात्सम्मता ।
धर्मसाधनदेहस्य, स्वास्थ्यं चैव ततो भवेत् ॥६६॥
स्वस्थशरीरसम्बन्धा, दुर्गुणानाञ्च त्याजने ।
शीघ्रं मनः प्रवर्त्तेत; प्राणायामस्तु भावतः ॥७०॥
जायते नैव सन्देहः; आत्मशुद्धेश्च साधने ।
गुणानां पूरणे चैव, दुर्गुणानाञ्च त्याजने ॥७१॥
सर्वगुणमयश्चैव, आत्मा योगेन जायते ।
अतोहि रेचकादीनां, परम्परा च हेतुता ॥७२॥
भावतः प्राणयामस्य, हेतुता चात्मशुद्धिके ।
द्रव्यतो रेचकादीनां, देहशुद्धौ च हेतुता ॥७३॥
गुणानामेकताऽऽदाने, एकता परिजायते ।
निजयोगे च तल्लीने, लीनता परिकथ्यते ॥७४॥
लीनदशा बहिर्भावा, त्समाधित्वस्वरूपके ।
निश्चयतः स जीवात्मा, स्वामी शिवपुरस्य वै ॥७५॥
स्वरख्याति स्थिरी भावे, स्वल्पकं कर्षणं न वै ।
मूलबन्धे दृढी भावे, बीजसञ्चारता भवेत् ॥७६॥
देहे पञ्चापि वाताःस्युः, प्राणसमान नामकौ ।
अपानोदान व्यानाश्च, ज्ञातव्या गुरुयोगतः ॥७७॥

हृदये प्राणता ज्ञेया, समानः सर्वदेहगः ।
अधोऽपानगवायुः, स्यात्कण्ठस्थोदानता भवेत् ॥७८॥
विज्ञेयः सन्धिगो व्यानः, ज्ञेया एते च वायवः ।
तेषाञ्च पञ्च बीजानि ज्ञातव्यानि च ज्ञानिना ॥७९॥
ऐं पैं रौं ब्लौं क्लौं बीजानि, कथितानि प्रधानतः ।
तेषां गर्भित भेदानां, रूपं वक्तुं न शक्यते ॥८०॥
पञ्चबीजप्रचारेण, अनहद्ध्वनिर्भवेत् ।
ध्वनि निर्गम भेदाश्च, योगीश्वरेण संस्मृताः॥८१॥
वर्णमात्रं तु बीजस्य, विद्याच्च कमलं प्रति ।
भिन्न भिन्न गुणास्तेषां, शास्त्रतश्चावधार्यताम् ॥८२॥
सर्वसिद्धिर्वसत्यस्मिन्, सर्वा लब्धिश्च विद्यते ।
सम्पद्यतेऽद्य काश्चिच्च, काश्चिच्च नभवन्त्यपि॥८३॥
नाभौ च वर्णसञ्चारः, सोऽहं प्रकाशरूपकः ।
जापं वै चाजपं, विद्यात्सर्वत्रानुभवो भवेत् ॥८४॥
नाभेः सञ्चारभावेन, रंकारोऽत्र प्रकाशते ।
तत्र भवेन्मनः स्थैर्यं, सङ्कल्पश्चाशुभो नवै ॥८५॥
अनहदाधिपश्चैव, यो देवः स्थिरचित्तकम् ।
दृष्ट्वा सेवा स्वरूपेण, अनेकर्द्धिं संदर्शयेत् ॥८६॥

दृष्ट्वा पौद्गलिकीं ऋद्धिं, यस्यचित्तं च नो चलेत् ।
स नरो ज्ञान सम्पत्तिं, प्राप्नोति नात्र संशयः ॥८७॥
वेद भेदः समाधिः, स्याद्व रुगमेन लक्ष्यकम् ।
कुण्डलिर्नाभिपार्श्वे च, तत्पश्चाद्वङ्कनाडिका ॥८८॥
मार्गो दशम द्वारस्य, स सरलो विज्ञायते ।
चक्रमार्ग प्रचारे च, प्राप्यते न कदाचन ॥८९॥
मुद्रापञ्चापि ज्ञातव्याः, त्रयो बन्धाश्च कीर्त्तिताः ।
मुख्यंपद्मासनं ज्ञेयं, चतुरशीतिरासने ॥९०॥
अस्त व्यस्तं चरेद्वायुः, कारणयोगभावतः ।
षट्कर्माणि प्रकुर्वन्ति, नेलिधोत्यादिकाः क्रियाः ॥९१॥
त्राटकादि क्रियाश्चैव, बस्ति भेदादिकास्तथा ।
हठयोगेषु विज्ञेयाः, निषिद्धा जैनशासने ॥९२॥
यद्यपि त्राटकं योगं, द्विभेदं खेदशान्तिदम् ।
निरुणद्धि गदान् देहे, निद्राऽलस विनाशकम् ॥९३॥
तथापि हठहेतुः स्यात्त्याज्यं, चात्मार्थिभिर्जनैः ।
आत्मकल्याणता यस्मिन् सयोगः क्रियते नरैः ॥९४॥
पौद्गलिकर्द्धिलोभेन, हठयोगे पतन्ति ये ।
बाह्यख्याति निमित्तेन, आत्मख्यातिं त्यजन्ति ते॥९५॥

अग्रे योगाङ्ग कर्त्तव्ये, लोभात्क्षणो न विद्यते ।
स्वल्प स्वार्थेन मूर्खाश्च, कुर्वन्ति नात्मसाधनम् ॥६६॥

दृष्टयो योगस्य ज्ञेयाः, अष्टौ वस्तुगतेर्मता ।
अन्तर्गताश्च ध्यानादौ, कथ्येते तत्प्रभेदकौ ॥६७॥

आद्यं सालम्बनं ज्ञेयं, निरालम्बं द्वितीयकम् ।
तत्करणेन सज्ज्ञानं, भावतस्तु प्रकाशते ॥६८॥

मित्रा तारा बला दीप्ता, स्थिरा कान्ता प्रभा परा ।
दृष्टयो गदिताश्चाष्टौ, बोधतः परिदृश्यते ॥६६॥

सघनाघनदैवस्य[1], रात्रिषु बालमन्दकाः ।
अन्ये च दृष्टि भेदेन, पश्यन्ति भिन्नरूपतः ॥१००॥

ओघ दृष्टि प्रचारेण, अर्थ दृष्टौ विभिन्नता ।
भिन्नार्थ दर्शनं चैव, ओघदृष्टि प्रभावतः ॥१०१॥

विनाऽनुभव विज्ञानं, आडम्बरः प्रजायते ।
आडम्बरेण हानिः, स्यात्कल्याणं प्रणिनश्यति ॥१०२॥

निरूपाधिक स्थानञ्च, एकान्त ध्यान पुष्टिदम् ।
स्त्रीषण्ठादिकराहित्यं, ध्यानयोग्यं मतं च तत् ॥१०३॥

---

१—दिवसेषु ।

अल्पाऽऽहारी विनिद्रः, स्याद्भक्ता भक्त विवर्जितः ।
लोकैषणा न काचित्स्या, त्प्रभु प्रीतौ दृढो भवेत् ।१०४।
आशामोक्षं विना नैव, कर्त्तव्या हि कदाचन ।
ध्यानयोग्यः स ज्ञातव्यः, भववृद्धेः पराङ्मुखः ॥१०५॥
पञ्चाधारे समायुक्तः, साध्वाचारे सदारतः ।
मानामाने च साम्यत्वं, समस्तृणधनादिषु ॥१०६॥
गृह्णाति बाह्यपद्वी नो, न रोगाणां चिकित्सकः ।
लोलुपी नैव सत्कारे, न स्वस्तुत्यादिकारकः ॥१०७॥
धर्मध्याने रतो नित्यं, स्वशंसायामधोमुखी ।
एतद्गुणसमालीनः, ध्यानाधिकारको मतः ॥१०८॥
त्यागी च परनिन्दायाः, स्वनिन्दाश्रवणे सुखी ।
विकथा परिहारी स्या, द्धर्षशोके पराङ्मुखः ॥१०९॥
शत्रौमित्रे समत्वं वै, परऽऽशात्यागभावुकः ।
ध्यानाभ्यासे च जिज्ञासुः, गुणान्वेषणतत्परः ॥११०॥
ध्यानाभ्यासी भवेद्यो ना, तस्य दुःखं न जायते ।
इन्द्रादिभिः स पूज्यः, स्याद्द्धिस्तस्यैवस्वान्तके ॥१११॥
पुष्पमालायते सर्पः, मृगपतिर्मृगायते ।
पावको जलस्थानं, स्यात्समुद्रोगोष्पदायते ॥११२॥

अरण्यं नगरायेत, शत्रुर्मित्रायते किल ।
विषं चामृतता, भूयाद्वैरं च समतायते ॥११३॥
व्यवहारेण सद्ध्याना, द्द वेन्द्रत्वं च प्राप्यते ।
निश्चयतः सुध्यानाच्च, मोक्षरूपं फलं भवेत् ॥११४॥
सुखाऽऽनन्त्यं च जायेत, साद्यनन्तं च तत्रवै ।
कर्माष्टकं क्षयं कृत्वा, प्राप्नोति परमंपदम् ॥११५॥
स्युर्ध्यानानि हि चत्वारि प्रोक्तानि जैनशासने ।
रूपस्थं च पदस्थं च, पिण्डस्थं रूपवर्जितम् ॥११६॥
स्वगुणांशं च तद्ध्यानं, लभेत प्रथमं तदा ।
स्वरूपभेदताऽऽद्यस्य, कथिता स्वरशास्त्रके ॥११७॥
विकाररूपतां त्यक्त्वा, निर्विकारे स्थितः सदा ।
मनसा मङ्गनिस्तस्य, क्रियते सुखहेतवे ॥११८॥
तीर्थकृत्पदप्राधान्यं, अनन्त गुण हेतुकम् ।
तद्गुणध्यान भावेन, प्राप्यन्ते चात्मसद्गुणाः॥११९॥
पदस्थध्यानता ज्ञेया, पिण्डस्थं परिदर्श्यते ।
दुरात्मा क्व मलीनोऽहं, क्व शुद्धः परमेश्वरः ॥१२०॥
क्व कर्माष्टविनिर्मुक्तः, क्व कर्मग्रथितो जनः ।
शुद्धरूपः पराज्योतिः, क्वाशुचिरपवित्रकः ॥१२१॥

भेदाऽनन्त्यं द्वयोर्ज्ञेयं, ईश्वरे मादृशोजने ।
स्वपरिणति रूपेशः, सर्वथा परिकीर्त्तितः ॥१२२॥
परपरिणतीरूपो, स्वपरिणतिर्नैव च ।
मयि तादृशरूपत्वं, ईश्वरे न कदाचन ॥१२३॥
निजस्वरूप भोगी सः, सदा स्वगुणपोषकः ।
शुद्धगुणेषु शुद्धत्वं, स्वपरिणतिरुच्यते ॥१२४॥
स्वकीय शक्ति सद्ध्याने,यः प्राप्नोति शान्तिताम् ।
पिण्डस्थं ध्यानकं ज्ञेयं,रूपातीतं निगद्यते ॥१२५॥
रूपादिकं न विद्येत, क्षायिकगुणताजुषः ।
तस्य ध्यानेन तद्रूपं,रूपातीतं तु कीर्त्तितम् ॥१२६॥
पिण्डस्थादिकध्यानानां, स्वरूपं च विशेषतः ।
सङ्क्षेपेणैव कथ्येत, भव्यानां सुखहेतवे ॥१२७॥
देहस्थः कर्मनिर्मुक्तः, ज्ञानवान् परमेश्वरः ।
जिनेन्द्रः स्मर्यते यत्र,पिण्डस्थ तन्निगद्यते ॥१२८॥
अर्हद्रूपाणि, यन्मन्त्रपदानि हृदयाम्बुजे ।
चिन्त्यन्ते शशिशुभ्राणि,पदस्थं तत्प्ररूपितम् ॥१२९॥
प्रातिहार्येण संयुक्तः, समवसरणो जिनः ।
यद्ध्यायतेऽत्र तद्बिम्बं, रूपस्थं तन्निगद्यते ॥१३०॥

अमूर्त्तः चिन्मयः शुद्धः, निराकारो निरञ्जनः ।
सिद्धेशः स्मर्यतेयत्र, रूपातीतं तु कीर्त्तितम्॥१३१॥
प्राणायामे च कर्त्तव्ये, पिण्डस्थं ध्यानसम्मतम् ।
समागमं मनोवाय्वोः,ज्ञात्वा वायुं च साधयेत्॥१३२॥
ततो निजगृहे स्वान्तं, आनयति च बुद्धिमान् ।
तत्र निरन्तरां प्रीतिं, कारयेदधिकाऽधिकाम् ॥१३३॥
योगानलं च स्व स्वान्ते,करोति जागृतिं तथा ।
शुभासनं मिताऽऽहारं, दृढ़भावेन तन्यते ॥१३४॥
चक्षुर्भ्यां च त्यजेन्निद्रा, भिन्नतां जीवदेहयोः ।
जानीयात्स्वर्णपाषाण, वत्कथंचिच्च वा शुचिः ॥१३५॥
भेदनयेन तद्दृष्टिं, स्थापयेद्हृदये किल ।
तत्र शङ्कां परित्यज्य,निश्चयतो दृढ़तां भजेत्॥१३६॥
कार्यप्रसङ्गतो वक्ता वदति, स्तोकमात्रकम् ।
अधिकं न वदेत्किञ्चि,न्निरवद्यं वचोऽपि तत् ॥१३७॥
स्वप्नवत्संस्मृतिं विद्याद्देहं, धनं च यौवनम् ।
सर्वमसाररूपं च, जानीयात्संस्मृतौ सदा ॥१३८॥
जिनवाणीं दृढ़ां स्वान्ते स्थापयेच्छुद्ध भावतः ।
रसं ध्यानानुसम्भूतं,योगीन्द्र एव स्वादते ॥१३९॥

विरलाः संसृतौ ज्ञेयाः, रोगशोकादिवर्जिताः ।
शरीरे शक्तिप्राचर्यं, वर्धते च दिने दिने ॥१४०॥
यो हि निश्चलचित्तेन, ध्यानमाराधयेत्सदा ।
तस्याल्पाहारनैरोग्यं, प्रत्यहमुपयोगता ॥१४१॥
जायते नात्र सन्देहः, कथितं ज्ञानभानुना ।
नासाग्रभागदृग्धृत्वा,कृत्वाऽथवा द्विसम्पुटम्॥१४२॥
हृत्पद्मे योऽपि ध्यायेत, सिद्धचक्र स्वरूपकम् ।
तस्य स्वभावतो,ध्यानमतिरायाति स्पष्टतः ॥१४३॥
मायाबीजेन सद्युक्तं, प्रणवं प्रथमं मतम् ।
वर्णबीजगुणज्ञानान्नादवर्णस्थिरत्वतः ॥१४४॥
स्थिरस्वरः प्रजायेत, लक्ष्याग्रे नादता ततः ।
तस्य प्रकाशना स्वान्ते, जायते गुरु योगतः ॥१४५॥
प्राणायामं च सम्पूर्णं, कथितुं नैव शक्यते ।
स्वल्पज्ञानं च स्वल्पायुः,मादृशैः कथ्यते कथम्॥१४६॥
नाममात्रेण किञ्चिच्च, प्रोक्तं स्वरमहोदधौ ।
भूमयो दशसङ्ख्याकाः,प्रथमं च स्वरोदयः ॥१४७॥
परप्रकाशता रूपं स्वरं, जानाति यो जनः ।
पञ्चतत्त्वानि जानीया, द्विचाराशयपूर्वकम् ॥१४८॥

द्विस्वरे पञ्चतत्त्वानां, ज्ञानेन वर्णमानकौ ।
आकारकाल साफल्यं,ज्ञायते नात्र संशयः ॥१४६॥
पृथ्वीजलाग्निवाताश्च, आकाशं पञ्चमं मतम् ।
पृथ्वीजलाधिपश्चन्द्रः,अन्येषां च पती रविः ॥१५०॥
पीतश्वेतहरिद्रक्त, श्यामवर्णाश्च पञ्चधा ।
पञ्च तत्त्वेषु विज्ञेयाः, अनुक्रमेण ते तथा ॥१५१॥
सम्मुखं सञ्चरेत्पृथ्वी, दूरतो द्वादशांगुलम् ।
समचतुरस्राऽऽकारः घ्राणतः सन्मुखं तथा ॥१५२॥
घ्राणतोऽधो विभागं च, जलं च षोडशांगुलम् ।
आकृतिर्वर्त्तुला तस्य,चन्द्रस्य सादृशी मता ॥१५३॥
घ्राणत उर्ध्वदिक्षु च, सञ्चरेत्तत्वपावकम् ।
चतुरंगुलता तस्य, आकारो बालभास्करः ॥१५४॥
तिर्यक् चरतिवातोऽपि, अष्टांगुलं च घ्राणतः ।
ध्वजासमानताऽऽकारैः ज्ञेयं तत्त्वचतुर्थकम् ॥१५५॥
नाशा सम्पुटस्थानेषु, चलेन्न बाह्यभासता ।
श्यामवर्णश्च तस्य,स्यान्नभस्तत्त्वं च पञ्चकम्॥१५६॥
पञ्चाशत्पलपर्यन्तं, पृथ्वीतत्वं च सञ्चरेत् ।
चत्वारिंशज्जलं तत्त्वं;त्रिंशत्पलं च पावकम् ॥१५७॥

विंशतिपलपर्यन्तं, वायुतत्त्वंतु सञ्चरेत् ।
दशपलत्वपर्यन्तं, नभस्तत्त्वंतु सम्मतम् ॥१५८॥
अध्यर्धद्विघटी चैव, एकस्वरे विज्ञायताम् ।
एवं च पञ्चतत्त्वानां, अहोनिशि प्रचारता ॥१५९॥
लिखेत्स्वरेषु तत्त्वं वै, यः कोऽपिभिन्नरूपतः ।
काल समय विज्ञानं, वर्षदिवसमानकम् ॥१६०॥
प्रथममेषसंक्रान्तेः, प्रवेशो जायते यदा ।
तदा तत्त्वं विचार्यैव,श्वास स्थैर्यं विधीयते ॥१६१॥
पृथ्वीतत्वस्य यश्चैव,प्रकाशोः नामतः स्वरे ।
मुख्ययोगस्तदा ज्ञेयः, यस्य फलं निगद्यते ॥१६२॥
प्रजासु सुखप्राचुर्यं, समयश्चोत्तमो भवेत् ।
धान्योत्पत्तेश्च बाहुल्यं;पशूनां सुख शान्तिता॥१६३॥
ईतिभीतिर्भवेन्नैव; जनवृद्धिश्च जायते ।
इत्येवं श्रेष्टता तस्य,नृपाणां,सुखशान्तिकम्॥१६४॥
अप्तत्त्वं च तदा तत्र; शशिस्वरेषु संचरेत् ।
फलं तस्यतु विज्ञेयं,स्थिर चित्तेन श्रूयताम् ॥१६५॥
वैपुल्यं मेघवृष्टेः स्यो; दन्नं चोत्पद्यते खलु ।
प्रजासु सुखसर्वस्वं, जायते नात्रसंशयः ॥१६६॥

धर्म भावश्च सर्वेषां, हृदये बहु जायते ।
दान पुण्यादि भावेषु,नीतिमार्गे नृपोभवेत्॥१६७॥
प्रीतिश्च तत्र जायेत, सर्वस्वं सर्वथा सदा ।
शशिस्वरे च ज्ञातव्यं,तत्त्वयुग्मंतु सुन्दरम्॥१६८॥
मेषसंक्रान्ति लग्ने च, प्रथमघटिकासु वै ।
स्वरे तत्वं यथा रूपं;दृश्यते तादृशं फलम् ॥१६९॥
स्वरे पावक तत्त्वं, स्याद्वृष्टिः स्वल्पा च जायते ।
रोगदुःखेषु प्राचुर्यं, दुष्कालश्च प्रजायते ॥१७०॥
देशभङ्गोऽपि जायेत, प्रजा सुखं न विद्यते ।
अग्नि तत्त्वस्य प्राकाश्यं,द्विस्वरेषु यदा भवेत् ॥१७१॥
अशुभं च फलं ज्ञेयं; फलार्थिना च सर्वदा ।
वायु तत्त्वं स्वरे चैव; चलेत्तदा तु युद्धता ॥१७२॥
अल्पवृष्टिस्तु विज्ञेया; वर्षं च मध्यमं भवेत् ।
जायते स्वल्पधान्यादि,स्वल्पं तृणादिकं तथा॥१७३॥
नभस्तत्त्वं स्वरे पूर्वं, चलेत्तस्य फलं तदा ।
न जायते तृणं पूर्णं, अन्यत्सर्वं च पूर्ववत्॥१७४॥
एवं रीत्या च विज्ञेयं,स्वरतत्त्वफलं महत् ।
धारणीयं च तत्स्वान्ते,कार्यं पश्चाद्विधीयताम्॥१७५॥

मधुमासोज्वले  पक्षे; प्रतिपदि तिथ्यादिके ।
लग्नविचारता  शुद्धा; संचारे  स्वतत्त्वतः ॥१७६॥
तस्य वर्णोपि  ज्ञातव्यः, स्वरतत्त्वानुसारतः ।
प्रातःकाले स्वरेचन्द्रे, पृथ्वी तत्त्वं भवेद्यदा ॥१७७॥
तत्फलं तु तदा  ज्ञेयं; सर्वदा सुखदायिता ।
मेघवृष्टिर्भवेत्तत्र, सुखशान्तिप्रदा  सदा ॥१७८॥
समयः सुन्दरो ज्ञेयः; राजप्रजासु हार्दिकः ।
सन्तोषो हर्षपूर्णश्च; ईतिभीतिर्न विद्यते ॥१७९॥
चन्द्रस्वरेक्षतत्त्वस्य[1], फलं तु कथितं मया ।
प्रातःकाले स्वरे चन्द्रे, जलतत्त्वं भवेद्यदा ॥१८०॥
सुभिक्षसमयस्तत्र,  वर्षा सर्वत्र जायते ।
शान्तिः पुष्टिर्भवेद्दार्ढ्या,धर्मेरागोदृढोभवेत॥१८१॥
भव्यस्वान्ते च ज्ञातव्यः,बाहुल्यं दानपुण्यके ।
जलं पृथ्वी च तत्त्वे द्वे, यदि सूर्यस्वरेच ते ॥१८२॥
समयोमध्यमस्तत्र, प्रातःकाल स्वरे फलम् ।
राजभङ्गः प्रजापीडा, नभस्तत्त्वं स्वरे यदा ॥१८३॥

---

१—क्षिति तत्वस्य ।

मध्यमवर्गद्वेषी च, पूर्ववाक्यानुसारतः ।
तत्त्वत्रयावशिष्टस्य, स्वरतत्त्वविचारणे ॥१८४॥
बहुदेशेषु दुष्कालं, संशयो नात्र जायते ।
सूर्यस्वरोऽग्नि तत्त्वं च, प्रातःकाले भवेद्यदि ॥१८५॥
रोगशोकादिकं सर्वं, सर्व जनेषु जायते ।
संक्लेशोऽप्यधिको ज्ञेयः,दुष्कालं च पतेद्ध्रुवम्॥१८६
सूर्येपावकतत्त्वं, चेन्नृपविग्रहता क्वचित्।
अल्पवृष्टिः प्रजायेत, अनिलतत्त्वयोगतः ॥१८७॥
प्रातःकाले च तद्दिने, सुषुम्ना यदि सञ्चरेत् ।
तदैव म्रियते दृष्टा, छत्रभङ्गश्च जायते ॥१८८॥
अन्नं स्तोकं च कुत्रचि, त्कुत्रचित्सर्वथा न हि ।
सुषुम्नायाः फलं ज्ञेयं, स्वरशास्त्रानुसारतः ॥१८९॥
स्वरतत्त्वसमालोके, इयं रीतिश्च वार्षिकी ।
अपरागे तु ज्ञातव्या, हृदये प्रेमभावतः ॥१९०॥
माघमासे च सप्तम्यां, वैशाखे च तृतीयके ।
प्रातःकाले च दृष्टव्यः, वर्षबीजं च भावतः॥१९१॥
तत्त्वे जले पृथ्व्यां चैव, चन्द्रस्वरः प्रविश्यते ।
तत्कालकृत व्यापारे,सर्वत्र स सुखी भवेत् ॥१९२॥

अपरे स्वरतत्त्वे च फलं, स्याद्धमं तथा ।
सिध्यति च फलं तस्य,मध्यमं निश्चयं भवेत्॥१९३॥
परीक्षा सर्वसद्भावे, मेषभावे बलीयसी ।
तद्दिने तत्त्वद्दृष्टव्ये, फलं ज्ञेयं दृढं हृदि ॥१९४॥
अद्यतने प्रदृष्टश्च, विचारः परिकथ्यते ।
स्वहृदि विलिख्य स्वान्ते,स्वरविचारतां भजेत्॥१९५॥
प्रतिपच्चैच शुद्धस्य, तत्र शशि स्वरो नचेत् ।
तदा तस्य त्रिमासेषु, अत्युद्वेगः प्रजायते ॥१९६॥
चैत्रमासे द्वितीयायां, चन्द्रस्वरश्च नो चलेत् ।
गतिस्तस्य विदेशो, स्याद्दुःखं तत्रैव जायते ॥१९७॥
चैत्रशुक्लतृतीयायां, चन्द्रस्वरस्य शून्यतः ।
पित्त ज्वरादिकं सर्वं, जायते नात्र संशयः ॥१९८॥
नवमासे च मृत्युः स्याद्यति,स्वरोऽपि ज्ञायते ।
चैत्र शुक्ल चतुर्थ्यां च,चन्द्र स्वरो न भासते॥१९९
नवमासे च मृत्युः, स्याद्दृष्टं च स्वरवेदिना ।
पञ्चम्यां तदभावेन, राजदण्डश्च जायते ॥२००॥
षष्ठ्यां चन्द्रस्वराभावे, वर्षमध्ये च तस्यवै ।
बन्धूमृत्युः प्रजायेत, दृष्टव्यं ज्ञानिना सदा ॥२०१॥

चन्द्रस्वरो न सप्तम्यां, प्रातःकाले च दृश्यते ।
म्रियते गेहिनी तस्य, विज्ञेयं स्वर ज्ञानतः ॥२०२॥
चन्द्रस्वरो न चाष्टम्यां,प्रातःकाले च दृश्यते ।
अत्यन्त दैहिकी पीडा,जायते च सुखं न हि॥२०३॥
चद्रः स्वरश्च दृश्येत, तदा शारीरिकं सुखम् ।
भाग्योदयस्य प्राबल्यं,वर्षपर्यन्त सौख्यकम् ॥२०४॥
अथ जनेन केनाऽपि, प्रश्न श्चागत्य तन्यते ।
चन्द्रस्वरे च कं पृथ्वीतत्त्वं, पूर्णं च दृश्यते ॥२०५॥
प्रश्नकर्त्तु स्तदा तस्य, कार्यसिद्धि प्रजायते ।
तेजोऽनिले च खं तत्त्वं,चन्द्रस्वरेषु दृश्यते ॥२०६॥
प्रश्नकर्त्तु स्तदा चैव, कार्यसिद्धिर्न जायते ।
पृथ्वीजलस्थिरे कार्ये, चन्द्रस्वरे प्रशान्तिके ॥२०७॥
चरकार्याय नो ज्ञेयं, इतिसर्व-व्यवस्थितम् ।
तेजोऽनिले च व्योमानि,चरकार्याय सन्ति वै ॥२०८॥
रोगिजनस्य प्रश्नं च, आगत्य केनचिद्यदि ।
तस्य श्वासविचारेण, उत्तरं प्रविधीयते ॥२०९॥

---

१—जलं ।

चन्द्रस्वरे चलेत्पृथ्वी, तस्यां दिशि च पृच्छयते ।
निश्चयतश्च तैर्ज्ञेयं, रोगी न म्रियते तदा ॥२१०॥
चन्द्रस्वरश्च बध्येत, सूर्यस्वरश्चलेत्तदा ।
वामपार्श्वे च रोगिणां,प्रश्ने जीवेन्न सर्वथा ॥२११॥
पूर्णस्वरेषु चागत्य, प्रश्नकाले स्वरो न चेत् ।
रोगिणां शान्तिता नैव, विद्यते लेशमात्रतः॥२१२॥
शून्यस्वरेषु चागत्य, प्रश्नः स्वरप्रचारणे ।
रोगी मृतो न विज्ञेयः,वर्तते सुखशान्तिना॥२१३॥
वातपित्त कफानाञ्च, त्रयाणां पिण्डता त्रयं ।
समताविग्रहे शान्तिः,विषमे रोगता भवेत् ॥२१४॥
चतुरशीतिकावार्ताः, पित्तस्य पञ्चविंशतिः ।
कफस्त्रयप्रकारश्च, द्वादशशतकं भवेत् ॥२१५॥
वायुनिश्वासनौदर्यं, तत्स्वामिको दिवाकरः ।
शतनाड्यां सदा, तिष्ठेत्कथितं स्वरवेदिना ॥२१६॥
स्कन्धे पित्तनिवासः स्यात्ज्जठराग्नौ च सञ्चरेत ।
दिवानाथः पतिर्ज्ञेयः,योगिभिः कथितं खलु ॥२१७॥
नाभिकमलतो, वामदिशि त्रिकरपल्लवे ।
कफस्य नाडियुग्मं वै,हृत्स्थितिकं च ज्ञायताम्॥२१८॥

चन्द्रपतिश्च तस्याः, स्यात्कथ्यते व्यवहारतः ।
निश्चयतः स्वलक्ष्ये,स्यात्स्थीयन्ते त्रिकनाडिकाः २१६
त्रयाणां स्वीय स्वीयैर्त्तौ, वातपित्तकफात्मनाम् ।
ज्ञापयन्ति बलं देहे, तस्यारोपश्च तन्यते ॥२२०॥
स्वकर्त्तव्यं च विस्मृत्य, अन्यगृहेषु गम्यते ।
कफाद्युद्रेकता रोगः, सन्निपाते न जायते ॥२२१॥
पादोनं च द्विरोगाश्च, प्रतिरोम भवन्ति वै ।
अशुभोदययोगे च, विपाकेन विपच्यते ॥२२२॥
स्वतत्त्वं स्वस्वरे चैव, देहेचलेच्च रोगिणाम् ।
एक रोगोद्यो ज्ञेयः,स्थिरचित्तेन ज्ञानिना ॥२२३॥
एक स्वरे द्वितीयस्य, स्वरस्य च प्रकाशता ।
प्रश्नश्चर्त्तुर्मनुष्यस्य, रोगाणां बहुलं भवेत ॥२२४॥
पूर्णस्वरेण चागत्य, पूर्णस्वरेषु पृच्छयते ।
सर्वसंसारिकार्यस्य, ज्ञेया सम्पूर्णता तदा ॥२२५॥
शून्यस्वरेणचागत्य, शून्यश्चारेण पृच्छयते ।
यदूयच्चिान्तितकार्यं,तन्नहि सिध्येत्कदाचन ॥२२६॥
शून्यस्वरेण चागत्य, वहत्स्वरेण पृच्छयते ।
तस्य कार्यस्य सिद्धिर्वै, ज्ञेया नैवात्र संशयः ॥२२७

पूर्णस्वरेण परित्यज्य, शून्यस्वरेण पृच्छयते ।
तस्यकार्ये च नैष्फल्यं, न साफल्यं कदाचन ॥२२८॥
वायुर्गुरौ च श्रेष्टः स्या, द्व्योमशनिश्चरे शुभम् ।
एतद्द्वये च सञ्चारे, पूर्वरोगो विनश्यति ॥२२६॥
प्रातःकाले च सौम्ये वै, क्षिति तत्त्वं शुभं मतम् ।
पुष्करं सोमवारे च शुक्रे, तेजः सुसम्मतम् ॥२३०॥
चन्द्रसूर्यस्वरे कार्यं, कर्त्तव्यं कथ्यते मया ।
नूतनजैनप्रासाद, खातक्षणे स्वरो विधुः ॥२३१॥
तद्योगेऽमृतता भावः, स्थिरारुणद्युतिर्भवेत् ।
बिम्बस्य प्रतिष्ठाकारे,प्रभावश्चाति जायते ॥२३२॥
मूलसिंहासने देव, स्थिरीकरणकालिके ।
जिनगृहेषु कुम्भस्य,चारोहे चन्द्रता शुभम् ॥२३३॥
पौषधशाल कर्त्तव्ये, दानशाला गृहापणे ।
प्रासाददुर्ग प्राकारे, संघमाला विधापके ॥२३४॥
तीर्थयात्राप्रदाने वै, दीक्षाऽऽदाने तथैव च ।
चन्द्रयोगः सुखाकारी, मन्यते जैन शासने ॥२३५॥
नूतनगृहपुर्यां च, प्रवेशो प्रथमे तथा ।
वस्त्राभूषणताऽऽदाने,योगाभ्यासे कृते खलु॥२३६॥

औषधाराम कर्त्तव्ये, नृपमैत्रिकृते च वै ।
राजतिलककर्त्तव्ये, प्राकारे प्रविवेशने ॥२३७॥
राज्यसिंहासनाऽऽरोहे, अन्यस्मिन्स्थिरकार्यके ।
चन्द्रयोगः शुभोज्ञेयः,स्थिरकार्ये च लाभकृत्॥२३८॥
सूर्यस्वरे च कर्त्तव्ये, कार्यं परिनिगद्यते ।
विद्याध्ययनध्याने च, देवाराधनमंत्रके ॥२३९॥
अरीणां जयकर्त्तव्ये, विषभूतस्य कर्षणे ।
रोगिणामौषधाऽऽदाने,विघ्ननाशक कार्यके ॥२४०॥
गजाश्ववाहने चैव, अशनपानस्नानके ।
लिखने नूतने ग्रन्थे, ऋतुदानादिके किल ॥२४१॥
युद्धार्थं गमने राज्ञां, समरे च यशस्करे ।
प्रयाणकालिके कार्ये,गन्तव्ये वाञ्छिते द्वीपे॥२४२॥
कार्यञ्च सफलं कृत्वा, क्षिप्रमायाति मन्दिरे ।
सूर्ययोगे च तत्सर्वं,सफलं स्यान्न संशयः॥२४३॥
चरकार्ये च कर्त्तव्ये, सूर्ययोगःशुभो मतः ।
लाभालाभौ समालोच्य,कर्त्तव्यं क्रियतां सदा।२४४।
सौम्यकार्ये विधोर्योगः, सूर्ययोगः क्रूरे शुभः ।
सुषुम्ना चलने कार्यं,कर्त्तव्यं नैव किञ्चन ॥२४५॥

आग्रहेणैव कर्त्तव्ये, हानिर्भवति निश्चिता ।
दुःखदौर्भाग्य पीडां,च लभेत नात्र संशयः॥२४६॥
श्वासशीघ्रपरावर्त्तौ, क्षणे चान्द्रः क्षणे रविः ।
सुषुम्ना स स्वरोज्ञेयः,स्वरज्ञानं चिकीर्षता॥२४७॥
सुषुम्ना स्वर सञ्चारे, आत्मध्यानं विधीयते ।
आत्मतत्त्व परामर्शे,संसारेऽलिप्तता भवेत् ॥२४८॥
तत्त्वस्वरूप ज्ञातव्ये, उपायस्तु प्रकाश्यते ।
भावौ शुभाशुभौ तस्य,हृदयेऽधिकसम्मतौ॥२४९॥
चरस्थिरप्रवक्तव्ये, तृतीया द्विस्वभावजा ।
वार्त्ताऽपि कथिता ज्ञेया,सुषुम्ना श्वरसम्भवा॥२५०॥
द्वयंगुष्टाभ्यां च करणे द्वे तर्जनीभ्यां तु चक्षुषी ।
मध्यमाभ्यां च घ्राणे द्वे,पराभ्यां चाधरौ स्मृतौ॥२५१॥
आच्छाद्य भ्रकटौ श्वान्तं, नेयं च गुरुयोगतः ।
यद्रङ्गयुक्तबिन्दुश्च, पतति भ्रकुटौ किल ॥२५२॥
तादृशो वर्णो विज्ञेयः,रक्तः श्वेतो हरित्पीतः ।
श्यामश्चेत्यभिधेयांतद्,बिन्दुरूपेण ज्ञायताम् ।२५३।
प्रथमो वायु सञ्चारः,द्वितीयोग्निश्च सम्मतः ।
तृतीया भूश्च ज्ञातव्या, तूर्यं ज्ञेयं जलं तथा ।२५४

आकाशः पञ्चमं तत्त्वं, स्वर उत्थान बोधकम् ।
पिंगलायां वहेच्चैव, सङ्क्रमः प्रणिगद्यते ॥२५५॥
पृथ्वीजले शुभे ज्ञेये, अग्निश्च मध्यमो मतः ।
वायुर्हानिप्रदोज्ञेयः, आकाशं मृत्युदं मतम् ॥२५६॥
ऊर्ध्वं मृत्युरधः शान्तिः, उच्चाटनं तिरश्चीनम् ।
मध्ये च स्तम्भनं ज्ञेयं, वर्जितोपायता रवौ ॥२५७॥
जंघायां भूश्च विज्ञेया, नाभ्यामनिलतामता ।
अग्नि तत्त्वंतु स्कन्धे, स्यान्नभस्तु मस्तके मतम्॥२५८॥
स्थिरकार्ये प्रधाना भूः, चरे जलं विचार्यताम् ।
अग्निश्च समकार्येस्या, द्वायुरुच्चाटने मतः ॥२५९॥
व्योमसञ्चलने कार्यं, कर्त्तव्यं न कदाचन ।
ध्यानयोगे हि चाभ्यासरीतिश्च कथिता मया॥२६०॥
पश्चिम दक्षिणे चैव, भूजले चैव तत्त्वके ।
प्राधान्यमुत्तरस्यां वै, पूर्वस्यां वातता मता ॥२६१॥
स्थिर स्थानं च व्योमैव, दिशातत्त्वस्य ज्ञायताम् ।
भूजले कार्यसिद्धिः, स्यादग्नौ मृत्युर्विचार्यताम्॥२६२॥
क्षयकारी प्रवातःस्यान्नभो, निष्फल रूपकं ।
शनैः सिद्धिः क्षमायां च, जलं तत्कालसिद्धिदम्॥२६३

अग्निवाय्योश्च हानिः,स्यात्कार्यं नभसि निष्फलम् ।
रणकार्ये वली बहिः, भूजलयोश्च संग्रहे ॥२६४॥
जीवितविजयालाभे, मित्रार्थयुद्धसङ्कटे ।
गमनागम कार्ये च, ज्ञेया सर्वोत्तमा मही ॥२६५॥
कलहशोकभावेषु, मरणोत्पात संक्रमे ।
वायोः फलं च विज्ञेयं, प्रसिद्धं स्वरयोगतः ॥२६६॥
राजनाशोऽग्नि तत्त्वे च, दुर्भिक्षं च क्षमाजले ।
रोगादयश्च विज्ञेयाः, तत्तत्त्वस्यैवचारके ॥२६७॥
दुर्भिक्षघोरसंक्लेशौ, देशभङ्गभयादिकम् ।
अनिलाकाशतायां च, चतुष्पदविनाशता ॥२६८॥
महेन्द्रवरुणे योगे, वृष्टिर्घनस्य जायते ।
राजवृद्धिः प्रजासौख्यं, कालश्च सुखदो मतः॥२६९॥
पृथिवीजलतत्त्वे च, चन्द्रस्थानं स्थिरंमतम् ।
तयोः फलं शुभं ज्ञेयं, अनुपमं च सर्वदा ॥२७०॥
पृथिव्यां बहुपादाःस्युः, जलवाय्वोर्युगौ पदौ ।
चतुष्पदाश्चवह्नौस्युः, आकाशं पादहीनकम्॥२७१॥
रविस्वर्भानुभौमत्वं, शनिसौरीशस्वामिनः ।
पञ्चतत्त्वस्य ज्ञातव्याः, सूर्यस्य परिकीर्त्तिताः ॥२७२॥

बुधौ भूमिपतिर्ज्ञेयः जलस्य शशि सम्मतः ।
अग्नेःपतिर्मतः शुक्रः, वायुर्गुरुश्च चान्द्रके ॥२७३॥
जय तुष्टिश्चपुष्टिश्च, रतिः क्रीड़ा च हास्यता ।
षडैवचन्द्रदशा ज्ञेया, पृथ्वीजलस्य सन्निधौ ॥२७४॥
ज्वरनिद्रा प्रयासाश्च, चतुर्थं कम्पनं मतम् ।
चन्द्रस्य वै दशा ज्ञेयाः, अग्निर्वायुश्चत्तत्वके॥२७७॥
गतायुः प्रथमे ज्ञेयं, मृत्युर्ज्ञेयं द्वितीयके ।
नभस्तत्व प्रसंगेन, चान्द्रस्य द्वादशीमता ॥२७६॥
मधुकषायता तिक्ताम्लानि रसाश्चा कीर्त्तिता ।
पञ्चमोऽव्यक्तरूपश्चा, अनुक्रमेण दृश्यते ॥२७७॥
यादृशरसताऽऽस्वादे, प्रीतिर्मनसि जायते ।
तादृक्तत्वं चा ज्ञातव्यं, शङ्कायाः समयोनहि ॥२७८॥
धनिष्ठाः श्रुति रोहिण्याः,पृथिव्याबीजरूपकम्॥२७९॥
मूलोत्तरा भद्रा चैव, शतभिषक् च दयार्द्रता ।
पूर्वाषाढा चा वाऽश्लेषा, जलस्यस्थानरूपकम्॥२८०॥
हस्तविशाखता चित्रा, मृगशिराः पुनर्वसुः ।
उत्तराःफाल्गुनी चैव, अश्विनी वातवोधिका ॥२८१॥

नभसः पवनं तस्मा, त्पावकं च जलं ततः ।
ततो भुवश्च प्राकाशः,ज्ञायते स्वर योगतः ॥२८२॥
अग्न्युदये क्षुधाद्यश्च, इच्छा वायूदये सति ।
क्षान्त्यादिकं च वै, स्वान्ते चोदय जलभूमिके॥२८३
पूर्वाफाल्गुनिकामाघम्[४], पूर्वाभाद्रपदा तथा ।
कृत्तिका भरणीपुष्यमग्नेः सप्तक भानि च ॥२८४॥
गुदाधारो क्षमा चैव, लिङ्गाधारश्च पानीयम् ।
चाक्षुराधारता तैजे, घ्राणाधारश्च वातकः ॥२८५॥
श्रवणाधारमाकाशं, निहाराः पञ्चकीर्त्तिताः ।
चान्द्रस्वरेच सञ्चारे, युद्धार्थं नैव गम्यते ॥२८६॥
चालने तत्र शत्रूणां, जयो भवति निश्चयात् ।
सूर्यस्वरस्य सञ्चारे, युद्धार्थं परिगम्यते ॥२८७॥
समये विजयः स्वस्य, जायते नात्र संशयः ।
सूर्यस्वरः स्वकीयश्च, शत्रूणामपि सैव च ॥२८८॥
प्रथमस्तत्र यो याति, जयस्तस्यैव जायते ।
शशिस्वरे च सञ्चारे, सङ्ग्रामे नैव गम्यते ॥२८९॥

---

१—श्रवण । २—भाद्रपदा । ३—आदि पदेन रेवती ।
४—मघा ।

स्वस्य पराभवो ज्ञेयः, शत्रूणां विजयो भवेत् ।
दूरदेशे च संग्रामे, चान्द्रस्वरः शुभो मतः ॥२६०॥
निकटदेशसंग्रामे, सूर्यस्वरश्च सुन्दरः ।
संग्राम विषये प्रश्नाः,स्वरशास्त्रे निरूपिताः ॥२६१॥
गर्भविषयमादाय, काचिद्विचारता खलु ।
श्रूयतां सावधानेन, स्वरशास्त्रानुसारतः ॥२६२॥
क्लीबकन्याप्रसूत्यादि, गर्भपतनकादीनाम् ।
दीर्घस्वल्पायुषां चैव, विचारः परितन्यते ॥२६३॥
चन्द्रस्वरे च सञ्चारे, आगत्य पूर्णदिक्ततः ।
गर्भवत्याः कृते प्रश्ने,कन्येति परिकथ्यताम् ॥२६४॥
सूर्यस्वरे च संचारे, पूर्णदिशि प्रपृच्छने ।
गर्भे पुत्रो विज्ञातव्यः, संशयो नैव विद्यते ॥२६५॥
सुषुम्ना स्वर सञ्चारे, गर्भ विषय प्रश्नके ।
गर्भे नपुंसको ज्ञेयः,गर्भ प्रश्नार्थिना खलु ॥२६६॥
चन्द्रस्वरे च पृष्टव्ये, ज्ञातुः सूर्यस्वरोमतः ।
पुत्रजन्मविज्ञातव्यः,किन्तु स नैव जीवति ॥२६७॥
सूर्यस्वरे कृते प्रश्ने, तस्य सूर्यस्वरस्तथा ।
सुखदायी सुतो ज्ञेयः, संशयो नैव जायते ॥२६८॥

चन्द्रस्वरे कृते प्रश्ने, तस्य सूर्यस्वरो भवेत् ।
पुत्री चोत्पद्यते तस्य, सा जीवेन्न कदाचन ॥२९९॥
चन्द्रस्वरस्तयोर्द्वयोः, प्रश्नक प्राश्निकेषु च ।
कन्या निश्चयतो ज्ञेया, दीर्घायुः साऽपि भुज्यते॥३००॥
भूमितत्त्वे च ज्ञातव्ये, प्रश्नकर्त्तुर्नरस्यवै ।
सन्मानं राजद्वारा स्याद्रूपे, देवकुमारवत् ॥३०१॥
जलतत्त्वे समागत्य, प्रश्नः केनापि तन्यते ।
धनवांश्च सुखीपुत्रः, भोक्ता षड्रसवस्तुनः ॥३०२॥
अग्नितत्त्वे कृते प्रश्ने, गर्भपतनता भवेत् ।
यदि च जायते जन्म, जीवेन्नहि स सर्वथा ॥३०३॥
वायुतत्त्वे कृते प्रश्ने, गर्भोगलति वै तदा ।
प्रश्नकरणकाले च, यदि छाया च विद्यते ॥३०४॥
व्योमतत्त्वे च पृष्ठव्ये, गर्भो नपुंसको भवेत् ।
चलचन्द्रेतु कन्यास्यात् ,वन्ध्यात्व दोषसंयुता ॥३०५॥
चन्द्रसूर्यस्वरे चारे, यदि चन्द्रवली भवेत् ।
गर्भवत्याश्च गर्भे वै, कन्यायुग्मं च जायते॥३०६॥
चन्द्रसूर्यस्वरे चारे, यदि रविर्वली भवेत् ।
गर्भवत्याश्च गर्भे तु, पुत्रस्तस्य युग्मकम् ॥३०७॥

स्त्री गर्भाधानके तत्त्वं, यद्वा शुभाशुभं भवेत् ।
तस्यफलं क्रमेणैव, विज्ञेयं शास्त्रयोगतः ॥३०८॥
जातो गर्भः क्षमातत्त्वे, सन्मानं लभते सदा ।
स्वयं सुखी च राजा,स्यात्कर्त्तव्यो नैव संशयः॥३०६॥
गर्भाधाने च के[1] तत्त्वे, पुण्ययोगेन चेद्यदि ।
धनी भोगी सदाचारी, दारकः स्याद्विचक्षणः॥३१०॥
गर्भाधानं च वह्नौस्यादल्पायुष्कसुतो भवेत् ।
विद्यते जीवने दुःखं,तन्माता म्रियतेऽथवा ॥३११॥
गर्भाधानं च वायौ स्याद्, दुःखी देशान्तरे खलु ।
बुद्धिहीनं मनस्तस्य, जायते वायुयोगतः ॥३१२॥
गर्भाधाने नभस्तत्त्वे गर्भस्यैव च हानिता ।
तत्त्वे जन्मफलंवच्मि, अनुक्रमेण ज्ञायताम् ॥३१३॥
पृथ्वीतत्वे सुतो ज्ञेयः, जलतत्वे सुता मता ।
गर्भो वाताग्निवायूनां, गगने क्लीबरूपता ॥३१४॥
स्व स्व स्वरे च कर्त्तव्ये, प्राधान्यं परिज्ञायताम् ।
संक्रमसमये प्रश्ने,स्थितेऽपि नाशता भवेत् ॥३१५॥

---

१—जले ।

विदेशागमने कार्ये, विचारः क्रियते खलु ।
दक्षिणपश्चिमादिक्षु, चन्द्रयोगो बलीमतः ॥३१६॥
विदेशे सुखता प्राप्तिः, आगच्छेच्छान्तितो गृहे ।
दिशिपूर्वोत्तरस्यां च, सूर्ययोगे न गम्यते॥३१७॥
योग इच्छाप्रदो ज्ञेयः, कथितः स्वरवेदिना ।
स्वीय स्वीय विदिक्षुवै, दिगनुसारजंफलं[१] ॥३१८॥
चन्द्रस्वरे च संचारे, पूर्वोत्तरा निषिध्यते ।
गमनागमनं चैव, पीडाऽथवा प्रजायते ॥३१९॥
दक्षिणपश्चिमायां च, भानुयोगे न गम्यताम् ।
गमने क्रियते तत्र, किंवा मृत्युसमंफलम् ॥३२०॥
दूरविदेशगन्तव्ये, योगेप्रबलता भवेत् ।
निकटदेश गन्तव्ये, मध्यमो योगशान्तिदः॥३२१॥
पृथ्वीजलं च तत्वयुग्, प्रयाणप्रश्नके शुभम् ।
अन्यानि चैव तत्वानि, मन्यतामशुभानि च ॥३२२॥
ऊर्ध्वदिशापतिश्चन्द्रः, अधोदिशापती रविः ।
क्रूरसौम्याकृतिं ज्ञात्वा,गतिभावश्च ज्ञायताम्॥३२३

१—दिगनुसारेण शुभाशुभं ।

शुद्धस्फटिकसंकाशं नारायणमूर्त्तिं ध्यायेत् । सगुणध्यानं सर्वसिद्धिप्रदं सर्वत्र प्रयोक्तव्यम् ।

एवं सगुणध्यानं चतुर्विधं भवति । एतानि वैदिक ध्यानमार्गाणि अन्यान्यवैदिकानि सर्वाणि जघन्यानि । तैःषड्भिःप्रकारैः भगवंतंनारायणं नित्यमभ्यसेत् । सर्वं समाधिना पश्यतीति विज्ञायते ।

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे ध्यानभेदविधिः नाम एकोनशततमः पटलः ॥ ९९ ॥ (मातृकान्तरे ९४)

(अथ शततमःपटलः)

(सामाधिस्वरूपम्-तत्फलम्)

अथातः समाधिं वक्ष्ये—जीवात्म(नः)परमात्मनो (त्मस) स्समावस्थासमाधिः। यथा अनुष्णोपलमादित्य-दर्शनादुष्णत्वमाश्रितमिव (तथा) परामात्मदर्शनात् प्रत्यगात्मा नित्यशुद्धबुद्धमुक्तस्वभाव (क) परमानन्दमयत्वं प्राप्य, परमात्मानं नारायणं सदापश्यत्यनुभवत्येव । अष्टांऽगयोगमार्गेण नित्यमणिमाद्यैश्वर्यंच प्राप्नोति । जीवन्मुक्तो भवेत् ।

(देहत्यागप्रकारः)

अथचांऽत्यकाले सर्वद्वाराणि संयम्य, प्राणमपानेन संयोज्य,शोधयित्वा, सर्वेषु नाडीमार्गेषु निरुध्य

'हंसे'ति सुषुम्नयाचोर्ध्वं गत्वा, हृदयाऽम्भोजे प्राणमारोप्य, तदन्तराकाशे परंज्योतिषि मनोवृत्तिं सुसंयम्य, परमात्मानं पश्यन् भ्रुवोर्मध्ये प्राणमारोप्य, प्रणवाक्षरेण सबिन्दुना देन[समुद्धाटयति]समुत्था(प्य)पयित्वा, प्राणमुत्सृजति। प्राणेनसह सर्वमात्मनि प्रलीयते। तदा परमात्मनासह वैकुण्ठ मवप्नोति।'

(ग्रन्थोपसंहारः)

इत्येवं संसारसमुद्रोत्तरणोपायसाधनं ज्ञानयोगं च ब्रह्मणा पुरा ममप्रणीतम्। तदेव युष्माकं मयाचोक्तं। ज्ञानोपदेशं गुरुशिष्यमार्गेण ज्ञात्वा, पश्चात्परमात्मानं सदा पश्येत्।

एवं सदाध्यातुमशक्यत्वात्, प्रतिमादिषु पञ्च मूर्तिनामभेदैः समावाह्य अभ्यर्चयेत्। एतत्समूर्तार्चनम्। सर्वसिद्धिप्रदत्वात् गृहे देवायतने वा समूर्तार्चनमेव कारयेत्। अन्यथा न परंपदमाप्नोति। तस्मात् श्रुतिचोदितं परमगुह्य मेतत् ज्ञानयोगं च ज्ञात्वा समाचरे दित्याह मरीचिः।

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे अयुतग्रन्थसंहितायां समाधिभेदोनाम शततमः पटलः १००॥ (मातृकान्तरे ९६ प०)

# प्राणायामस्वरूपवर्णनम्

वीतरागं जगन्नाथं सर्वज्ञं शुद्धरूपकम् ।
निष्कलङ्कं जगद्ध्येयं वंदे तं वीरस्वामिनम् ॥१॥
वाराणस्यां च यज्जाता कल्याणकचतुष्टयी ।
यस्योपदेशसामग्रीं प्राप्य तरन्ति सागरम् ॥२॥
येनापकारबुद्धीनां कमठादि दुरात्मानाम् ।
घोरोपसर्गकर्त्तॄणां चोपरि करुणा कृता ॥३॥
घ्राणविवरपर्यन्तं, जलधूलिविमिश्रितम् ।
तादृग् जलं च वर्षन्तं, कमठं तारयन्ति ये ॥४॥
तं पार्श्वा-धीशदेवेशं, नत्वा जगदुद्धारकम् ।
स्वगुरुं हृदि संस्थाप्य, प्राणायामो वितन्यते ॥५॥
ध्यानस्य परिसिद्ध्यर्थं, प्राणायामः प्रकीर्तितः ।
तं विना चित्तवाय्वोश्च, जयं कर्त्तुं न शक्यते ॥६॥
यत्र स्वान्तं मरुत्तत्र, यत्रानिलस्ततोमनः ।
क्षीरनीरसमोऽनयोः, सम्बन्धस्तत्र सम्मतः ॥७॥
एकस्यैव विनाशे च, द्वितीयं परिनश्यति ।
एकस्यैव स्थितौ चैव, द्वितीयं परितिष्ठति ॥८॥

तयोर्द्वयोर्विनाशे च, इन्द्रियबुद्धिनाशनम् ।
ततो मोक्षः प्रजायेत, इति सर्वं व्यवस्थितम् ॥९॥
श्वासोच्छ्वासगतीनां च, निरोधे प्राणयामता ।
रेचकपूरकाभ्यां च, कुम्भकेनैव त्रैविधम् ॥१०॥
कैश्चिदाचार्यवर्यैश्च, प्रत्याहारश्च शान्तता ।
उत्तराधरभेदेन, चत्वारः परिकीर्त्तिताः ॥११॥
अतः सर्वस्य सांकल्ये[1], भेदा सप्तभवन्तिवै ।
कोष्ठादतिप्रयत्नेन, मुखनासाग्ररन्ध्रतः ॥१२॥
वायूनां बाह्यक्षेपे च, रेचकः परिकीर्त्तितः ।
वायुमाकृष्य चापानद्वारपर्यन्तपूरणम् ॥१३॥
पूरकः स समाख्यातः, स्थिरीकारे तु कुम्भकः ।
एतत्त्रयप्रवातानां, बाह्यत्वं प्रतिपाद्यते ॥१४॥
एकस्मात्स्थानतः कृष्ट्वा, अन्यस्थाने च रक्षणम् ।
प्रत्याहारः समाख्यातः शान्तता सर्वसंमता ।१५।
तालुघ्राणास्य द्वारा च, यो वायुः प्रविरुध्यते ।
स शान्तः परिज्ञातव्यः, उत्तरस्तु निरूप्यते ॥१६॥
वायुमापीय चोर्ध्वांशे, चाकृष्य हृदयादिके ।

---

१ तत्र सर्वभित्त्यर्थोऽत्र सु प्रत्ययोज्ञेयः　　　　　१ संकलने

स्थाने धारणरूपत्वं, उत्तरः समधीयते ॥१७॥
ततो विपर्ययरूपेण, वायूनां प्रविधारणम् ।
अधरः स समाख्यातः, कीर्त्तितं वायुसप्तकम् ।१८।
रेचकवायुकर्त्तव्ये, रोगाणां च कफात्मनाम् ।
विनाशो जायते तस्मात्पूरकेनैव पुष्टिता ॥१९॥
व्याधीनां परिनाशश्च, कुम्भकेनैव तन्यते ।
हृत्पद्मप्रविकाशं च, नश्येदान्तरग्रन्थिता ॥२०॥
बलस्थिरत्व वस्तूनां, वृद्धिस्तु सर्वथा भवेत् ।
प्रत्याहारेण कान्तीनां, बलानां च प्रवृद्धिता ॥२१॥
शान्त्या च दोषशान्तिः स्यादुत्तराधरवायूनाम् ।
सेवनात्कुम्भकानां च, स्थिरता सर्वतो मुखी ॥२२॥
स्थानवर्ण क्रियार्थानां, ज्ञायकः शुद्धताजुषः ।
प्राणायामस्य द्वारेण, प्राणापानसमानके ॥२३॥
उदानव्यानवायूनां, जयं कर्त्तुं च शक्यते ।
प्राणवायुश्च नासाग्रे, हृन्नाभिचरणान्तके ॥२४॥
तत्रैव सर्वदा ज्ञेयः, हरिद्वर्णेन संयुतः ।
गमागमस्य[१] व्यापर्त्तेः, धारणेन विजीयते ॥२५॥

१ गमनागमनव्यापारस्य

घ्राणादि स्थानयोगेन, कृत्वा च रेचकं पुनः ।
तथा च पूरकं कृत्वा, व्याप्रियेते गमागमौ ॥२६॥
तथा कुम्भकद्वारेण, धार्यते च पुनः पुनः ।
अपानः कृष्णवर्णः स्याद्गलस्यानु चैव नाडिगः ॥२७॥
चरणपृष्ठभागेषु, गुदायां च स्थितः सदा ।
स्वकीय स्थान योगेन, कृत्वा च रेचकं पुनः ॥२८॥
तथैव पूरकं कृत्वा, जयं कर्त्तुं च शक्यते ।
समानः शुक्लवर्णः स्यान्नाभिहृत्सर्वसन्धिगः ।२६।
स्वकीयस्थानयोगेन, कृत्वा च रेचकं पुनः ।
तथैव पूरकं कृत्वा, विजेतुं शक्यते सदा ॥३०॥
उदानो रक्तवर्णः स्याद् हृत्कण्ठतालु भ्रू स्थितः ।
तथा मस्तकगो ज्ञेयः गमागमनियोगतः ॥३१॥
सर्वथा वशवर्त्तीस्यादुदानस्तादृशो मतः ।
घ्राणाकर्षणयोगेन, हृदयादौ च स्थाप्यते ॥३२॥
बलपूर्वेण तस्यैव, आकर्षणं विधीयताम् ।
आकृष्योपरिरुध्वा च, वशीकर्त्तुं च शक्यते ।३३।
सर्वत्वचितुव्यानः स्याद्वर्णैरिन्द्रधनुः समः ।
प्रसारणैश्च संकोचैः, क्रमेण कुम्भके कृते ॥३४॥

प्रसारणैश्च संकोचैः क्रमेण कुम्भके कृते ॥३४॥
जपं कर्त्तुं च शक्येत इति सर्वं विचार्यताम् ।
प्राणापान समानानामुदानव्यानवायूनाम् ॥३५॥
क्रमेण बीजरूपाणि, तेषां ध्यानाय सन्ति वै ।
स्वरोदयप्रकाशे च, तत्स्वरूपं निरूपितम् ॥३६॥
प्राणवायोर्जयेनैव, जठराग्नेश्च शक्तता ।
दीर्घश्वासस्य वायूनां, जयो देहेषु लाघवम् ॥३७॥
समानापानजेतव्ये, क्षतभङ्गादिरोहणम् ।
जठराग्नौ प्रदीप्तिः स्यान्मांसस्य स्वल्पता भवेत् ।३८।
तथा व्याधिः विनाशः स्यात्तयोश्च विजये सति ।
उदानवायुजेतव्ये उत्क्रान्ति जलकर्दमे ॥३९॥
अबाधा सर्वदा ज्ञेया, व्यानस्य विजये तथा ।
शीतोष्णस्य न पोडा स्यात्कान्तिर्निरोगता सदा ४०
अनेनैव प्रकारेण, प्राणादीनां जये कृते ।
कृत्वाभ्यासं मनःस्थैर्यमभ्यासं सर्वदा भजेत् ॥४१॥
उपरोक्तासने स्थित्वा, पादाङ्गुष्ठान्तकं तथा ।
शनैः शनैश्च वायूनां, कर्त्तव्यं रेचनं पुनः ॥४२॥
पूर्यतां वाममार्गेण, प्रथमं मनसा सह ।
पादाङ्गुष्ठेषु रुध्वा च, रुध्यात्पादतले ततः ॥४३॥

ततः पार्ष्णिविभागेषु, जंघायां गुल्फके तथा ।
उर्वोर्जानुनि पायुस्थे, लिङ्गे नाभौ च तुन्दके ॥४४॥
हृदये कण्ठस्थाने च, जिह्वायां तालुस्थानके ।
नासिकाग्रविभागे च, नेत्रे भ्रूमस्तके तथा ॥४५॥
ततोऽनेन प्रकारेण, शिरसि धार्यतां पुनः ।
ततो रश्मि क्रमेणैव, वायुना सह धारणे ॥४६॥
एकस्थानात्परस्मिंश्च, स्थाने नीत्वा च वायूनाम् ।
ततश्च ब्रह्मरंध्रेषु ततोऽपि नाभिपङ्कजे ॥४७॥
नीत्वा विरेचनं कृत्वा, ततः पश्चाच्च तन्यताम् ।
विरेचने क्रमोऽयं तु दर्शितो योगमार्गतः ॥४८॥
पादांगुष्ठादि स्थानेषु, जंघायां जानुनोस्तथा ।
उर्वोर्गुदा विभागे च, लिंगे च धारणे कृते ॥४९॥
ततः शीघ्रगतिर्भूयाद् बलं च प्रतिपद्यते ।
नाभौ धारणकर्त्तव्ये, ज्वरादिकं विनाशयेत् ॥५०॥
जठरे धारणेनैव, देहशुद्धिस्तु जायते ।
हृदये धारणेनैव, शुद्धं ज्ञानं प्रजायते ॥५१॥
कूर्मनाड़ीषु धर्त्तव्ये, रोगजरे विनाशयेत् ।
कण्ठे च धारणेनैव, क्षुधातृषे विनश्यतः ॥५२॥

जिह्वाग्रे धारणेनैव, रसज्ञानं प्रजायते ।
नेत्रयोर्धारणेनैव, रूपज्ञानं प्रजन्यते ॥५३॥
मस्तके धारणेनैव, नाशयेन्मस्तकव्यथाम् ।
तथा क्रोधस्य शान्तिश्च, जायते नात्र संशयः ।५४।
ब्रह्मरन्ध्रेषु धर्त्तव्ये, सिद्धस्य दर्शनं भवेत् ।
अनेनैव पकारेण, धारणाऽभ्यासतां भजेत् ॥५५॥
ततः प्रवनचेष्टायाः, निःसन्देहे कृते सति ।
सिधिप्रधानहेतूनां, ज्ञानार्थमुद्यतोभवेत् ॥५६॥
नाभिसंचारभावस्य, निष्कासने कृते सति ।
हृद्गतिं कारयित्वा च, द्वादशान्ते च धारणे ॥५७॥
ततः पवनस्थानानि जानीते स्थानयोगतः ।
तस्य संचारस्थानस्य, गतिज्ञानस्य योगतः ॥५८॥
अभ्यासस्यैव योगेन, शुभाशुभ फलोदयात् ।
तद्युक्तकालभावस्य, आयुषो ज्ञानता भवेत् ॥५९॥
ततोऽपि योगिना चैव, स्वान्तस्य वायुना सह ।
शनैः शनैश्च कृष्ट्वा च हृत्पद्मेषु नियन्त्रयेत् ॥६०
तादृक्कार्ये च कर्त्तव्ये, अविद्या परिनश्यति ।
विषयेच्छा विनाशेन, विकल्पांश्च विनाशयेत् ।६१।

ज्ञानं हृदि च जायेत, प्राणायामविधापने ।
तत्र चित्ते स्थिरे जाते वायोः क्व मण्डले गतिः ॥६२॥
कुत्र सङ्क्रमवैश्रामो, नाडी च कीदृशी भवेत् ।
इत्यादि सर्ववार्त्तानां, ज्ञानं च सुलभं भवेत् ॥६३॥
नासिका विवरे भौमं, वारुण वायव्ये तथा ।
आग्नेयकाभिधानानि, मन्यते मण्डलानि च ॥६४॥
मण्डले तत्र भौमं च, पृथिव्या बीजपूर्णकम् ।
वज्रचिह्नेन संयुक्तं, तप्त सुवर्णबिम्बकम् ॥६५॥
वारुणाक्षरलाञ्छितं, चन्द्रसमानकान्तिकम् ।
अमृतनिर्झरैः सान्द्रं, ज्ञेयं वारुणमण्डलम् ॥६६॥
स्निग्धसाञ्जनसंकाशमभ्रसदृशकान्तिकम् ।
अत्यन्तवृत्तबिन्दुना युक्तं दुर्लक्ष्यवायुना ॥६७॥
आक्रान्तं चञ्चलं चैव ज्ञेयं वायव्यमण्डलम् ।
चतुर्थमण्डलस्यापि, स्वरूपं प्रतिपाद्यते ॥६८॥
ऊर्ध्वज्वालासमायुक्तं भयंकरं त्रिकोनकम् ।
स्वस्तिकेनैव संयुक्तं स्फुलिंगसमपिङ्गलम् ॥६९॥
तथा तद् बीजसंयुक्तं ज्ञेयकाग्नेयमण्डलम् ।
एतानि मण्डलान्येवं, ज्ञातव्यानि मनीषिभिः ॥७०॥

अभ्यासस्यैव द्वारेण, पूर्वोक्त मण्डलानि च ।
स्वयमेव च ज्ञेयानि, आत्मना चात्मज्ञानतः ॥७१॥
तच्चतुर्मण्डले चैव, क्रमतो भ्रमद्वायूनाम् ।
चतुष्प्रकाररूपेण, ज्ञानं कार्यं च सर्वदा ॥७२॥
पीतवर्णस्य द्वारेण, भृत्वा च घ्राणछिद्रकम् ।
शनैः शनैश्च सञ्चारि, कोणाष्टाङ्गुलमानतः ।७३।
पुरन्दरत्व वातेन, नाम्ना सर्वत्र गीयते ।
श्वेतशीतलनीचैश्च, भागे शीघ्रं च गच्छति ॥७४॥
द्वादशाङ्गुलमानेन, वरुणो वायुको भवेत् ।
शीतोष्णकृष्णातिर्यक् च निरन्तरं च गम्यते ॥७५॥
षडङ्गुलप्रमाणैश्च, संचारे पवनाभिधः ।
बालसूर्यसमाज्योतिरत्युष्णश्चतुरङ्गुलः ॥७६॥
आवर्तायुक्तता तत्र, ऊर्ध्वं संचारिवायुकः ।
दहनाभिधता ज्ञेया, सर्वत्र सर्वयोगिभिः ॥७७॥
स्तम्भनादिककार्येषु उत्तमश्च पुरन्दरः ।
सर्वोत्तमेषु कार्येषु, वरुणः परिज्ञायते ॥७८॥
मलीने चंचले कार्ये, पवनः परिकीर्तितः ।
तथा वश्यादि कार्येषु, वह्निश्च परिभाषितः ॥७९॥

छत्रचामरहस्त्यश्वाः, ज्ञेयानि च पुरन्दरात् ।
आरामराज्यसमग्री, अभीष्टफलवस्तूनि ॥८०॥
राज्यादि सुखसम्पूर्णं, पुत्रस्वजनबन्धुकम् ।
सरसवस्तु संयोगं, सूचयेद्वरुणः सदा ॥८१॥
पवनसेवनेनैव, कृषिसेवादि कार्यकम् ।
शीघ्रं नश्यति मृत्युं च, सूचयेन्नात्र संशयः ॥८२
भयकलहवैरादि, त्रासश्च परिजायते ।
ततस्तत्सेवनं त्याज्यं, तादृग्योगं चिकीर्षता ॥८३॥
दहनसेवनेनैव, दाहभयौ च शोकता ।
रोगदुःखादि विघ्नानां, श्रेणिं विनाशतां भजेत् ८४
पूर्वोक्त सर्ववायुश्च, चन्द्रसूर्यस्य मार्गतः ।
मण्डलेच प्रवेशे तु, शुभकारी भवेत्सदा ॥८५॥
निष्कासे विपरीतं स्यात्प्रवेशे जीववायुता ।
निष्काश समये चैव, मृत्युवायुश्च ज्ञायताम् ॥८६॥
चन्द्रमार्गप्रवेशे च, इन्द्रवरुणवायुकौ ।
सर्वसिद्धिप्रदातारौ, विज्ञेयौ वायुवेदिना ॥ ८७॥
सूर्यमार्गात्प्रवेशे च, निष्क्रमणे तथैव च ।

पवनदहनौ वायूदक्षिणमार्गगच्छतः ।
विनाशककरौ ज्ञेयौ, अन्यमार्गे च मध्यमौ ॥८९
इङ्गलपिंगले चैव, सुषुम्ना नाडिका मता ।
तासां क्रमेण स्थानानि, चन्द्रसूर्यशिवानि च ॥९०
तासु च वामनाडी तु, सर्वदा सर्व गात्रके ।
अमृतवर्षिणी ज्ञेया, अमृतं बिभृती सदा ॥९१॥
अभीष्टफलसूच्या सा विज्ञेया वामनाडिका ।
दक्षिणनाडिसंचारः, अनिष्टफलसूचकः ॥९२॥
संहारकारिका साऽपि, विज्ञेया नाडिवेदिना ।
सुषुम्ना संचलन्ती सा, सिद्धिमोक्षप्रदायिनी ॥९३
अभ्युदयादि कार्येषु, वामनाडी प्रशंसिका ।
संभोगाहारयुद्धादि दीप्तकार्येषु दक्षिणा ॥९४॥
प्रभाते शुक्लपक्षे च, वाम नाडी शुभा मता ।
कृष्णपक्षे च दक्षिणा, नाडी शुभफला सदा ॥९५
पूर्वोक्तपक्षसर्वेषु, त्रिषु त्रिषु दिनेषु च ।
चन्द्रसूर्योदयौ ज्ञेयौ, शुभफलप्रदानकौ ॥९६॥
वायुश्चन्द्रसमाश्रित्य, उदयं यदि गच्छति ।
अस्त[illegible] कालं, सर्वे परिसमाप्नयात ॥९७॥

तदा स शुभकारीस्यात्सूर्येषु चोदयस्तथा ।
चन्द्रेषु चास्ततां यायात्कल्याणफलकः सदा ॥९८
शुक्लपक्षे दिनारम्भे, काले च ध्यानपूर्वकम् ।
प्रतिपद्वायुसञ्चारः, शुभोऽशुभश्च लोक्यताम् ॥९९
आद्यत्रयदिने वायुः, सोदेति चन्द्रके स्वरे ।
ततस्त्रयदिने सूर्ये, कुरुते संक्रमं सदा ॥१००॥
ततस्त्रयदिने चन्द्रे, ततः सूर्ये च चन्द्रके ।
एवं च पूर्णमास्यन्तं, तदुगमनं प्रजायते ॥१०१॥
कृष्णपक्षे दिनारम्भे, सूर्योदयेन सार्धकम् ।
आद्यत्रय दिने सूर्ये, संचारः शुभसूचकः ॥१०२॥
ततस्त्रय दिने चन्द्रे, ततः सूर्ये च चन्द्रके ।
अमावास्याश्च पर्यन्तं, विज्ञेयं सर्वसज्जनैः ॥१०३॥
पक्षत्रितयपर्यन्तमन्यथा यदि स्याद् गतिः ।
षड्मासावधि तस्यायुः, समाप्तिं परिगच्छति ।१०४।
पक्षद्वयविपर्यासे, अभीष्टबन्धुवस्तुनः ।
विपत्तिः परिज्ञातव्याः, एक पक्षे विभाव्यते ॥१०५॥
एकपक्षे विपर्यासे, दारुणरोगता भवेत् ।
द्वित्रिदिनविपर्यासे, कलहः समुत्पद्यते ॥१०६॥

द्व्यादिदिनपर्यन्तं, रात्रिदिवसकालिकम् ।
वायोः सूर्ये च संचारः, मृत्युः क्रमेण ज्ञायताम् १०७
त्रिद्व्येकवर्षपर्यन्तं, मृत्युकालश्च सम्मतः ।
चन्द्रस्वरस्य संचारः, फलेन सह कथ्यते ॥१०८॥
एक द्व्यादित्रिपर्यन्तं रात्रिदिवसकालिकम् ।
वायोश्चन्द्रे च संचारः, तदा रोगश्च ज्ञायताम् १०६
यद्येकमासपर्यन्तं, सूर्यनाडी वहेत्सदा ।
एकरात्र्यवसाने च, मृत्युकालश्च सर्वथा ॥११०॥
यद्येकमासपर्यन्तं, चन्द्रनाड़ी वहेत्सदा ।
तदा तु धनहानिश्च, ज्ञातव्या स्वरवेदिना ॥१११॥
त्रिनाड़ी प्रविमार्गे च, वहेद्वायुश्च सर्वदा ।
मध्याह्नकालिके पश्चात् मृत्युर्भवति निश्चितम् ।११२
दशदिवशपर्यन्तं, द्विनाडिमार्गके स्थिते ।
कर्त्तव्ये गमने मृत्युं, सूचयेन्नात्र संशयः ॥११३॥
यदि दशदिनानां च, चन्द्रनाड्यां स्वरो वहेत् ।
तदोद्वेगकरोगादि, जायते वायुदोषतः ॥११४॥
तथार्धयामपर्यन्तं, इतस्ततश्चलेत्सदा ।
तदा तु लाभपूजादि, भवति वायुयोगतः ॥११५॥

विषुवत्कालिके ज्ञाते, यस्य नेत्रं परिस्फुरेत् ।
तस्य मृत्युस्तु निःशंकं, एक दिनान्तके भवेत् ॥११६॥
पञ्चसंक्रान्तिमुल्लंघ्य, यदि वायुर्मुखे चलेत् ।
तदा मित्रधनानां च, हानिः स्यात्सर्वतो मुखी ।११७।
निस्तेजत्वं विना मृत्युं, सर्वानर्थं ततो भवेत् ।
त्रयोदशासु सङ्क्रान्तिं, यदि च समुल्लंघयेत् ॥११८
चले तु वामनाड्यां च तदा रोगादि जायते ।
मार्गशीर्षस्य संक्रान्तेः, समाश्रित्य च तत्क्षणम् ११६
पंचदिनावसानं च, यद्येकनाडिकां बहेत् ।
अष्टादशे च वर्षान्ते, तदा मृत्युं च सूचयेत् ।१२०।
संक्रान्तिं शारदीकाल मारभ्य दिनपञ्चकम् ।
एकनाड्यां वहेद्वायुः, पञ्चदशसमान्तके ॥१२१॥
मृत्युकालश्च विज्ञेयः कालवेदि महात्मना ।
श्रावणमासप्रारम्भे, यदि च दिनपञ्चकम् ॥१२२॥
एकनाड्यां वहेद्वायुः, द्वादशवर्षकालिके ।
मृत्युकालश्च विज्ञेयः, सर्वदा योगज्ञानतः ॥१२३॥
ज्येष्टमासस्य प्रारम्भाद्दशदिनावसानकम् ।
एकनाड्यां बहेद्वायुः, नववर्षे तु मृत्यता ॥१२४॥

चैत्रमासस्य प्रारम्भात्, दिवसपञ्चमानकम् ।
एकनाड्यां वहेद्वायुः, षड्वर्षान्ते च मृत्युता ।१२५।
माघमासस्य प्रारम्भाद्दिवसपञ्चमानकम् ।
एकनाड्यां वहेद् वायुं त्रिवर्षान्ते च मृत्युता ॥१२६
यदि वायुश्च सर्वत्र, द्वित्रिचतुर्दिनान्तकम् ।
एकनाड्यां बहेत्सोऽथ, मृत्युश्च वर्षमध्यके ॥१२७
यथा क्रमानुसारेण, मृत्युकालश्च ज्ञायताम् ।
चलद्वायुं न जानीया :, यदि शुभप्रकारतः ॥१२८॥
तदा तु पीतशुक्ले च, अरुणश्यामबिन्दुतः ।
तस्यैव निश्चयः कार्यः, वायुज्ञानं चिकीर्षता ।१२९।
द्व्यंगुष्ठाभ्यां चद्वौ कर्णौ द्विमध्यमाङ्गुलिकात्तथा ।
द्विनासाच्छिद्रकौ द्वौ च, कनिष्ठाऽनामि[1]योगतः[2] १३०
मुखपद्मं निरुंध्येत, द्वितर्जनीकया च वै ।
नेत्रकोणं च रुंध्याच्च, तथा रुध्वा च स्वासताम् १३१
सावधानमनो भूत्वा, बिन्दुरङ्गो विलोक्यताम् ।
पीतबिन्दुनिपाते च, भौमतत्वं तु ज्ञायताम् ।१३२।
श्वेतबिन्दु निपाते तु, वरुणतत्त्वता भवेत् ।

१—अनामिका । २—ताभ्यां ।

कृष्णबिन्दुनिपाते च पवनः परिज्ञायताम् ॥१३३॥
रक्तबिन्दुनिपाते वै, हुताशनं च ज्ञायताम् ।
बिन्दुनिपातकाले च तत्त्वज्ञानं च कीर्त्तितम् ॥१३४॥
चलन्ती नाडिका वामा, दक्षिणया निरुध्यते ।
तस्यांगं परिपीड्येत, ततोऽन्यनाडिका भवेत् ।१३५।
विचारशीलमानुष्याः, वामभागाग्रभागके ।
चन्द्रक्षेत्रं च जल्पन्ति क्षेत्रविज्ञानहेतवे ॥१३६॥
लाभाऽलाभे सुखं दुखं जीवनमरणे तथा ।
वायुसञ्चारज्ञातारः विरलाः सन्ति सज्जनाः ॥१३७॥
यो बुद्धिमांश्च योगीन्द्रः विशुद्धां नाड़िकां तथा ।
सुविशुद्धप्रकारेण, जानाति वायुतस्ततः ॥१३८॥
उत्पद्यमानभावानां, सामर्थ्यानां च ज्ञातृता ।
नाभ्यष्टकर्णिकारूढं, कलाबिन्दुपवित्रितम् ॥१३९॥
रेफेण स्फुट-कान्तियुग्, हकारपरिचिन्तनम् ।
ततो विद्युत्त्व वेगेन, अग्निकणशतानि च ॥१४०॥
शिखानां सूर्यमार्गाच्च, तत्र रेचनता भवेत् ।
ततो नभस्तले तस्य, प्राप्त्यर्थं यत्नतां भजेत् ।१४१।
तत्पश्चादमृतार्द्रं च, कृत्वा शनैः शनैस्तथा ।

उतार्य चन्द्रसादृक्षी, कान्तिकं ह्यक्षरं पुनः ॥१४२॥
चन्द्रमार्गेण सन्नाभिपद्मे च परिस्थाप्यताम् ।
अनेनैव प्रकारेण, विशुद्धमार्गतस्तथा ॥१४३॥
निरन्तरं च प्रावेश्यं, निष्क्रमणं करोति यः ।
नाड्यभ्यासक्रियाणां सः, करणे कुशलो भवेत् १४४
अनेनैव प्रकारेण, नाड्या ह्यभ्यासद्वारतः ।
मेधावी कुशलो ज्ञानी, स्वकीयेच्छानुसारतः ॥१४५॥
तत्क्षण पुटकेनैव, घटितं सर्वथा भजेत् ।
अतो वायुविज्ञानार्थं, यत्नं करोतु सर्वदा ॥१४६॥
एकस्यां नाडिकायां च, सार्द्धद्विघटिकालकम् ।
सर्वत्र विद्यते वायुः, ततोऽनुपरिवर्तनम् ॥१४७॥
तां नाड़िकां च संत्यज्य, द्वितीय नाडिकां व्रजेत् ।
एवं क्रमेण ज्ञातव्यं, वायुसंचारमानकम् ॥१४८॥
स्वस्थे मनुष्यजीवे वै, एकत्र दिनरात्रिकम् ।
प्राणपवनसंख्यायाः, प्रमाणं कीदृशं भवेत् ।१४६।
गमनागमरूपेण, श्वासोच्छ्वासप्रमाणकम् ।
तन्यते यदि ज्ञानार्थं, ज्ञानिभिः कथितं तदा ।१५०।
एकविंशतिसाहस्त्रं, षट्शताधिकरूपकम् ।

प्रमाणं परिज्ञातव्यं, प्राणवायोश्च सर्वदा ॥१५१॥
अज्ञानी पुरुषा येऽपि, वायुसंक्रमणादिकम् ।
न जानन्ति कथं ते च प्रवीणास्तत्त्ववार्त्तके ॥१५२॥
पूरकवायुपूर्णेन, अधोमुखं च पङ्कजम् ।
प्रफुल्लितं प्रजायेत, तथोर्ध्वमुखतां व्रजेत् ॥१५३॥
कुम्भकवायुद्वारेण, प्रबोधितं भवेत्तथा ।
रेचकेन ततः क्षिप्त्वा, वायुर्हृत्पद्मपङ्कजात् ॥१५४॥
आकृष्यते तथोर्ध्वं श्रोतो मार्गग्रन्थिभेदनम् ।
कृत्वा ब्रह्मपुरं नीत्वा, पश्चाद्योगी कुतूहली ।१५५।
ब्रह्मरन्ध्राच्च निष्कास्य समाधियुक्तको भवेत् ।
अर्कतूले शनैर्वेधाभ्यासतां परितो व्रजेत् ॥१५६॥
मालतीमुकुलादौ च, ततस्तद्दात्ववर्जितः ।
स्थिरलक्ष्यकद्वारेण, सदा वेधनतां भजेत् ॥१५७॥
दृढाऽभ्यासकतां भाव्य, वरुणवायुतस्ततः ।
कर्पूरागुरुकुष्ठादि गन्धद्रव्येषु स्वच्छतः ॥१५८॥
प्रकारतश्च वेधं वै, कृत्वा च तदनन्तरम् ।
तत्र लक्ष्यं च सम्प्राप्य, तथैव वायुयोजने ॥१५९॥
कौशल्यं च परिप्राप्य, उद्यमपूर्वकं तथा ।

सूक्ष्मपक्षि शरीरेषु, वेधं पतंगदेहके ॥१६०॥
कृत्वा भृङ्गशरीरेषु, अभ्यासदृढतां व्रजेत् ।
ततो हरिणपश्वादौ, वेधं कृत्वा तथैव च ॥१६१॥
तादृशाधीरयोगीन्द्रः, अनन्य मानसो भवेत् ।
जितेन्द्रियकतां प्राप्य, संचरणं करोति वै ॥१६२॥
ततो नराश्वहस्त्यादि, देहे प्रवेशनिर्गमौ ।
कृत्वा क्रमेण पुस्तादौ, उपले संक्रमं भजेत् ॥१६३
अनेनैव प्रकारेण, मृतप्राणिकलेवरे ।
वामनासाग्रद्वारेण, प्रवेशं लभते जनः ॥१६४॥
किन्तु पापस्य शंकातः, जीवितप्राणिदेहके ।
प्रवेशो नैव कर्त्तव्यः, भवभीरुमहात्मना ॥१६५॥
अनेनैव प्रकारेण, परदेहप्रवेशने ।
अभ्यासशक्तितां ज्ञात्वा, विमुक्तयोगिना समम् १६६
निर्लेपरूपकं भूत्वा, स्वेच्छाऽनुकूलभावतः ।
आश्चर्यजनकं ज्ञेयं, परदेहप्रवेशनम् ॥१६७॥
केवलं तच्च स्वाभ्यासशक्तिज्ञानाय शिक्ष्यते ।
न परवञ्चनार्थं च, योगिना परितन्यते ॥१६८॥
तस्यैव सिद्धिकर्त्तव्ये, प्रयत्ने शतशः कृते ।

अधिकसमये जाते सिद्धिः कस्यापि नो भवेत् ।१६९

क्लेशकारणभूतेनानेकोपायेन वायूनाम् ।
कृत्वा जयं च देहस्थ-नाडीप्रचारस्वाधीनम् ॥१७०॥

कृत्वाऽश्रद्धेय देहे च, परस्मिन् संक्रमे कृते ।
सिद्धेऽपि केवलं तेषां, विज्ञानासक्त योगिनाम् १७१

मोक्षमार्गस्य संसिद्धिः, कदापि नैव जायते ।
आत्मासक्तत्व युक्तानां, तत्र स्पृहा न विद्यते १७२

प्राणायामेन संपीड्ये, स्वान्ते स्वास्थ्यं च नो भवेत् ।
किमर्थमुच्यते तादृक्, अतो हेतुर्निगद्यते ॥१७३॥

प्राणस्यायमने पीड़ा, भवेत्तत्र न संशयः ।
पीडातश्चित्तवैफल्यं, ततः शान्तिः कुतो भवेत् १७४

पूरककुम्भके चैव, रेचके च परिश्रमः ।
कर्त्तव्यो नैव चित्तस्य, क्लेशकारण सम्मतः ।१७५।

क्लेशकारणरूपे च, तादृक् परिश्रमे तथा ।
कर्त्तव्ये मोक्षप्राप्तिश्च, प्रत्युत विघ्नतां भजेत् ।१७६।

विघ्नानां संनिधाने च, सर्वदा विद्यमानके ।
कार्ये सिद्धिस्तु कुत्रापि, कदापि नैव सम्भवेत् ॥१७७

नेतीधोत्यादिके येन, हठयोगप्रधानकम् ।

कृतं तेनापि संसार भ्रान्तिगर्त्तासु पातनम् ॥१७८

कृतं सर्वत्र स्वस्यैवमतो हि हठयोगके।

अभ्यासं सर्वथा त्यक्त्वा, भावे[1] सम्मुखतां भजेत् १७६

प्राणायामस्तु भावे च, रेचकादौ च सर्वथा।

कृतो येनैव तेनापि, मोक्षमार्गोऽपि साधितः ॥१८०॥

पातंजलानुसारेण, प्राणायामः प्ररूप्यते।

आसनाभ्यासतः पश्चात्तन्निरूपणता भवेत् ॥१८१॥

आसनसिद्धिकार्याच्च, श्वासोच्छ्वासगतेस्तथा।

प्राणायाम--निरोधश्च, कथ्यते योगवेदिना ॥१८२॥

बाह्यपवनवस्तूनामान्तरप्रणिवेशने।

श्वासश्च परिकथ्येत प्रश्वासः प्रणिगद्यते ॥१८३॥

आन्तरवायुरूपस्य, बाह्यनिष्कासने सति।

प्रश्वासः परिजायेत, द्विगतिरोधने किल ॥१८४॥

प्राणायामस्तु पूर्णः स्यात्प्राणायामप्रयोगतः।

देशकालप्रसंख्याभिः, मात्रासम्बन्धकैस्तथा ।१८५।

बाह्याभ्यान्तर भेदाभ्यां, तथा च स्तम्भवृत्तितः।

प्राणायामे च दीर्घत्वं, सूक्ष्मत्वं सर्वदा भवेत् १८६

---

१ भावप्राणायामे

आन्तरश्वासव्यक्तीनां, बाह्यनिष्कासने सति ।
बाह्यनिरोधकर्त्तव्ये, बाह्यकुम्भक उच्यते ॥१८७॥
तद्विधिश्चाष्टकृत्वश्च, रेचककरणे किल ।
षोडश बाह्यकुम्भं च, कृत्वा चतुष्कवारतः ॥१८८॥
पूरके परिकर्त्तव्ये, रेचकं पूरकैः सह ।
बाह्यकुम्भककर्त्तव्ये, बाह्यवृत्तिः प्रकथ्यते ॥१८९॥
बाह्यश्वासस्वरूपं च, आन्तरे परिकृष्य च ।
आन्तरप्रणिरोधे च, आन्तरकुम्भको भवेत् ॥१९०॥
तद्विधिः परिदृश्येत, चतुः प्रणवपूरकम् ।
कृत्वा षोडशचान्तर्यं, कुम्भकं परितन्यते ॥१९१॥
ततोऽष्टरेचकांश्चैव, कृत्वाऽनेन प्रकारतः ।
पूरकरेचकाभ्यां च, कुर्यादान्तरकुम्भकम् ॥१९२॥
तत आभ्यन्तरं कुर्यात् ततो हि बाह्यकुम्भकम् ।
बाह्याभ्यन्तररूपेषु, एकत्र कुत्रचित्तथा ॥१९३॥
सुखपूर्वकप्राणानां, रोधने स्तम्भवृत्तिकम् ।
चतुःप्रणवरूपेण, पूरके करणे सति ॥१९४॥
अष्टरेचक कर्त्तव्ये, ततोऽनेन प्रकारतः ।
पूरकरेचकौ कृत्वा, यत्र कुत्र सुखेन च ॥१९५॥

प्राणानां रोधने चैव, स्तम्भवृत्तिर्निगद्यते ॥
अपरे तस्य भेदाश्च, यावत्संख्याः क्षणा यथा ॥१९६
जायन्ते पूरके वायौ, तावत्संख्याक्षणास्तथा ।
रेचके कुम्भके स्युश्च, संख्याभेदो न विद्यते ।१९७।
प्राणवायोश्च नाभौ च, हृदयकण्ठभागके ।
नासाऽऽभ्यन्तरभागे च, आन्तरदेश उच्यते ।१९८।
नासिका पुरतो वायुः बाह्यषोडश चांगुलम् ।
बाह्यदेशः प्रवक्तव्यः, साधकैः पूरके क्षणे ॥१९९॥
प्राणायामे च कर्त्तव्ये, नाभौ च श्वासकर्षणम् ।
सोऽपि षोडश चांगुलपर्यन्तं च बहिः क्षिपेत् ॥२००
यैर्हृदयान्तके चैव, आन्तरं परिकृष्यते ।
तैर्द्वादशांगुलान्तं च, बहिश्च परिक्षिप्यते ॥२०१॥
यो योगी कण्ठपर्यन्तं, श्वासं च परिकर्षति ।
सोऽप्यष्टांगुले बाह्ये, निष्कासनं तनोति च॥२०२॥
नासाऽभ्यन्तरभागे च, उपर्यन्तिमभागके ।
परिकर्षति श्वासं च, स चतुरंगुलांस्तथा ॥ २०३॥
बहिश्चा श्वासतां नीत्वा, पूर्वपूर्वस्य चात्र वै ।
अपेक्षोत्तरकालीने, सूक्ष्मत्वं पूर्ववस्तुषु ॥२०४॥

दीर्घत्वं परिज्ञायेतां, प्राणायामे च ह्यंकतः[1] ।
परस्परं च कालस्य, सम्बन्ध दृढ़भावतः ॥२०५॥
तस्य नियमरूपस्य, व्यतिक्रमो न जायते ।
चतुः प्रणवसंख्यातः, पूरककृत्यकालिके ॥२०६॥
एकक्षणश्च सञ्ज्ञातः, षोड़श[illegible]था ।
कुम्भके परिकर्त्तव्यो, चतुः क्षणा भवन्ति च ॥२०७॥
अष्टप्रणवद्वारेण रेचके च कृते सति ।
द्वौ क्षणौ परिज्ञातव्यौ, मन्त्रसंख्या न मात्रके ॥२०८
तल्लग्नसमयस्यैव, अभिधा काल नामतः ।
यदि च सुखपूर्वेण, साधकेन कृते सति ॥२०९॥
द्वित्रिचतुर्गुणान्तं च, यावदिच्छन्ति तास्तथा ।
संख्याश्च परिवर्धन्ते, लाभश्च जायते ततः ॥२१०॥
कालमात्राधिके चैव, प्राणायामस्य दीर्घता ।
न्यूनतायां च सूक्ष्मत्वं, प्राणायामेतु ज्ञायताम् ॥२११
बाह्याभ्यन्तरवस्तूनां विषयाणां च त्यागतः ।
केवलकुम्भकश्चैव, प्राणायामः स तूर्यकः ॥२१२॥

---

१ संख्यातः ।

शब्दस्पर्शरसानां च, गन्धवर्णस्य वस्तुनः ।
इन्द्रियविषयाणां च, बाह्यविषयता भवेत् ॥२१३॥
सङ्कल्पप्रविकल्पानां, विषयो मानसो मतः ।
तेषां च परित्यागे च, कर्त्तव्ये प्राणमार्गतः ॥२१४॥
स्वत एवावरोधः स्यात्प्राणायामः स तूर्यकः ।
प्राक्सूत्रे दर्शिते प्राणायामे च प्राणवस्तूनाम् ॥२१५
निरोधेन मनोरोधः, संयमो मानसो मतः ।
मन इन्द्रियरोधाश्च, प्राणसंयमता भवेत् ॥२१६॥
अत्र प्राणस्य रोधार्थं, निर्दिष्टं स्थानकं नहि ।
यत्र कुत्रापि स्थानेषु, यथेच्छं परिरुध्यताम् ॥२१७॥
तथा च काल संख्यायाः विधानमपि नो भवेत् ।
मात्राणामपि संख्यायाः विधानं नहि सर्वथा ॥२१८
प्राणायामस्य संसिद्धौ, मनः स्थैर्यं प्रजायते ।
धारणानां च तेषां वै, सामर्थ्यं सर्वथा भवेत् ॥२१९
प्राणायामेन साकं च, स्वासनाभ्यासयोगके ।
नाडीचक्रस्वरूपाणां, गृहाभ्यन्तरवस्तूनाम् ॥२२०॥
भिन्नाङ्गानां च याहश्यः, प्रसुप्तशक्तयस्तथा ।
जागृतिस्तत्र काले च, उत्तमयोगप्राप्तये ॥२२१॥

शरीरे स्वस्थता तस्य, दृढरूपा प्रजायते ।
रोगिमनुष्यमात्रैश्च, चित्तैकाग्र्यं न तन्यते ॥२२२॥
तथोच्च तत्त्वज्ञाने च, स्थिरध्यानं न जायते ।
अतो योगस्य सिध्यर्थं, प्रारंभकालिके तथा ॥२२३॥
आसनाभ्यासकर्त्तव्यः, यतो देह दृढं भवेत् ।
चित्ते सुस्थिरता चैव, जायते योगभावतः ॥२२४॥
श्वासानां चैव व्यायामः प्राणायामः स कथ्यते ।
आलस्यमूढतादीनां, देहदुर्बलवस्तूनां ॥२२५॥
प्राणायामेन नाशः स्यात्प्राणायामस्त्वतो मतः ।
हठयोगस्य भेदाश्च, कथ्यंते हठयोगतः ॥२२६॥
षट्कर्मासनमुद्राः प्रत्याहारप्राणसंयमौ ।
ध्यानं समाधि रंगानि, सप्तस्यु हठयोगके ॥२२७॥
धौतिर्वस्तिस्तथा नेतिर्लौकिकी त्राटकं तथा ।
कपालभातिश्चैतानि, षट्कर्माणि समाचरेत् ॥२२८॥
आसनं पूर्वप्रोक्तं च, मुद्रा तु प्रतिपाद्यते ।
महामुद्रा नभोमुद्रा, जालंधराख्य बन्धकः ॥२२९॥
उड्डीयानमहाबन्धौ, मूलबन्धश्च वेधके ।
विपरीतकराश्चैव, खेचरी योनिमुद्रिका ॥२३०॥

शक्तिशालिवज्रोऽल्यौ च तडागी दद्रुकी तथा ।
शाम्भवी धारणे पञ्च, अश्विनी पाशिनी तथा ॥२३१
भुजङ्गिनी च काकी च, मतङ्गी मुद्रका इमाः ।
राजयोगस्य ससाङ्गं, विचारणीयकं सदा ॥२३२॥
धारणे द्व्यंग भूते च, प्रकृति ब्रह्मधारणे ।
ध्यानस्यत्र्यंग रूपाणि, विराटीशस्य ध्यानके ॥२३३
ब्रह्मध्यानं तृतीयं स्यात्समाधिश्चतुरङ्गिका ।
वितर्कानुगतश्चैव, विचारानुगतस्तथा ॥२३४॥
आनन्दानुगतश्चैव, अस्मिताऽनुगतः किल ।
तस्यैव स्थूलभूतश्च, चेन्द्रियसूक्ष्मता तथा ॥२३५॥
अहङ्कारादि वस्तूनि, ध्यातव्यानि भवन्ति च ।
सूक्ष्मक्रिया स्वरूपैश्च स्वरोद साधनादिषु ॥२३६॥
प्रत्याहारेण नादानुसन्धानरूपवस्तुनः ॥
धारणाभिश्च षट्कर्मभेदनकृतिनस्तथा ॥२३७॥
तेषां सम्बन्धता ज्ञेया, अग्रे रूपं विचार्यते ।
वायुतो द्व्यंगुलोर्ध्वं च, गुह्यतो द्व्यंगुलं ह्यधः ॥२३८
चतुरङ्गुलविस्तृतं, समस्तनाडिमूलकम् ।
पक्ष्यंडसदृशं चैव, एककन्दस्तु विद्यते ॥ २३९ ॥

यत्र नाडिसहस्त्र च, द्वासप्ततिक्रमानके ।
निष्कास्य नाडिका तस्मात्सर्वदेहे च प्राप्यते ॥२४०
तासां मध्ये च योगेषु, नाडित्रयप्रधानता ।
इङ्गले पिङ्गले चैव, सुषुम्ना चाभिधानकाः ॥२४१॥
ईडा भोगवती गङ्गा, पिङ्गला यमुना नदी ।
ईडापिङ्गलयोर्मध्ये, सुषुम्ना च सरस्वती ॥२४२॥
प्रणवाकृति रूपा च, सुषुम्ना धनुषाकृतिः ।
ईडापिङ्गलमध्यत्वाद् मेरूदण्डान्तकं नयेत् ॥२४३॥
तत् स्थानात्पृथग्भूत्वा, वक्राकारं च धारयेत् ।
भ्रू युगलोर्ध्वमीडाभिः, पिङ्गलाभिस्तथा सह ।२४४।
सङ्गता ब्रह्मरन्ध्रास्ये, ब्रह्मरन्ध्रपर्यन्तकम् ।
ईडा पिङ्गलसादृशी, सुषुम्ना मूलकन्दतः ॥२४५॥
निर्गताब्रह्मरन्ध्रान्तपर्यन्तं परिगच्छति ।
चानेनैव प्रकारेण, नीत्वा मूले च कन्दके ॥२४६॥
ब्रह्मरन्ध्रकपर्यन्तं, विस्तृता सुषुम्नादितः ।
नाडिताया[1]श्च षड्ग्रन्थि, षट्चक्राभिख्यतां वहेत् २४७
योगक्रियाप्रद्वारेण, मूलाधारस्थिता तथा ।

---

1 षटचक्रद्वारतः

कुलकुण्डलिनीं नाड़ीं, प्रबोध्य चक्रद्वारतः ॥२४८॥
सुषम्ना प्रथमे चैव, प्रवाह्य ब्रह्मरन्ध्रके ।
उपरिष्टाच्च साहस्रदलकमलसंस्थिते ॥२४९॥
परमशिवरूपे च, लयं करोति मुख्यतः ।
लयकर्त्तव्यतोद्देशः, प्रथमः परिभाषितः ॥२५०॥
प्रथमचक्रनामाख्यं, मूलाधारकपद्मकम् ।
सुषुम्नाकन्दसंधौ च, तत्स्थितं परिभाव्यताम् २५१
वशषसाश्चतुर्वर्णाः, दलसमाः प्रकीर्त्तिताः ।
रक्तवर्णस्वरूपाश्च, चक्राधिष्टातृ डाकिनी ॥२५२॥
आधारपद्मकर्णिकागह्वरे वज्रनाडिषु ।
मुखे त्रिपुरसुन्दर्याः, वासस्थानं त्रिकोनकम् ॥२५३॥
शक्तिपीठकनामाख्यं, तन्मृदु चपला समम् ।
तत्र कन्दर्पनामाख्य, वायुनिवासस्थानकम् ॥२५४
सोऽपि जीवधराभिख्यः, बन्धुपुष्पसमो मतः ।
कोटिसूर्यप्रकाशाढ्यः, शक्तिशाली च सम्मतः २५५
त्रिकोनशक्तिके पीठे, स्वयंभूलिङ्गकं वसेत् ।
पश्चिमास्ये च तप्तानां, सुवर्णानां च सादृशम् २५६
मृदुकं ज्ञानध्यानानां, प्रकाशकत्व संयुतम् ।

स्वयम्भूलिङ्गस्योर्ध्वं च, पद्मकेसरसदृशम् ॥२५७॥
शङ्खवेष्टनयुक्तं च, सार्धत्रिवलयाकृति ।
सर्पवत्कुलकौण्डल्यं, स्वास्यात्स्वयंभूलिङ्गतः ।२५८।
निद्रितं मुखमावृत्य, तत्प्रबोधनिमित्तकम् ।
गोप्यं च गुरुगम्यं तद्भवतीति विज्ञायताम् ॥२५९॥
द्वितीयचक्रस्याभिख्यं, स्वाधिष्ठानाख्य पद्मकम् ।
तत्स्थिति लिङ्गमूले स्याद्, बभमयरलादिकम् ।२६०
षड्वर्णदलसंयुक्तं, रक्तवर्णेनसंयुतम् ।
तत्र बालाख्य सिद्धानां, स्थितिर्देवी च राकिनी २६१
तृतीयं मणिपूराख्यं, चक्रं स्यान्नाभिमूलके ।
डढणतथदाद्यानि[1], दशवर्णानि तानि वै ॥२६२॥
सुवर्णमय वर्णानि, राजन्ते दशपत्रतः ।
यत्र रुद्राक्ष सिद्धाख्यलिङ्गं सर्वप्रकारतः ॥२६३॥
मंगलं प्रविधीयेत, यत्र परमधार्मिकी ।
लाकिनी देवता चैव, सर्वरूपैर्विराजते ॥२६४॥
चतुर्थं हृदिस्थं ज्ञेयं, चक्रमनाहतं तथा ।

---

१ टठडढण तथदधन ।

कखगघङचाद्यैश्च, द्वादशवर्णकैर्युतम् ॥२६५॥
अतिरक्तकवर्णैश्च, द्वादशपत्रकैर्युतम् ।
हृदि चाति प्रसन्नं च, स्थानं तस्य प्रकीर्त्तितम् २६६
तत्रानाहतपद्मे च, तेजस्वि रक्तवर्णकम् ।
अधिष्ठानं च बाणाख्यं, यस्य ध्याने कृते सति २६७
अत्र परत्र लोके च शुभफलं तु प्राप्यते ।
द्वितीय शिवनामाख्यं सिद्धलिंगं विराजते ॥२६८॥
काकिनी सदाधिष्ठात्री, देवी सा तत्र तिष्ठति ।
पञ्चमपद्मस्थानं तु, कण्ठं विशुद्धचक्रकम् ॥२६९॥
तद्वर्णं शुभसौवर्णं, धूम्रवर्णं च वामतः ।
अआ इई उवाद्यैश्च, षोडशवर्णशोभितम् २७०
तस्य षोडशपत्राणि, तत्पद्मे छगलाण्डकम् ।
सिद्धलिंगं च शाकिनी, देवी तत्र विराजते ।२७१।
भ्रूद्वयमध्यभागे च, आज्ञा पद्माख्य चक्रकम् ।
शुभ्रवर्णं च षष्ठं स्याद्धक्षवर्णेन संयुतम् ॥२७२॥
शुक्लनामा महाकालः, तत्पद्मसिद्धिलिंगकः ।

---

हाकिनी च महाशक्तिः, चक्राधिष्टातृ देवता २७३
द्विदलपङ्कजोर्ध्वं च, ब्रह्मरन्ध्रके इंगला ।
पिंगलासुषुम्ने चैव, संगमस्थानकं भजेत् ॥२७४॥
तत्तीर्थराजरूपत्वं, प्रयागं परिकीर्तितम् ।
तत्रैव स्नानकर्त्तव्ये, साधको मुक्ततां भजेत् ॥२७५
ब्रह्मरन्ध्रोपरिष्टाच्च, सहस्रदलपङ्कजम् ।
तत्स्थानाभिख्यता ज्ञेया कैलाशशुद्धरूपिका ॥२७६
तत्र स्थाने महादेवः, शिवः सदा विराजते ।
नकुलाभिधता वाच, नकुलाख्यं च कीर्तितम् २७७
नित्य विलासिता युक्तः, क्षयवृद्धि पराङ्मुखः ।
यः साधकः स्वकीयानां, चित्तवृत्तेश्च दार्ढ्यतः २७८
लीनं करोति तस्यैव, अखण्डज्ञानरूपकम् ।
निरञ्जनजगन्नाथस्वरूपं लभते सदा ॥२७९॥
सहस्रदलपद्माच्च, निर्गतामृतधारिकाम् ।
यः पीबति सदा योगी जयति मृत्युतां स च ।२८०।
सहस्रदलपद्मे च, कुलरूपा तु कुण्डली ।
महाशक्तौ लयं याति, तदा सृष्टुश्च सर्वथा ।२८१।
परमेशो लयं विद्याद् मूलाधारे तथैव च ।

चतुर्दलं च पद्मं तु, तदवस्थास्तु तत्र च ॥२८२॥
कुण्डली स्वदृढं स्थानं, निश्चयेन परित्यजेत् ।
क्रमेण कुण्डली चैव, षट् चक्रभेदद्वारतः ॥२८३॥
सहस्रदलपद्मं च, गत्वालयं च प्राप्नुयात् ।
तत्र शिवप्रभोर्योग[1]:, मुक्ति क्रिया स्वरूपकः ।२८४।
तथा तस्य दशायां च, स योग्य खंडज्ञानवान् ।
निरञ्जनजगन्नाथरूपं प्राप्य शिवं भजेत् ॥२८५॥
प्राणायामः समायोगः, प्राणायाम इतीरितः ।
प्राणायाम इति प्रोक्तः, रेचक[2]पूरकुम्भकैः ॥२८६॥

योगि याज्ञवल्क्यः ॥

पूर्वोक्त संख्यया चैव प्राणायामे कृते सति ।
यदि तु कष्टप्राप्तिः स्यादष्टषोड़श वारतः ॥२८७॥
जापं कृत्वा च कर्त्तव्यः, प्राणायामः सुनिश्चयात् ।
यत्र जापक्रिया नास्ति, तत्रैक द्वित्रिवारतः ॥२८८॥
गणनायां कृतायां च, प्राणायामो वितन्यताम् ।
अन्यथा कार्यकर्त्तव्ये, फलप्राप्तिर्न जायते ॥ २८९॥

---

१ शक्तिः । २ पूरक ।

कुत इति च पृष्टव्ये, उत्तरंतु विधीयते ॥
अतोऽपि प्रथमस्तालः, तालोपरि च श्वासता ॥२६०
श्वासोपरि प्रश्वासः स्यादिति क्रमो निदर्शितः ।
किन्तु कदापि प्राबल्याद्रेचकं पूरकं च न ॥२६१॥
रेचककालवैशेषे, सतर्कसावधानता ।
यावच्छनैः शनैश्चैव, श्वासस्तु परित्यज्यते ॥२६२॥
हस्तारूढांश्च सक्तूंश्च, निःश्वास वायुयोगतः ।
उड्डापनाय शक्नोति, नैव तथा वितन्यताम् ॥२६३॥
प्राणायामस्य काले च, उपविश्य यथा सुखम् ।
मेरुदण्डं गलं चैव, मस्तकं वक्रता हितं ॥२६४॥
भ्रकुट्यां दृष्टितां धृत्वा, ततः कुम्भकतां भजेत् ।
किन्तु सिद्धमहात्मा च तत्सहायं परित्यजेत् ॥२६५
शीतली प्राणयामस्य, सहायताधिकां भजेत् ।
शीतल्याश्च सहायेन, सर्वकार्यकरोभवेत् ॥२६६॥
प्रोक्तं च :—
सर्वदा साधयेद्योगी, शीतलीकुम्भकं शुभम् ।
अजीर्णकफपीताश्च, जायन्ते नैव तस्य वै ॥२६७॥
जिह्वाया वायुमाकृष्य, उदरे पूरयेच्छनैः ।

क्षणं च कुम्भकं कृत्वा, नासाभ्यां रेचकं पुनः २६८

प्राणायामक्रियातश्च, मोक्षप्राप्तिः प्रदर्शिता ।

वन्ध्यापुत्रसमा सा च, ज्ञातव्या सर्वसज्जनैः २६६

प्राणायामेन मोक्षश्चेद्न्ययोगाङ्गता वृथा ।

प्रत्याहारादिकं व्यर्थं धारणा सफला कुतः ॥३००॥

ध्यानसमाधिता नैव, कर्त्तव्या च कदाचन ।

केवलप्राणयामेन, मोक्षप्राप्तिर्वितन्यताम् ॥३०१॥

तादृशप्राणयामस्तु, विग्रहे कष्टदो मतः ।

केवल देहदान्त्या च न कोऽपि गुणआत्मनि ।३०२

सम्यग्ज्ञानेन सार्धं च, सम्यक्क्रिया न यत्र वै ।

तत्र कथं शिवाप्तिः स्यादिति स्वान्ते विचार्यताम् ३०३

सर्वथा निष्फलो नैव, प्राणायामो निगद्यते ।

यथा पातञ्जलैः प्रोक्तः, तथा न जैनदर्शने ॥३०४॥

केवलवायु[illegible], प्रवेशो मोक्षता न हि ।

किन्तु सत्यस्वरूपं च, प्राणायामस्य ज्ञायताम् ॥३०५

योगाङ्गे च क्रमेणैव, आरोहे सिद्धता भवेत् ।

सम्यग्दर्शनपूर्वेण, प्रथमं च महाव्रतम् ॥३०६॥

अतिक्रमादि दोषेण, रहितं पालनं मतम् ।

अष्टप्रवचनेनैव, विशुद्धं परिपाल्यताम् ॥३०७॥
ततो नियमसद्भावः, तस्यैव परिशुद्धये ।
आसनं दृढध्यानार्थं, प्राणायामोपयोगि च ॥३०८॥
विशुद्ध प्राणयामस्य, स्वरूपमपि प्रोच्यते ।
यशोविजयप्राज्ञानां, ग्रन्थानामनुसारतः ॥३०९॥
हठयोगस्तु नाम्नैव, हठभावप्रकाशकः ।
सिद्धिर्हठेन कस्यापि, जायते न कदाचन ॥३१०॥
गुदातो दुग्धपानेऽपि, आत्मनि वद किं भवेत् ।
तत्कार्यं बालिशानां च, न तु विशुद्धयोगिनाम् ३११
अज्ञानिजनतुष्ट्यर्थं, लोकप्रतारणाय च ।
संसारोदधिपाताय, स्वपरदुःखहेतवे ॥३१२॥
आत्मीय ज्ञानशून्येन, अज्ञानिना वितन्यते ।
तत्क्रियास्वादरो नैव, कर्त्तव्यो ज्ञानिना कदा ॥३१३
हठेन कार्यकर्त्तव्ये, मिथ्यात्वं परिजायते ।
मिथ्यात्वं सर्वथा त्याज्यं श्रद्धात्वधनकांक्षिणा ३१४
प्रतिपादितमन्यत्र, तं योगं नैव धारयेत् ।
भवभ्रमणहेतुः स्यान्मिथ्यात्वपरिपोषकम् ॥३१५॥
वस्तुगत्या विचारे तु, सत्यं योगस्वरूपकम् ॥

मीलति योगदृष्ट्या च, परिशोधितरूपकम् ॥३१६॥
अतस्तदनुसारेण, प्राणायामस्वरूपकम् ।
चतुर्थदृष्टिरूपेण, ज्ञायते योगदीपके ॥३१७॥
चातुर्थी योगदृष्टिस्तु दीप्ता च प्राणयामिका ।
उत्थानभावना नैव, अत्रैव परिभाव्यताम् ॥३१८॥
प्राणायामे च द्रव्येण, कर्त्तव्ये वायुयोगतः ।
क्षणिका देहशुद्धिः स्यादतो लाभो न चात्मनि ३१६
कथंचिद् गुणदोषाणां, विचारे च कृते सति ।
अपेक्षया च मन्तव्यः प्राणायामस्तु द्रव्यतः ।३२०
द्रव्येण देहशुद्धिः स्यादतः स्वास्थ्यं भवेत्सदा ।
अनालस्यं च देहस्य, स्वास्थ्येनैव प्रजायते ॥३२१
देहस्वास्थ्ये च सञ्जाते, मनः स्वास्थ्यं प्रजायते ।
ततो विचारप्राबल्यं, शुद्धकारणयोगतः ॥३२२॥
द्रव्यं च कारणं ज्ञेयं, भावः कार्यं निगद्यते ।
कृत्स्नकारणसामग्र्यां, कार्यं पूर्णं प्रजायते ॥३२३॥
प्राणायामस्तु भावेन, कार्यो दीपप्रभासमः ।
ज्ञानरूपः सदा भाव्यः, जैनशासनवेदिना ॥३२४॥
अनाद्यऽसत्यभावानां, मिथ्यात्वाविरत्यादीनाम् ।

प्रमादानां कषायाणा, यद्युक्तयोगवस्तूनाम् ॥३२५॥
हिंसाऽसत्यत्व चौर्याणामब्रह्ममतादीनाम् ।
अनादिकालशत्रूणां त्यागे तु भावरेचकः ॥३२६॥
पूर्वोक्तदोषरूपाणां, निष्कासे गुणपूरणम् ।
श्रद्धात्वविरत्यादीनां, दृढरूपेण पालनम् ॥३२७॥
कषायपरित्यागेन, प्रमादपरित्यागतः ।
समितिगुप्तिसेवातः, महाव्रतस्य पुष्टिता ॥३२८॥
उपयोगेन धर्मः स्यात्क्रियातः कर्म एव च ।
परिणामेन बन्धस्तु, विज्ञेयो जैनशासने ॥३२९॥
अहिंसा सत्यताऽस्तेयब्रह्मव्रतस्य पालनात् ।
मूर्च्छायाः परित्यागेन, दोषाणां त्यागता मता ३३०
दोषाणां सर्वथा त्यागे, रेचके शुद्धता भवेत् ।
गुणानां पूरणेनैव, पूरकः परिभाषितः ॥३३१॥
यदंशे गुणसम्प्राप्तिः पूरकता तु तादृशी ।
यावद्दोषस्य नाशः स्यात्तावद्रेचकता मता ॥३३२॥
वैराग्याभ्यासद्वारेण, गुणानां स्थिरता भवेत् ।
यदंशे गुणस्थैर्यं स्यात्कुम्भकस्तादृशो मतः ॥३३३॥
धर्मार्थं प्राणता त्याज्या, किन्तु धर्मो न त्यज्यताम्

प्राणसङ्कटसम्प्राप्तौ, धर्मेषु दृढतां भजेत् ॥३३४॥

चतुर्गतिकसंसारे, प्राणः सर्वत्र योनिषु

सुलभेन प्रप्राप्यन्ते, धर्मस्तु तत्र दुर्लभः ॥३३५॥

धर्मार्थप्राणसंत्यागे येषां मानसभावना।

प्राणायामस्य योग्यास्ते, इतरे नामधारकाः ॥३३६॥

मधुरोदकसादृश्यं, तत्वश्रवणभावनम्।

जायते यत्र काले च तदा तद् दृष्टिता भवेत् ॥३३७

क्षारोदकस्य संकाशं, संसारं परिमन्यते।

गुरुभक्तिरद्रोहेण, बीजरोह समामता ॥३३८॥

सम्यक् श्रद्धां विना नैव, सूक्ष्मबोधोऽत्र सम्भवेत्।

वेद्यसंवेद्यके चैव, पदे तु तादृशो मतः ॥३३९॥

अवेद्ये तु पदे नैव, बोधः स्वप्नेऽपि जायते।

अतो हि वेद्यसंवेद्यपदार्थे यत्नतां भज ॥३४०॥

वेद्यबन्धुस्तु विज्ञेयः, मोक्षनिमित्तकः सदा।

तज्ज्ञानं चैव संवित्तिः, नयनिक्षेपतः शुभा ॥३४१॥

वेद्यसंवेद्यप्रामाण्यं, ग्रन्थिभेदनतो मतम् ॥

पापप्रवृत्तिछेदस्तु तत एव प्रजायते ॥३४२॥

तप्तलोहस्वरूपस्य, पदधृति समा मता।

आन्तनिर्वृत्तिरत्रैव, तद्विपरीतके पदे ॥३४३॥
अवेद्यवेद्यनामाख्यो, भवाभिनन्दिजीवकैः ।
वज्रेणाभेद्यको ज्ञेयः, जैनशासनबाह्यकैः ॥३४४॥
लोभकार्पण्यमात्सर्य, मायिकृता जुषः सदा ।
दयापात्रत्व संयुक्तः, भवेन संभृतः सदा ॥३४५॥
एतादृशमनुष्याणां, निष्फलारम्भता भवेत् ।
तादृशां च गुणानां च, अवेद्यपदता दृढा ॥३४६॥
सत्सङ्गागमतत्त्वेभ्यः तेऽपि बहिर्मुखाः सदा ।
तैश्च सत्सङ्गतिर्नैव, प्राप्यते पापयोगतः ॥३४७॥
कुतर्कानां सहायेन, हस्त्यागमनकालिके ।
एकान्ते चोपविश्यैव, बठरैः परिभाव्यते ॥३४८॥
हनिष्यति च प्राप्तं चेत्पूर्वं हस्तिपकं तदा ।
अप्राप्तं यदि हन्ता चेत्तदा तु सर्वजन्तुनः ॥३४९॥
कथं दूरेऽपगच्छामि भयमत्र न विद्यते ।
प्राप्ताप्राप्तविचारे च, कर्त्तव्या समये तदा ॥३५०॥
हस्ती चागत्य तत्रैव, शुण्डादण्डेन तं जनम् ।
उत्पाट्य परिक्षिप्त्वा च, पादाभ्यां परिपीडितम् ॥३५१
तदा विचारदृष्टिना, केनचिच्च जनेन वै ।

आगत्य श्रावितं सम्यक् बोधाधायक सद्वचः ॥३५२॥
प्राप्ताप्राप्तविचारे च, कर्त्तव्ये तादृशी दशा ।
सम्प्राप्ता चाधुना भ्रातः, पीब धर्मरसायनम् ॥३५३॥
यथा च सन्निपातानां जीवानां पायसं विषम् ।
तथा बठरछात्राणां तत्काले तादृशं बचः ॥३५४॥
तथा चोक्तं पञ्चतन्त्रेः—
पयः पानं भुजङ्गानां, केवलं विषवर्धनम् ।
उपदेशो हि मूर्खाणां, प्रकोपाय न शान्तये ॥३५५॥
यथा च तत्त्वसम्प्राप्तिः, कृता मया च यादृशी ।
केनचिच्च जनेनैव, न प्राप्ता तादृशी कदा ॥३५६॥
संशयो नैव तत्रापि, एवं रीत्या च भावने ।
कुर्कटं दर्पणे दृष्ट्वा, यथा तेनैव युध्यते ॥३५७॥
तद्वद्भ्रान्तिश्च तत्रापि, विचारविमुखे जने ।
अतः सत्सङ्गतिं कृत्वा, आगनामनुभवेन च ॥३५८॥
ततोऽनु वस्तुतत्त्वं च, गृह्यतां सर्वसज्जनैः ।
अतः शास्त्रस्वरूपं च सर्वदा चिन्तनं शुभम् ॥३५९॥
अष्टके प्रोक्तंः—
शासनात्त्राणशक्तेश्च, बुधैः शास्त्रं निरूपितम् ।

वचनं वीतरागस्य, तत्तु नान्यस्य कस्यचित् ॥३६०॥
यथालक्ष्येन सम्युक्तौ, प्रमादि गुरुशिष्यकौ ।
तयोर्दृष्टान्तकं श्रुत्वा, प्रमादं परिवर्ज्यताम् ॥३६१॥
कस्मिंश्चिद् ग्रामबाह्ये च, पर्णकुट्यां च तिष्ठतः ।
गुरुशिष्यौ महामूर्खौ, आलस्यपरिपूरितौ ॥३६२॥
एकदा शीतकाले च, शीतं पतति दुःसहम् ।
वस्त्राणां परितोऽभावे, ध्यायतो गुरुशिष्यकौ ॥३६३॥
प्रातः काले च भक्तानां, गृहे गत्वा च कम्बले ।
मार्गणे परिकर्त्तव्ये, शीतावरोधता भवेद् ॥३६४॥
प्रातः काले च सञ्जाते, भिक्षार्थं निकटे गतौ ।
यांकां भिक्षां च सम्प्राप्य, शीघ्रं कुट्यां निवेशितौ ३६५
रात्रेः पश्चाच्च तौ द्वौ च, विचारं कुरुतस्तदा ।
प्रातः काले च सञ्जाते, याचिष्यावश्च कंबलम् ३६६
एवं रीत्या च कर्त्तव्ये, शीते च प्रबले तथा ।
आलस्यस्य प्रभावेन, महच्छीतेन पीडितौ ॥३६७॥
परन्तु कम्बलार्थं च, ताभ्यां कृतं न याचनम् ।
प्रमादित्व मनुष्याणां, कियद्दुःखव्यता भवेत् ३६८
तथैव धर्मकार्येषु, प्रमादं परित्यज्यताम् ।

अप्रमत्तत्व भावेन, योगाङ्गं प्रविधीयताम् ॥३६९।
प्राणायामस्तु भावेन, द्रव्येण परिपालितः ।
तेनैव पुरुषेणैव, योगाङ्गाग्रे च गम्यते ॥३७०॥
आगमेनानुमानेन, सत्यज्ञानं च प्राप्यते ।
सर्वज्ञस्योपदेशानां, भिन्नता न हि सम्भवेत् ३७१
सर्वज्ञदासरूपाणां, देवानां भक्तिभावना ।
चित्र विचित्र रूपेण, तन्यते राग द्वेषतः ॥३७२॥
देवाः संसारिणो ज्ञेयाः, रागद्वेषस्वरूपकाः ।
एकत्र रागसद्भावः, अन्यत्र द्वेष भावना ॥३७३॥
सर्वज्ञ वीतरागस्य, भक्तिमुक्त्युपतिष्ठते ।
सैव विशुद्धभावेन, कर्त्तव्या ज्ञानिना सदा ।३७४।
रागिद्वेषित्वयुक्तानां, सम्यग्दृष्टित्वसेविनाम् ।
धर्मसाहाय्यदानार्थं, देवानां भक्तिभावना ॥३७५॥
इन्द्रियार्थज बुद्धिः स्याज्ज्ञानमागमहेतुकम् ।
शुभकृति गुणेनैव, असंमोहकता भवेत् ।३७६।
फलभेदस्य सङ्केत, तत एव प्रजायते ।
अतिप्रेमक्रियायां च, आदरः सर्वतोऽधिकः ।३७७।
विघ्नानि परिनश्येयुः, श्रियाः समागमो भवेत् ।

बुद्धिपूर्वक्रियातश्च, भववृद्धिफलं भवेत् ।३७८।
ज्ञानपूर्वक्रियातश्च, शिवाङ्गं परिजायते ।
असंमोहक्रिया द्वारा, शीघ्रं मुक्तिः प्रजन्यते ॥३७९
पुद्गलरचनाभावः, मृगतृष्णा समो मतः ।
तत्र न मानसं दद्यात्सुखाभासेषु कुत्रचित् ॥३८०॥
एक एव शिवे मार्गे, ज्ञानी दद्याच्च मानसम् ।
अन्यत्र नैव दातव्यं, सर्वदा सुखमिच्छता ॥३८१॥
जीवस्य परिणामानां, भेदेन भिन्नदेशना ।
न तत्र पक्षपातेन, देशना भिन्नता मता ॥३८२॥
परमार्थविचारे च, नयप्रमाणभेदतः ।
मुनीनां देशना भिन्ना, पक्षपातविवर्जिता ॥३८३॥
शब्दभेदं च संश्रुत्य कालुष्यं न वितन्यताम् ।
तत्रैव परमार्थत्वं, भाव्यं सर्वसुखावहम् ॥३८४॥
यद्येव एकवस्तुत्वं, तदा कलहता कथम् ।
एक गङ्गात्वमाश्रित्य, व्यवहारे तु भिन्नता ।३८५।
वक्ति सुरनदीं कश्चिद्, गङ्गा वदन्ति केचन ।
वस्तुगत्या विचारे च, न कलहावकाशता ॥३८६॥
तथैव नयभेदेन, भिन्नत्वं यदि भासते ।

तथापि योजना कार्या, विचारशीलमानवैः ॥३८७॥
केवलज्ञानदृष्टीनां, उपयोगस्य गोचरे ।
वदन्ति युगपत्केचित्केचिच्च एक एव हि ॥३८८॥
केचिच्च क्रमभावेन, एवं रीत्या च जल्पने ।
अन्योऽन्यं कलहायन्ते, अन्येषां भिन्नभावता ३८९
तद्योपाध्यायपूज्येन, यशोविजयज्ञानिना ।
नयभेदं समाश्रित्य, सावधानं शुभं कृतम् ॥३९०॥
तेषां च पूज्यपादानामाशयानामवेदिभिः ।
भेदभावं समाश्रित्य, क्लेशत्वं परिवर्धितम् ॥३९१॥
यथा नयप्रमाणेन, कलहो नैव सम्मतः ।
तथाऽत्र देशनायां च, समाधिर्नयभावतः ॥३९२॥
क्षमादिदशधर्माणां, त्रिकरणत्रियोगतः ।
पालने प्रकटीयेत, धर्मसंन्यासता शुभा ॥३९३॥
ततः कषायक्लेशानां, मुनीनां सर्वनाशता ।
समभावेन भावेषु, सर्वत्र भावना भवेत् ॥३९४॥
चत्वारो दृष्टयो येन, अभिनिवेशत्यागिना ।
लब्धा च शुभयोगेन, लभ्यते पञ्चमी सदा ॥३९५॥
ईदृश प्राणयामस्तु, सेवितो येन योगिना ।

विधूतकर्मक्लेशं च, कृत्वा शिवपदं भजेत् ॥३९६॥
धन्यास्ते पुरुषा ज्ञेया, येषां योगे सदा मनः ।
सेवित योगमार्गो यैः, तैः शिवं प्राप्यते सुखम् ॥३९७
दृष्टिदर्शितरूपेण, प्राणायामो निषेव्यताम् ।
अन्यमार्गीय सेवातः, भवभ्रमणता भवेत् ॥३९८॥
ईदृशः प्राणायामस्तु, हरिभद्रादि ग्रन्थतः ।
दर्शितो मयका तत्र, स्वीय कल्याणहेतवे ॥३९९
तत्र यदि विरुद्धं चेत्, मन्दबुद्धिप्रयोगतः ।
मिथ्या दुष्कृतता भूयात्, मदीयेति च प्रार्थना ।४००।

॥ इति श्री शास्त्रविशारद जैनाचार्य जगत्पूज्या
नेक संस्था संस्थापक ग्रन्थमालादि द्वारा साहित्य
प्रचारकानेक विदेशिकजनप्रतिबोधक भ्रम-
निवारक पूज्यपादगुरुदेव विश्ववन्द्य सूरि-
चक्र चक्रवर्त्ति शासनप्रभावक श्रीविजय
धर्मसूरीश्वरशिष्येण न्यायतीर्थन्याय-
विशारदोपाध्याय मङ्गलविजयेन

विरचिते संस्कृत पद्यमययोग

प्रदीपे प्राणायाम वर्णननामा

षोडशतमः प्रकाशः समाप्तः ॥



है पीड़ादायी शल्य निकल जाते हैं, सभी ग्रन्थियां खुल जाती हैं, मान (अहंकार) रूपी ध्वज गिर जाता है धर्मध्वज आरोपित हो जाता है, अनुशय खुल जाते हैं,[1] धर्म का तथात्व ज्ञान हो जाता है, भूतसमूह का ज्ञान हो जाता है, धर्मधातु का भी बोध हो जाता है, सत्त्वधातु की स्थापना हो जाती है, सम्यक्त्व की पूर्ण प्रतीति हो जाती है, मिथ्यात्व का विवरण हो जाता है, अनियत सत्त्वधातु का परिग्रह हो जाता है, इन्द्रियां सत्त्वभाव में व्यवस्थित हो जाती हैं। सत्त्वचरित और सत्त्वव्याधियों का बोध हो जाता है सत्त्वसमुत्थानरूपी सिद्ध अमृतस्वरूप औषधि का मानो प्रयोग प्रारम्भ हो जाता है। समस्त दुःखों से मुक्ति प्रदान करके, निर्वाण सुख में स्थापित करने वाला वैद्यराज उत्पन्न हो गया हो, मानो तथागत को गर्भ में स्थिति मिल गयी हो, मानो तथागत की महाधर्मराज के आसन में स्थिति हो गयी हो, विमुक्ति का पक्ष सुस्थिर हो गया हो, सर्वज्ञता के नगर में प्रवेश हो गया हो, सभी बुद्ध निकट आ गये हों, बोधि के साथ ही धर्म-धातु का प्रसार प्रारम्भ हो गया हो।[2] ललितविस्तरकार ने इस प्रकार 'अभिसम्बोधि' को जीवन की सबसे बड़ी उपलब्धि के रूप में वर्णित किया है, जिसकी प्राप्ति के बाद कुछ भी प्राप्तव्य शेष नहीं रह जाता।

## निर्वाण

बौद्ध दर्शन का प्रथम उन्मेष भगवान् बुद्ध के मानस में, चार आर्यसत्यों के रूप में हुआ है। ये चार आर्य सत्य हैं दुक्ख, दुःखसमुदय, दुःखनिरोध और दुःख-निरोधगामिनी प्रतिपदा।[3] (चत्तारि अरियसच्चानि—दुःख अरियसच्चं, दुःख-समुदयं अरियसच्चं, दुःख निरोधं अरियसच्चं, दुक्खनिरोधगामिनी प्रतिपदा अरियसच्चं) अर्थात् समस्त विश्वप्रपंच दुःख है, दुःख का उदय होता है अर्थात् दुःख उत्पन्न हुआ है, नित्य नहीं है, दुःख का निरोध संभव है तथा दुःखनिरोध के उपाय हैं।

इन चार आर्यसत्यों के साक्षात्कार के बाद दुःखनिरोध के उपाय के रूप में, आठ अंगों से युक्त मार्ग या उपाय का बोध उन्हें हुआ था, जिसमें सम्यग्दृष्टि, सम्यक्संकल्प, सम्यग्व्यायाम, सम्यक् स्मृति, सम्यक्वाक्, सम्यक्कर्मान्त। सम्यग् आजीव, तथा सम्यक् समाधि—इन सबका एकमात्र

---

१. तुलनीय—भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे। इत्यादिश्रुतेः
—वेदान्तसार, पृ० १९७

२. ल० वि० पृ० २५३, पं० ३० पृ० २५४ पं० ६ तक

३. अभिधम्मत्थ सङ्गहो, ७४०, पृ० १३७

फल निर्वाण है । पालि-बुद्ध-वचन में अभिधम्म के अन्तर्गत वर्ण्य-विषयों में जो चार हैं, उनमें निर्वाण अन्यतम है।[1] 'तत्थवुत्ताभिधमत्था चतुधा परमत्थतो । चित्तं चेतसिकं रूपं निब्बानमिति सब्बथा।' अभिधम्म के अनुसार निर्वाण लोकोत्तर संख्यात, चतुर्विध स्रोतापत्तिमार्ग-सकृदागामि मार्ग, अनागामिमार्ग और अर्हत मार्ग के ज्ञान एवं आचरण से मार्गफलों का आरम्भण रूप, तृष्णा आदि का हान, निर्वाण कहा जाता है। यह विगत तृष्णा-पद च्युतिरहित, अन्तरहित, कर्म आदि से असंख्यात और लोकोत्तर पद है ।[2] (निब्बानं पन लोकुत्तरसंख्यातं चतुमग्ग ञाणेन सच्छिकातब्बं मग्गफलानामारम्भणभूतं वानसंख्याताय तण्हाय निक्खन्तता निब्बानं ति पवुच्चति ।··· "पदमच्चुतमच्चन्तं असंखतमनुत्तरं । निब्बानमिति भासन्ति वानमुक्तामहेसयो) इस पद में राग-द्वेष आदि का अभाव होता है, अतः कभी इसे शून्यपद कह सकते हैं । राग आदि प्रणिधियों के अभाव के कारण अप्रणिहित भी कह सकते हैं । इस प्रकार यह निर्वाण तीन प्रकार का हो जाता है (१) शून्यनिर्वाण (२), अनिमित्त निर्वाण एवं (३) अप्रणिहित निर्वाण । इसके अतिरिक्त (१) उपाधिशेष और (२) अनुपाधिशेष के आधार पर इसके दो प्रकार भी माने जा सकते हैं, जब कि वस्तुतः स्वभाव से यह एक प्रकार का ही है।[3] (तदेतं सभावतो एकविधम्पि सउपाधिसेस निब्बानधातु अनुपाधिसेस निब्बानधातु चेति दुविधं होति कारणपरियायेन, तथा सुञ्ञतं अनिमित्तं अप्पणिहितं चेति तिविधं होति आकारभेदेन) ।

निर्वाण के संबंध में भगवान् बुद्ध के वचनों की बौद्ध-धर्म-दर्शन की विविध शाखाओं से भिन्न-भिन्न प्रकार से व्याख्या की गई है । फलतः प्रत्येक शाखा में निर्वाण का स्वरूप कुछ-कुछ भिन्न सा प्रतीत होता है । यद्यपि इतना निर्विवाद रूप से सभी स्वीकार करते हैं कि निर्वाण संसार दुःख का अत्यन्त निरोध है, संसार से निस्सरण है और इसी कारण उपादेय भी है । बौद्ध-दर्शन में आत्म-प्रतिषेध, ईश्वर-प्रतिषेध, सहेतुक और क्षणिक सत्ता के सिद्धान्त की स्वीकृति के कारण निर्वाण निरोधमात्र अर्थात् अभावमात्र हो सकता है । रीजडेविड्स इस अभावरूपता के साथ-साथ इसे श्रामण्य भी मानना चाहते हैं । क्योंकि शिष्यों के प्रश्नों के उत्तर में भगवान् बुद्ध ने निर्वाण को स्थापनीय प्रश्न कहकर इसका व्याकरण (व्याख्यान) नहीं किया है ।

---

१. अभिधम्मत्थसङ्गहो, १.१, पृ० १

२. वही, ६.३०, पृ० १२४,-१२५

३. वही, ६.३०, पृ० १२४

अभिधम्म में चित और रूप दोनों को नैरात्म्य माना गया है, वहां आत्मा का भी प्रतिषेध है, तथा निर्वाण का लक्षण करते हुए 'दुःखहान', 'विराग' और 'रागक्षय' आदि शब्दों से इसका परिचय दिया गया है। अतः निर्वाण ऐहिक सुख है, यह भी कल्पना की जा सकती है, किन्तु उस स्थिति में यह परम सुख नहीं हो सकता। कुछ सुत्रान्तों में इसे अजात, अमृत और अनन्त भी कहा गया है।[1] पूसे के अनुसार बुद्ध योगी थे और अवाच्य की अभिज्ञा रखते थे, जो न भाव है और न अभाव। यह प्रपञ्चातीत है। उनके अनुसार यह समझना कठिन है कि बौद्ध निर्वाण को अमृत, योगक्षेम और अच्युत क्यों कहते हैं। ये शब्द अभाव के समानार्थक स्वीकार नहीं किये जा सकते। रीजडेविड्स के अनुसार 'अमृत' आर्यों का आहार है और निर्वाण वीतराग पुरुष की सम्यक्-प्रज्ञा।[2]

सौत्रांतिकों के अनुसार निर्वाण अभावमात्र है जबकि सर्वास्तिवादी निर्वाण को परमार्थसत् द्रव्य अभिधम्म मानते हैं। उनके अनुसार भगवान् बुद्ध तृतीय आर्यसत्य अर्थात् सर्वदुःख-निरोध के रूप में निर्वाण को स्वीकार करते हैं। यह लक्षण धर्म है। दुःख का निरोध है और दुःखनिरोध का अर्थ वस्तु-सत्य भी है अर्थात् उसका विषय असन्मात्र विरोधमात्र नहीं है किन्तु द्रव्यसत् है।[3] यह दुःख का निरोध अर्थात् तृष्णा का क्षय, तृष्णा से विमुक्त है किन्तु अभावमात्र नहीं है। इस प्रसंग में निम्नलिखित तर्क प्रस्तुत किये जा सकते हैं:—

१. यदि यह अभाव मात्र होता तो यह आर्यसत्य कैसे होता? जिनकी सत्ता नहीं है वह ज्ञान का विषय नहीं हो सकता।

२. अभाव को तृतीय सत्य कैसे अवधारित करते?

३. अभाव संस्कृत और असंस्कृत में अग्र कैसे होता?

४. यदि तृतीय आर्यसत्य का विषय द्रव्यसत् नहीं है तो उसके उपदेश से क्या लाभ?

५. यदि निरोध निवृत्तिमात्र है, तो उच्छेददृष्टि सम्यक् दृष्टि होगी।

अंगुत्तर निकाय में निर्वाण को सुख, शान्त, और प्रणीत कहा गया है, जो उसे दुःखवत् देखता है उसके लिए मोक्ष सम्भव नहीं है।[4] मिलिन्द प्रश्न में निर्वाण-

---

१. बौद्धधर्म-दर्शन, पृ० १७९

२. वही, पृ० २९०

३. वही, (कथावत्थु से उद्धृत), पृ० २९०

४. वही, (अंगुत्तर-निकाय से उद्धृत ४.४४२) पृ० २९६

धातु को अत्थिधम्मं, एकान्तसुख और अप्रतिमास (ग) कहा गया है। इसके अनुसार निर्वाण का लक्षण स्वरूपतः नहीं बतलाया जा सकता किन्तु गुणतः दृष्टान्त के रूप में कुछ कहा जा सकता है, जैसे जल पिपासा को शांत करता है वैसे ही निर्वाण त्रिविध तृष्णा का निरोध करता है।[1]

ललितविस्तर में निर्वाण को, दुःखनिरोध को, तृष्णा-निरोध के रूप में स्वीकार किया है। इस अवस्था में अशेष विराग की स्थिति होती है।[2] इसमें शाक्यमुनि गौतम बुद्ध के प्रारम्भिक जीवन से सम्बद्ध कथानक के माध्यम से, निर्वाण और उसकी पृष्ठभूमि की भूमिका दी गई है। इस प्रसंग में नवयौवन से तरुण शाक्यवंशीय गौतम बुद्ध (सिद्धार्थ जब नगर-भ्रमण की इच्छा से घर से बाहर निकलते हैं। वह देखते हैं संपूर्ण नगर और उद्यान- भूमि को हर प्रकार से सुसज्जित किया गया है। दोनों ही रंग-बिरंगे चंदोवों, छतरियों, ध्वजापताकाओं से सुसज्जित है। फूलों और गंधद्रव्यों से उसे मनोरम बनाया गया है। सेवकवर्ग भी सब प्रकार से अलंकृत है और बोधिसत्त्व पूर्व-द्वार से निकलते हुए उद्यान भूमि में प्रवेश करते हैं।[3] असंख्य मनोरम भोग साधनों का उपभोग करने पर भी अकस्मात् उनकी दृष्टि पड़ती है ऐसे व्यक्ति पर जो जराजीर्ण वृद्ध है, समस्त शरीर पर स्नायुओं का जाल दिखाई पड़ रहा है। मुख के सभी दांत गिर जाने से पोपला मुख, झुरियों से भरी देह, पके श्वेत केश, उसको सर्वथा श्रीहीन किये हुए हैं। पीठ पर निकला कूबड़, मेहराब की तरह आगे को झुका हुआ शरीर, लाठी लेकर उसके सहारे चलने का प्रयत्न किन्तु बार-बार थककर रुकना, थर-थर शरीर का कांपना उसकी पीड़ा को घोषित सा कर रहे हैं।[4] बोधिसत्त्व

---

१. बौद्धधर्म-दर्शन, (अगुत्तर-निकाय से उद्धृत, ४.४४२) पृ० २९६

२. संक्षेपात् पञ्चोपादानस्कन्धा दुःखम्। इदमुच्यते दुःखम्। तत्र कतमो दुःखसमुदयः? येयं तृष्णा पौनर्भविकी नन्दीरागसहगता तत्र तत्राभिनन्दिनी अयमुच्यते दुःखसमुदयः। तत्र कतमो दुःखनिरोधः? योऽस्या एव तृष्णायाः पुनर्भविक्या···अशेषोविरागोनिरोधः अयं दुःखनिरोधः। तत्र कतमा दुःखनिरोधगामिनी प्रतिपत्। एष एवार्याष्टाङ्गमार्गः। तद्यथा सम्यग् दृष्टिर्यावत् सम्यक्-समाधिरिति इदमुच्यते दुःखनिरोधगामिनी प्रतिपदार्थसत्यमिति। इमानि भिक्षवः चत्वार्यार्यसत्यानि।

—ल० वि० (वैद्य), गद्यभाग, परि० २६, पृ० ३०३, पं० ११-१७

वही, पृ० २८६, पं० २-७, वही, (शास्त्री) श्लोक १३८४

३. वही, १४, पृ० १३६

४. वही, पृ० १३६

उसे देखकर उसकी पीड़ा का अनुमान करते हैं, और अपने अनुमान की पुष्टि के लिए सारथी से प्रश्न करते हैं 'यह क्यों इस प्रकार चल रहा है ?'[१] सारथि उत्तर देता है—'कुमार यह पुरुष जरा से अभिभूत है, इसी कारण, जरा के कारण, ही इसकी सभी इन्द्रियां शिथिल हैं, बल-पौरुषहीन है अतएव असमर्थ है, साथ ही बंधुओं द्वारा त्याग दिये जाने से अनाथ हो गया है।'[२] उन्हें जब पता चलता है कि प्रत्येक प्राणी की यह स्थिति होती है, तब उन्हें 'जरा' एक महान् कष्ट के रूप में प्रतीत होती है और उसकी कष्टमयता मानस में स्थिर हो जाती है।[३]

इसी प्रकार कालान्तर में एक दिन दक्षिण-मार्ग से उद्यान-भूमि की ओर से निकलते हुए, उनकी दृष्टि ऐसे व्यक्ति पर पड़ती है, जिसका शरीर व्रणों से विवर्ण है, इन्द्रियों से क्षीण है, श्वास ठीक प्रकार से नहीं ले सकता, पेट की व्याधि से आकुल मलमूत्र में सना पड़ा है, जिसे देखते ही प्रत्येक व्यक्ति को घृणा होने लगती है।[४] सारथी से पूछने पर पता चलता है कि 'यह व्यक्ति व्याधि-ग्रस्त है। व्याधि (रोग) के कारण ही यह ग्लान, तेजरहित, मरणासन्न और असहाय हो रहा है।'[५] इसका परिणाम यह होता है कि बोधिसत्त्व के मन में व्याधि (रोग) भी एक महान् कष्ट के रूप में स्थिर बन जाता है।

कुछ काल पश्चात् वे पश्चिम द्वार से उद्यान भूमि की ओर जा रहे थे, तब उनकी दृष्टि ऐसे दृश्य पर पड़ती है 'जहां एक निश्चेष्ट मनुष्य मंच पर लेटा है, उसका शरीर ढका हुआ है, ऊपर चंदोवा भी लगा है। उसके कुटुंब और बिरादरी के लोग उसे घेरे हुए विलाप कर रहे हैं। विलाप करते हुए मनुष्यों के केश बिखर गये हैं, उनके सिर पर धूल पड़ी है। रोते हुए वे अपनी छाती पीट रहे हैं। निश्चेष्ट व्यक्ति से युक्त मंच आगे बढ़ता है और लोग नाना प्रकार से विलाप करते हुए उसके पीछे चल रहे हैं।'[६] पूछने पर पता चलता है कि मंच पर निश्चेष्ट पड़े व्यक्ति का स्वर्गवास हो गया है। मृत्यु ने इसे समाप्त कर दिया है। अब यह अपने माता-पिता, स्त्री-पुत्र तथा अन्य कुटुम्बियों को कभी

---

१. ल० वि० (शास्त्री), परि० १४, श्लोक ५४५
२. वही, श्लोक ५४६
३. वही, श्लोक ५४८-५४९
४. वही, (वैद्य), पृ० १३६; (शास्त्री) श्लोक ५५०
५. वही, श्लोक ५५१
६ वही० (वैद्य), पृ० १३६ (शास्त्री) श्लोक ५५३

न देख सकेगा। यह अपने रम्य शरीर को भी छोड़कर परलोक सिधार गया है। यह शरीर रखने पर सड़ जाएगा, दुर्गन्ध फैलाएगा, इसलिए सब लोग इसे श्मशान ले जा रहे हैं और इसका अंतिम संस्कार कर देंगे।[1] इस घटना को देखकर बोधिसत्त्व को मृत्यु भी एक महान् कष्ट के रूप में दिखाई पड़ने लगती है।[2] फलतः वे यौवन, आरोग्य, जीवन और भोग-विलास की प्रवृत्ति को धिक्कारते हैं और इन सभी कष्टों से छूटने का उपाय सोचने लगते हैं।[3] इसी बीच किसी अन्य दिन उत्तरीय मार्ग से उद्यान-भूमि के लिए प्रस्थान करने पर एक दिन अकस्मात् एक प्रव्रजित व्यक्ति के दर्शन करते हैं, जिसका चित्त पूर्ण प्रशान्त है, धीर गंभीर है।[4] परिचय पूछने पर सारथी से पता चलता है कि यह व्यक्ति राग-द्वेष से पूर्णतया मुक्त है आत्मतत्त्व की खोज में लगा हुआ है।[5] बस यहीं से बोधिसत्त्व का मन प्रव्रज्या के लिए उत्सुक हो जाता है।[6] विश्व के प्रति वैराग्य हो जाता है।

ललितविस्तर के अनुसार बोधिसत्त्व की मोक्ष की कामना स्वयं अकेले मोक्ष-प्राप्ति की नहीं है। उन्होंने पूर्वजन्म में ही कामना की थी कि 'मैं बोधि (तत्त्वज्ञान) प्राप्त करके स्वयं तो अजर-अमर पद प्राप्त करूंगा ही, जगत् को भी समस्त क्लेशों से मुक्ति प्रदान करूंगा।[7] वे महाअभिनिष्क्रमण के समय इस तथ्य को छन्दक के समक्ष प्रकट भी करते हैं 'प्राणियों के मोक्ष के लिए, प्राणियों के हित के लिए मेरा निश्चय अटल है न बदलने वाला, दृढ़ है, उतना ही दृढ़ है जितना सुमेरु अपने स्थान पर दृढ़ होता है।'[8] उनका यह दृढ़ निश्चय सर्वविदित है, इसीलिए बोधि प्राप्ति हेतु अभिनिष्क्रमण के लिए सपूर्ण संचोदना परिवर्त्त में, देवताओं ने भी, उनको स्मरण दिलाकर, प्रार्थना करते हुए, उन्हें प्रेरणा दी है कि वे अभिनिष्क्रमण के लिए प्रस्तुत हों और बोधि प्राप्त करके, सकल ब्रह्माण्ड को क्लेशों से मुक्ति प्रदान करें।[9] अन्य प्रसंगों में भी अनेक बार इस प्रण को दुहराया गया है।

---

१. ल० वि०, (शास्त्री) श्लोक ५५४
२. वही, श्लोक ५५५
३. वही, श्लोक ५५६
४. वही, श्लोक ५५७
५. वही, श्लोक ५५८
६. वही, श्लोक ५५९
७. वही, श्लोक ६४३
८. वही, श्लोक ६३९
९. वही, श्लोक ३८६-५४४

देहे चेत् प्रीयते कश्चित् प्रीयते नरकेऽपि सः ।
यद्वाप्यज्ञानिभिर्देहे सुखबुद्ध्यात्र भण्यते ॥ २४ ॥
शब्दादीन्द्रियसौख्यान्यप्यन्वयव्यतिरेकतः ।
असाराणि यथा गीतं मत्तोन्मत्तप्रलापवत् ॥ २५ ॥
वादयन्तश्च दृश्यन्ते यथोन्मत्ता विकुर्वते ।
स्पर्शसौख्यं तथोपाधेरुपाध्यन्तरसङ्गमात् ॥ २६ ॥
व्रणादेस्तु यथा पूयमूत्रादेर्निर्गमात् सुखम् ।
पामकण्डूतिसौख्यं वा तत्तुल्यं सुरते सुखम् ॥ २७ ॥
चक्षुरिन्द्रियसौख्यं यन्नृत्तकान्तादिदर्शने ।
उन्मत्तचेष्टितान्नृत्तं न किञ्चिदपि हीयते ॥ २८ ॥
स्वक्षी सुनासा सुमुखी सुदतीत्यादिदर्शने ।
सौख्यं त्वगस्थिमांसादौ कतरत् स्यान्मनोहरम् ॥ २९ ॥
आस्वाद्येषु पदार्थेषु रसनेन्द्रियचापलात् ।
क्षुत्तृण्णिवृत्त्या सौहित्यं दुःखापायो न तत् सुखम् ॥ ३० ॥
निद्रादुःखं यदि लभेत् सौख्यं स्वापे सुखं यथा ।
तदात्मसुखभुग्दृष्टं करणानां तु संहृतौ ॥ ३१ ॥
घ्रेयेष्वपि सुगन्धेषु यत्नात् प्राप्येषु दृश्यते ।
अयत्नेन वनादौ च प्राप्तुं तच्छक्यते सुखम् ॥ ३२ ॥
गर्भवासे च जनने बाल्ये वास्य कुतः सुखम् ।
अस्वतन्त्रस्येव परैर्यन्त्रितस्येव पक्षिणः ॥ ३३ ॥
यौवनेऽनिष्टसंयोगादिष्टलाभे वियोगतः ।
रागाद्याक्रान्तचित्तस्य कुतः सौख्यं शरीरिणः ॥ ३४
वार्धक्येऽप्यसमर्थस्य विषयांस्तु बुभुत्सतः ।
प्रक्षीणेन्द्रियवृत्तेस्तु रोगरागाद्युपद्रवैः ॥ ३५ ॥
पीड्यमानस्य तत्सौख्यं कुतो वास्य मरिष्यतः ।
म्रियमाणस्य यद् दुःखे नरकेऽपि न तद् भवेत् ॥ ३६ ॥
ततः पापकृतां दुःखं यमलोकाय गच्छताम् ।
तद्दर्शनेन पततां पतितानां पतिष्यताम् ॥ ३७ ॥

नरकेषु प्रसिद्धं हि दुःखं तस्मान्न भण्यते ।
यदि पुण्यकृदेव स्यात् स्वर्गे देवादिदेहवान् ॥ ३८ ॥

विमानादिषु दिव्येषु भोगेष्वनन्तेष्वपि ।
दृष्ट्वा (पापा ? त्वल्पां) श्रियं दीप्तामन्येषामात्मनोऽधिकाम् ॥ ३९ ॥

सन्तप्त एष विषयान् भुङ्क्ते दुःखं धिया वहन् ।
ततोऽपि क्षीणपुण्यानां पतनाद्यवलोक्य तु ॥ ४० ॥

यादृशं हृदये दुःखं न तद् वर्णयितुं क्षमम् ।
अथ राज्यादिषु सुखं स्याच्चेत् सन्ध्यादिदुःखिनः ॥ ४१ ॥

पुत्रेभ्योऽपि भयं यस्य तस्य सौख्यं कुतो भवेत् ।

अत्र पराशरः —

"यावतः कुरुते जन्तुः संबन्धान् मनसः प्रियान् ।
तावन्तोऽस्य निखन्यन्ते हृदये शोकशङ्कवः ॥

यद् यद् गृहे तन्मनसि यत्रतत्रावतिष्ठतः ।
*नाशव्ययादिभीत्या क्व परिग्रहवतां सुखम् ॥"

इति ।

तथा चाहुः —

"यतो यतो निवर्तते ततस्ततः सुखी भवेत् ।
निवर्तनाद्धि सर्वतो न वेत्ति दुःखमण्वपि" ॥

इति ।

तथापि तृष्णया जन्तुः पीड्यमानो दिवानिशम् ।
अर्थाद्यार्जनवैतृष्ण्यं न कदाचिन्निगच्छति ॥

तथाचोक्तं —

"जीर्यन्ति जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः ।
चक्षुश्श्रोत्रे च जीर्येते तृष्णैका निरुपद्रवा ॥

यत् पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।
नालमेकस्य तु यतस्तां तृष्णां दूरतस्त्यजेत् ॥"

---

* 'नाशदाहापहरणं तत् तस्यास्यैव तिष्ठति' इति विष्णुपुराणे पठ्यते ।

अतो न कर्मणा कार्यं प्रजया वा धनेन वा ।
त्यागेनैवामृतत्वं हि प्राप्तुं शक्यं मनीषिभिः ॥ ४२ ॥

तस्माद् धर्मार्थकामेभ्यो मोक्ष एव विशिष्यते ।
अस्थिरत्वात् त्रिवर्गाणां दुस्संपादतयापि च ॥ ४३ ॥

अलमलमतिविस्तरेण । प्रस्तुतमेवानुसन्धीयते ।

इत्थं विज्ञाय संसारमसारं तद्विरागतः ।
मोक्षमार्गः परो योगः साङ्गः साध्यो विपश्चिता ॥ ४४ ॥

स च सन्न्यसनात् सम्यग् योगः प्राप्यो न चान्यथा ।
सन्न्यासो मुण्डनान्न स्याद् दण्डादेर्ग्रहणादपि ॥ ४५ ॥

काषायावरणाद्यं च मुण्डनं दण्डधारणम् ।
यदन्यदप्येवमाद्यं देहस्योक्तं न देहिनः ॥ ४६ ॥

जडस्येह शरीरस्य घटकुड्यादिधर्मणः ।
वेषलक्षणमात्रेण देही मोक्षं कथं व्रजेत् ॥ ४७ ॥

अत एव शरीरस्य कर्तृत्वं नापि भोक्तृता ।
शरीरकर्मणां कर्ता संस्कार्यस्तत्फलार्थिभिः ॥ ४८ ॥

अत एव हि सन्न्यासस्त्यागः स्यात् काम्यकर्मणाम् ।
काम्यानां कर्मणां न्यासं सन्न्यासं कवयो विदुः ॥ ४९ ॥

लोकार्थपुत्रैषणाभ्यो निवृत्तो यः सदैव हि ।
स्ववर्णाश्रमयुक्तानां तथा स्वसमयस्य तु ॥ ५० ॥

विहितानां तु धर्माणां तत्फलेष्वनपेक्षया ।
ईश्वरार्पणबुद्ध्या तु करणं न्यास इष्यते ॥ ५१ ॥

तद्वान् यतिश्च सन्न्यासी न स्यात् केवलमुण्डितः ।
ज्ञेयः स नित्यसन्न्यासी यो न द्वेष्टि न काङ्क्षति ॥ ५२ ॥

ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथवा यतिः ।
चीरवासा जटी वापि द्विदण्डो वाथ मुण्डितः ॥ ५३ ॥

विवासाः शुक्लवस्त्रो वा काषायवसनोऽथवा ।
कर्मसन्न्यासनं कृत्वा साङ्ख्ययोगं समाश्रितः ॥ ५४ ॥

---

१. 'स' ख. पाठः.

शिवानुग्रहमासाद्य योगी मोक्षमवाप्नुयात् ।
विज्ञाय संसारमसारमेवं वैराग्यतोऽनुग्रहतश्च शम्भोः ।
संप्राप्य योगं तु गुरूपदेशाद् योगी विमुक्तिं न चिरादुपैति ॥ ५५ ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ सिद्धान्तसारे
उपरिभागे योगपादे योगलक्षणं नाम
प्रथमः पटलः ॥

---

अथ द्वितीयः पटलः ।

अथ योगस्तु विज्ञेयो गुणैश्वर्यविमुक्तिदः ।
चित्तवृत्तिनिरोधं तु योगमाह पतञ्जलिः ॥ १ ॥
युजेर्धातोः समाधौ तु क्षेत्रज्ञपरमात्मनोः ।
युक्तिर्योगः समुद्दिष्टस्तथाचाह महामुनिः ॥ २ ॥
"मनो हि सर्वभूतानां कारणं बन्धमोक्षयोः ।
वृत्तिहीनं मनः कृत्वा स्वात्मानं परमात्मनि ॥
परमात्मा[1] समायोज्य योगं कु + + + + ।
+ + + + विमुक्तैः[2] स्यान्मुख्योऽयं योग इष्यते ॥"

इति ।

सम्यक् शिवगतं चित्तं यदा न चलति स्थिरम् ।
शिवत्वव्यक्तभावस्य[3] कैवल्यं योग इष्यते ॥ ३ ॥
तच्च रागादिदोषाणां वर्जनेन प्रकाशते ।
ते च नश्यन्ति रागाद्या योगाङ्गानां निषेवणात् ॥ ४ ॥
योगाङ्गानि च तान्यष्टौ प्रवदन्ति हि तद्विदः ।

तद्यथा —

यमाश्च नियमास्तद्वदासनं प्राणसंयमाः ॥ ५ ॥
प्रत्याहारा धारणाश्च ध्यानानि च समाधयः ।
यमाः पञ्चप्रकाराः स्युर्नियमाश्चैव पञ्चधा ॥ ६ ॥
आसनानि च पञ्च स्युः प्राणायामास्तु नैकधा ।
प्रत्याहाराः पञ्चविधा धारणा बहुधा स्मृताः ॥ ७ ॥

---

१. 'नः' ।, २. 'रात्मना स', ३. 'क्तिः' क. पाठः.

ध्यानानि नैकधा त्वेकः समाधिरथवा त्रिधा ।
अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ ॥ ८ ॥
यमाः पञ्चविधास्तेषां पृथग्भेदा भवन्ति हि ।
मनोवाक्कर्मभिर्हिंसास्त्रिविधाः प्राणिनामिह ॥ ९ ॥
ताभ्यो निवृत्तिं सर्वत्र अहिंसां परिचक्षते ।
सत्यं यथार्थकथनं सर्वभूतहितं च यत् ॥ १० ॥
परपीडाकरं सत्यमेवं सत्यं विदुर्बुधाः ।
असत्यमपि भूतानां हितं चेत् सत्यमेव तत् ॥ ११ ॥
परपीडाकरं सत्यं यदा[1] मौनं तदा भजेत् ।
अन्यैः परिगृहीतानां त्यक्तानां वाश्रमादिषु ॥ १२ ॥
निक्षिप्तानां तृणानां वा कर्मणा मनसा गिरा ।
परार्थानामनादानमस्तेयं परमं स्मृतम् ॥ १३ ॥
ब्रह्मचर्यमिति प्राहुरिन्द्रियाणां तु संयमम् ।
तत्राप्युपस्थविषयनिवृत्तिं तु विशेषतः ॥ १४ ॥

**किन्तु,**

दर्शनस्पर्शनापेक्षासङ्कल्पाभाषणादिभिः ।
योषित्संभोगवैमुख्यं ब्रह्मचर्यं परं विदुः ॥ १५ ॥
तत्रापि च गृहस्थानां स्वदारान्नव्यतिक्रमात् ।
ऋतुस्नाताभिगमनं ब्रह्मचर्यं परं स्मृतम् ॥ १६ ॥
अर्जनक्षयसंरक्षाहिंसादोषादिदर्शनात् ।
अस्वीकरणमर्थानां मुख्यः स्यादपरिग्रहः ॥ १७ ॥
भिक्षूणामयमुद्दिष्ट अन्येषामन्यथा स्मृतः ।
ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथवा मुनिः ॥ १८ ॥
सकुटुम्बस्तु यस्तस्य गुर्वादीनां तु पुष्टये ।
असत्प्रातिग्रहेभ्यस्तु निवृत्तिरपरिग्रहः ॥ १९ ॥

॥ एवं यमाः ॥

नियमाः शौचसन्तोषौ स्वाध्यायस्तप एव च ।
तद्वदीश्वरपूजेति पञ्च भिन्नास्तु ते पुनः ॥ २० ॥

---

१. 'तत् परपीडाकरं सत्यं यदा', २. 'आ' क. पाठः.

शौचं तु शुद्धिर्विज्ञेया मनोवाक्कायकर्मणाम् ।
अचिन्तनमकृत्यानां यत् तच्छौचं तु मानसम् ॥ २१ ॥

अक्षी(नं? बं) वाचिकं स्यात् तु कायिकं तु मृदा जलैः ।
मलानां क्षालनञ्चान्तःकरणस्य विशोधनम् ॥ २२ ॥

पापानामननुष्ठानं कर्मिणां शौचमिष्यते ।
वर्णाश्रमादिधर्माणामविरोधागतेन तु ॥ २३ ॥

धनधान्यादिना वृत्त्या तृप्तिः सन्तोष उच्यते ।
(ग )तेष्वननुशोकः स्याद् भविष्यार्थेष्वलोलता ॥

वर्तमानेष्वसक्तिश्च सन्तोषः परिपठ्यते ।
हर्षागमेष्वनुत्सेकः शोकस्थानेष्वशोकता ॥ २५ ॥

समता चापि सर्वेषु सोऽपि सन्तोष उच्यते ।
प्रणवस्य तथाभ्यासस्तथोपनिषदामपि ॥ २६ ॥

तत्फलानभिसन्धानात् स्वस्वमन्त्रजपोऽपि च ।
स्वाध्याय इति निर्दिष्टस्त्रिविधोऽपि च योगिनाम् ॥ २७ ॥

तथाचाहुः —

"स्वाध्यायाद् योगमासीत योगात् स्वाध्यायमात्मनि ।
स्वाध्याययोगसम्पत्त्या परमात्मा प्रकाशते ॥

शब्दब्रह्म च तद् ब्रह्म वेदितव्ये उभे अपि ।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥"

इति ।

एकभुक्तोपवासाद्यैः कृच्छ्रचान्द्रायणादिभिः ।
कर्शनं तु शरीरस्य यत्तत्तप उदाहृतम् ॥ २८ ॥

तत्राप्यनशनं नेष्टं नेष्टमत्यशनं तथा ।
व्रतचोदितकालाशी तपस्वी योगभाग् भवेत् ॥ २९ ॥

तथाचाह भगवान् —

"नात्यश्नतस्तु योगोऽस्ति नचैकान्तमनश्नतः ।
नचातिस्वप्नशीलस्य जाग्रतो नापि चार्जुन! ॥

युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥"

इति ।

आभ्यन्तरैस्तथा बाह्यैर्द्रव्यैर्गन्धादिभिः क्रमात् ।
चोदिताराधनं शम्भोर्यत् तदीश्वरपूजनम् ॥ ३० ॥
तत्राप्यनभिसन्धाय फलं भक्त्योपपत्तितः ।
देवस्येष्टस्य यजनं कर्मणा मनसापि च ॥ ३१ ॥
योगिनां योगसिद्ध्यर्थं शस्तमीश्वरपूजनम् ।
याज्ञवल्क्यो वसिष्ठश्च योगाचार्यौ महामुनी ॥ ३२ ॥
पृथग्यमांश्च नियमान् दशभेदानिहोचतुः ।
"अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयार्जवम् ॥ ३३ ॥
क्षमा धृतिर्मिताहारः शौचं चेति यमादयः ।
तपः सन्तोष आस्तिक्यं दानमीश्वरपूजनम् ॥ ३४ ॥
सिद्धान्तश्रवणं चैव ह्रीर्मतिश्च जपो हुतम् ।
एते तु नियमाः" । इति

॥ नियमाः ॥

आसनान्यपि चोक्तानि बहुधा पूर्वपद्धतौ ॥ ३५ ॥
तेषां पञ्चैव शस्तानि योगसिद्धिकराणि वै ।
स्वस्तिकं पद्मसंज्ञं च भद्रं योगासनं तथा ॥ ३६ ॥
गोमुखं चेति तेषां तु लक्षणं पृथगुच्यते ।

उपविश्य तु विष्टरेऽथ जान्वोर्विवरेऽङ्गुष्ठनिपीडनं विधाय ।
ऋजुमध्यगलक्षणाग्रकायो भवति स्वस्तिकमासनं निविष्टम् ॥ ३७ ॥
चरणाग्रयुगं तथोपरिष्टादधिरोप्योरुयुगस्य मूलदेशे ।
उपविश्य पुरेव पद्मसंज्ञं कथितं तद्विपरीततस्तु भद्रम् ॥ ३८ ॥
अधिरोप्य तु दक्षिणाङ्घ्रिमूरावथ सव्यं चरणं तु दक्षिणोरौ ।
अधिरोप्य पुरेव सूपविष्टो यदि योगासनमिष्टदं तदाहुः ॥ ३९ ॥
वृषणे तु निगृह्य वामजङ्घापदगुल्फे त्वधिरूढसस्फिगूरूः ।
उपरिस्थितदक्षिणोरुजानुः खलु योगी स तु गोमुखासनस्थः ॥ ४० ॥

॥ आसनानि ॥

प्राणस्य धारणं देहे प्राणायाम इतीरितः ॥ ४१ ॥

स च नैकविधः प्रोक्तो योगशास्त्रविशारदैः ।
पूरकः कुम्भकश्चैव रेचकश्चेति ते त्रयः ॥ ४२ ॥

प्राणसंयमनानां तु ख्यात्यान्यज्ञान्यनुक्रमात् । (?)
त्रिभिरङ्गैर्युतस्त्र्यंग स्याकुत्पूरकं विना (?) ॥ ४३ ॥

नासापुटेन वामेन पूरयेदुदरेऽनिलम् ।
निर्दिष्टोद्घातमात्राभिर्विज्ञेयः स तु पूरकः ॥ ४४ ॥

पूरितस्याथवा वायोः केवलस्य निरोधतः ।
संपूर्णकुम्भवत् तिष्ठेद् यदासौ कुम्भकः स्मृतः ॥ ४५ ॥

वामेतरेण घ्राणेन (मा?म)रुतः पूरितस्य तु ।
शनैः क्रमेण यो मोक्षो रेचकः परिपठ्यते ॥ ४६ ॥

तत्र षोडशमात्रस्तु सामान्यः पूरको मतः ।
कुम्भकः षष्टिमात्रः स्यात् पञ्चोद्घातस्तु संस्मृतः ॥ ४७ ॥

युग्मोद्घातो रेचकः स्याच्चतुर्विंशतिमात्रकः ।
प्राणायामो ह्ययं मन्दो मध्योऽस्माद् द्विगुणो भवेत् ॥ ४८ ॥

त्रिगुणस्तूत्तमो ज्ञेयः क्रमेणाभ्यासयोगतः ।
अगर्भाश्च सगर्भाश्च प्राणायामास्तु ते स्मृताः ॥ ४९ ॥

अन्तर्मन्त्रजपोपेताः प्राणायामाः सगर्भकाः ।
अन्तर्जपविहीना ये ते त्वगर्भा इति स्मृताः ॥ ५० ॥

प्राणयामादगर्भात् तु सगर्भः श्रेष्ठ उच्यते ।

तद्यथा —

कुम्भीकृत्योदरे वायुं स्वस्वमन्त्रं धिया जपेत् ॥ ५१ ॥

प्राणायामं सगर्भं तु कुर्यात् तद्गतमानसः ।
एकाक्षरः स्वमन्त्रश्चेत् तस्य स्याद् द्विशतं जपः ॥ ५२ ॥

प्रत्यक्षरविवृद्ध्यात्वा त्रिंशद्वर्णाननुक्रमात् ।
भावयित्वायतप्राणः प्राणायामं समाचरेत् ॥ ५३ ॥

---

१. 'ह्रापयि' ख. पाठः

अष्टार्णादिप्रकृत्यन्तं तत्राप्येकैककलोपतः ।
प्राणायामा विधातव्यास्तत्तद्ध्यानोपबृंहिताः ॥ ५४ ॥

तत्र विज्ञाय देहं च नाडीर्वायुं च तत्स्थितम् ।
तच्छुद्धिं च विधायाथ प्राणायामं समाचरेत् ॥ ५५ ॥

तद्यथा —

षण्णवत्यङ्गुलो देहो देहो लब्धाङ्गुलैः स्वकैः ।
ऊर्ध्वं शरीरादधिकं प्राणः स्याद् द्वादशाङ्गुलम् ॥ ५६ ॥

मेढ्रादूर्ध्वं द्व्यङ्गुलं तु देहमध्यमुदीरितम् ।
मूलाधारः स च त्र्यश्रो देवादीनां नृणामपि ॥ ५७ ॥

पश्वादीनां तु वेदाश्रस्त्वण्डजानां तु वर्तुलम् ।
चतुष्पदानां हृन्मध्ये क्रोडमध्येऽण्डजन्मनाम् ॥ ५८ ॥

मूलादूर्ध्वं मनुष्याणां नाभिकन्दो नवाङ्गुलात् ।
नाभिचक्रं तदूर्ध्वं तु द्वादशारमसुस्थितिः ॥ ५९ ॥

नाभेरधस्तात् कन्दाख्ये कुण्डलिन्यष्टवर्तुला ।
प्रसुप्तभुजगाकारा चतुरङ्गुलविस्तृता ॥ ६० ॥

द्वासप्ततिसहस्राणि नाड्यस्तन्मध्यानिर्गताः ।
अष्टाविंशतिसंख्याः स्युस्तासां मुख्यास्तु नाडयः ॥ ६१ ॥

तासां च दश वै श्रेष्ठा इडाद्यास्तास्वपि त्रयम् ।
इडा पिङ्गा सुषुम्ना च गान्धारी हस्तिजिह्विका ॥ ६२ ॥

सुयशालम्बुषा पूषा कुहूश्चैव च शङ्खिनी ।
एतास्विडा पिङ्गला च सुषुम्ना चोत्तमाः स्मृताः ॥ ६३ ॥

तासामथ सुषुम्नाख्या ब्रह्मनाडी परा स्मृता ।

इति नाडीदशकम् ॥

---

विमला घोषणी पृथ्वी ततस्त्वाप्यायनी मता ॥ ६४ ॥

तेजोवती वायवी च गगना चैव रोधनी ।
रसावाहा च मृद्वङ्गी स्रंसनी चापि मर्शनी ॥ ६५ ॥

शब्दस्पर्शवहे दूर्णा सुरूपा रसधारणी ।
सर्वगा चेति निर्दिष्टा नाडयोऽष्टादश क्रमात् ॥ ६६ ॥

अथ प्राणादयः पञ्च नागाद्याश्चापि पञ्च हि ।
प्राणस्तु हृत्पद्मगत आसनाद्धृदयस्थितिः ॥ ६७ ॥

निःश्वासोच्छ्वासकासादीन् कुर्वन् वक्षः समाश्रितः ।
प्रयाणं कुरुते नित्यं य (स्या? स्मात्) प्राणः प्रकीर्तितः ॥ ६८ ॥

अवाङ्मूत्रमलादीनांमपानो(?) हस्तादिसन्धिगः ।
हानोपादानकर्मा च तस्माद् व्यान इति स्मृतः ॥ ६९ ॥

ऊर्ध्वं नयत्युदानस्तु नाभेरांशिरसि स्थितः ।
गात्रनेत्रविकाराद्यं कर्मोदानस्य तु स्मृतम् ॥ ७० ॥

समानः सर्वकायं तु व्याप्य सन्धिषु च स्थितः ।
त्वगसृङ्मांसमेदोस्थिसंस्था नागादिवायवः ॥ ७१ ॥

ललाटिकोरश्शङ्खांसनाभिस्थास्ते त्वनुक्रमात्(?)।

अथ वर्णाः—

नीलेन्द्रगोपगोक्षीरविद्युदर्केन्दुसप्रभाः ॥ ७२ ॥

कुन्दभिन्नाञ्जनार्काश्मकुसुम्भकुसुमोपमाः ।
आहारपचनाद्यन्तं प्राणकृत्यमितीरितम् ॥ ७३ ॥

पोषणाद्यं समानस्य कर्मेति परिपठ्यते ।
उद्गाराद्यं तु नागस्य कूर्मस्योन्मीलनादिकम् ॥ ७४ ॥

कृकरस्य क्षुतं कर्म जृम्भाद्यं देवदत्तजम् ।
धनञ्जयस्य शो (भा? षाद्यं) मृतं च न विमुञ्चति ॥ ७५ ॥

मध्येन तु शरीरस्य सुषुम्ना सूत्रवत् स्थिता ।
बिन्दोर्मूर्धानमासाद्य ब्रह्मरन्ध्रेण निर्गता ॥ ७६ ॥

इडा च पिङ्गला चैव वामतोऽस्याश्च दक्षिणे ।
सुषुम्नायां स्थिते वामदक्षिणप्राणयोः स्मृते ॥ ७७ ॥

इडापृष्ठात्तु गान्धारी सव्यनेत्रविनिर्गता ।
हस्तिजिह्वा च वामाङ्घ्रेरङ्गुष्ठाग्राद् विनिर्गता ॥ ७८ ॥

सुयशा दक्षिणस्याङ्घ्रेर्ज्येष्ठिकाग्रान्तनिर्गमा ।
अलम्बुषा त्वधो नाभेः पायुमूलान्तनिर्गमा ॥ ७९ ॥

---

१. 'नां व्यानो ह' क. पाठः. २. 'स्मृ' ख. पाठः.

पूषा तु पिङ्गलापृष्ठाद् दक्षिणश्रोत्रनिर्गता[1] ।
नाड्यो विमलाद्यास्तु दश हस्ताग्रनिर्गताः ॥ ८० ॥
कुहूस्तु पिङ्गलापृष्ठाद् दक्षिणाक्षिविनिर्गता[2] ।
विश्वोदरोदरं याता सरस्वत्यपि मेढ्गा ॥ ८१ ॥
अन्तस्सुषिरसंयुक्ताः सर्वा अपि च नाडयः ।
पूर्णरक्ताश्च ताः सर्वाः पद्मतन्तुवि + + + ॥ ८२ ॥
तासां शाखोपशाखानां भेदस्तु बहुधा स्मृतः ।
देहाद् बहिर्निर्गताग्रा रोमसंज्ञाः शरीरगाः ॥ ८३ ॥
श्मश्रूणि मुखजातानि केशाः शिरसि निर्गताः ।
तिस्रः कोट्योऽर्धकोटिश्च केशरोमाणि देहगाः ॥ ८४ ॥
जरायुजानां देहेषु पशूनां त्रिगुणाः स्मृताः ।
पक्षिणां तु ततोऽर्धार्धं सिरारोमाणि संख्यया ॥ ८५ ॥
सिरारोमादिनियमो नहि कीटादिजातिषु ।
स्थावराणामपि तथा सर्वे ते प्राणिनः[3] स्मृताः ॥ ८६ ॥
एवं नाडीर्विदित्वा तु प्राणायामं समाचरेत् ।
एवं यमाश्च नियमा(नि ? श्च) तथासनानि
प्राणादयश्च पवना अपि नाडिचक्रम् ।
योगस्य यानि बहिरङ्गतयोदितानि
सेव्यानि तानि विदितानि यथोपदेशम् ॥ ८७[4] ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ सिद्धान्तसारे उपरिभागे
योगपादे योगलक्षणादिपटलो द्वितीयः ॥

---

अथ तृतीयः पटलः ।

अथ योगं विविदिषुः प्राप्य योगविदं गुरुम् ।
शुश्रूषार्थप्रदानाद्यैराराध्य परितोष्य च ॥ १ ॥
तस्माद् विज्ञाय योगं तु दत्वा तु गुरुदक्षिणाम् ।
अनुज्ञातस्तु गुरुणा गत्वा देशं मनोरमम् ॥ २ ॥

---

१. 'कुण्डला' ख. पाठः. २. 'णो' क. पाठः. ३. 'ना', ४. 'हा' ख. पाठः

पुण्यक्षेत्रनदीतीर्थवनसानुमदादिकम् ।
तत्राश्रमे मठे वाथ प्राज्यमूलफलोदके ॥ ३ ॥
ग्रामे देवालये वापि स्वगृहे वा मनोरमे ।
परिशुद्धा(त्म)वान् योगी निस्संगो विजितेन्द्रियः ॥ ४ ॥
स्ववर्णाश्रमकर्माणि चोदितानि समाचरन् ।
युक्ताहारविहारस्तु युक्तस्वप्नात्रबोधनः ॥ ५ ॥
शान्तस्त्रिषवणस्नायी सर्वत्र समदर्शनः ।
पिचुतूलादिसंपूर्ण आसने सोत्तरच्छदे ॥ ६ ॥
विशुद्धे सम्यगासीनो विजितासनमास्थितः ।
विनायकं गुरुं चाथ नमस्कृत्य ततः शिवं ॥ ७ ॥
ऋजुकायशिरोग्रीवः कृत्वान्तर्यजनं हृदि ।
योगं युञ्जीत मतिमान् न द्रुतं न विलम्बितम् ॥ ८ ॥
अथ ये ग्रन्थयः पञ्च भूतशुद्धौ प्रदर्शिताः ।
हृत्कण्ठतालुभ्रूमध्यब्रह्मरन्ध्रस्थिताः क्रमात् ॥ ९ ॥
तानूर्ध्ववायुना भित्त्वा मुक्त्वा दक्षिणनासया ।
वामनासापुटेनाथ पूरयेन्मरुतोदरम् ॥ १० ॥
पूरकस्तु स विज्ञेयो मात्राषोडश(का ? को) विधिः ।
निरुन्ध्यान्निर्गमं तस्य कुम्भकाख्यः स तु स्मृतः ॥ ११ ॥
स चापि षष्टिमात्रः स्याद् रेचकस्तस्य रेचनात् ।
पिधाय वामघ्राणं तु दक्षिणेनैव रेचयेत् ॥ १२ ॥
स तु रेचक उद्दिष्टो मानं तेषां निगद्यते ।
पूरके ह्यष्टमात्राभिर्नाभिपद्मे चतुर्मुखम् ॥ १३ ॥
अकारमूर्तिमगुणं समाधिस्थं चतुर्भुजम् ।
कुम्भके च चतुष्षष्टिमात्रामात्रं तु धारयेत् ॥ १४ ॥
उकारमूर्तिं शङ्खाभं वासुदेवं हृदम्बुजे ।
शङ्खचक्रधरं सौम्यं समाधिस्थं चतुर्भुजम् ॥ १५ ॥
किरीटिनं स्मरेच्छक्त्या यावत् तावत् तु कुम्भयेत् ।
रुद्रं मकारमूर्तिं तु भ्रूमध्यकमले स्मरन् ॥ १६ ॥

---

१. 'ण्य' क. पाठः.

शुक्लवर्णं समाधिस्थं चतुर्बाहुं त्रिलोचनम् ।
एणटङ्कधरं सौम्यमिन्दुमौलिं कपर्दिनम् ॥ १७ ॥
मात्राद्वादशमात्रं तु दक्षिणेनैव रेचयेत् ।
अथ प्रणवतो वायुं समापूर्य भ्रुवोऽन्तरात् ॥ १८ ॥
बिन्दुमत्यक्षरे तस्मिन् नियम्यात्मानमात्मनि ।
मनसा तपदोङ्कारं जपेन्मात्रत्रयाधिकम् ॥ १९ ॥
एष प्राणजयोपायो दृष्टादृष्टफलप्रदः ।
भूतशुद्ध्युक्तमार्गेण प्राणायामास्तु पञ्च ते ॥ २० ॥
शोषणाद्यास्त्रयश्च स्युः सहैतान् पृथगाचरेत् ।
सन्ध्ययोर्वायुमाकृष्य पिबन् वाग्मी च जायते ॥ २१ ॥
व्याधयो ह्यस्य नश्यन्ति मासान् मासैस्तु वा क्रमात् ।
बधिरो मूर्ध्न्यथात्मानमाधायापूर्य मारुतम् ॥ २२ ॥
पिधाय सर्वद्वाराणि व्योमेन्दोरमृताप्लुतम् ।
कर्णाभ्यां विसृजेद् वायुं बाधिर्यादेष मुच्यते ॥ २३ ॥
पार्श्वयोर्वाथ नाभौ वा धारयेद् गुल्मशूलनुत् ।
यत्र यत्र रुजा देहे तत्र तत्र तु मारुतम् ॥ २४ ॥
आरोप्य प्राणनियमात् तं तं रोगं व्यपोहति ।
अथापानं समुत्कृष्य वह्निस्थाने नियोजयेत् ॥ २५ ॥
निरुन्ध्याच्च षडक्षाणि ततो नादः प्रवर्तते ।
नाभेरामूर्धतो वीणाध्वनिर्नादः प्रवर्तते ॥ २६ ॥
सुषुम्नयोर्ध्वङ्गमया तच्छ्रुत्वासौ विमुच्यते ।
ब्रह्मरन्ध्रेण तस्याथ प्राणोऽप्युच्चरतीच्छया ॥ २७ ॥
हृदयाम्भोरुहान्तःस्थः प्राणो हंस इतीरयन् ।
उच्छ्वासं जनयेच्छश्वदहोरात्रे तु संख्यया ॥ २८ ॥
षष्ट्युच्छ्वासः स्मृतः प्राणः षट् प्राणा घटिका स्मृता ।
घटिकानां स्मृतः षष्ट्या त्वहोरात्रस्तु मानुषः ॥ २९ ॥
श्वासनिःश्वासविच्छेदः प्राणायामात् प्रवर्तते ।
अथोदरे नाभिपद्मे ध्यात्वा तु चतुराननम् ॥ ३० ॥

अकारमूर्तिमिडया पूरयेन्मरुतोदरम् ।
कुम्भीकृत्य यथापूर्वं धियैव प्रणवं जपन् ॥ ३१ ॥
स्थिरीकृत्य तु संहृत्य रेचयेद् दक्षिणेन तु ।
अथवा हृदयाब्जस्थं वासुदेवं चतुर्भुजम् ॥ ३२ ॥
शङ्खचक्रधरं सौम्यं शुक्लवर्णं किरीटिनम् ।
चतुर्बाहुमुदारस्थमुकारमयविग्रहम् ॥ ३३ ॥
स्मरञ्जपन् धिया तारं पूर्ववत् पूरकुम्भकौ ।
रेचकं च विधाय स्यात् प्राणायामस्तु वैष्णवः ॥ ३४ ॥
भ्रुवोरन्तरतोऽम्भोजे मकारमयविग्रहम् ।
भस्माङ्गरागधवलं रुद्रं ध्यायंस्त्रिलोचनम् ॥ ३५ ॥
सूपविष्टं चतुर्बाहुं पूर्ववत् प्रणवं जपेत् ।
पूरकाद्यैर्यथापूर्वं रौद्रोऽयं प्राणसंयमः ॥ ३६ ॥
बिन्दुस्थानेऽम्बुजासीनमष्टबाहुं चतुर्मुखम् ।
ईश्वरं प्रोक्तरूपादिं ध्यायंस्तारं जपन् धिया ॥ ३७ ॥
पूरकाद्यैर्यथापूर्वं प्राणायामोऽयमैश्वरः ।
तथैव मूर्ध्नि कमले ध्यायन् देवं सदाशिवम् ॥ ३८ ॥
तारं जपन् धिया प्राग्वत् प्राणानायम्य पूर्ववत् ।
सर्वदोषहरोऽयं स्यात् सादेशः प्राणसंयमः ॥ ३९ ॥
कारणाधीशसंयुक्ताः पञ्चैते प्राणसंयमाः ।
सर्वकल्मषदोषघ्नाः सर्वे सर्वार्थसाधकाः ॥ ४० ॥
योगसिद्धिकराः पञ्च प्राणायामा भवन्ति हि ।
अथ हृत्पद्ममध्ये वा वि(न्दू ? न्दौ) वा व्योमपङ्कजे ॥ ४१ ॥
सूर्यादिमण्डलाधीशतत्त्वतत्त्वेशमूर्तिभिः ।
पुर्यष्टकाष्टच्छदने स्वस्वाङ्गावरणान्विते ॥ ४२ ॥
यो यो यस्या देवताया भक्तस्तां तत्र संस्मरन् ।
तत्तन्मन्त्रं जपन् बुद्ध्या पूरकादिक्रमेण तु ॥ ४३ ॥
प्राणसंयमनं कुर्वन् योगसिद्धिमवाप्नुयात् ।
अथवा हृदयाब्जादौ पश्यञ् ज्योतिर्निरञ्जनम् ॥ ४४ ॥

ब्रह्मादिकारणोपाधिनिर्मुक्तं चिद्घनं शिवम् ।
ध्यायंस्त्रिमात्रं चिन्मात्रप्रणवं वा धिया जपन् ॥ ४५ ॥
प्राणायामं प्रकुर्वीत न चिरात् सिद्धिमश्नुते ।
मूलाब्जात् कुण्डलिन्यास्तु ध्यायञ्च्छक्तिं विनिर्गताम् ॥ ४६ ॥
विद्युल्लेखोपमामूर्ध्वङ्गमामा व्योमपङ्कजा(न् ? त्) ।
परमामृतनिःष्यन्दैः प्लाव्यमानां ततोऽपि हि ॥ ४७ ॥
निवृत्तां पुनरायान्तीं मूलाम्भोजं पुनः पुनः ।
सुषुम्नयोर्ध्वं गच्छन्तीममृतासारवर्षिणीम् ॥ ४८ ॥
ध्यायञ्च्छक्तिं परां सूक्ष्मां चिन्मात्र(प्रणवं) तु वा ।
जपन् धिया यथापूर्वं प्राणानायम्य योगवित् ॥ ४९ ॥
योगसिद्धिमवाप्नोति नचिरान्नात्र संशयः ।
अथवा प्रणवाद्यां तु सप्तव्याहृतिपूर्विकाम् ॥ ५० ॥
गायत्रीं शिरसोपेतां त्रिः पठन् मनसा हृदि ।
व्योम्नि वा परमात्मानं सावित्रीं सूर्यमेव वा ॥ ५१ ॥
ध्यायन् प्रागुक्तमार्गेण पूरकादिक्रमेण तु ।
प्राणसंयमनं कुर्वन् योगी सिद्धिमवाप्नुयात् ॥ ५२ ॥
षड्भिर्द्वादशभिश्चाथ तथा षोडशभिः क्रमात् ।
मनोवाक्कर्मजानीह पातकानि विनाशयेत् ॥ ५३ ॥
प्राणायामस्ततश्चापि द्विगुणैस्त्रिगुणैरपि ।
अष्टोत्तरशतस्यापि(?)भ्रूणहत्यां च नाशयेत् ॥ ५४ ॥

अत्र याज्ञवल्क्यवसिष्ठौ—

''अपि भ्रूणहनं मासात् पुनात्यहरहः कृतः ।
ऋतुत्रयात् पुनात्येनं जन्मान्तरकृतादघात् ॥
वत्सरादिह सर्वज्ञो ब्रह्मविच्चापि जायते ।
प्रस्वेदकम्पोत्थानानां जननाः कुंभकाः (पुनः) ॥
कनिष्ठमध्यश्रेष्ठाः स्युः फलं तेषां च तादृशम् ।
प्राणायामैः क्रमाभ्यस्तैर्विजिता: स्युश्च वायवः ॥

निःश्वासोच्छ्वसनाद्यं च विना ज्ञानं च शक्यते ।
विनैव पूरकं तद्वद् रेचकं च विनैव तु ॥
कुम्भकेनैव सुचिरमपि तिष्ठेज्जितानिलः ।
मनोजव(इ?ग)तिश्च स्याद् दूरादर्थांश्च पश्यति ॥
खेचरो द्वादशाब्देन जरापलितवर्जितः ।
चिरजीवी च भवति ततो द्विगुणवत्सरैः ॥
ऋषिगन्धर्वदेवादीन् पश्यत्याभाषतेऽपि च ।
ततोऽपि द्विगुणैर्वर्षैर्लभते चाणिमादिकान् ॥"

प्राणायामाधिकारः ।

---

इन्द्रियाणां यथास्वं स्वं विषये परिधावताम् ।
बलादाहरणं तेषां प्रत्याहारं प्रचक्षते ॥ ५५ ॥
कर्मणां वि(जि?हि)तानां तु नित्यादीनां विधिं विना ।
मनसा ह्यनुष्ठानं प्रत्याहारं विदुर्बुधाः ॥ ५६ ॥
अथवाष्टादशस्थानेष्वाकृष्याधाय मारुतम् ।
स्ववशे स्थापनं केचित् प्रत्याहारं वदन्ति हि ॥ ५७ ॥

तानि तानि स्थानानि —

पादाङ्गुष्ठद्वयं गुल्फे जङ्घे जानूरुपायवः ।
मेढ्रं कटिस्ततः कन्दो नाभी हृदयवक्षसी ॥ ५८ ॥
कण्ठकूपं तथा तालु घ्राणं नेत्रे भ्रुमध्यकम् ।
मूर्धा चाष्टादशैतेषु स्थानात् स्थानं क्रमेण तु ॥ ५९ ॥
आकृत्य धारणं वायोः प्रत्याहारः स्मृतो बुधैः ।
अनेन रोगशान्तिः स्यादायुषो वर्धनं तथा ॥ ६० ॥

प्रत्याहाराधिकारः ।

---

यमाद्यैः पञ्चभिः (क?)स्तैर्विशुद्धस्य तु योगिनः ।
आत्मन्यवस्थितिं बुद्धेर्धारणं सम्प्रचक्षते ॥ ६१ ॥
प्रदेशावस्थितं देहे बुद्धेस्तु मरुता सह ।
+ + + + + + + + + + + + + + + + ॥ ६२ ॥

+ + + + + + + + + + + + + + + + |
+ + + + + भूतेषु ब्रह्मादीन् कारणेश्वरान् ॥ ६३ ॥
जान्वादिभूतशुद्ध्युक्तमार्गेण स्वस्वबीजतः ।
स्मृत्वा बुद्धिं तु तत्रैव प्रतीत्यन्तरवर्जिताम् ॥ ६४ ॥
संस्थाप्य प्राणसहितां धारणाभिश्च पञ्चभिः ।
त्रिभिस्त्रिभिर्भवे + + + + + + + + + + ॥ ६५ ॥
ब्रह्मादीन् कारणेशांस्तु स्वैःस्वैः संयोज्य कारणैः ।
प्रणवाक्षरसम्भेदात् क्षित्याद्यैर्मण्डलाक्षरैः ॥ ६६ ॥
निष्कले द्वादशान्तस्थे शिवे संयोज्य चिद्घने ।
तन्मयं च स्वमात्मानं गिं सर्ववेदिना ॥ ६७ ॥
+ + + + + + + + + + + + + + + + |
+ + + + + + + + + + + + + + + भाक् ॥ ६८ ॥

धारणाधिकारः ।

---

अथ ध्यानं द्विधा प्रोक्तं सकलं निष्कलं तथा ।
साकारं सकलं ध्यानं निराकारं तु निष्कलम् ॥ ६९ ॥
चतुर्भुजादिशुक्लादिद्वित्र्यक्षैकाननादिभिः ।
भेदैरिष्टसुराकारस्मरणं हृदयादिषु ॥ ७० ॥
साकारध्यानमुद्दिष्टं निराकारमथोच्यते ।
हृत्पद्मे वा भ्रुवोर्मध्ये बिन्दौ वा द्वादशान्तगे ॥ ७१ ॥
लैङ्गिकं परमं ज्योतिर्ध्यायेदङ्गुष्ठमात्रकम् ।
कदम्बगोलकाकारं भाभासितदिगन्तरम् । ७२ ॥
तस्मान्नीवारशूकाभं ज्योतिरूर्ध्वं सुषुम्नया ।
निर्गतं द्वादशान्तस्थशिवेनाप्यैक्यतां गतम् ॥ ७३ ॥
स्वेदेहरोमकूपेभ्यो निर्यज्ज्योतिश्शिखोज्ज्वलम् ।
विश्वमावृत्य तु व्याप्तं ध्यायेन्निश्चलमानसः ॥ ७४ ॥
ध्यानानामुत्तमं त्वेतद् योगश्चायं परो मतः ।
एवं सन्ततयुक्तात्मा योगी निर्धूतबन्धनः ॥ ७५ ॥

---

१. 'त' ख, पाठः.

अणिमादिगुणैश्वर्याण्यधिगम्याप्यविस्मितः ।
षडूर्मिभिरसंस्पृष्टो मैत्रादिगुणवर्जितः ॥ ७६ ॥
क्षमादमशमोपेतः सर्वभूतानुकम्पकः ।
छित्त्वा गुणमयान् पाशान् परं निर्वाणमृच्छति ॥ ७७ ॥
धारणानां द्वादशकैरायतं ध्यानमिष्यते ।
ध्यानाद् द्वादशकायामः समाधिर्भवति स्फुटम् ॥ ७८ ॥

ध्यानाधिकारः ।

---

समाधिः समभावः स्याज्जीवात्मपरमात्मनोः ।
तद्वच्छिवाह्वयं ब्रह्म परंज्योतिः सुनिर्मलम् ॥ ७९ ॥
एकं ज्ञानघनं शान्तं सर्वकारणकारणम् ।
अवस्थात्रयनिर्मुक्तं षड्भावविकृतेः परम् ॥ ८० ॥
सर्वानुग्राहकं विश्वव्यापि नित्यं निरञ्जनम् ।
आकाशादिमहाभूतैः शब्दाद्यैर्विषयैरपि ॥ ८१ ॥
दशेन्द्रियमनोबुद्धिसाहङ्कारगुणैरपि ।
प्राणादिभिः प्रकृत्या च पुरोगाभ्यामविद्यया ॥ ८२ ॥
नियत्या कलया कालमायाभ्यां च विवर्जितम् ।
सादेशेश्वरविद्याभिः शक्त्या चाखिलकारणम् ॥ ८३ ॥
नादान्तभासकं शश्वत् पञ्चकृत्यैकहेतुमत् ।
अनाद्यन्तं परं सूक्ष्मं तद् योऽहं सोऽहमित्यपि ॥ ८४ ॥
चित्ताधानं शिवे सम्यक् स समाधिरिति स्मृतः ।
यदा समरसं चित्तं सर्वत्र समदर्शनात् ॥ ८५ ॥
रागादिदोषरहितं हेयोपादेयनिःस्पृहम् ।
आहितं स्याच्छिवे शश्वत् समाधिः परमः स्मृतः ॥ ८६ ॥
अनात्मबुद्धिर्देहेऽस्मिन्नस्वबुद्धिश्च वस्तुषु ।
एषणात्रयमुक्तस्य कर्मपुत्रार्थवर्जनात् ॥ ८७ ॥
सर्वारम्भपरित्यागात् सर्वसङ्गविवर्जनात् ।
सर्वव्यापिनि चिन्मात्रे शिवेनैक्येन भावना ॥ ८८ ॥

अविच्छेदेन सततं समाधिः पा(शमोचनः) ।
+ + + + + + + + + + + + त एव वा ॥ ८९ ॥

जिघ्रतो मौनिनो वाचं ब्रुवतः शयितस्य वा ।
आसीनस्यापि मिषतो मीलिताक्षस्य तिष्ठतः ॥ ९० ॥

जाग्रतः स्वपतो वापि स्वप्नान् वा परिपश्यतः ।
गच्छतोऽपि यदा चेतः समाधिस्थस्य निश्चलम् ॥ ९१ ॥

करणानां तु संहारादव्यक्तिर्विषयेष्वपि ।
स योगः परमो ज्ञेयस्तद्वान् योगीन्द्र उच्यते ॥ ९२ ॥

ऐश्वर्याण्यणिमादीनि योगस्यावान्तरं फलम् ।
अष्टैश्वर्यगुणा योगस्यान्तराया भवन्ति हि ॥ ९३ ॥

ते(ष ? षु)योग + + + + + + + नाभिरोचयेत् ।
फलं हि मोक्षो योगस्य तस्मात् तदभिरोचयेत् ॥ ९४ ॥

एवं साङ्गोऽत्र योगस्तु समासात् संप्रदर्शितः ।
संस्मृत्य योगशास्त्रेभ्यः शिवानुग्रहतः स्फु(टम्) ॥ ९५ ॥

+ + + त्र हि मुख्यमित्थमुदितं भोगा यतो वाञ्छिताः
पश्वादिप्रविचारचारुविशदज्ञानक्रियायोगतः ।
अष्टैश्वर्यगुणास्तथैव सुलभं निःश्रेयसं श्रेय(सा)
तामीशानशिवोऽभ्यधाद् सुरगुरुः सिद्धांततापद्धतिम् ॥ ९६ ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ सिद्धान्तसारे उपरिभागे
योगपादे प्राणायामादिपटलस्तृतीयः ।
योगपादः समाप्तः ॥

---

समाप्ता चेयमीशानशिवगुरुदेवस्य कृतिः
सिद्धान्तसारपद्धतिः ॥

शुभं भूयात् ॥

# पञ्चमः पटलः

## अथ मन्त्रचैतन्यकथनम् ।

श्रीपार्वत्युवाच ।।

भगवन् देवदेवेश लोकानां हितकारक ।
चतुर्वर्गप्रदं देव चैतन्यं मे प्रकाशय ।।१।।

श्रीशिव उवाच–

शृणु देवि प्रवक्ष्यामि चैतन्यं परमाद्भुतम् ।
रहस्यं परमं गुह्यं गोपनीयं त्वया पुनः ।।२।।
चित्शक्त्या ध्वनितं देवि परिणामक्रमेण तु ।
वर्णभावं समाश्रित्य निर्गुणं सद्गुणात्मकम् ।।३।।
षट्चक्रञ्च तथा भित्वा शब्दरूपं सनातनम् ।
नादबिन्दु-समायुक्तं चैतन्यं परिकीर्त्तितम् ।।४।।
अथवान्य प्रकारेण श्रूयतां पद्मलोचने ।
विना येन न सिध्यन्ति जपपूजादिकानि च ।।५।।

---

**अधुना मन्त्रचैतन्य का कथन कहा जा रहा है —**

***पार्वती ने कहा***— हे भगवन्! आप देवतागणों के ईश्वर हैं एवं सर्वलोक हितकारक हैं। धर्म, अर्थ, काम एवं मोक्षप्रदायक मन्त्रचैतन्य-पद्धति को आप मेरे निकट प्रकाशित करें ।।१।।

***शिव ने कहा***— हे देवि! मैं परमाद्भुत मन्त्रचैतन्य का वर्णन कर रहा हूँ, श्रवण करें। यह अत्यन्त रहस्यपूर्ण एवं गोपनीय है। आप भी इसे सर्वप्रयत्न से गोपन करें ।।२।।

***हे देवि!*** मूलाधार से सहस्रार पर्यन्त षट्चक्र में सभीवर्ण चित्शक्ति में अवस्थान कर रहे हैं। चित्शक्ति निर्गुण होने पर भी वर्णभावाश्रय के कारण वह गुणात्मकरूप से प्रकाशित हो रहा है ।।३।।

नादबिन्दुयुक्त वर्णमयी शक्ति जब षट्चक्रों का भेदन कर उत्थित होता है, तभी वह सनातन चित्शक्ति-रूप में प्रकाशित होता है ।।४।।

***हे कमललोचने!*** जिस मन्त्र-चैतन्य के बिना जप-पूजा प्रभृति कुछ भी सिद्ध नहीं होता है, मैं उसके प्रकारान्तर विधान को बता रहा हूँ, श्रवण करें ।।५।।

अनाहतस्य मध्ये तु ग्रथितं वर्णमुत्तमम् ।
सुषुम्नावर्त्मना देवि कण्ठदेश-विनिर्गतम् ।।६।।
चैतन्यञ्च महेशानि योगीनां योगरूपकम् ।
सहस्रारे वर्णरूपं परिणाम क्रमेण तु ।।७।।
कर्णिकामध्यसंस्थे तु नादबिन्दु समन्वितम् ।
एवं संचिन्तयेद् देवीं चैतन्यमुत्तमं पुनः ।।८।।
मन्त्राक्षराणि चित्शक्तौ ग्रथितानि महेश्वरि ।
तानि संचिन्तयेदेवि सहस्रारे दले सदा ।।९।।
चैतन्यमन्त्ररूपा सा चैतन्यानन्ददायिनी ।
चैतन्यं नादशक्तिश्च चैतन्यं वर्णरूपकम् ।।१०।।
मणिपुरे सदा चिन्त्यं मन्त्राणां प्राणरूपकम् ।
अथवान्य प्रकारेण श्रूयतां वरवर्णिनि ।।११।।
कामबीजं रमाबीजं शक्तिबीजं सुरेश्वरि ।
एतानि पूर्वमुच्चार्य मातृकां तदनन्तरम् ।।१२।।

---

***हे देवि!*** अनाहत पद्म में उत्तमवर्ण ग्रथित है। सुषुम्नावर्त्म में कण्ठदेश से वह बहिर्गत होता है ।।६।।

***हे महेशानि!*** चैतन्य या चित्शक्ति ही योगिगणों की योगसाधना का विषयवस्तु है। वह चित्शक्ति ही सहस्रार में वर्णरूप में, परिणाम में (अर्थात् विलीन अवस्था में) कर्णिका के मध्य में नादबिन्दु-संयुक्त होकर अवस्थान कर रही है। इस रूप में देवी का (कुलकुण्डलिनी का) ध्यान करने पर उत्तम मन्त्रचैतन्य का लाभ होता है ।।७-८।।

***हे महेश्वरि!*** मन्त्राक्षरसमूह सर्वकाल में चित्शक्ति में ग्रथित अवस्था में है। सहस्रार में सहस्रदल कमलदलसमूह में उन समस्त मन्त्राक्षरों का चिन्तन करें। जो सहस्रार में चित्शक्ति-रूप में अवस्थिता हैं, वही मन्त्रचैतन्य-स्वरूपा हैं, वहीं चैतन्य एवं आनन्द दायिनी हैं। चैतन्य ही नादरूपी शक्ति हैं एवं चैतन्य ही वर्णरूपी हैं ।।९-१०।।

मणिपुर में सर्वदा मन्त्र के प्राणरूपी चैतन्य का ध्यान करें। हे वरवर्णिनि! प्रकारान्तर से मन्त्र-चैतन्य (विधान) का श्रवण करें ।।११।।

***हे सुरेश्वरि!*** कामबीज (क्लीं), रमाबीज (श्रीं) एवं शक्तिबीज (ह्रीं) को मातृकावर्ण के पूर्व में युक्त करें। उसके बाद, उक्त बीजत्रय-संयुक्त मातृकावर्ण के

पुटितं मूलमन्त्रञ्च शतमष्टोत्तरं जपेत् ।
कोटि-कोटि-गुणं तच्च लभते नात्र संशयः ।।१३।।
अथवान्यप्रकारेण चैतन्यं शृणु पार्वति ! ।
येन विज्ञानमात्रेण परमं पश्यति ध्रुवम् ।।१४।।
सूर्यमण्डलमध्यस्थं चिन्तयेन्मूलमन्त्रकम् ।
अष्टोत्तरशतं जप्त्वा मूलमन्त्र-स्वरूपकम् ।।१५।।
गुरुं संचिन्तयेत्तत्र शिवरूपं सनातनम् ।
शक्तिञ्च चिन्तयेत्तत्र ब्रह्मरूपां सनातनीम् ।।१६।।
एवं संचिन्तयेत् यस्तु जपेद्वापि सुरेश्वरि ।
नासाध्यं तस्य लोकेऽस्मिन् मुक्तिर्देवि करे स्थिता ।।१७।।

इति कुब्जिकातन्त्रे पार्वती-परमेश्वर-संवादे पञ्चमः पटलः ।।५।।

---

द्वारा मन्त्र को पुटित कर पहले अष्टोत्तरशत जप करें। (एवं उसके बाद यथाविधिनियम से केवल मन्त्र-जप करते रहें।) इसप्रकार मन्त्रजप करने पर, उसके द्वारा कोटि-कोटि गुण जपफल का लाभ होता है। इसमें कुछ भी सन्देह नहीं है ।।१२-१३।।

*हे पार्वति!* अन्य प्रकार की मन्त्र-चैतन्य-विधि को बता रहा हूँ, श्रवण करें। इस पद्धति के ज्ञानलाभ मात्र से साधक निश्चय ही इष्टदर्शन का लाभ करता है ।।१४।।

सूर्यमण्डल के मध्य में मूलमन्त्र अवस्थित है— इस प्रकार चिन्तन करते हुए अष्टोत्तर शतबार मूलमन्त्र का जप करें। उसके बाद मूलमन्त्रस्वरूप सनातन एवं शिवरूपी गुरु को उस सूर्यमण्डल के मध्य में चिन्तन करें। उन परमशिव के साथ सूर्यमण्डल के मध्य में ब्रह्मरूपा सनातनी आद्याशक्ति का भी ध्यान करें । हे सुरेश्वरि! जो व्यक्ति इस प्रकार ध्यान करता है या मन्त्र का जप करता है, त्रिभुवन में उसके लिए असाध्य कुछ भी नहीं रहता एवं मुक्ति भी उसके करतलगत हो जाती है ।।१५-१७।।

***कुब्जिकातन्त्र में पार्वती-परमेश्वर-संवाद में***
***पञ्चम पटल समाप्त ।।५।।***



# षष्ठः पटलः

## योनिमुद्राकथनम्।

श्रीशिव उवाच—

अथ वक्ष्ये महेशानि शरदिन्दुनिभानने ।
अतीवपरमं गुह्यं न प्रकाश्यं कदाचन ।।१।।
रहस्यं परमं गुह्यं सर्वदेवेषु वन्दितम् ।
चतुर्वेदैरगम्यन्तु संसारार्णव - तारकम् ।।२।।
सर्वाम्नायै र्महादेवि वन्दितं सुरसुन्दरि ।
गोपनीयं गोपनीयं गोपनीयं महेश्वरि ।।३।।

---

**सम्प्रति योनिमुद्रा का कथन कहा जा रहा है —**

(मूलाधार से कुलकुण्डलिनी शक्ति को क्रमान्वय से स्वाधिष्ठान, मणिपुर इत्यादि चक्र का एक के बाद एक का भेदन कर, उनको सहस्रार में आनयन-कार्य को ही तन्त्र में 'योनिमुद्रा' नाम से कहा गया है। योनिमुद्रा के सहयोग से मन्त्र का जप करने पर, मन्त्र अतिशीघ्र फल प्रदान करता है। तोड़लतन्त्र के नवम उल्लास में,षट्चक्र के किस चक्र में जप के द्वारा किस-किस फल को प्राप्त किया जा सकता है, वह वर्णित हुआ है। इस पटल में कुलकुण्डलिनी शक्ति को, विभिन्न चक्रों में स्थापित करते समय, उनके विभिन्न प्रकार के ध्यान का विषय वर्णित हुआ है। जो वेदान्त की माया है, वही तन्त्र की आद्याशक्ति है, वही कुलकुण्डलिनी हैं एवं वही दक्षिणाकालिका हैं। 'दक्षिणा' शब्द कालिका का विशेषण-मात्र है। पूर्व अध्याय में उक्त हुआ है कि—मातृकावर्णसमूह चैतन्यरूपी है एवं चैतन्यशक्ति में वे अवस्थान करते हैं। अत: चैतन्यरूपिणी कुलकुण्डलिनी के उत्थापन के साथ अभीष्ट मन्त्र का जप करने पर, वह द्रुत सिद्ध होता है, इस विषय में आश्चर्य क्या है?)

*शिव ने कहा*—हे महेशानि, हे शरदिन्दु-निभानने! इसके अनन्तर मैं चतुर्वेद के भी अगम्य संसारार्णव-त्राणकारी, सर्वदेववन्दित, अतिशय रहस्यजनक एवं परम गोपनीय तथ्य को बता रहा हूँ। यह परमतत्त्व अतीव गोपनीय है। कदापि किसी के भी निकट इसे प्रकट न करें ॥१-२॥

*हे महादेवि, हे सुरसुन्दरि!* यह परम गुह्यतत्त्व सर्वाम्नाय-वन्दित है अर्थात् यह गुह्यतत्त्व ही सर्वतन्त्रों में श्रेष्ठ एवं सारतत्त्व है। हे महेश्वरि! सर्वदा सर्वप्रयत्न से इसे गोपन करें ॥३॥

न प्रकाश्यं महादेवि स्वयोनिरिव पार्वति ।
निशीथे नग्नकेशस्तु नग्नशक्ति-समन्वितः ।।४।।
चिन्तयेदिष्टदेवीं च योगिनां योगरूपिणीम् ।
गुह्यदेशे नामपाद-गुल्फं संयोजयेत् सुधीः ।।५।।
शरीरं च स्थिरीकृत्य जिह्वायां तालुकां न्यसेत् ।
नासाग्र-नेत्रयुग्मञ्च कर्त्तव्यं च महेश्वरि ।।६।।
कण्ठासमं तथा कृत्वा चिन्तयेत् वाहिनीं शिवाम् ।
भुजङ्गरूपिणीं देवीं मूलाधार-निवासिनीम् ।।७।।
प्रातराधार-कमले हुतभुङ्मण्डले स्थिताम् ।
चतुर्भुजां महादेवीं परमामृत-बृंहिताम् ।।८।।
श्यामवर्णां महादेवीं महापद्मासनस्थिताम् ।
अभयं वरदञ्चैव दक्षिणे धारिणीं सदा ।।९।।
खड्गं मुण्डं वामभुजे धारयन्तीं सनातनीम् ।
मुक्तकेशीं स्मितमुखीं श्मशानालय वासिनीम् ।।१०।।
दन्तुरां दक्षिणे व्यापि मुक्तकेशीं दिगम्बरीम् ।
शवानां करसंघातैः कृतकाञ्चीं हसन्मुखीम् ।।११।।

---

***हे महादेवि!*** यह गुह्यतत्त्व स्व-योनिवत् गोपनीय है। निशीय में नग्नकेश एवं नग्नशक्ति-समन्वित साधक योगिगणों के योगरूपिणी स्वीय इष्टदेवी का चिन्तन करें। (इस स्थल पर 'इष्टदेवी' शब्द से 'कालिकादेवी' को समझना चाहिए।) हे महेश्वरि! गुह्यदेश में वामपद के गुल्फ का संयोग कर देह को स्थिर-रूप में रक्षा करें। उसके बाद सुधी साधक तालुमूल में जिह्वाग्र का संयोग करके, नासाग्र में उभय चक्षुओं की दृष्टिओं को सन्निबद्ध कर, अवस्थान करें ।।४-६।।

उसके बाद कण्ठदेश को समभाव (ऋजुभाव) में रक्षा कर, मूलाधार-निवासिनी भुजङ्गरूपिणी परम शिवारूपिणी आद्याशक्ति का चिन्तन करें ।।७।।

(मूलाधार में देवी का ध्यान इस प्रकार है) — प्रातःकाल आधारकमल पर अग्निमण्डल में स्थिता, परमामृत में वर्द्धिता, महादेवी आद्याशक्ति, श्यामवर्णा, महापद्मासनस्थिता हैं। वह चतुर्भुजा हैं। वह सर्वदा दक्षिण (दाहिने) दिशा के ऊर्ध्वहस्त में अभय (मतान्तर में अभयमुद्रा) एवं निम्नहस्त में वर (मतान्तर में वरमुद्रा) को धारण की हुई हैं ।।८-९।।

वह वामदिशा के ऊर्ध्वहस्त में खड्ग एवं निम्न हस्त में नरमुण्ड को धारण की हुई हैं। वह सनातनी, महामाया, मुक्तकेशी, स्मितहास्यमुखी एवं श्मशानालयवासिनी हैं ।।१०-११।।

लम्बमानां मुण्डमालां धारयन्तीं सदा शिवाम् ।
शवस्य हृदये चैज दक्षपादं निवेशिताम् ।।१२।।
महाकालेन रत्यर्थमत्यन्तलालसां पराम् ।
चन्द्र-सूर्य-बह्निरूप-लोचनत्रय-संयुताम् ।।१३।।
अर्द्धचन्द्रधरां देवीं पीनोन्नत-पयोधराम् ।
शिवाभिर्घोररावाभिश्चतुर्दिक्षु समन्विताम् ।।१४।।
चतुर्वेदैरपाराञ्च सर्वदेव-विभूषिताम् ।
कामदां कामरूपाञ्च भक्तानां त्राणकारिणीम् ।।१५।।
चतुर्वर्गप्रदां भीमां वन्दे दक्षिणकालिकाम् ।
स्वाधिष्ठाने महादेवि चिन्तयेद् बिन्दुरूपकम् ।।१६।।
तत्र देवीं च संचिन्त्य निर्मलां विश्वरूपिणीम् ।
अभयं वरदञ्चैव हस्तञ्च सुरसुन्दरि ।।१७।।
धनुर्बाणधरां देवीं पाशाङ्कुशधरां पुनः ।
बाणलिङ्ग-समायुक्तां नीलवर्णानिल-प्रभाम् ।।१८।।

---

परम शिवानी, गलदेश में लम्बमान मुण्डमाला को धारण कर, शव के हृदय पर, उनके दक्षिण पद को स्थापित कर, दण्डायमान हैं ।।१२।।

वह महाकाल के साथ रमण करने के लिए अत्यन्त लालसा परायणा बनकर अवस्थिता हैं। वह त्रिनयना हैं। उनका नयनत्रय चन्द्र, सूर्य एवं वह्नि स्वरूप हैं ।।१३।।

देवी अर्द्धचन्द्रधारिणी, पीनोन्नतपयोधरा एवं चतुर्दिशाओं में घोररावा शिवाकुलपरिवेष्टिता हैं ।।१४।।

सर्वदेव-विभूषिता, चतुर्वेद-के द्वारा उपासिता, कामदायिनी, कामरूपा एवं भक्तों के त्राणकारिणी, चतुर्वर्गप्रदा, भीमा, दक्षिणा कालिका की वन्दना कर रहा हूँ। (इस रूप में, मूलाधारचक्र में परमशिवा का ध्यान करें। इसके अनन्तर स्वाधिष्ठानचक्र में कुलकुण्डलिनी को ध्यान को कहा जा रहा है)— हे महादेवि! स्वाधिष्ठान में परमा शिवा का बिन्दुरूप में ध्यान करें ।।१५-१६।।

स्वाधिष्ठान में विश्वरूपिणी निर्मलादेवी का चिन्तन करें। हे सुरसुन्दरि! स्वाधिष्ठान में देवी चतुर्भुजा हैं। उनके एक हस्त में वरमुद्रा है (मतान्तर में, वर है) एवं अपर हस्त में अभयमुद्रा (मतान्तर में, अभय) है। देवी धनुर्बाण, पाश एवं अङ्कुश-धारिणी, बाणलिङ्ग समायुक्ता, नीलवर्णा एवं अनलप्रभामयी हैं ।।१७-१८।।

लोलजिह्वां महादेवीं विष्णुरूपां सनातनीम् ।।
बाणयुग्म-लसत्वर्णा दुष्टासुर-निसूदनीम् ।।१९।।
व्याघ्रचर्म-परिधानां ब्रह्मरन्ध्र-निवासिनीम् ।
अतिप्रसन्नवदनां स्मेरानन-सरोरुहाम् ।।२०।।
मणिपुरे चिन्तयेत्तु तेजःपुञ्ज-सनातनीम् ।
दिगम्बरीं करालास्यां मुक्तकेशीं चतुर्भुजाम् ।।२१।।
रक्तवर्णा महादेवीं रक्तवस्त्र विधारिणीम् ।
पद्मासनां महादेवीं सर्वनाग-विभूषिताम् ।।२२।।
शङ्खचक्रगदापद्म-धारिणीं सुरपूजिताम् ।
धर्मार्थदायिनीं देवीं भक्तानां त्राणकारिणीम् ।।२३।।
सर्वसिद्धिप्रदां देवीं जगतां मोहिनीं पुनः ।
महामायां मोहिनीञ्च ज्ञानिनां ज्ञानदां सतीम् ।।२४।।
सुन्दरीं रमणीं वामां चतुर्वर्ग-फलप्रदाम् ।
शान्तां शान्तप्रिया-मुग्रदैत्य-विनाशिनीम् ।।२५।।

---

सनातनी महादेवी विष्णुरूपा लालजिह्वा, बाणयुग्मधारिणी, अत्युज्ज्वल-वर्णा एवं दुष्टासुर-विनाशिनी हैं ॥१९॥

उनके परिधान में व्याघ्रचर्म है एवं ब्रह्मरन्ध्र में उनका वास है। वह अत्यन्त प्रसन्नवदना, पङ्कजनयना एवं स्मितहास्यमुखी हैं ॥२०॥

*(अधुना मणिपुर चक्र में देवी कुलकुण्डलिनी के ध्यान का कथन कहा जा रहा है) —*

मणिपुर में सनातनी महादेवी महामाया को तेजःपुञ्जरूपिणी, दिगम्बरी, करालास्या, मुक्तकेशी एवं चतुर्भुजा, रक्तवर्णा, रक्तवस्त्रपरिधाना, पद्मासना, सर्वनागविभूषिता, शङ्खचक्रगदापद्मधारिणी एवं सुरगण-पूजिता, धर्मार्थदायिनी एवं भक्तगणों की त्राणकारिणी-रूप में चिन्तन करें ॥२१-२३॥

मणिपुरचक्र में देवी सर्वसिद्धिप्रदा, जगन्मोहिनी महामाया एवं ज्ञानियों के ज्ञान-सम्मोहिनी, सती, सुन्दरी रमणी-रूप में वह चतुर्वर्गफलप्रदा, शान्ता, शान्तप्रिया एवं उग्रदैत्य विनाशिनी हैं ॥२४-२५॥

मधुमांसप्रियां कृष्णां यशोदानन्द-वर्द्धिनीम् ।
भक्तिगम्यां महादेवीं महाकाल-निवासिनीम् ।।२६।।
सर्वेषां जननीं नित्यां चिन्तयेत् सुरपूजिताम् ।
अनाहते महादेवीं चिन्तयेत् परदेवताम् ।।२७।।
अष्टभुजां महादेवीं रक्तवर्णां त्रिशक्तिकाम् ।
धनुर्बाणञ्च खड्गञ्च चक्रञ्च दधतीं शिवे ।।२८।।
पाशाङ्कुशधरां देवीं ब्रह्मादि-सुरवन्दिताम् ।
अर्द्धचन्द्रधरां देवीं पीनोन्नत-पयोधराम् ।।२९।।
पद्मासनां महामायां महापद्मासनस्थिताम् ।
एवं संचिन्तयेद्देवीं ब्रह्ममार्गेण गामिनीम् ।।३०।।
विशुद्धे च महाचक्रे चिन्तयेत् परमेश्वरीम् ।
दशभुजां महादेवीं पीतवर्णां सनातनीम् ।।३१।।
कपालं खेटकं खड्गं दर्पणं चामरं तथा ।
दक्षिणे विभ्रतीं देवीं कामराजोपरि स्थिताम् ।।३२।।

---

देवी मधुमांसप्रिया एवं यशोदानन्दवर्द्धिनी कृष्णास्वरूपिणी हैं। वह केवल भक्तिगम्या हैं। वह महाकालनिवासिनी महादेवी हैं एवं सभी के लिए जननीस्वरूपा, सुरपूजिता एवं नित्या हैं। इस प्रकार, मणिपुर में देवी का ध्यान करें। उसके बाद अनाहत चक्र में परदेवतारूपिणी नित्यास्वरूपा महादेवी का चिन्तन करें ॥२६-२७॥

*(अनाहत चक्र में कुलकुण्डलिनी के ध्यान का कथन कहा जा रहा है)—*

***हे शिवे!*** अनाहतचक्र में महादेवी अष्टभुजा, रक्तवर्णा एवं त्रिशक्तिरूपिणी हैं। वह धनुर्बाण, खड्ग, चक्र, पाश एवं अङ्कुश-धारिणी, ब्रह्मादि देवगण वन्दिता, अर्द्धचन्द्रधारिणी, पीनोन्नतपयोधरा, पद्मासना एवं महापद्मासन पर अवस्थिता हैं। ब्रह्ममार्गगामिनी, कुलकुण्डलिनी देवी का ध्यान, इसी प्रकार से अनाहत चक्र में करें ॥२८-३०॥

*(इसके अनन्तर विशुद्ध-चक्र में देवी के ध्यान को बताया जा रहा है)—*

उसके बाद विशुद्ध-चक्र में महादेवी सनातनी परमेश्वरी को पीतवर्णा एवं दशभुजा-रूप में ध्यान करें। वह अपने दक्षिण के पञ्चहस्तों में नरकपाल, खेटक, खड्ग, दर्पण एवं चँवर को धारण करके कामराज के ऊपर अवस्थान कर रही हैं ॥३१-३२॥

वामे खड्गं महापद्मं कर्त्तृकां पाशमङ्कुशम् ।
धारयन्तीं महादेवीं महासिंहासन स्थिताम् ।।३३।।
दिव्यवस्त्र परिधानां जटामुकुट मण्डिताम् ।
ब्रह्मविष्णुमहादेव-वन्दितां सुरसुन्दरीम् ।।३४।।
आज्ञाचक्रे महेशानि द्विभुजां चिन्तयेत् सुधीः ।
सिंहस्कन्ध समारूढ़ां द्विभुजां सुमनोहराम् ।।३५।।
वराभय-धरां चैव नानामणि-विभूषिताम् ।
जटामुकुट संयुक्ता-मर्द्धचन्द्र विभूषिताम् ।।३६।।
रत्नकाञ्ची-समायुक्तां रत्नमाला-सुशोभिताम् ।
रक्तवस्त्र परिधानां कमलापति-सेविताम् ।।३७।।
संसार-दुःख-शमनीं संसारार्णव-तारिणीम् ।
सुषुम्नावर्त्मना देवि चिन्तयेत् ध्यानरूपिणीम् ।।३८।।
षट्चक्रभेद योगेन चिन्तयेत् परमेश्वरीम् ।
सहस्रारे दले चैव चिन्तयेद् जगदीश्वरीम् ।।३९।।

---

(अपने) वाम दिशा के पञ्च हस्तों में यथाक्रम से खड्ग, महापद्म, कर्त्तृका, पाश एवं अङ्कुश को धारण करके, महादेवी सनातनी महासिंहासन पर अवस्थान कर रही हैं ।।३३।।

उनके परिधान में दिव्यवस्त्र हैं, उनका मस्तक जटामुकुट-मण्डित है। वह ब्रह्मा, विष्णु, शिव एवं सुरसुन्दरीगणों के द्वारा पूजिता-रूप में विराजमाना हैं ।।३४।।

*(इसके अनन्तर आज्ञाचक्र में कुलकुण्डलिनी के ध्यान का कथन कहा जा रहा है)—*

***हे महेशानि!*** आज्ञाचक्र में देवी को द्विभुजा-रूप में चिन्तन करें। देवी (यहां पर) द्विभुजा, अति मनोहर मूर्त्ति, सिंहस्कन्धसमारूढ़ा, वर एवं अभयमुद्रा (मतान्तर में वर एवं अभय) — धारिणी, नाना मणि-विभूषिता, जटामुकुट-संयुक्ता, अर्द्धचन्द्र-विभूषिता, रत्नकाञ्ची-समायुक्ता, रत्नमाला-सुशोभिता, रक्तवस्त्र-परिधाना, कमलापति-सेविता, संसारदुःख-शमनी (निवारण, प्रशमन या दमनकारिणी), संसारार्णवतारिणी एवं सुषुम्ना के मध्य में विराजमाना हैं। इस रूप में, आज्ञाचक्र में देवी का ध्यान करें ।।३५-३८।।

इस प्रकार षट्चक्रभेदक्रम से परमेश्वरी का चिन्तन करें। उसके बाद सहस्रार में, सहस्रदलकमल के मध्य में जगदीश्वरी का ध्यान करें ।।३९।।

कामं भ्रमन्तं तन्मध्ये पञ्चबाण विभूषितम् ।
गङ्गादिसर्वतीर्थञ्च अमृतं प्रतिपत्रके ।।४०।।
बसन्तादि महादेवि सर्वर्त्तुपरि शोभितम् ।
श्वेतवर्णं महादेवि सहस्त्रदलमुत्तमम् ।।४१।।
सर्वदेव समायुक्तं सर्वशक्ति समन्वितम् ।
सर्वमन्त्रमयं देवि चतुर्वेद विभूषिताम् ।।४२।।
एकादशमहादेवं ब्रह्मविष्णुशिवात्मकम् ।
कर्णिका स्वर्णवर्णाञ्च तत्र देवीं विचिन्तयेत् ।।४३।।
चिन्मयं परमं शिवं ध्यानगम्यं सनातनम् ।
सारात् सारतरं परादपि परं वचोऽगोचरम् ।।४४।।
नित्यानन्द-निरन्तरं निरूपमं वेदैरपारं परम् ।
शिवशक्तिमयं देवि निर्गुणं सगुणात्मकम् ।।४५।।
प्रदीपकलिकाकारं योगिनां ध्यानरूपिणम् ।
चैतन्यरूपिणं देवं परमामृतबृंहितम् ।।४६।।

---

उस सहस्त्रदल-पद्म के मध्य में काम सर्वदा पञ्चबाण-विभूषित होकर विचरण कर रहे हैं। उस सहस्रदल-पद्म के प्रति पत्र में गङ्गादि सर्वतीर्थ एवं अमृत विद्यमान है ।।४०।।

*हे महादेवि!* उस सहस्त्रदलपद्म के पत्रसमूह अत्यन्त श्वेतवर्ण हैं एवं उसके प्रत्येक पत्र में वसन्तादि ऋतुसमूह विद्यमान हैं ।।४१।।

*हे देवि!* उस सहस्त्रदलपद्म में सर्वदेव-समायुक्त, सर्वशक्तिसमन्वित, सर्वमन्त्रमय एवं चतुर्वेद-विभूषित ब्रह्मा, विष्णु एवं शिवात्मक एकादश महादेव विद्यमान हैं, उनका तथा उसकी कर्णिका में स्वर्णवर्णा देवी का चिन्तन करें ।।४२-४३।।

चिन्मय परमशिव, सनातन एवं ध्यानगम्य हैं। वह सार से भी सारतर हैं, परम से भी परमतर हैं एवं वाक्य के अगोचर अर्थात् वाक्यातीत हैं ।।४४।।

वह नित्यानन्द, निरन्तर एवं निरूपम हैं, वह वेद के अनधिगम्य परम सत्ता हैं। वह शिवशक्तिमय एवं निर्गुण होने पर भी सगुणात्मक हैं ।।४५।।

वह योगिगणों के ध्यानगम्य परमशिव प्रदीपकलिकाकार, चैतन्य एवं परमामृत-स्वरूप हैं। उस चित्रूपी परमामृत के मध्य में त्रिगुणात्मक देवी सनातनी का ध्यान निम्नोक्तरूप में करें।

देवी घोरदंष्ट्रा, करालवदना, लोलजिह्वा, चतुर्भुजा हैं। देवी के वामदिशा के

तन्मध्ये चिन्तयेद्देवीं त्रिगुणाञ्च सनातनीम् ।
घोरदंष्ट्रां करालास्यां लोलजिह्वां चतुर्भुजाम् ।।४७।।
सद्यश्छिन्न-शिरः-खड्ग-वामाधोर्ध्व-कराम्बुजाम्।
अभयं वरदञ्चैव दक्षिणाधोर्ध्व-पाणिकाम् ।।४८।।
नीलमेघप्रभां तन्वीं घोररूपां दिगम्बरीम् ।
कण्ठावसक्तमुण्डानीं गलद्रुधिर चर्चिताम् ।।४९।।
कर्णावतंशतानीत शवयुग्म भयानकाम् ।
बालार्कमण्डलाकार-लोचनत्रय-भषिताम् ।।५०।।
सृक्वद्वयगलद्रक्त-धाराविस्फुरिताननाम् ।
मुक्तकेशीं स्मितमुखीं श्मशानालय वासिनीम् ।।५१।।
शवानां करसंघातैः कृतकाञ्चीं हसन्मुखीम् ।
शवरूप-महादेव-हृदयोपरि-संस्थिताम् ।।५२।।
महाकालेन रत्यर्थमुपविष्टां स्मरातुराम् ।
शिवाभिर्घोररावाभिश्चतुर्दिक्षु समन्विताम् ।।५३।।
अति प्रसन्न वदनां स्मेरानन सरोरुहाम् ।
अनाहतन्तु तत्रैव तड़ित्कोटि समप्रभाम् ।।५४।।

---

निम्न हस्त में सद्यस्छिन्न नरमुण्ड एवं वामोद्ध्र्व-हस्त में खड्ग है। वह दक्षिण दिशा के ऊर्ध्वहस्त में वरमुद्रा एवं निम्न हस्त में अभय मुद्रा को धारण कर अवस्थान कर रही हैं ।।४६-४८।।

देवी नीलमेघप्रभा, तन्वी, घोररूपा, दिगम्बरी, रुधिरस्रावी नरमुण्ड उनके कण्ठदेश में विलम्बित हैं ।।४९।।

देवी उत्फुल्लवदना हैं। उनके ओष्ठद्वय के दोनों प्रान्तदेशों से रक्तधारा विगलित हो रही है। वह मुक्तकेशी, स्मितमुखी, श्मशानालयवासिनी, शवहस्त-कृतकाञ्ची परिधाना (=मृतों के हस्तों के द्वारा रचित कटिहार को जिन्होंने धारण किया है) एवं शवरूप महादेव के हृदय के ऊपर अवस्थिता हैं ।।५१-५२।।

महाकाल के साथ रति की लालसा में वह वहाँ पर कामातुर होकर अनस्थन कर रही हैं। उनकी चारों दिशाओं में घोर-निनादकारी शिवासमूह विद्यमान हैं ।।५३।।

उनका वदनमण्डल अतिशय प्रसन्न तथा कमललोचनद्वय लज्जापूर्ण हैं। अनाहत-चक्र में देवी कोटिविद्युत्प्रभामयी हैं एवं अनाहत-चक्र के ऊर्ध्वदेश में

तस्योर्ध्वे तु शिखा तन्वी चिद्रूपा परमाकला।
तया सहितमात्मानं एकीभूतं विचिन्तयेत् ।।५५।।
गच्छन्तं ब्रह्ममार्गेषु लिङ्गभेद क्रमेण तु ।
सूर्यकोटि प्रभाकारं चन्द्रकोटि सुशीतलम् ।।५६।।
अमृतं तद्धि सङ्गस्थं परमानन्द लक्षणम् ।
गत्वा कुलाकुलं दिव्यं पुनरेव विशेत् कुलम् ।।५७।
एवमभ्यस्यमानस्य अहन्यहनि निश्चयात् ।
जरामरणदुःखाद्यैर्मुच्यते भवबन्धनात् ।।५८।।
चतुर्विधा तु सृतय अस्यां योनौ प्रवर्त्तते ।
योनिमुद्रेयमाख्याता सर्वसिद्धिप्रदायिका ।।५९।।

---

कुलकुण्डलिनी परमकलारूपिणी, चित्रूपा, तन्वी शिखा मात्र हैं। उन शक्तिस्वरूपा परमकला के साथ आत्मा के एकत्व का चिन्तन करें ।।५४-५५।।

चित्रूपिणी परमकला मूलाधार के षट्चक्रस्थ लिङ्गसमूह को भेद के क्रम से, सुषुम्नावर्त्म से (मार्ग से) सहस्रार में गमन करती हैं। वह कोटि सूर्यों के समान प्रभामयी एवं कोटि चन्द्रों के समान स्निग्ध द्युति-सम्पन्ना हैं ।।५६।।

वह सहस्रार-स्थित अमृत के साथ युक्त होने पर, परमानन्द का लक्षण प्रकाशित होने लगता है। इस प्रकार देवी कुलकुण्डलिनी कुल (मूलाधार) से दिव्य अकूल (सहस्रार) में गमन करती हैं। उसके बाद, पुनः कुल में प्रवेश करती हैं ।।५७।।

जो व्यक्ति इस प्रकार कुलकुण्डलिनी को प्रतिदिन मूलाधार से सहस्रार में उत्थापन एवं पुनः सहस्रार से मूलाधार में आनयन करता है, वह व्यक्ति निश्चय ही जरा, मृत्यु प्रभृति दुःखों से मुक्ति लाभ कर, अन्त में भवबन्धन से भी मुक्त हो जाता है ।।५८।।

चतुर्विध सृष्टि इनकी योनि से प्रवर्त्तित होती है। इस योनिमुद्रा को सर्वसिद्धि-प्रदायक कहा जाता है। मूलाधार-कमल में सुमनोहर त्रिकोण है, उसके मध्य में

---

*विशेष*—'कुल' किसे कहते हैं—इसे 'महानिर्वाणतन्त्र' के सप्तम उल्लास में इस प्रकार कहा गया है—

"जीवप्रकृति तत्त्वञ्च दिक्कालाकाशमेव च ।
क्षित्यप्तेजोवायवश्च कुलमित्यभिधीयते ।।९७।।"

जीव, प्रकृति, तत्त्व (पञ्चविंशति तत्त्व) दिक्, काल, आकाश, पृथिवी, जल, तेज एवं वायुको 'कुल' नाम से अभिहित किया जाता है। **'अकुल' अर्थात् परमशिव ।**

मूलाधारसरोजे तु त्रिकोणं सुमनोहरम् ।
कामं भ्रमन्तं तन्मध्ये बालार्ककोटि सन्निभम् ।।६०।।
तदूर्ध्वे कुण्डलीशक्तिं तडित्कोटि समप्रभाम् ।
प्रसुप्तभुजगाकारां सार्द्धत्रिवलयान्विताम् ।।६१।।
मूलाधारे त्रिकोणे तां भावयेत् सुरसुन्दरीम् ।।६२।।
आरोप्यारोप्य शक्तिं कमलज-निलया-मात्मसाक्षात्क्रमेषु ।
स्थानेष्वाज्ञावसाने प्रणिहितहृदय-श्चिन्तयेत्तत् क्रमेण ।।६३।।
नित्यानन्दावसानं खड्गमुद्गर-महा-पद्ममध्यान्तरस्थाम् ।
ध्यायेच्चैतन्यरूपा-मभिनवजलदां मोक्षमार्गैकमार्गाम् ।।६४।।
साक्षाल्लाक्षा-रसाभां गगनगत-महा-पद्मसंस्थाच्च हंसात् ।
पीत्वा दिव्यामृतौघं पुनरपिच विशेन्मध्यदेशं कुलस्य ।।६५।।
चक्रे चक्रे क्रमेणामृतसरसि सर्वं-स्तर्पयेद्देवतास्ता ।
हाकिन्याद्याः समस्ताः सकलकुल-गतां तर्पयेत् कुण्डलीं ताम् ।।६६।।
इन्दौ तदूर्ध्वे बोधिन्यां नादनादान्त एव च ।
शक्तौ पुनर्व्यापिकायां सुपुष्पमणि गोचरे ।।६७।।

---

कोटि बालसूर्य-तुल्य काम भ्रमण कर रहे हैं। उनके ऊर्ध्व में कोटि विद्युत् की प्रभा के समान, निद्रित, सर्पाकार, सार्द्ध त्रिवलययुक्त, कुण्डलिनी शक्ति अवस्थान कर रही हैं। मूलाधार के त्रिकोण में उन सुरसुन्दरी की भावना करनी चाहिए ।।५९-६२।।

आत्मा के साथ साक्षत्-क्रम से ब्रह्मा के आश्रय-रूप इन शक्ति का बारम्बार आरोपण कर, उनके आदेश से हृदय में स्थापित कर, क्रम से उनका चिन्तन करना चाहिए ।।६३।।

जो नित्य आनन्दमयी, खड्ग, मुद्गर, महापद्म में अवस्थानकारिणी, चैतन्यरूपा, अभिनव मेघतुल्या, मोक्षमार्ग के एकमात्र पथस्वरूपा गगनगत महापद्मस्थ हंस से दिव्यामृत का पान कर जो साक्षात् लाक्षारस-तुल्या बन गयी हैं, उनका ध्यान करें। वह (देवी कुलकुण्डलिनी) पुनः कुल में प्रवेश कर जाती हैं ।।६४-६५।।

अमृत सरोवर-रूप प्रतिचक्र में हाकिनी प्रभृति देवीगणों का तर्पण करें एवं सकल कुल-गता उन कुलकुण्डलिनी का तर्पण करें ।।६६।।

इन्दु एवं उसके ऊर्ध्व में नाद-नादान्त की प्रकाशिका शक्ति में एवं सुपुष्प तथा मणियुक्त व्यापिका-रूप चित्शक्ति में मन्त्र के सभी अक्षर निहित हैं। परम अमृत-युक्त परमव्योम में उस चित्-शक्ति का चिन्तन करें एवं पूजा होमादि के

मन्त्राक्षराणि चित्शक्तौ प्रोतानि परिभावयेत् ।
तामेव परमव्योम्नि परमामृतबृंहिते ।।६८।।
दर्शयेदात्मसम्भावं पूजा होमादिकं विना ।
एवं संचिन्तयेन्मन्त्री स योगी नात्र संशयः ।।६९।।
सर्वपापात् विनिर्मुक्त इष्टदेवीं प्रपश्यति ।
षण्मासे सर्वसिद्धिः स्याद्दुर्गतिश्च प्रणश्यति ।।७०।।
अष्टादश महासिद्धिर्वत्सरान्ते भविष्यति ।
एवं संचिन्तयेद्देवीं परमात्मस्वरूपिणीम् ।।७१।।
स एव शङ्करः साक्षात् स एव विष्णुरण्ययः ।
स एव परमं ब्रह्म स एव देवतोत्तमः ।।७२।।
इति ते कथिता देवि योनिमुद्रा महेश्वरि ।
वत्सरेण लभेत् सिद्धिं पूर्णकामं लभेत् पुनः ।।७३।।

**इति कुब्जिकातन्त्रे पार्वती-परमेश्वर-संवादे षष्ठः पटलः ।।६।।**

---

बिना ही आत्मसाक्षात्कार करें। इस प्रकार, जो मननशील साधक चिन्तन कर सकता है, वह योगी है—इस विषय में कोई सन्देह नहीं है ।।६७-६९।।

इस प्रकार कार्य करने पर, साधक सर्व पापों से मुक्तिलाभ करके स्वीय इष्टदेवी का साक्षात् लाभ करता है। साधक इस प्रकार कार्यों से छः महीने में सर्व प्रकार की सिद्धियों का लाभ करता है एवं उसकी समस्त दुर्गतियाँ विनष्ट हो जाती हैं ।।७०।।

एक वर्ष तक इसीप्रकार लगातार साधना करने पर वर्ष के अन्त में अष्टादश महासिद्धयों का लाभ होता है। उपर्युक्त नियम से परमात्मारूपिणी देवी का चिन्तन करें ।।७१।।

जो व्यक्ति इसप्रकार महाशक्ति का ध्यान करता है, वह व्यक्ति साक्षात् शङ्कर, साक्षात् अव्ययरूपी विष्णु, साक्षात् परमब्रह्म है एवं वह व्यक्ति देवगणों में श्रेष्ठ देवता है ।।७२।।

*हे देवि! हे महेश्वरि!* मैंने आपको इसप्रकार योनिमुद्रा-साधन को बताया हैं। एक वर्षकाल के मध्य ही साधक योनिमुद्रा के द्वारा पूर्णमनस्काम बनकर सिद्धिलाभ करता है ।।७३।।

***कुब्जिकातन्त्र में पार्वती-परमेश्वर-संवाद में षष्ठ पटल समाप्त ।।६।।***



मोक्ष की सिद्धि के लिये लम्बा कुण्ड बनाना चाहिये । जिस समय में जिस कुण्ड को जैसा कहा गया उस समय उसी प्रकार का कुण्ड बनाना चाहिये । हे देवि! यह मैंने तुमको होमक्रम की विधि बतलायी ॥ ९९-१०२ ॥

[ योगविध्यभिधानं योगमाहात्म्याभिधानं च ]

**अथ योगविधिं मत्तः शृणु सावहिता सती ॥ १०२ ॥**
**जपहोमार्च्चनध्यानप्रयोगाश्चैकतो मताः ।**
**एकतो वायुरोधेन देहषट्चक्रभेदनम् ॥ १०३ ॥**
**सदाशिवेन यः प्रोक्तः क्रमो योगविधेर्मम ।**
**तस्मिन् कृते किमेभिर्वा प्रयोगैः साधनैरपि ॥ १०४ ॥**
**यो योगेन तनूमेतां साधयेद् विधिवर्त्मना ।**
**परार्द्धशतजीवी स एवमाह सदाशिवः ॥ १०५ ॥**

**योगविधि और उसका माहात्म्य**—अब मुझसे सावधान होकर योगविधि को सुनो । जप, होम, पूजा, ध्यान, अनुष्ठान एक ओर तथा वायुरोध के द्वारा देहस्थ-षट्चक्र का भेदन एक ओर । सदाशिव ने योगविधि का जो क्रम मुझको बतलाया उसके करने पर ये प्रयोग और साधन व्यर्थ हैं । जो (मनुष्य) योग के द्वारा विधिवत् इस शरीर की साधना कर लेता है वह परार्धशत जीवी होता है—ऐसा उन महादेव सदाशिव ने बतलाया ॥ १०२-१०५ ॥

[ योगोपकारि देहसंस्थानविवरणम् ]

**तत्रादौ देहसंस्थानमाकर्णय वरानने ।**
**द्वे सहस्रे तु नाडीनां (तिष्ठन्ति) देहपञ्जरे ॥ १०६ ॥**
**कीकसानि च तिष्ठन्ति द्वात्रिंशदिति निश्चयः ।**
**वायवो दश तिष्ठन्ति पञ्च तेषु महत्तराः ॥ १०७ ॥**
**सूर्य्याचन्द्रमसोः स्थानं देहमध्ये व्यवस्थितम् ।**
**आकाशभूमिसलिलवह्नीनां तत्र संस्थितिः ॥ १०८ ॥**
**वायुस्तु सर्वदेहेषु चलत्येव प्रतिक्षणम् ।**
**यस्मात् प्रयात्यणुर्भूत्वा तस्मात् प्राण इतीर्यते ॥ १०९ ॥**
**अग्निस्थानं यदेतस्मिंस्तज्जाम्बूनदसन्निभम् ।**
**त्रिकोणाकारतो ज्ञेयमितरेषां तु मण्डलम् ॥ ११० ॥**

**देहसंस्थान का विवरण**—हे वरानने! उसमें पहले देहसंस्थान को सुनो । इस देहरूपी पिंजड़े में दो हजार नाड़ियाँ हैं । बत्तीस कीकस (=हड्डियाँ) हैं । वायु दश हैं, उनमें पाँच वायु महत्तर हैं । सूर्य और चन्द्रमा का स्थान देह के मध्य में कहा गया है । उसमें आकाश, भूमि, जल और अग्नि की सत्ता है । सम्पूर्ण देह में वायु प्रतिक्षण चलता रहता है । चूँकि यह अणु होकर प्रयाण करता है इसलिये इसे प्राण

(=प्र+अणु—यहाँ उकार का उच्चारण सौविध्य के कारण लोप होने और दीर्घ सन्धि होने से 'प्राण' शब्द का उद्भव हुआ है) कहते हैं । इस शरीर में जो अग्निस्थान है वह सुवर्ण जैसा है । यह त्रिकोणाकार बतलाया गया है । अन्य (=आकाश, पृथ्वी और जल) का स्थान गोल है ॥ १०६-११० ॥

**त्रिकोणमग्निस्थानं यद् देहमध्यं तदुच्यते ।**
**यद्यत्र तिष्ठति तनौ त्वं तदादौ निबोध मे ॥ १११ ॥**
**अधो मेढ्राद् द्व्यङ्गुलं तत्तावदेव गुदोपरि ।**
**एकाङ्गुलप्रमाणं तद् देहमध्यं प्रकीर्तितम् ॥ ११२ ॥**
**देहमध्यादूर्ध्वमस्ति कन्दं देवि नवाङ्गुलम् ।**
**चतुरङ्गुलमुच्छ्रायमायामं तावदेव च ॥ ११३ ॥**
**आकारेणाण्डसदृशं त्वगस्थिपरिवेष्टितम् ।**
**तत्र सञ्चरति प्राणः स्वे स्थाने परमोपरि ॥ ११४ ॥**
**तस्योपरिष्टाद् विज्ञेयं कुण्डलीस्थानमुत्तमम् ।**
**कृत्स्नो योगविधिस्तत्र सिद्धिश्चापि प्रतिष्ठिता ॥ ११५ ॥**

जो त्रिकोण अग्निस्थान है वह देह का मध्य कहा जाता है । जो इस शरीर में जहाँ रहता है पहले उसको मुझसे जानो । वह देहमध्य एक अङ्गुल परिमाण वाला है । वह मेढ़ (=लिङ्गमूल) से दो अङ्गुल नीचे गुदा के उतना (=दो अङ्गुल) ही ऊपर स्थित है । हे देवि! देहमध्य से ऊपर नव अङ्गुल परिमाण वाला कन्द है । यह चार अङ्गुल ऊँचा और उतना ही चौड़ा है । यह आकार में अण्डा के समान तथा त्वचा और अस्थि से परिवेष्टित है । उसी स्थान में प्राण सञ्चरण करता रहता है। उसके ऊपर उत्तम कुण्डली का स्थान है । उसी में सम्पूर्ण योगविधि और सिद्धि प्रतिष्ठित है ॥ १११-११५ ॥

**कन्दमध्ये स्थितास्तत्र मुख्या नाड्यश्चतुर्दश ।**
**एकैकस्यां द्विचत्वारिंशच्छतं परिनिष्ठिताः ॥ ११६ ॥**
**तिस्रस्तास्वपि मुख्याः स्युः सुषुम्णेडाथ पिङ्गला।**
**पयस्विनीसरस्वत्यौ वारणा च कुहूस्तथा ॥ ११७ ॥**
**गान्धारी शङ्खिनी पूषा हस्तिजिह्वाप्यलम्बुषा ।**
**विश्वोदरायशस्विन्यौ मुख्या ह्येताश्चतुर्दश ॥ ११८ ॥**
**मोक्षमार्गे सुषुम्णा सा ब्रह्मरन्ध्रे प्रतिष्ठिता ।**
**तस्या वामे इडा ज्ञेया चन्द्रसञ्चारसञ्चिता ॥ ११९ ॥**
**दक्षिणे पिङ्गला नाडी रविसञ्चारशोभिता ।**
**सरस्वती कुहूश्चैव सुषुम्णापार्श्वयोः स्थिता ॥ १२० ॥**

उस कन्द के मध्य में चौदह मुख्य नाड़ियाँ स्थित हैं । एक-एक नाड़ी में एक सौ बयालिस (अथवा बयालिस सौ छोटी-छोटी नाड़ियाँ) संयुक्त हैं । इन सभी

(नाड़ियों) में इडा पिङ्गला और सुषुम्णा मुख्यतम हैं । पयस्विनी, सरस्वती, वारणा, कुहू, गान्धारी, शङ्खिनी, पूषा, हस्तिजिह्वा, अलम्बुसा, विश्वोदरा और यशस्विनी (और उपर्युक्त इडा आदि तीन कुल मिलाकर) ये चौदह नाड़ियाँ मुख्य हैं । (इनमें से) सुषुम्णा मोक्षमार्ग में ब्रह्मरन्ध्र में स्थित है । उसके बायें चन्द्र-सञ्चार वाली इडा और दक्षिण में सूर्यसञ्चरण वाली पिङ्गला नाड़ी सुशोभित है । सुषुम्णा के दोनों पार्श्वों में सरस्वती और कुहू स्थित हैं ॥ ११६-१२० ॥

**गान्धारी हस्तिजिह्वा च इडायाः पृष्ठपार्श्वयोः ।**
**पूषा पयस्विनी चैव पिङ्गलापृष्ठपार्श्वयोः ॥ १२१ ॥**
**कुहोश्च हस्तिजिह्वाया मध्ये विश्वोदरा स्थिता ।**
**पयस्विनीकुहोर्मध्ये वारणा च प्रकीर्तिता ॥ १२२ ॥**
**पूषायाश्च सरस्वत्याः स्थिता मध्ये यशस्विनी ।**
**गान्धार्याश्च सरस्वत्याः शङ्खिनी मध्यसंस्थिता ॥ १२३ ॥**
**अलम्बुषा च देवेशि कन्दमध्यादधः स्थिता ।**
**पूर्वभागे सुषुम्णाया मेढ्रान्तं च कुहूः स्थिता ॥ १२४ ॥**
**अधश्चोर्ध्वं च विज्ञेया वारणा सर्वगामिनी ।**
**पयस्विनी च याम्यस्य पादाङ्गष्ठाङ्गुमिष्यते ॥ १२५ ॥**
**पिङ्गला चोर्ध्वगा याम्ये नासान्तं विद्धि पार्वति ।**
**याम्ये पूषा च नेत्रान्तं पिङ्गलायास्तु पृष्ठतः ॥ १२६ ॥**

गान्धारी तथा हस्तिजिह्वा इडा के पीछे और पार्श्व में स्थित हैं । पूषा और पयस्विनी पिङ्गला के पीछे और पार्श्व में स्थित हैं । कुहू और हस्तिजिह्वा के मध्य में विश्वोदरा स्थित है । पयस्विनी और कुहू के मध्य में वारणा (स्थित) कही गयी है । पूषा और सरस्वती के मध्य में यशस्विनी है । गान्धारी और सरस्वती के मध्य में शङ्खिनी स्थित है । हे देवेशि! अलम्बुसा कन्द के मध्य से नीचे वर्त्तमान है । सुषुम्णा के पूर्वभाग में मेढ़ के अन्त तक कुहू स्थित है । वारणा सर्वगामिनी है । वह ऊपर नीचे सब जगह फैली हुई है । पयस्विनी दायें पैर के अङ्गूठे तक गयी है । हे पार्वति! पिङ्गला (सुषुम्णा के) दायीं ओर ऊपर दायें नासारन्ध्र तक गयी है । पूषा नाड़ी पिङ्गला के पीछे दायीं ओर दायें नेत्र पर्यन्त गयी हुई है ॥ १२१-१२६ ॥

**यशस्विनी नाडिका च याम्यकर्णान्तमिष्यते ।**
**सरस्वती तथा चोर्ध्वमाजिह्वायां प्रतिष्ठिता ॥ १२७ ॥**
**आसव्यकर्णाद् देवेशि शङ्खिनी चोर्ध्वगा मता ।**
**गान्धारी सव्यनेत्रान्तमिडायाः पृष्ठतः स्थिता ॥ १२८ ॥**
**हस्तिजिह्वा तथा सव्यं पादाङ्गुष्ठाङ्गमिष्यते ।**
**विश्वोदरा च या नाडी सव्येऽसव्ये गता स्मृता ॥ १२९ ॥**
**अलम्बुषा महाभागा पादमूलादधोगता ।**

यशस्विनी नाडी दाहिने कान तक जाती है । उसी प्रकार सरस्वती ऊपर की ओर जिह्वा में प्रतिष्ठित है । हे देवि! शङ्खिनी ऊपर की ओर बायें कान तक गयी है । गान्धारी इडा के पीछे बायें नेत्र तक स्थित है । इसी प्रकार हस्तिजिह्वा बायें पैर के अङ्गूठे तक स्थित है । जो विश्वोदरा नाडी है वह बायें-दायें सर्वत्र फैली हुई है । महाभागा अलम्बुसा नाडी पादमूल से नीचे गयी है ॥ १२७-१३० ॥

**प्राणोऽपानः समानश्च उदानो व्यान एव च ॥ १३० ॥**
**नागः कूर्मः कृकरश्च देवदत्तो धनञ्जयः ।**
**एते नाडीषु सर्वासु चरन्ति दश वायवः ॥ १३१ ॥**
**एतेषु वायवः पञ्च मुख्याः पूर्वोदिताः प्रिये ।**
**तेषु मुख्यतमः प्राणः कन्दस्याधः प्रतिष्ठितः ॥ १३२ ॥**
**मुखनासिकयोर्मध्ये हृदये नाभिमण्डले ।**
**कन्दमध्येऽपि च प्राणः स्वयमेवावतिष्ठते ॥ १३३ ॥**
**अपानो मेढ्रपाय्वोश्च ऊरुवङ्क्षणजानुषु ।**
**जङ्घोदरे च कट्यां च नाभिमूले च तिष्ठति ॥ १३४ ॥**
**व्यानः श्रोत्राक्षिमध्ये च हृत्कट्यां गुल्फयोरपि।**
**समानः सर्वदेहेषु सर्वव्यापी प्रतिष्ठितः ॥ १३५ ॥**
**भुक्तं सर्वरसं गात्रे व्यापयन् वह्निना सह ।**
**द्विसप्ततिसहस्रेषु नाडीमध्येषु सञ्चरन् ॥ १३६ ॥**
**समानो वायुरेवैकः स्थितो व्याप्य कलेवरम् ।**
**नागादिवायवः पञ्च त्वगस्थ्यादिषु संस्थिताः ॥ १३७ ॥**

प्राण, अपान, समान, उदान, व्यान, नाग, कूर्म, कृकर, देवदत्त और धनञ्जय—ये दश वायु सभी नाड़ियों में सञ्चरण करते रहते हैं । हे प्रिये! इनमें से पाँच मुख्य हैं जिन्हें पहले ही कह दिया गया है । उन (पाँचों) में भी प्राण मुख्यतम है । यह कन्द के नीचे स्थित रहता है । मुख और नासिका के मध्य में, हृदय नाभिमण्डल मे तथा कन्द के मध्य में प्राण स्वयं स्थित रहता है । अपान वायु मेढ्र, पायु, ऊरु, वङ्क्षण (=जङ्घा और कूल्हे का जोड़ वाला भाग) जानु (=जाङ्घ), जङ्घा, पेट, कटि और नाभिमूल में रहता है। व्यान कान, आँख, हृदय, कटि, गुल्फ (=टखना) में रहता है । समान वायु सर्वव्यापी सम्पूर्ण शरीर में प्रतिष्ठित है । अग्नि के साथ वह खाये-पीये समस्त रस को पूरे शरीर में फैलाता है । बहत्तर हजार नाड़ियों के बीच सञ्चरण करता हुआ यह समान वायु अकेला है जो सम्पूर्ण शरीर को व्याप्त कर स्थित है । नाग आदि पाँच वायु, त्वचा, अस्थि आदि में संस्थित हैं ॥ १३०-१३७ ॥

**निःश्वासोच्छ्वासकादिश्च प्राणकर्म इतीष्यते ।**
**अपानवायोः कर्मैतद् विण्मूत्रादिविसर्जनम् ॥ १३८ ॥**
**प्राणोपादानचेष्टादि व्यानकर्मेति कीर्तितम् ।**

**उदानकर्म तत् प्रोक्तं देहस्योन्नमनादिकम् ॥ १३९ ॥**
**शोषणादि समानस्य शरीरे कर्म कीर्त्यते ।**
**क्षेपणादिगुणो यश्च नागकर्मेति कीर्तितम् ॥ १४० ॥**
**निमीलनादि कूर्मस्य क्षुत् तृष्णा कृकरस्य च।**
**देवदत्तस्य देवेशि निद्रा तन्द्रेति कीर्तितम् ॥ १४१ ॥**
**धनञ्जयस्य शोषादि सर्वकर्म प्रकीर्तितम् ।**

निःश्वास-उच्छ्‌वास आदि प्राण वायु का कर्म माना जाता है । मल मूत्र आदि का त्याग अपान वायु का कर्म है । प्राण, उपादान, चेष्टा आदि व्यान वायु का कर्म कहा गया है । देह का ऊपर उठाना नीचे झुकाना आदि उदान वायु का कर्म है । शरीर में शोषण आदि समान वायु का कर्म कहा जाता है । जो फेंकना आदि गुण हैं वह नाग का कर्म कहा गया है । पलक गिराना आदि कूर्म का, क्षुत् तृष्णा आदि कृकर का कर्म है । हे देवेशि! निद्रा तन्द्रा आदि देवदत्त का कर्म कहा गया है । शोषण आदि सब कर्म धनञ्जय का कहा गया है ॥ १३८-१४२ ॥

**ज्ञात्वैवं नाडिकास्थानं वायुयानं च यत्नतः॥ १४२ ॥**
**नाडीनां शोधनं कुर्याद् यथाविधि पुरःसरः ।**
**ततस्तपोवनं गत्वा फलमूलोदकान्वितम् ॥ १४३ ॥**
**तत्र रम्ये शुचौ देशे नद्यां देवालयेऽपि वा ।**
**सुशोभनं स्थलं कृत्वा सर्वरक्षासमन्वितम् ॥ १४४ ॥**
**त्रिकालस्नानसंयुक्तः शुचिर्भूत्वा समाहितः ।**
**मन्त्रैर्न्यासैर्न्यस्ततनुः सितभस्मधरः सदा ॥ १४५ ॥**
**समस्थलोपरि कुशान् समास्तीर्याथ वाऽजिनम् '**
**विनायकं सुसम्पूज्य कुशपुष्पोदकादिभिः ॥ १४६ ॥**
**गुरून् देवीं नमस्कृत्य तत्र चावध्य चासनम् ।**
**उदङ्मुखः प्राङ्मुखो वा पवित्रासनसङ्गतः ॥ १४७ ॥**
**समग्रीवशिरःकायः संवृतास्यः सुनिश्चलः ।**
**सुषुम्णा वर्त्मना वायुं कुण्डलिन्यां धमेत् क्षणम् ॥ १४८ ॥**

**नाड़ी-शोधन**—इस प्रकार नाड़ीसंस्थान और वायु का गमनागमन जानकर साधक यथाविधि नाड़ियों का शोधन करे । फल-फूल जल से युक्त तपोवन में जाकर रमणीय पवित्र स्थान में नदी या देवमन्दिर में समस्त रक्षा से युक्त सुन्दर स्थान बनाकर (साधक) त्रिकाल स्नान करे । पवित्र होकर चित्त को शान्त कर मन्त्र और न्यास से शरीर को युक्त करे । सदा श्वेत भस्म धारण करे । समतल भूमि पर कुश या चर्म का आसन बिछाये । कुश पुष्प जल आदि से गणेश की पूजा कर गुरु और देवी को प्रणाम करे । पुनः (पद्म अर्धपद्म स्वस्तिक आदि में से कोई एक) आसन लगाकर उत्तरमुख या पूर्वमुख हो आसन पर बैठ जाय । शिर गर्दन शरीर सीधा

रखे। मुख बन्द रखे। निश्चल होकर सुषुम्णा के रास्ते वायु को एक क्षण के लिये कुण्डलिनी में ले जाय ॥ १४२-१४८ ॥

**गच्छत्यभिव्यक्तिमिदं नादब्रह्म सनातनम् ।**
**तन्नादं पिङ्गलामार्गे समानीय हृदब्जके ॥ १४९ ॥**
**इडया पूरयेत् तावद् यावद् वर्णात्मकं भवेत्।**
**भूमेरुपरि धातारं रत्या बिन्दुसमन्वितम् ॥ १५० ॥**
**बिम्बमध्यस्थमोंकारसम्पुटाकृतमुन्नतम् ।**
**एकीकृत्य तु तत् सर्वमाकर्षेद् हस्तिजिह्वया ॥ १५१ ॥**
**विश्वोदरालम्बुषाभ्यां ब्रह्मरन्ध्रे निवेशयेत्।**

(उस समय) यह सनातन (अर्थात् नित्य) नादब्रह्म अभिव्यक्त होता है। उस नाद को पिङ्गलामार्ग से हृदयकमल में ले आकर इडा से तब तक पूरित करते रहना चाहिये जब तक कि वह वर्ण का आकार नहीं ले लेता। भूमि (=ल) के बाद धाता (=क) को रति[1] (=औ) और बिन्दु से युक्त करे। फिर बिम्ब (=ह्रींयंड्री) के मध्य में स्थित ॐकार से सम्पुटित करे। (इस प्रकार ॐ लकौं ड्रीं ओऽम् बना?) इन सब वर्णों को एक बार हस्तिजिह्वा नाडी से आकृष्ट करे और विश्वोदरा तथा अलम्बुसा नाड़ियों के द्वारा ब्रह्मरन्ध्र में प्रविष्ट कराये ॥ १४९-१५२ ॥

[ देव्या निराकारस्वरूपध्यानम् ]

**निवेश्य तां तत्र देवीं निराकारां विचिन्तयेत् ॥ १५२ ॥**
**एकां ज्योतिर्मयीं शुक्लां सर्वगां व्योमरूपिणीम् ।**
**अत्यन्तनिर्मलां शुद्धामादिमध्यान्तवर्जिताम् ॥ १५३ ॥**
**अतिसूक्ष्मामनाकाशामस्पृश्यां तामचाक्षुषीम् ।**
**कूटस्थामप्यदृश्यां तां सच्चिदानन्दविग्रहाम् ॥ १५४ ॥**
**अगन्धामरसां स्वच्छामप्रेयामनूपमाम् ।**
**आनन्दामजरां नित्यां सदसत्सर्वकारिणीम् ॥ १५५ ॥**
**सर्वाधारां जगद्रूपाममृत्युं चाव्ययामजाम् ।**
**अनवस्थामप्रतर्क्यां बहिस्थां सर्वतोमुखीम् ॥ १५६ ॥**
**सर्वदृक् सर्वतः पादां सर्वस्पृक् सर्वतः शिराम्।**
**निरञ्जनीं निर्विकारां शुद्धचैतन्यरूपिणीम् ॥ १५७ ॥**
**नादोपाहतबीजेन ध्यायंस्तत्र यजेदिमाम् ।**
**कुलाकुलसमुद्भूताममृतानन्दसञ्चयाम् ॥ १५८ ॥**
**सूर्यकोटिसमां शुभ्रां नादबीजतया स्थिताम् ।**
**षट्चक्रभेदेन यजेद्योगे कुण्डलिनीहृदोः ॥ १५९ ॥**

---

१. भूमि धाता रति आदि के बीजभूत अन्य वर्ण भी हैं। उनको यथोचित रूप में क्रमबद्ध किया जा सकता है।

**देवी का निराकार ध्यान**—उस (=ब्रह्मरन्ध्र) में प्रवेश कराकर वहाँ उसका निराकार ध्यान करे कि वह एक, ज्योतिर्मयी, शुक्ला, सर्वगा, व्योमरूपिणी, अत्यन्त निर्मल, शुद्ध, आदिमध्यान्तहीन, अतिसूक्ष्म, अनाकाश (=रिक्ततारहित), अस्पृश्य, अचाक्षुषी, कूटस्थ होती हुई भी अदृश्य, सच्चिदानन्दरूपिणी, गन्ध रस से रहित, स्वच्छ, अप्रमेय, अनौपम्य, आनन्दरूप, अजर, नित्य, सत् असत् सब की रचना करने वाली, सबका आधार, जगद् रूप, मृत्यु रहित, अव्यय, जन्मरहित, अवस्था-रहित, अप्रतर्क्य, अग्नि में स्थित, सर्वव्यापिनी, सर्वदृक्, सर्वतः पैर वाली, सर्वस्पर्श वाली, सर्वशिरवाली, निर्मल, निर्विकार, शुद्धचैतन्य रूप है । नाद से प्राप्त बीजमन्त्र के द्वारा ध्यान करता हुआ साधक वहीं (=ब्रह्मरन्ध्र में ही) उनकी पूजा करे । कुल (=शक्ति) और अकुल (=शिव) से उत्पन्न अमृत आनन्द की समूह रूप, करोड़ों सूर्य के समान (तेजोमयी), शुभ, नादबीज के रूप में स्थित देवी की षट्चक्रभेदन के द्वारा कुण्डलिनी और हृदय के सन्धिस्थल में पूजा करे ॥ १५२-१५९ ॥

**आधारपद्ममध्येऽन्तर्द्विपत्रे त्रिदलेऽपि च ।**
**स्वाधिष्ठाने षोडशारे पीठे च मणिपूरके ॥ १६० ॥**
**द्वादशे च विशुद्धेऽपि तत्राप्यष्टदले तथा ।**
**हृदये दशपत्रे तु द्वादशार्द्धे चतुर्दले ॥ १६१ ॥**
**कण्ठे भाले यजेद् देवीं जिह्वया नादमुच्चरन् ।**
**गच्छन्तीं ब्रह्ममार्गेण सूक्ष्मषट्चक्रभेदिनीम् ॥ १६२ ॥**
**प्रच्योतदमृतं दिव्यं क्षीरधारोपमं द्रवम् ।**
**पीत्वा सदाशिवेनैव सामरस्यपदं गताम् ॥ १६३ ॥**
**यजेद् ध्यायेन्नमस्कुर्याद् यद् यदिच्छेदनन्यधीः ।**

**षट्चक्र-भेद के द्वारा कुण्डलिनी का जागरण**—दो दलों वाले मूलाधार कमल, तीन दलों वाले स्वाधिष्ठान, षोडशदल वाले मणिपुर, द्वादशान्त, अष्टदल विशुद्ध, दशदलहृदय, षड्दल और चतुर्दल वाले कण्ठ और भाल में देवी की पूजा जिह्वा से नाद का उच्चारण करते हुए करना चाहिये । सूक्ष्म षट्चक्र का भेदन करने वाली वह देवी ब्रह्ममार्ग से जाने वाली अमृत का क्षरण करती हुई, क्षीरधारा के समान दिव्य द्रव का पान कर सदाशिव के साथ समरसता को प्राप्त हुई है । साधक एकचित्त होकर जिस-जिस की कामना करता हो (उस-उस उद्देश्य की पूर्त्ति के लिये देवी का) यजन, ध्यान और नमन करे ॥ १६०-१६४ ॥

[ एतदीयफलश्रुतिः ]

**सामरस्यपदं प्राप्तां यः क्षणं चिन्तयेत् सुधीः ॥ १६४ ॥**
**राजसूयाश्वमेधानां तेनेष्टा यज्ञकोटयः ।**
**काष्ठां कलां क्षणं व्याप्य यः स्थितस्तत्र साधकः ॥ १६५ ॥**
**वाजपेयः पुण्डरीको विश्वजित् तेन वै कृतः ।**

**ध्यान का फल**—जो विद्वान् (देवी के साथ) सामरस्यपद को प्राप्त इसका एक क्षण के लिये भी ध्यान करता है (समझ लेना चाहिये कि) उसने करोड़ों राजसूय और अश्वमेध यज्ञ कर लिये हैं। जो साधक एक काष्ठा कला या क्षण तक उस (ध्यानावस्था) में स्थित रहता है मानो उसने वाजपेय पुण्डरीक और विश्वजित् याग कर लिया ॥ १६४-१६६ ॥

[ कुण्डलिन्याः स्वस्थाननिवेशः ]

**पुनस्तेनैव मार्गेण नयेत् कुण्डलिनीमधः ॥ १६६ ॥**
**पश्यन्त्यापरया तत्र वैखर्या वर्त्मनापि च ।**
**संयोज्य लम्बिकामार्गात्तालुमूलादधो नयेत् ॥ १६७ ॥**
**जिह्वयाकृष्य तां विद्यां हृदब्जे विनिवेशयेत् ।**
**आमूलाद् ब्रह्मरन्ध्रान्तमेकीभूतं विचिन्तयेत् ॥ १६८ ॥**
**हृदब्जादपि निष्काश्य तथा नाडीचयादपि ।**
**प्रदीपकलिकाकारां कन्द एव निवेशयेत् ॥ १६९ ॥**

**कुण्डलिनी का स्वस्थान में निवेश**—(साधक जिस मार्ग से कुण्डलिनी को ब्रह्मरन्ध्र तक ले गया था) पुनः उसी मार्ग से कुण्डलिनी को नीचे ले जाय। इस क्रम में वह पश्यन्ती-परा-बैखरी के मार्ग से भी उसे संयुक्त कर लम्बिकामार्ग से तालुमूल से नीचे ले आये। जिह्वा से आकर्षण कर उस विद्या का हृदयकमल में प्रवेश कराये। फिर मूलाधार से लेकर ब्रह्मरन्ध्र तक एकीभूत रूप में ध्यान करे। तत्पश्चात् प्रदीप की कलिकासदृश उसको हृदय और नाड़ीसमूह से निकाल कर कन्द में प्रविष्ट करा दे ॥ १६६-१६९ ॥

[ योगाभ्यासस्यास्य माहात्म्याभिधानम् ]

**एतदभ्यासयोगेन यत्फलं तच्छृणुष्व मे ।**
**न क्षुत् पिपासा न जरा न मृत्युर्नामयादि च ॥ १७० ॥**
**पुरीषमूत्रे नैव स्यान्निद्रा तन्द्रा भवेन्न च ।**
**यावान् दोषः शरीरस्य तेषु कोऽपि न जायते ॥ १७१ ॥**
**अतीतानागतं वेत्ति वाक्सिद्धिरपि जायते ।**
**सरस्वती तस्य मुखे स्वयमेत्य वसेत् सदा ॥ १७२ ॥**
**परार्द्धजीवी च भवेत् कामरूपी भवत्यपि ।**
**देवानाकर्षयेच्चापि खेचरो जायते तथा ॥ १७३ ॥**
**वर्णितुं शक्यते नास्य महिमा वर्षकोटिभिः ।**
**साक्षात् स रुद्रो भवति पाञ्चभौतिकदेहभृत् ॥ १७४ ॥**
**प्राप्नोति मोक्षमेवासौ षण्मासाभ्यन्तरे नरः ।**

**इस योगाभ्यास का माहात्म्य**—इस अभ्यासरूपी योग से जो फल मिलता है वह मुझसे सुनो। इससे (योगी को) भूख-प्यास जरा मृत्यु रोग नहीं होते। मल-मूत्र

का त्याग और निद्रा-तन्द्रा भी नहीं होती। शरीर के जितने दोष हैं उनमें से कोई भी नहीं होता। (वह साधक) अतीत और अनागत को जान लेता है। उसको वाक्सिद्धि प्राप्त हो जाती है। उसके मुख में सदा सरस्वती निवास करती है। वह कामरूपी और परार्द्धजीवी होता है। देवताओं को आकृष्ट करता और आकाशचारी हो जाता है। उसकी महिमा का वर्णन करोड़ों वर्ष तक नहीं किया जा सकता। पाञ्चभौतिक शरीर धारण किया हुआ भी वह साक्षात् रुद्र हो जाता है। यह मनुष्य छह महीने के भीतर मोक्ष प्राप्त कर लेता है ॥ १७०-१७५ ॥

[ मोक्षोत्कर्षस्य सिद्धीनां चापकर्षस्याभिधानम् ]

**मोक्षैकसाधकस्यास्य विधेरन्यास्तु सिद्धयः ॥ १७५ ॥**
**केवलं विघ्नकारिण्य इत्येतद् विद्धि पार्वति ।**
**मूढास्तु केवलं सिद्धीरभिकाङ्क्षन्ति नित्यशः ॥ १७६ ॥**
**मोक्षार्थमेव यतते धीरः संसारसागरे ।**
**नाड्यश्चतुर्दश प्रोक्ताः पूर्वं मुख्यतमा हि याः ॥ १७७ ॥**
**तासु वायुनिरोधेन भूयस्यः स्युर्हि सिद्धयः ।**
**तेषां प्रकारा नाख्याता विस्तरत्वान् मया प्रिये ॥ १७८ ॥**
**केवलं सिद्धिहेतुत्वं तेषां नात्रोपयोगिता ।**
**विधिमेनं विधातुं यो न समर्थो विमूढधीः ॥ १७९ ॥**
**स चिन्तयेत्तु साकारां तां देवीं हृदयाम्बुजे ।**

**मोक्ष उत्कृष्ट और सिद्धियाँ अपकृष्ट हैं**—मोक्ष के साधक इस (योगी) के लिये सिद्धियाँ विधि से भिन्न प्रकार की होती हैं। हे पार्वति! यह समझ लो कि वे केवल विघ्नकारिणी ही होती हैं। मूर्ख लोग प्रतिदिन केवल सिद्धियों को चाहते हैं किन्तु धीरपुरुष इस संसारसागर में मोक्ष के लिये ही प्रयास करते हैं। पहले जो मुख्य चौदह नाड़ियाँ बतलायी गयीं उनमें प्राणवायु को रोकने से सिद्धियाँ प्राप्त होती हैं। हे प्रिये! विस्तार के भय से मैंने उन (=सिद्धियों) के भेद नहीं बताये। यहाँ उन सिद्धियों की उपयोगिता केवल (सांसारिक वैभव की) हेतु बनने में नहीं है। (वरन् उनकी सहायता से देवी के निराकार चिन्तन का मार्ग प्रशस्त करना चाहिये)। जो मूढ इस विधि का अनुष्ठान करने में समर्थ नहीं है वह अपने हृदयकमल में साकार उसका चिन्तन करे ॥ १७५-१८० ॥

**ध्यानं सम्प्रति वक्ष्यामि शृणु देवि समाहिता ॥ १८० ॥**
**ध्यानमेव हि जन्तूनां कारणं सौख्यमोक्षयोः ।**

[ देव्याः साकाररूपध्यानम् ]

**हृत्पद्माष्टदलोपेते कन्दमूलसमुत्थिते ॥ १८१ ॥**
**द्वादशाङ्गुलनालेऽस्मिंश्चतुरङ्गुलमुच्छ्रिते ।**

प्राणायामैर्विकसिते केशरान्वितकर्णिके ॥ १८२ ॥
हृत्सरोरुहमध्येऽस्मिन् प्रकृत्यात्मिककर्णिके ।
अष्टैश्वर्य्यदलोपेते विद्याकेशरसंयुते ॥ १८३ ॥
ज्ञाननाले महाकन्दे प्राणायामप्रबोधिते ।
विश्वार्च्चिषं महावह्निं वमन्तीं सर्वतोमुखीम् ॥ १८४ ॥
भयङ्करीं जगद्योनिं ललज्जिह्वाकरालिनीम् ।
भासयन्तीं स्वकं देहमापादतलमस्तकम् ॥ १८५ ॥
प्रेतभूतपिशाचादिडाकिनीयोगिनीगणैः ।
भैरवाद्यैः परिवृतां श्मशानतलवासिनीम् ॥ १८६ ॥
ज्वलत्करालज्वलनचितामध्यकृतस्थितिम् ।
शवोपरि समारूढां विमुक्तचिकुरोच्चयाम् ॥ १८७ ॥
निष्क्रान्तरसनाकम्पप्रकम्पितजगत्त्रयाम् ।
दन्तमण्डलनिर्गच्छच्चारुचन्द्रिकया तया ॥ १८८ ॥
द्योतयन्तीं जगत् सर्वं चन्द्रमण्डलवत् सदा ।
तुङ्गपीवरवक्षोजभरनम्रकलेवराम् ॥ १८९ ॥
प्रत्यालीढपदां देवीमट्टहासभयप्रदाम् ।
पार्श्वस्थिताभ्यां फेरुभ्यामतीव विकरालिनीम् ॥ १९० ॥
नृमुण्डमालासन्दोहकृतमालावगुण्ठिनीम् ।
सद्यःकृत्तनृमुण्डाभ्यां कुण्डलद्वयशोभिनीम् ॥ १९१ ॥
कठोरपीवरानीलदोः षोडशविराजिताम् ।
नरान्त्रविहिताबद्धयोगपट्टपरिच्छदाम् ॥ १९२ ॥
दिगम्बरां खर्वतनुं हसन्तीं कामलालसाम् ।
संवर्त्तकालज्वलनदुर्निरीक्ष्यतनुप्रभाम् ॥ १९३ ॥
कल्पान्तघोषमार्तण्डकोटिस्तम्भनकारिणीम् ।
निर्वातदीपवत्तस्मिन् दीपितां हव्यवाहने ॥ १९४ ॥
ततस्तस्य शिखामध्ये संस्थितां जगदम्बिकाम् ।
ध्यात्वा कामकलाकालीं सोऽहमस्मीति भावयेत् ॥ १९५ ॥
तद्रूपतां समासाद्य मुक्तिं तेनैव गच्छति ।

**देवी के साकार रूप का ध्यान**—हे देवि! अब मैं (उसका) ध्यान बतलाऊँगा। सावधान होकर सुनो। ध्यान ही जीवों के सुख और मोक्ष का कारण है। कन्दरूपी मूल से उठा हुआ हृदयकमल आठ दलों वाला है। उसका नाल बारह अङ्गुल का है (अर्थात् मूलाधार से हृदय तक की दूरी बारह अङ्गुल है)। यह कमल चार अङ्गुल ऊँचा है। इसकी कर्णिका में केशर है और यह प्राणायाम के द्वारा विकसित है। इस हृदयकमल के बीच प्रकृति कर्णिका के रूप में है। अष्ट सिद्धियाँ (उस कमल के) आठ दल हैं। विद्या केशर है। ज्ञान नाल है। ऐसा महाकन्द जब

प्राणायाम से प्रबोधित होता है तो उसमें (कामकलाकाली का ध्यान करना चाहिये । वह काली) विश्वज्वाला वाली महा अग्नि का वमन कर रही है । परिपूर्ण, भयङ्कर, संसार का कारण है । लपलपाती हुई जिह्वा के कारण विकराल है । पैर से लेकर मस्तक तक अपने शरीर को भासित कर रही है । प्रेत, भूत, पिशाच आदि डाकिनी एवं योगिनीगणों तथा भैरव आदि से परिवृत है । जलती हुई विकराल अग्नि की चिता के मध्य में स्थित, शव के ऊपर आरूढ, खुले बालों वाली, (मुँह के अन्दर से बाहर) निकली हुई जीभ के कम्प से तीनों लोकों को कँपा देने वाली, दाँतों से निकलने वाली चारुचन्द्रिका से समस्त संसार को चन्द्रमण्डल के समान सदा प्रकाशित करने वाली है । उनका शरीर ऊँचे-चौड़े स्तनों के भार से नम्र है । पैर आगे की ओर बढ़ा है । अट्टहास से भय देने वाली है । अगल-बगल दो शृगालिने स्थित हैं जिनसे वह अतीव विकराल हैं । नरमुण्डसमूह की माला पहनी है । तत्काल काटे गये दो नरमुण्डों के कुण्डल से शोभायमान है । कठोर पुष्ठ नीली सोलह भुजाओं (की करधनी से) शोभायमान हैं । मनुष्य की आँतों से योगपट्ट बाँधी हैं । दिगम्बर, छोटी देहवाली, हँसती हुई, कामासक्त, प्रलय काल की अग्नि की भाँति दुर्निरीक्ष्य शरीर प्रभावाली है । कल्प के अन्त में उत्पन्न हुए शब्द से करोड़ों सूर्यों को स्तम्भित करने वाली तथा उस अग्नि में निर्वातदीप के समान दीपित हैं । उस अग्निशिखा के मध्य स्थित जगदम्बा कामकलाकाली का ध्यान कर 'सोऽहमस्मि' (मैं वहीं कामकला काली हूँ) ऐसी भावना करनी चाहिये । साधक तद्रूपता को प्राप्त कर उसी से मुक्त हो जाता है ॥ १८०-१९६ ॥

[ ध्यानविधिना विविधसिद्धिप्राप्त्युपायस्य वर्णनम् ]

**अथवा सिद्धिलिप्सा चेद् भवत्येव न संशयः॥ १९६ ॥**
**ध्यायन् वै पञ्चघटिकाः सर्वरोगैः प्रमुच्यते ।**
**घटिकादशकध्यानात् पृथिव्या जयमाप्नुयात् ॥ १९७ ॥**
**नाडीपञ्चदशध्यानाद् वह्निनासौ न दह्यते ।**
**घटिकाविंशतिध्यानाद् वायुवद् व्योमगो भवेत्॥ १९८ ॥**
**मूत्रं पुरीषं जयति पञ्चविंशतिनाडिभिः ।**
**सम्पूर्णदिवसेनैव सर्वसिद्धिः प्रजायते ॥ १९९ ॥**
**अहोरात्रेण देवेशि जीवन्मुक्तो भवेन्नरः ।**
**इति योगविधिः सर्वः कथितस्ते मया क्रमात्॥ २०० ॥**

**ध्यान से विविध सिद्धियाँ**—अथवा यदि (साधक को) सिद्धिलाभ की इच्छा हो तो निःसन्देह वह पाँच घड़ी (=२ घण्टा) ध्यान कर समस्त रोगों से मुक्त हो जाता है । दश घड़ी ध्यान करने से पृथिवी पर विजय प्राप्त करता है । पन्द्रह घड़ी ध्यान करने से वह अग्नि से नहीं जलता । बीस घटिका तक ध्यान करने से वायु के समान व्योमचारी हो जाता है । पच्चीस नाडी तक ध्यान से मल-मूत्र पर नियन्त्रण

प्राप्त करता है । पूरा एक दिन ध्यान करने से सर्वसिद्धि मिलती है । हे देवेशि! एक दिन-रात ध्यान करने से मनुष्य जीवन्मुक्त हो जाता है । इस प्रकार मैंने तुमको क्रम से योगविधि बतलायी ॥ १९६-२०० ॥

[ पूजायाः कोटित्रयनिर्देशः ]

**उत्तमो मध्यमः पक्षस्तथैवाधम एव च ।**
**उत्तमो योगमार्गेण मध्यमो ध्यानसंश्रयात् ॥ २०१ ॥**
**पूजाध्यानादिभिर्ज्ञेयोऽप्यधमाराधनक्रमः ।**
**कृते युगे वा त्रेतायां योग एवोत्तमो विधिः ॥ २०२ ॥**
**ध्यानमेव द्वापरादौ कलौ न्यासार्चनं खलु ।**
**अल्पायुषोऽल्पमेधाश्च स्वल्पप्रज्ञा महालसाः ॥ २०३ ॥**
**दुराचारा नास्तिकाश्च कामलोभपरायणाः ।**
**ईदृशाश्च नराः सर्वे भविष्यन्ति कलौ युगे ॥ २०४ ॥**
**नायं योगो महेशानि भविष्यति गुरुं विना ।**
**केवलं न्यासपूजादि करिष्यन्ति फलार्थिनः ॥ २०५ ॥**

**योगविधि की श्रेणियाँ**—(यह योगविधि) उत्तम मध्यम और अधम (तीन प्रकार की) होती है । उत्तमविधि योगमार्ग की, मध्यम ध्यान का आश्रयण और पूजा ध्यान आदि अधम आराधन का क्रम है । सत्ययुग अथवा त्रेता में योग ही उत्तमविधि थी । द्वापर में ध्यान और कलियुग में न्यास, पूजा (प्रशस्य मानी गयी) है । कलियुग में मनुष्य अल्पायु, मन्दबुद्धि, स्वल्पप्रज्ञा वाले, महाआलसी, दुराचारी, नास्तिक, कामी और लोभी होंगे । हे महेशानि! यह योग गुरु के बिना नहीं किया जा सकता । फल अर्थात् सिद्धि चाहने वाले केवल न्यास.पूजा आदि करेंगे ॥ २०१-२०५ ॥

[ विश्वासस्य फलदायकत्वाभिधानम् ]

**तथाप्यास्थावतां देवि फलं किञ्चित् प्रयच्छति ।**
**एवं ज्ञात्वा तु यः कुर्याद् ध्यानन्यासार्चनानि हि ॥ २०६ ॥**
**अवश्यं फलभाग् भूयान्नात्र कार्या विचारणा ।**
**ध्यानेऽर्चने जपे न्यासे होमे च बलिकर्मणि ॥ २०७ ॥**
**भावना यादृशी यस्य सिद्धिः स्यादेव तादृशी ।**
**इति ते कथितो देवि प्रपञ्चः कामकालिकः ॥ २०८ ॥**
**वद सत्यं पुनर्मत्तः किमन्यच्छ्रोतुमिच्छसि ॥ २०९ ॥**

**॥ इत्यादिनाथविरचितायां पञ्चशतसाहस्र्यां महाकालसंहितायां सामान्यविशेषप्रयोगो नाम सप्तमः पटलः ॥ ७ ॥**

...✿...

**विश्वास फलदायक है**—(यद्यपि कलियुग में योगी और ध्यानी नहीं होते) तथापि हे देवि! आस्था वालें को (यह विधि) कुछ फल देती ही है । ऐसा जानकर जो व्यक्ति ध्यान न्यास अर्चन करता है वह अवश्य फल का भागी होता है । इसमें सन्देह नहीं करना चाहिये । ध्यान पूजा जप न्यास होम और बलि-कार्य के विषय में जिसकी जैसी भावना होती है उसको वैसी सिद्धि मिलती है । हे देवि ! यह मैंने तुमको कामकलाकाली का विस्तार बतलाया । सच बताओ कि तुम मुझसे और क्या सुनना चाहती हो ॥ २०६-२०९ ॥

**॥ इस प्रकार श्रीमद् आदिनाथविरचित पचास हजार श्लोकों वाली महाकाल-संहिता के कामकलाकाली खण्ड के सामान्यविशेषप्रयोग नामक सप्तम पटल की आचार्य राधेश्याम चतुर्वेदी कृत 'ज्ञानवती' हिन्दी व्याख्या सम्पूर्ण हुई ॥ ७ ॥**

# षष्ठः प्रकाशः

षट्चक्रनिरूपणम्

[ षट्चक्रनिरूपणप्रतिज्ञा ]

अथ तन्त्रानुसारेण षट्चक्रादिक्रमोद्गतः ।
उच्यते परमानन्दनिर्वाहप्रथमाङ्कुरः[1] ॥ १ ॥

[ इडा-पिङ्गला-सुषुम्णा-वज्रानाडीसंस्थितिः ]

मेरोर्बाह्यप्रदेशे शशिमिहिरशिरे सव्यदक्षे निषण्णे
मध्ये नाडी सुषुम्णा त्रितयगुणमयी चन्द्रसूर्य्याग्निरूपा ।
धुस्तूरस्मेरपुष्पग्रथिततमवपुः कन्दमध्याच्छिरःस्था
वज्राख्या मेढ्रदेशाच्छिरसि परिगता[2]
मध्यमेऽस्या ज्वलन्ती ॥ २ ॥

---

१। पूर्व्वप्रकाशे ततः षट्चक्रविज्ञानं शिष्याय प्रतिबोधयेदित्युक्तम्, तस्यैव षट्चक्रविज्ञानस्य निरूपणाय प्रकाशमिममारभते--अथेत्यादिना। अथेति दीक्षानिरूपणानन्तरम्। षट्चक्रादेर्यः क्रमः मूलाधारस्वाधिष्ठानादिरूपः। आदिशब्देन नाड्यादीनां परिग्रहः। तेन उद्गत आविर्भूतः परमानन्दस्य 'आनन्दं ब्रह्मणो रूपमि'ति श्रुतेर्निरञ्जनस्वरूपस्य ब्रह्मणो यो निर्वाहः अवबोधस्तस्य प्रथमाङ्कुर आदिबीजभूतः षट्चक्रविमर्ष इत्यर्थः, उच्यते मयेति शेषः। ननु मानुषवचने का श्रद्धा इत्यत आह---तन्त्रानुसारेणेति। स्वतःप्रमाणभूतशिवोक्ततन्त्रानुसारेणेत्यर्थः। एवञ्च भगवता शिवेन नानातन्त्रेषु यत् षट्चक्रविज्ञानं प्रतिपादितम्, तदेव साधकानां सुखबोधनार्थमेकत्र समाहृत्य स्वरचितपद्यैरुपस्थाप्यत इति तात्पर्य्यम्।

२। मेरोरिति। मेरोर्मेरुदण्डस्य बाह्यप्रदेशे बहिर्भागे सव्यदक्षे वामदक्षिणभागयोः शशिमिहिरशिरे चन्द्रसूर्य्यनाड्यौ इडा-पिङ्गलाख्ये निषण्णे स्थिते। मेरुदण्डस्य वामभागे इडा चन्द्ररूपा, दक्षभागे पिङ्गला सूर्य्यरूपेत्यर्थः।

तदुक्तं तन्त्रसारधृतगौतमीये—

---

1. '-रम्' C. 2. '-णता' B.

[ चित्रिणीब्रह्मनाड्योः संस्थितिः ]

**तन्मध्ये चित्रिणी सा प्रणवविलसिता योगिनां योगगम्या**
**लूतातन्तूपमेया सकलसरसिजान् मेरुमध्यान्तरस्थान् ।**

---

इडा वामे स्थिता नाडी शुक्ला तु चन्द्ररूपिणी ।
शक्तिरूपा च सा नाडी साक्षादमृतविग्रहा ।
दक्षिणे पिङ्गलाख्या तु पुंरूपा सूर्य्यविग्रहा ॥ इति ।

मध्य इति मेरुदण्डस्य मध्यभागे त्रितयगुणमयी वज्राचित्रिणीभ्यां मिलिता सती सुषुम्णा त्रितयगुणमयी सूत्रत्रयात्मिका भवतीत्यर्थः । तदुक्तं भूतशुद्धितन्त्रे—

तदन्तर्द्व्यङ्गुलोर्द्ध्वं तु वज्राख्या चित्रिणी तथा ।
अतः सुषुम्णा त्रिगुणा ललन्ती ललना यथा ॥

चन्द्रेति । तथाच सत्वगुणात्मिका चित्रिणी चन्द्ररूपा, रजोगुणात्मिका वज्रा सूर्य्यरूपा, तमोगुणात्मिका सुषुम्णा चाग्निरूपेत्यर्थः ।

सत्त्वादित्रिगुणाधारा चन्द्रसूर्य्याग्निरूपिणी ।
मेरुमध्ये स्थिता या तु मूलादाब्रह्मविग्रहा ।
सर्व्वतेजोमयी सा तु सुषुम्णा बहुरूपिणी ॥ इति ।

इति तन्त्रसारधृतगौतमीयवचनेऽपि सर्व्वतेजोमयीति पदेन चन्द्रसूर्य्याग्निरूपत्वं बहुरूपिणीति पदेन च गुणत्रयात्मकं सुषुम्णायाः प्रतिपादितम् ।

कन्देति । कन्दलक्षणमाह भूतशुद्धितन्त्रे—

गुदात्तु द्व्यङ्गुलादूर्द्ध्वं मेढ्रात्तु द्व्यङ्गुलादधः ।
चतुरङ्गुलविस्तारं कन्दमूलं खगाण्डवत् ॥

इति । एवञ्चोक्तलक्षणकन्दमध्याच्छिरःस्था शिरःपद्मपर्य्यन्तस्थिता । तस्या आकारमाह—धुस्तूरेति । धुस्तूरस्य यत् स्मेरं विकसितं पुष्पं तद्वत् प्रथिततमं वपुर्यस्याः तथाभूता विकसितधुस्तूरपुष्पाकारा सुषुम्णेत्यर्थः ।

वज्रेति । अस्याः सुषुम्णाया मध्यदेशे ज्वलन्ती दीप्तिं कुर्व्वती मेढदेशात् प्रागुक्तकन्दद्व्यङ्गुलोर्द्ध्वालिङ्गदेशात् शिरसि परिगता शिरःपर्य्यन्तगामिनीत्यर्थः । वज्राख्या नाडी वर्त्तेत इत्यर्थ । तदुक्तं शाक्तानन्दतरङ्गिण्याम्—

तन्मध्ये वज्रिणी नाडी द्व्यङ्गुलोर्द्ध्वा ततः प्रिये । इति ।

भित्त्वा देदीप्यते तद्ग्रथनरचनया शुद्धबोधप्रबोधा
[1]तस्यान्तर्ब्रह्मनाडी हरमुखकुहरादादिदेवान्तसंस्था ॥ ३ ॥

[ ब्रह्मनाडीस्वरूपम् ]

विद्युन्मालाविलासा मुनिमनसि लसत्तन्तुरूपा सुसूक्ष्मा
शुद्धज्ञानप्रबोधा सकल[2]गुणमयी शुद्धबोधस्वभावा ।
ब्रह्मद्वारं तदास्ये प्रविलसति सुधा[3]साररम्यप्रदेशं
ग्रन्थिस्थानं तदेतद् वदनमिति
सुषुम्णाख्यनाड्या लपन्ति ॥ ४ ॥

---

३। तन्मध्य इति। तन्मध्ये तस्या वज्राया मध्ये सा प्रसिद्धा चित्रिणी नाडी विलसति। चित्रिणीं विशेषयति—प्रणवविलसितेति। प्रणवेन आज्ञाचक्रावस्थितेन विलसिता विशेषेण लसिता प्रकाममुद्दीप्यमानेत्यर्थः। गगनधरणीमध्यमिलितमिति ग्रन्थेन प्रणवज्योतिषाज्ञाचक्रान्मूलाधारपर्य्यन्तव्यापकत्वस्य वक्ष्यमाणत्वात्। योगिनां योगगम्या योगमात्रवेद्या, लूतातन्तूपमेया मर्कटसूत्रवदतिसूक्ष्मा। मेरुमध्यान्तरस्थान् मेरुमध्यस्थिते सुषुम्णावज्रानाड्यौ तयोरन्तरस्थान् अभ्यन्तरस्थितान् सकलसरसिजान् मूलाधार-स्वाधिष्ठान-मणिपूरानाहत-विशुद्धाज्ञाख्यषट्पद्मानि भित्त्वा तद्ग्रथनरचनया तेषां षण्णां पद्मानां ग्रथनस्य पतनप्रतिबन्धकीभूतस्य रचनया देदीप्यते। तस्यान्तरिति तस्याश्चित्रिण्या अन्तर्मध्ये शुद्धबोधप्रबोधा शुद्धौ निर्मलौ बोधप्रबोधौ सामान्य-विशेषज्ञाने यस्यास्तथाभूता। शुद्धं बोधं प्रबोधयतीति वा। हरमुखकुहरात् मूला-धारस्थस्वयम्भूलिङ्गच्छिद्रात् आदिदेवान्तसंस्था सहस्रारविलासिपरमशिवपर्य्यन्त-गामिनी ब्रह्मनाडी वर्त्तते। तदुक्तं शान्तानन्दतरङ्गिण्यां चतुर्थोल्लासे चित्रामभिधाय—

तस्या मध्ये ब्रह्मनाडी मृणालतन्तुरूपिणी। इति।

४। प्रागुक्तां ब्रह्मनाडीं विशेषयति—विद्युन्मालेति। विद्युन्मालाविलासा विद्युन्माला विद्युच्छ्रेणी तस्या विलास इव विलासो यस्याः सा विद्युत्पुञ्जसमानदीप्तिशालिनी-त्यर्थः, तथा मुनिमनसि मननशीलानां चित्ते लसद् विलसत् तन्तोर्मृणालसूत्रस्य रूपमिव रूपं यस्यास्तादृशी, अत एव सुसूक्ष्मा। तदुक्तं शाक्तानन्दतरङ्गिण्यां चतुर्थो-ल्लासे चित्रिणीमभिधाय—

---

1. '-न्मध्ये ब-' C 2. '-सखवहा हावभाव-' C. 3. 'सागरस्य' B.

[ मूलाधारपद्मस्य स्वरूपम् ]

**अथाऽऽधारपद्मं सुषुम्णास्यलग्नं ध्वजाधो गुदोर्द्ध्वं चतुःशोणपत्रम् ।**
**अधोवक्त्रमुद्यत्सुवर्णाभवर्णैर्वकारादिसान्तैर्युतं वेदवर्णैः ॥ ५ ॥**

---

तस्या मध्ये ब्रह्मनाडी मृणालतन्तुरूपिणी ।

इति । एवञ्च ये मननशीलास्त एव मृणालतन्तुतनीयसीमिमां ब्रह्मनाडीमनुभवितुं शक्नुवन्तीत्यर्थः । तथा शुद्धज्ञानप्रबोधा शुद्धस्य संशयविकल्पादिरहितस्य ज्ञानस्य ब्रह्मज्ञानस्य प्रबोधो यस्याः सा । यद्वा शुद्धं निष्कलं ब्रह्म तद्विषयकं ज्ञानम्, प्रबोधयतीति प्रबोधा पचादित्वादच् । ततश्च शुद्धज्ञानस्य प्रबोधा इति षष्ठीतत्पुरुषः । यद्वा शुद्धश्च तज्ज्ञानञ्चेति शुद्धज्ञानं निष्कलं ज्ञानस्वरूपं ब्रह्म तस्य प्रबोधा समुन्मीलनकारिणीत्यर्थः । सकलगुणमयी त्रिगुणात्मिका । तथा शुद्धबोधस्वभावा निर्मलज्ञानस्वरूपा ब्रह्मनाडी देदीप्यत इति पूर्व्वेणान्वयः ।

तदास्य इति । तदास्ये ब्रह्मनाड्या मुखे ब्रह्मद्वारं विलसति । ब्रह्मद्वारं विशेषयति—सुधेत्यादिना । सुधायाः शिवशक्तिसामरस्यसम्भूतामृतस्य य आसारः स गम्यते यस्मात् तथाभूतः प्रदेशो यत्र तत् । अस्मादेव ब्रह्मद्वाररूपप्रदेशान्मूलाधारस्थितशिवशक्तिभ्यां निरुक्तामृतं पीयत इत्यर्थः । तथा ग्रन्थिस्थानं पद्मानामिति शेषः । तदेतत् सुषुम्णाख्यनाड्या वदनं मुखमिति लपन्ति कथयन्ति योगिन इति शेषः ।

५ । एवं नाडीमभिधाय मूलाधारपद्ममाह—अथेत्यादिनवभिः । अथेति नाडीनिरूपणानन्तरम् आधारपद्मं व्याख्यास्याम इति शेषः । आधारपद्मं मूलाधारपद्मम् अन्येषां पद्मानां मूलरूपतयाधिकरणरूपतया चास्य मूलाधारपद्ममिति संज्ञा । सुषुम्णास्यलग्नं सुषुम्णाया निरुक्तरूपाया आस्ये मुखे लग्नम्, ध्वजाधः लिङ्गमूलादधः गुदोर्द्ध्वं पायुस्थानादूर्द्ध्वम्, तथा चतुःशोणपत्रं चत्वारि शोणानि रक्तवर्णानि पत्राणि यस्य तथाभूतम् । तथा अधोवक्त्रम् । तत्र वर्णानां स्थितिमाह—उद्यदिति । उद्यत्सुवर्णाभवर्णैः उद्यती उद्गच्छन्ती सुवर्णस्य हेम्नः आभेव आभा येभ्यस्तथाभूता वर्णा येषां तादृशैः वकारादिसान्तैः व-श-ष-स-रूपैर्वेदवर्णैश्चतुर्भिर्वर्णैर्युतम् वर्त्तते इति शेषः । तदुक्तं तन्त्रसारधृतगौतमीये—

तद्बाह्ये हेमवर्णाभं व-सवर्णं चतुर्दलम् ।
द्रुतहेमसमप्रख्यं पद्मं तत्र विभावयेत् ॥ इति ।

[ तत्र स्वबीजयुक्तपृथिवीमण्डलम् ]

अमुष्मिन् धरायाश्चतुष्कोणचक्रं समुद्भासिशूलाष्टकैरावृतं तत् ।
लसत्पीतवर्णं तडित्कोमलाङ्गं तदन्तः [1]समास्ते धरायाः
स्वबीजम् ॥ ६ ॥

[ धराबीजस्य स्वरूपं तदङ्के ब्रह्मणोऽवस्थितिश्च ]

चतुर्बाहुभूषं गजेन्द्राधिरूढं तदङ्के नवीनार्कतुल्यप्रकाशः ।
शिशुः सृष्टिकारी लसद्वेदबाहुर्मुखाम्भोजलक्ष्मी-
श्चतुर्भागभेदः[2] ॥ ७ ॥

---

अत्रायं निष्कर्षः,—प्रथमं मूलाधारपद्मं पायुलिङ्गयोर्मध्ये सुषुम्णाया मुखलग्नमधोमुखमव-स्थितम् । तस्य चत्वारि रक्तवर्णानि पत्राणि, तेषु च पत्रेषु पूर्व्वादितः प्रादक्षिण्येन व-श-ष-स-रूपं तप्तहेमाभं वर्णचतुष्टयं वर्त्तते इति ।

६ । अमुष्मिन् आधारपद्मे समुद्भासिभिः शूलाष्टकैः अष्टभिः शूलैरावृतं धरायाः पृथिव्याश्चतुष्कोणचक्रं चतुष्कोणं पृथ्वीमण्डलं समास्ते । तदन्तः धरामण्डलस्य मध्ये धरायाः स्वबीजं लम् इति पृथ्वीबीजम् आस्ते । तद् विशेषयति—लसत्पीतवर्णं पीतिम्ना शोभमानम्, तडिदिव कोमलमङ्गं यस्य तदिति स्वबीजमित्यस्य विशेषणम् ।

तथाच मूलाधारपद्मे पृथ्वीदेवताकं चतुष्कोणमण्डलं तस्याष्टदिक्षु शूलाष्टकं मध्ये व पीतोज्ज्वलो लकार इति ।

७ । प्रागुक्तं धराबीजमेव विशेषयति—चतुरित्यादिविशेषणद्वयेन । तत्र चत्वारो बाहवो भूषा अलङ्कारा इव यस्य तत्, अलङ्कारायमाणबाहुचतुष्टयविशिष्टमित्यर्थः । तथा गजेन्द्राधिरूढं गजवराधिष्ठितमित्यर्थः । धराया बीजं समास्ते इति पूर्व्वेणान्वयः । तदुक्तं निर्व्वाणतन्त्रे चतुर्थपटले—

अधोवक्त्रं हि तत् पद्मं धरामध्ये चतुर्दलम् ।
पद्ममध्ये बीजकोषे क्षितिचक्रं मनोहरम् ॥
वलयाकाररूपेण समुद्राः सप्त संस्थिताः ।
जम्बूद्वीपं मध्यदेशे चतुष्कोणं मनोहरम् ॥

---

1. 'समन्ते' C. 2. '-वेदः' B.

[ मूलाधारपद्मे डाकिनीस्थितिः ]

**वसेदत्र देवी च डाकिन्यभिख्या लसद्वेदबाहूज्ज्वला रक्तनेत्रा[1] ।**
**समानोदितानेकसूर्य्यप्रकाशा प्रकाशं वहन्ती सदा शुद्धबुद्धेः ॥८॥**

---

त्रिकोणं मदनागारं कन्दर्पश्चाधिदेवता ।
ऐन्द्ररूपं हि लं-बीजं गजेन्द्रवाहनं शिवे ॥ इति ।

अत्र रामवल्लभकृतटीकायां 'चतुर्बाहुभूषो गजेन्द्राधिरूढ' इति प्रथमान्तमभिधाय पदद्वय-मिदं सृष्टिकारीत्यस्य विशेषणत्वेन समयोजयत् ।

तदङ्क इति । तस्य धराबीजस्याङ्के नवीनार्कतुल्यप्रकाशः लसद्वेदबाहुश्चतुर्भुजः मुखाम्भोजलक्ष्मीः मुखेषु अम्भोजलक्ष्मीः पद्मशोभा यस्य तथाभूतः, तथा चतुर्भागभेदः चत्वारो भागभेदा यस्य मुखावच्छेदे इति शेषः, तादृशः सृष्टिकारी ब्रह्मा समास्ते इति पूर्व्वेण सम्बन्धः । अत्र—

ऐन्द्रबीजं वरारोहे लिङ्गस्य वामदेशके ।
सुसिद्धं ब्रह्मसदनं नादोपरि सुसुन्दरम् ।
तत्रैव निवसेद् ब्रह्मा सृष्टिकर्त्ता प्रजापतिः ॥

इति निर्व्वाणतन्त्रचतुर्थपटलवचनेन नादोपरि ब्रह्मसदनस्थितेरभिधानान्नादोर्द्ध्वबिन्दौ स्थितिरित्यवधेयम् । 'लिङ्गस्य वामदेशक' इति तु न ग्रन्थकारसम्मतं मूले तथाऽनभिधानात्, अत्र तन्त्रेषु मतभेददर्शनाच्च ।

तदङ्के च चतुर्बाहुं रक्तवर्णं शिशुं शिवम् ।
चतुर्वक्त्रं हंसपृष्ठे ब्रह्माणं विद्धि पार्व्वति ॥

इति षट्चक्रटीकाधृतभूतशुद्धितन्त्रवचनदर्शनादत्र हंसपृष्ठे ब्रह्मणः स्थितिरवगन्तव्या ।

अयमत्र निष्कर्षः—पूर्व्वश्लोके यत् पृथ्वीबीजमुक्तं तस्य चत्वारो बाहवः वाहनञ्च गजेन्द्रः । धराबीजान्तर्नादोर्द्ध्वे नवोदयमानरविप्रभाभास्वरश्चतुर्बाहुः कमलोपमचतुरानन-विशिष्टः शिशुर्ब्रह्मा वर्त्तते इति ।

८। अत्र डाकिनीशक्तेः स्थितिमुपपादयति—वसेदिति । अत्र डाकिन्यभिख्या डाकिनीति संज्ञया प्रसिद्धा देवी द्योतनशीला शक्तिः वसेत् वसतीत्यर्थः । तां विशेषयति—लसदिति । लसन्तः शोभमाना ये वेदबाहवश्चत्वारो बाहवस्तैरुज्ज्वला, ब्रह्मशक्ति-

---

1. '-नेत्रम्' C.

[ तत्कर्णिकान्तस्त्रिकोणे कन्दर्पवायोरवस्थितिः ]

[1]वज्राख्यावक्त्रदेशे विलसति सततं कर्णिकामध्यसंस्थं
कोणं तत् त्रैपुराख्यं तडिदिव विलसत् कोमलं कामरूपम्।
कन्दर्पो नाम वायु[2]र्विलसति सततं तस्य मध्ये समन्ता-
ज्जीवेशो बन्धुजीवप्रकरमभिहसन् कोटिसूर्य्यप्रकाशः ॥६॥

---

त्वादस्याश्चतुर्बाहुत्वमित्यर्थः। शुद्धबुद्धेः शुद्धबोधस्य तत्त्वज्ञानस्येत्यर्थः प्रकाशं वहन्ती तत्त्वज्ञानं सम्पादयन्तीत्यर्थः।

तदयं निष्कर्षः—अत्र मूलाधारपद्मे बाहुचतुष्टयैः काञ्चन शोभां वहन्ती रक्तनयना युगपदुदयमानानेकदिनकरसमानप्रकाशशालिनी डाकिनी देवी वसन्ती साधकानां तत्त्वज्ञानं सम्पादयतीति।

६। एतत्पद्मकर्णिकायां त्रिकोणं निरूपयति—वज्राख्येति। वज्राख्यायाः 'वज्राख्या मेढ्रदेशाच्छिरसि परिगते'त्यादिना निरुक्ताया वक्त्रदेशे मुखप्रदेशे कर्णिकामध्यसंस्थं मूलाधारपद्मकर्णिकाया मध्ये वर्त्तमानं तडिदिव विलसत् विद्युदुज्ज्वलं कोमलं स्निग्धं तत् प्रसिद्धं त्रैपुराख्यं त्रिपुरासम्बन्धि कामरूपं मदनागारात्मकं त्रिकोणं विलसति। अत्र कामशब्देन कामप्रधानागारभूता योनिरुच्यते, तथा च कामरूपं त्रिकोणमित्यस्य योन्याकारं त्रिकोणमित्यर्थः। अत्र कामरूपमित्यनेन त्रिकोणेऽस्मिन् कामबीजस्यापि स्थितिः सूच्यते। व्यक्तमाह—शाक्तानन्दतरङ्गिण्यां नवमोल्लासे—

आधारे कन्दमध्यस्थं त्रिकोणमतिसुन्दरम्।
त्रिकोणमध्ये देवेशि कामबीजं सुलक्षणम्॥ इति।

तथा तत्रैव चतुर्थोल्लासे—

कर्णिकायां स्थिता योनिः कामाख्या परमेश्वरी।
तद्योनिः परमेशानि इच्छाज्ञानक्रियात्मिका।
अपराख्यं हि कन्दर्पमाधारे तत्त्रिकोणके॥

इत्यादि। कन्दर्प इति तस्य त्रिकोणस्य मध्ये कन्दर्पो नाम जीवेशो जीवनरक्षाविधायको वायुः समन्तात् त्रिकोणं व्याप्य निवसति। वायोः स्वरूपमाह—बन्धुजीवेति। बन्धुजीवप्रकरं रक्तवर्णबन्धूकपुष्पसमूहं स्वगतरक्तिम्ना अभिहसन् उपहसन्।

---

1. 'वज्राया' B. 'वक्त्राख्या' C. 2. '-र्नि-' C.

[ तत्र स्वयम्भुलिङ्गावस्थितिः ]

तन्मध्ये लिङ्गरूपी द्रुतकनककलाकोमलः पश्चिमास्यो
ज्ञानध्यानप्रकाशः प्रथमकिशलयाकाररूपः स्वयम्भुः ।
विद्युत्पूर्णेन्दुबिम्बप्रकरकरचयस्निग्धसन्तानहासी
काशीवासी विलासी विलसति सरिदावर्त्तरूपप्रकारः ॥१०॥

[ तदूर्द्ध्वं कुलकुण्डलिन्याः स्थितिः ]

तस्योर्द्ध्वे बिसतन्तुसोदरलसत्सूक्ष्मा जगन्मोहिनी
ब्रह्मद्वारमुखं मुखेन मधुरं संछादयन्ती स्वयम् ।

---

तथा कोटिसूर्य्यप्रकाशः कोटिसंख्यकसूर्य्यसदृशदीप्त्यतिशयशालीत्यर्थः । अत्र कामबीजस्थितेरभिधानात् पूर्व्वोक्तरीत्या कामस्यापि स्थितिरुक्तेत्यवधेयम् ।

एवञ्चायमस्य निष्कर्षः—एतत्पद्मकर्णिकायां विद्युत्समानाकृति स्निग्धं योन्याकारत्रिकोणं तदन्तः कामवायुः कामबीजञ्च रक्तवर्णं कोटिसूर्य्यभास्वरं विलसतीति ।

१० । प्रागुक्तत्रिकोणमध्ये स्वयम्भुलिङ्गस्यावस्थितिमाह—तन्मध्य इति । प्रागुक्तत्रिकोणमध्ये लिङ्गरूपी स्वयम्भुः स्वयम्भुलिङ्गं विलसतीति सम्बन्धः । स्वयम्भुवं विशेषयति—द्रुतेत्यादिना । द्रुतकनककलाकोमलः द्रवीभूतसुवर्णकमनीयमूर्त्तिः पश्चिमास्यः अधोमुखः, तथा ज्ञानध्यानप्रकाशः ज्ञानेन तत्त्वज्ञानेन ध्यानेन स्वरूपचिन्तया च प्रकाशो यस्य तादृशः । ज्ञानिनस्तत्त्वज्ञानेन ध्यानशीलाश्च ध्यानप्रभावेण तं पश्यन्तीत्यर्थः । प्रथमं नवोद्गतं यत् किशलयं तदाकारं रूपं यस्य तादृशः । अत्र किशलयशब्देनैव नवोद्गतपत्राभिधानसम्भवे प्रथमपदोपन्यासोऽचिरप्ररूढत्वसूचनाय । विद्युदिति—विद्युत्-पूर्णेन्दुबिम्बयोर्यः प्रकरः समूहः विद्युत्समूहः पूर्णचन्द्रमण्डलसमूहश्चेत्यर्थः । तस्य यः करचयः किरणसमूहः तद्वत् स्निग्धः सन्तानः प्रवाहो यस्य तादृशो हासः प्रकाशोऽस्यास्तीति विद्युत्पूर्णेन्दुबिम्बप्रकरकरचयस्निग्धसन्तानहासी अनेकविद्युच्चन्द्रकिरणसदृशस्निग्धदीप्तिविशिष्ट इत्यर्थः । काशीवासी काश्यां वासशीलः स्वयम्भुः अत्र विलासी कुण्डलिन्या सह विलासशीलः । काशीवासीत्यभिधानात् काश्यां विलासे स्वयम्भोर्यत् सुखमत्रापि तदनुभवतीति सूचितम् । एवञ्चाधारत्रिकोणान्तराधोमुखं नवकिशलयाकारं स्वयम्भुलिङ्गं वर्त्तत इति निष्कर्षः ।

शङ्खावर्त्तनिभा नवीनचपलामालाविलासास्पदा
सुप्ता सर्पसमा शिवोपरिलसत्सार्द्धत्रिवृत्ताकृतिः ॥११॥
कूजन्ती कुलकुण्डली च मधुरं मत्तालिमालास्फुटं
[1]वाचं कोमलकाव्यबन्धरचनाभेदप्रभेदक्रमैः ।
श्वासोच्छ्वासविभञ्जनेन जगतां जीवो यया धार्य्यते
सा मूलाम्बुजगह्वरे विलसति प्रोद्दामदीप्त्यावलिः[2] ॥१२॥

११। स्वयम्भुलिङ्गोर्द्ध्वे कुलकुण्डलीस्थितिमाह—तस्योर्द्ध्वे इत्यादि। तस्य स्वयम्भुलिङ्गस्योर्द्ध्वे कुलकुण्डली विलसतीति परेणान्वयः। कुलकुण्डलीं विशेषयति—विसतन्त्वित्यादिना। विसतन्तुसोदरलसत्सूक्ष्मा मृणालतन्तुतनीयसी। तथा जगन्मोहिनी जगतां मोहजनिका मायारूपिणीत्यर्थः। तथा मधुरं सहस्रारगलितामृतप्रवाहेणेति शेषः, ब्रह्मद्वारमुखं ब्रह्मद्वारं 'ब्रह्मद्वारं तदास्य' इत्यादिना पूर्व्वमुक्तं तस्य मुखं मुखेन स्वमुखेन संछादयन्ती। तदुक्तं शाक्तानन्दतरङ्गिण्यां चतुर्थोल्लासे—

येन मार्गेण गन्तव्यं ब्रह्मद्वारं निरामयम्।
मुखेनाच्छाद्य तद् द्वारं प्रसुप्ता परमेश्वरी॥ इति।

एवञ्च स्वमुखेन ब्रह्मद्वारं संछाद्य सहस्रारगलितामृतधारां पिबतीति गम्यते। शङ्खावर्त्तनिभा शङ्खान्तरालावर्त्तसदृशी। नवीनेति—नवीना वर्षागमे प्रथमाविर्भूता या चपलामाला विद्युत्समूहः तस्या यो विलासो दीप्तिस्तस्य आस्पदा वसतिस्थानभूता नवीनोदितविद्युत्पटलसदृशदीप्तिशालिनीत्यर्थः। सुप्तेति—सुप्ता शिवोपरि स्वयम्भुलिङ्गस्योपरि लसन्ती सार्द्धत्रिवृत्ता आकृतिर्यस्यास्तथाभूता अत एव सर्पसमा। सर्पाः स्वापकाले वलयाकारेण वर्त्तन्त इति सुप्तत्रिवृत्ताकृतेः कुण्डलिन्याः सर्पसमत्वम्। अत्रास्पदेति स्त्रीत्वमार्षम्।

१२। कुण्डलिनीमेव विशेषयति—कूजन्तीति। मत्तालिमालास्फुटं मत्तभ्रमरावलीवदस्फुटमनभिव्यक्तवर्णं मधुरं कूजन्ती एतेन ध्वन्यात्मकशब्दानां कुण्डलिनीतोऽभिव्यक्तिरभिहिता। एवं ध्वन्यात्मकशब्दसृष्टिमभिधाय वर्णात्मकशब्दानामपि कुण्डलिन्या अभिव्यक्तिमाह—वाचमिति। कोमलकाव्यबन्धरचनाभेदप्रभेदक्रमैः—कोमलानि माधुर्य्यव्यञ्जकवर्णमयानि यानि काव्यानि बन्धाः पद्मादिबन्धाश्चित्रकाव्यात्मकाः

1. 'वाचः' B. 2. 'दीप्ता-' B.

[ तत्र परशक्तिस्थितिः ]

तन्मध्ये परमा कलातिकुशला सूक्ष्मातिसूक्ष्मा परा
नित्यानन्दपरम्परा[1]च चपलामालालसद्दीधितिः ।
ब्रह्माण्डादिकटाहमेव सकलं यद् भासया भासते
सेयं श्रीपरमेश्वरी विजयते नित्यप्रबोधोदया ॥ १३ ॥

---

तेषां या रचना तत्र ये भेदाः । यद्वा कोमलः माधुर्य्यव्यञ्जकवर्णमयः यः काव्यानां बन्धः रचना तदितरगद्यपद्यादिमयवाक्यनिर्माणं तयोर्यो भेदः विशेषः इति । तथा प्रभेदाः प्रकृष्टभेदविशिष्टाः प्राकृतादिबन्धाः तत्र ये क्रमाः काव्यप्रकर्षाधायकतत्तद्रसानुगुणा रीतयः तैः वाचं कण्ठताल्वाद्यभिघातजन्यवर्णात्मकवाक्यं जनयन्ती कुलकुण्डली विलसतीत्यन्वयः । तदुक्तं शारदायां प्रथमपटले—

भिद्यमानात् पराद् बिन्दोरव्यक्तात्मा रवोऽभवत् । इति ।

तथा—

तत् प्राप्य कुण्डली रूपं प्राणिनां देहमध्यगम् ।
वर्णात्मनाविर्भवति गद्यपद्यादिभेदतः ॥ इति ।

तथा यया कुण्डलिन्या श्वासोच्छ्वासविभञ्जनेन जगतां जीवः प्राणो धार्य्यते देहावच्छेदे स्थाप्यते । तदुक्तं शाक्तानन्दतरङ्गिण्यां नवमोल्लासे—

मूलकन्दे तु या देवी भुजगाकाररूपिणी ।
तद्भ्रमावर्त्तवातो यः प्राण इत्युच्यते बुधैः ॥ इति ।

तथा प्रोद्दामदीप्त्यावलिः । प्रोद्दामा गुर्व्वी दीप्त्यावलिः दीप्तिश्रेणी यस्यास्तथाभूता अतिशयदीप्तिशालिनीत्यर्थः ।

१३ । स्वयम्भुलिङ्गमध्ये कुण्डलिन्यूर्द्ध्वं परशक्तेरवस्थितिमाह—तन्मध्य इति । यद्भासया यस्याः परशक्तेर्दीप्त्या ब्राह्माण्डादिकटाहमाब्रह्मस्तम्भपर्य्यन्तं भासते दीप्यते सेयं नित्यप्रबोधोदया नित्यप्रबोधस्य ब्रह्मज्ञानस्य उदयो यस्याः सा ब्रह्मज्ञानजननीत्यर्थः । तथाभूता श्रीपरमेश्वरी सर्व्वेषामीश्वराणामुपरि वर्त्तमाना परमा कला अनिर्वाच्यस्वरूपा माया विजयते । तां विशेषयति—अतिकुशला दृश्यमानजगन्निर्माणे निरतिशय-

---

1. 'ति' B.

[ कुलकुण्डलिनीध्यानफलम् ]

ध्यात्वैतन्मूलचक्रान्तरविवरलसत्कोटिसूर्य्यप्रकाशां
[1]वाचामीशो नरेन्द्रः स भवति सहसा सर्व्वविद्याविनोदी।
आरोग्यं तस्य नित्यं निरवधि च महानन्दचित्तान्तरात्मा
वाक्यैः काव्यप्रबन्धैः सकलसुरगुरून् सेवते शुद्धशीलः॥१४॥

सिन्दूरपूररुचिरारुणपद्ममन्यत् सौषुम्णमध्यघटितं ध्वजमूलदेशे।
अङ्गच्छदैः परिवृतं तडिदाभवर्णैर्वाद्यैः सबिन्दुलसितैश्च
पुरन्दरान्तैः ॥ १५ ॥

---

निपुणा। सूक्ष्मातिसूक्ष्मा अतिशयसूक्ष्मेत्यर्थः। परा गुणैरनाक्रान्ता। नित्यानन्दपरम्परा नित्या कालाद्यनवच्छिन्ना आनन्दपरम्परा यस्याः सा सदानन्दरूपिणी। तथा चपला मालालसद्दीधितिः चपलामालेव विद्युच्छ्रेणीरिव लसन्ती दीधितिर्यस्यास्तथाभूता।

एवञ्च स्वयम्भुवो निरुक्तकुण्डलीसार्द्धत्रिवेष्टनादूर्द्ध्वं जगन्निर्माणकुशला सूक्ष्मतमा विद्युद्दीप्ता नादात्मिका परमा कला विलसन्ती स्वतेजसा जगदखिलं भासयतीति फलितम्।

१४। कुण्डलिनीध्यानफलमाह—ध्यात्वेति। एतस्य मूलचक्रस्य मूलाधारचक्रस्य अन्तरे अभ्यन्तरे यद् विवरं गह्वरं तत्र लसन् कोटिसूर्य्याणां प्रकाश इव प्रकाशो यस्यास्तादृशीं कुण्डलिनीं ध्यात्वा सर्व्वविद्याविनोदी वाचामीशः बृहस्पतितुल्यो भवति। तस्य नित्यम् आरोग्यं जायते। तथा महानन्दचित्तान्तरात्मा महानन्द ईश्वरः तत्र चित्तं यस्य तादृशोऽन्तरात्मा यस्य तथाभूतो भवति, ईश्वरध्यानपरायणो भवतीत्यर्थः। तथा शुद्धशीलः सकलमोहापगमात् पवित्रान्तःकरणः सन् अनितरसाधारणैः काव्यप्रबन्धैः काव्यानां प्रकृष्टो बन्धो यत्र तथाभूतैर्वाक्यैः सकलसुरगुरून् सकलान् सुरगुरून् ब्रह्मविष्णुमहेश्वरादीन् सेवते। सारार्थपरिपूर्णस्तोत्राद्यात्मक-प्रबन्धरचनया सुरश्रेष्ठान् तोषयतीत्यर्थः। यद्वा सकलसुरगुरून् बृहस्पतितुल्यानखिलानपि पण्डितान् सुमधुरकाव्यप्रबन्धरचनया प्रीणयतीत्यर्थः।

१५। एवं प्रथमं मूलाधारचक्रं निरूप्य द्वितीयं स्वाधिष्ठानचक्रमाह—सिन्दूरेत्या-

---

1. '-राकाधीशो' C.

[ तत्राम्भोजमण्डलं तत्र च वरुणबीजस्थितिः ]

तस्यान्तरे प्रविलसद्विशदप्रकाश[1]-
मम्भोजमण्डलमथो वरुणस्य तस्य[2]।
अर्द्धेन्दुरूपलसितं शरदिन्दुशुभ्रं
[3]वङ्कारबीजममलं मकराधिरूढम् ॥१६॥

दिना ज्ञानसन्दोहलक्ष्मीरित्यन्तेन श्लोकपञ्चकेन। स्वाधिष्ठानपदव्युत्पत्तिस्तु गन्धर्व्व-तन्त्रे पञ्चमपटले—

स्वशब्देन परं लिङ्गं स्वाधिष्ठानं ततो विदुः।

इत्येवं निरूपिता। तत्र पद्मस्वरूपमाह—सिन्दूरेति। ध्वजमूलदेशे लिङ्गमूले सौषुम्ण-मध्यघटितं सुषुम्णाया इदं सौषुम्णं यन्मध्यं सुषुम्णानाडीमध्यप्रदेश इत्यर्थः, तत्र घटितं संबद्धम् अङ्गच्छदैः षडभिर्दलैः परिवृतं सिन्दूरपूररुचिरारुणं सिन्दूरपुञ्जवन्मनोहररक्त-वर्णं पद्मं वर्त्तत इति शेषः।

छदान् विशेषयति—तडिदित्यादिना। सबिन्दुलसितैः सानुस्वारैः बाद्यैर्बकाराद्यैः पुरन्दरान्तैः लकाररूपेन्द्रबीजान्तैः तडिदाभवर्णैः विद्युत्सदृशप्रभाविशिष्टैः वर्णैः बं भं मं यं रं लं इत्येतैश्च परिवृतम्। एतेन षट्पत्रेषु निरुक्ताः षड् वर्णा वर्त्तन्त इति तात्-पर्य्याद्बोध्येयम्।

अयमस्य निष्कर्षः—लिङ्गमूलप्रदेशे सुषुम्णामध्ये सिन्दूरारुणमतिमनोहरं स्वाधिष्ठान-पद्मं वर्त्तते, तस्य षट् पत्राणि, तेषु च पत्रेषु क्रमेण विद्युदाकारा वं भं मं यं रं लं इत्येते वर्णा विलसन्तीति।

१६। तस्येति। तस्य स्वाधिष्ठानपद्मस्य अन्तरे मध्ये प्रविलसत् शोभमानं विशद-प्रकाशं शुक्लवर्णम् अर्द्धेन्दुरूपलसितम् अर्द्धचन्द्रयुक्तं तस्य जलाधिदैवततया प्रसिद्धस्य वरुणस्य अम्भोजमण्डलम्। तत्र च शरदिन्दुशुभ्रं मकराधिरूढं मकरवाहनम् अमलं वंकारबीजं वर्त्तत इति शेषः। एवञ्च बीजस्य तत्तद्देवतारूपतया अत्र वमिति वरुणबीज-स्थित्या वरुणस्यापि स्थितिरवगन्तव्या।

अयमस्य निष्कर्षः—निरुक्तपद्मकर्णिकायाम् अर्द्धचन्द्रयुक्तमम्भोजमण्डलं शुक्लवर्णं तत्र शारदशशधरविशदं मकरवाहनं वरुणबीजमवतिष्ठत इति।

1. '-शा' C. 2. 'तस्याम्' C. 3. 'श-' ? C.

[ वरुणबीजस्याङ्के विष्णोरवस्थानम् ]

तस्याङ्कदेशलसितो हरिरेव पाया-
न्नीलप्रकाशरुचिर[1]श्रियमादधानः ।
पीताम्बरः प्रथमयौवनगर्वधारी
श्रीवत्सकौस्तुभधरो धृतवेदबाहुः ॥ १७ ॥

[ अत्र स्थिताया राकिणीशक्तेः स्वरूपम् ]

[2]अत्रैव भाति सततं खलु राकिणी सा
नीलाम्बुजोदरसहोदरकान्तिशोभा ।
नानायुधोद्यतकरैर्लसिताङ्गलक्ष्मी-
र्दिव्याम्बराभरणभूषितमत्तचित्ता ॥ १८ ॥

---

१७। तस्येति। तस्य वरुणबीजस्य अङ्कदेशे लसितः विलसितः हरिर्विष्णुरेव पायात् त्रिभुवनमिति शेषः। एवकारः पालनकर्तृत्वं हरेरेवेति सूचनार्थः। अत्राङ्कदेशलसित इति स्थितेऽपि—

सुसिद्धं ब्रह्मसदनं नादोपरि सुसुन्दरम् ।

इत्यादिनिर्वाणतन्त्रचतुर्थपटलवचनदर्शनात् नादोर्द्ध्वबिन्दौ ब्रह्मस्थितिवद्दृष्टपरिकल्पनन्यायेनात्रापि वरुणबीजनादोर्द्ध्वबिन्दौ विष्णोः स्थितिरिति केचित्। तथात्वेऽङ्कपदवैयर्थ्यं स्यात्। हरिं विशेषयति—नीलेत्यादिना। नीलश्च प्रकाशश्च नीलप्रकाशौ ताभ्यां नीलवर्णेन तेजसा चेत्यर्थः, रुचिरश्रियं मनोज्ञकान्तिमादधानः धारयन् नीलतेजःपुञ्जशरीरीत्यर्थः। सुगममन्यत्।

१८। पद्मेऽस्मिन् राकिणीशक्तेरवस्थितिमाह—अत्रैवेति। अत्र नीलाम्बुजेत्यादिविशेषणेन वैष्णवीशक्तिरियमित्यवधेयम्। मूलाधारादिषट्पद्मान्तर्गतशक्तीनां स्थितौ—

विशुद्धौ डाकिनी देवी अनाहते तु राकिणी ।
लाकिनी मणिपूरस्था काकिनी लिङ्गगोचरे ॥
आधारे शाकिनी देवी आज्ञायां हाकिनी तथा ।
याकिणी ब्रह्मरन्ध्रस्था सर्वकामफलप्रदा ॥

---

1. '-राश्रय-' C. 2 'तत्रैव' B.

[ एतत्पद्मचिन्तनफलम् ]

स्वाधिष्ठानाख्यमेतत् सरसिजममलं चिन्तयेद् यो मुनीन्द्र-
स्तस्याहङ्कारदोषादिकसकलरिपुः क्षीयते तत्क्षणेन।
योगीशः सोऽपि मोहाद्भुततिमिरचये भानुतुल्यप्रकाशो
गद्यैः पद्यैः प्रबन्धैर्विरचयति सुधाकाव्यसन्दोहलक्ष्मीः ॥१९॥

[ मणिपूरपद्मम्, तत्र त्रिकोणे वह्निबीजस्य स्थितिश्च ]

तस्योर्द्ध्वे नाभिमूले दशदललसिते पूर्णमेघप्रकाशे
नीलाम्भोजप्रकाशैरुपहितजठरे डादि-फान्तैः सचन्द्रैः।
ध्यायेद् वैश्वानरस्यारुणमिहिरसमं मण्डलं तत्त्रिकोणं
तद्बाह्ये स्वस्तिकाख्यैस्त्रिभिरभिलसितं तत्र वह्नेः स्वबीजम्॥ २० ॥

---

इति शाक्तानन्दतरङ्गिणीचतुर्थोल्लासधृतवचनेन तु स्वाधिष्ठाने काकिन्या मूलाधारे शाकिन्या अनाहते राकिण्या विशुद्धौ डाकिन्या अवस्थितिरिति प्रस्थानभेदो दृश्यते।

२०। एवं द्वितीयं स्वाधिष्ठानचक्रं निरूप्य तृतीयं मणिपूरचक्रमाह—तस्योर्द्ध्व इति। तस्य स्वाधिष्ठानस्य ऊर्द्ध्वे नाभिमूलप्रदेशे पूर्णमेघप्रकाशे पूर्णो गाढो यो मेघस्तस्य प्रकाश इव प्रकाशो यस्य तथाभूते गाढकृष्णवर्णे इत्यर्थः, दशदललसिते दशभिर्दलैः शोभमाने तथा नीलाम्भोजप्रकाशैः नीलपद्मकान्तिभिः सचन्द्रैः अत्र चन्द्रशब्देन बिन्दु-रपि बोध्यः तेन सचन्द्रैः अर्द्धचन्द्रबिन्दुसहितैः डादि-फान्तैः डकारादिफकारान्तैर्दशभि-र्वर्णैरुपहितं जठरं मध्यं यस्य तथाभूते पद्मे इति शेषः। अरुणमिहिरसमम् अरुणवर्णो यो मिहिरः सूर्य्यः बालार्क इत्यर्थः तत्सदृशं रक्तोज्ज्वलं त्रिकोणं तद् वैश्वानरस्य मण्डलं वह्निमण्डलम्, तद्बाह्ये च त्रिभिः स्वस्तिकाख्यैर्द्वारविशेषैरभिलसितं युक्तम् इति त्रिकोण-विशेषणम्। तत्रेति वह्निमण्डले वह्नेः स्वबीजं रम् इति ध्यायेदिति परेण सम्बन्धः।

अत्र उपहितजठरे इत्युक्तावपि शाक्तानन्दतरङ्गिण्यां चतुर्थोल्लासे मणिपूरपद्मं प्रकृत्य—

डादि-फान्तान्वितदलैर्वरुणैर्दशभिर्युतम्।

इत्यभिधानाद् डादि-फान्तवर्णानां स्थितिर्दशसु दलेष्ववगन्तव्या। तथात्र पूर्णमेघ-

[ तत्र रुद्रमूर्तेरवस्थितिः ]

ध्यायेन्मेषाधिरूढं नवतपननिभं वेदबाहूज्ज्वलाङ्गं
तत्क्रोडे [1]रुद्रमूर्त्तिर्निवसति सततं शुद्धसिन्दूररागः।
भस्माऽऽलिप्ताङ्गभूषाभरणसितवपुर्वृद्धरूपी त्रिनेत्रो
लोकानामिष्टदाताऽभयलसितकरः सृष्टिसंहारकारी[2] ॥२१॥

प्रकाशे इति विशेषणेन पद्मस्य नीलवर्णता प्रतीयते प्रागुक्तशाक्तानन्दतरङ्गिणीवचनेन तु रक्तवर्णत्वं स्पष्टमुक्तम्। गन्धर्व्वतन्त्रे पञ्चमपटले तु—

तदूर्द्ध्वे नाभिदेशे तु मणिपूरं महत् पुरम्।
हेमाभं वैद्युताभञ्च बहुतेजोमयं तथा॥

इत्यनेन हेमाभत्वादिकं पद्मस्य विशेषणत्वेनोपपादितम्। एवञ्च स्थिते स्वरूपभेदे, श्रीनाथस्याज्ञया ध्यानार्थम् एकतरः पक्षः समाश्रयणीय इति तत्त्वम्। मणिपूरपद-व्युत्पत्तिमाह—गन्धर्वतन्त्रे पञ्चमपटले—

मणिमद्भिन्नं तं पूरं मणिपूरं ततो विदुः। इति।

अयमस्य निष्कर्षः—स्वाधिष्ठानोर्द्ध्वे नाभिमूले गाढजलधरप्रभदशदलं मणिपूराख्यं कमलम्। दलानि चोर्द्ध्वनादबिन्दुसहितैर्नीलप्रभाभास्वरैः ड-ढ-ण-त-थ-द-ध-न-प-फ-रूपैर्दशभिर्वर्णैरुपेतानि। पद्मस्य कर्णिकायामरुणारुणप्रभाभास्वरं त्रिकोणं रंबीजगर्भं स्वस्तिकाख्यद्वारत्रययुक्तं वह्निमण्डलमिति।

२१। पूर्व्वश्लोके तत्र वह्नेः स्वबीजमित्युक्तम्, तदेव वह्निबीजं विशेषयति—ध्यायेदि-त्यादिना। तद् वह्निबीजं कीदृशमित्यत आह—मेषाधिरूढं मेषवाहनम्, तथा नवतपन-निभं तरुणारुणरागं रक्तवर्णमित्यर्थः, तथा वेदबाहूज्ज्वलाङ्गं वेदैश्चतुर्भिर्बाहुभि-रुज्ज्वलं शोभमानमङ्गं यस्य बाहुचतुष्टयेन काञ्चनशोभामावहदित्यर्थः। एवंविधं वह्निबीजं ध्यायेदिति पूर्वेण सम्बन्धः।

अत्र रामवल्लभादिभिर्मेषाधिरूढं छागवाहनमिति व्याख्यातम्। तदसत् "छागस्थः साक्षसूत्रोऽग्नि"रित्यादिनाऽन्यत्र तस्य छागवाहनत्वेऽभिहितेऽपि—

मेषस्थं साक्षसूत्रञ्च शक्तिहस्तं स्मरेत्ततः।

इति कालीचरणकृतषट्चक्रटीकाधृतवचनेन प्रकृते वह्निबीजस्य मेषवाहनत्वेनैव ध्यानस्या-भिधानात् प्रसिद्धार्थपरित्यागेनार्थान्तरकल्पनस्यानौचित्याच्च मेषवाहनत्वेन ध्यान-

1. 'रुद्ररूपो नि-' C. 2. '-रूपी' B.

[ अत्र पद्मे लाकिनीशक्तेरवस्थितिरेतत्पद्मचिन्तनफलञ्च ]

तत्रास्ते लाकिनी सा सकलशुभकरी वेदबाहूज्ज्वलाङ्गी
श्यामा पीताम्बराद्यैर्विविधविरचनालङ्कृता मत्तचित्ता ।
ध्यात्वैतन्नाभिपद्मं प्रभवति नितरां संहृतौ पालने वा
वाणी तस्याननाब्जे विलसति सततं ज्ञानसन्दोहलक्ष्मीः ॥ २२ ॥

[ अनाहतपद्मं तत्कर्णिकायां वायुमण्डलञ्च ]

तस्योर्द्ध्वे हृदि पङ्कजं सुललितं बन्धूककान्त्युज्ज्वलं
काद्यैर्द्वादशवर्णकैरुपकृतं सिन्दूररागाञ्चितैः ।
नाम्नाऽनाहत[1]जीवितं सुरतरुं वाञ्छातिरिक्तप्रदं
वायोर्मण्डलमत्र धूमसदृशं षट्कोणशोभान्वितम् ॥ २३ ॥

---

मेव समीचीनमिति पश्यामः । अत्र वह्निबीजस्य स्थितेस्तत्र वह्नेरपि स्थितिरित्यवधेयम्, मन्त्रदेवतयोरभेदस्य सर्वतन्त्रसिद्धत्वेन वह्निबीजस्थितिं वदता ग्रन्थकृता वह्निदेवता-स्थितेरप्यभिधानात् । एवं सर्वत्र ।

तत्र रुद्रावस्थितिमाह—तत्क्रोड इति । तस्य वह्निबीजस्य क्रोडे । अत्र लोकाना-मिष्टदाता वरद इत्यर्थः ।

तदयमस्य निष्कर्षः—प्रागुक्तत्रिकोणस्थितं वह्निबीजं मेषवाहनं तरुणारुणशोणं चतुर्भुजञ्च । वह्निबीजमध्ये तु वृद्धो रुद्रो निरुक्तविशेषणविशिष्टो निवसतीति ।

२२ । तत्र लाकिनीशक्तेः स्थितिमाह—तत्रास्त इति । अत्र पद्मकर्णिकायां सा सर्व-तन्त्रप्रसिद्धा लाकिनीशक्तिरास्ते । लाकिनीं विशेषयति—सकलेत्यादिना । पीताम्बराद्यैः पीतवस्त्रादिभिरलङ्करणसाधनैरित्यर्थः, या विविधा विचित्रप्रकारा विरचना वेशविन्यासः तया अलङ्कृता । पीताम्बराद्यैरुपलक्षिता तथा विविधविरचनालङ्कृता इति वा । एतन्मणिपूरचक्रचिन्तनफलमाह—ध्यात्वैतदिति ।

२३ । एवं मणिपूरचक्रं निरूप्याऽनाहतचक्रमाह—तस्योर्द्ध्व इति । तस्य मणिपूर-पद्मस्य ऊर्द्ध्वे हृदि हृदयप्रदेशे नाम्ना अनाहतमीरितम् अनाहतसंज्ञयाभिहितमित्यर्थः पङ्कजं ध्यायेदित्यर्थः । पङ्कजं विशेषयति—सुललितमित्यादिना । सुललितं सुस्निग्धं बन्धूक-

---

1. '-संज्ञकम्' A-B.

[ तत्र वायुबीजं तत्रेशस्थितिश्च ]

**तन्मध्ये पवनाक्षरञ्च मधुरं धूमावलीधूसरं**
**ध्यायेत् पाणिचतुष्टयेन लसितं कृष्णाधिरूढं परम् ।**
**तन्मध्ये करुणानिधानममलं हंसाभमीशाभिधं**
**पाणिभ्यामभयं [1]वरञ्च दधतं लोकत्रयाणामपि ॥ २४ ॥**

कान्त्युज्ज्वलं बन्धूककुसुमवदरुणवर्णम्, तथा सिन्दूररागाञ्चितैः सिन्दूरवद्रक्तवर्णैः कादि-ककारादिभिष्ठकारान्तैः क-ख-ग-घ-ङ-च-छ-ज-झ-ञ-ट-ठ रूपैर्द्वादशवर्णैरुपकृतम् उपकरणविशिष्टं युक्तमित्यर्थः । अत्र उपहितमिति कालीचरणटीकायां उपहृतमिति च रामवल्लभटीकायां पाठो दृश्यते तयोरपि तत्र तत्र युक्तमित्येवार्थः ; तथा वाञ्छातिरिक्त-प्रदं सुरतरुम् अन्यः कल्पवृक्षो वाञ्छितमेव वस्तु प्रार्थिनेऽर्पयति एतत्पङ्कजरूपकल्प-वृक्षस्तु वाञ्छितादप्यधिकं ददातीति तात्पर्य्यम् । वायोरिति । अत्र पद्मकर्णिकायां धूमसदृशं धूम्रवर्णं वायोर्मण्डलं ध्यायेत् । किम्भूतम् ? षट्कोणशोभान्वितम् । एतेन वायुमण्डलं षट्कोणमिति दर्शितम् । व्यक्तमाह निर्वाणतन्त्रे सप्तमपटले—

एतत्पद्मस्योर्द्ध्वदेशे विमलं पद्मसुन्दरम् ।
शोभितं द्वादशैः पत्रैः शोणवर्णसमन्वितम् ॥
पद्ममध्ये बीजकोषे षट्कोणमण्डलं शुभम् ।
मण्डलस्य मध्यदेशे वायुबीजं मनोहरम् ॥ इति ।

एवञ्च बीजकोषान्तःषट्कोणे वायुबीजस्थितिरिति गम्यते । अनाहतपदव्युत्पत्ति-माह तन्त्रसारे—

शब्दब्रह्ममयं शब्दोऽनाहतस्तत्र दृश्यते ।
अनाहताख्यं पद्मं तन्मुनिभिः परिकीर्त्यते ॥ इति ।

अत्र शब्दब्रह्ममयमिति प्रक्रान्तपद्मविशेषणम् ।

अयमस्य निष्कर्षः—मणिपूरोर्द्ध्वे हृदये बन्धूककुसुमशोणं सुस्निग्धं द्वादशदलं चतुर्थ-मनाहताख्यं पद्मम्, तस्य च दलेषु एकैकशः सिन्दूरसवर्णाः क-ख-ग-घ-ङ-च-छ-ज-झ-ञ-ट-ठ-रूपान् द्वादश वर्णान् कर्णिकायां धूमधूम्रं षट्कोणं वायुमण्डलं ध्यायेदिति ।

२४ । तन्मध्य इति । तस्य वायुमण्डलस्य मध्ये पवनाक्षरं यम् इति वायुबीजं

1. 'वरं विदधतं' C.

[ एतत्पद्मकर्णिकायां काकिनीशक्तेरवस्थितिः ]

**अत्रास्ते खलु काकिनी नवतडित्पीता त्रिनेत्रा शुभा**
**सर्वालङ्करणान्विता हितकरी [1]सम्यग् जनानां मुदा।**
**हस्तैः पाश[2]कपालशोभनवरान् संबिभ्रती चाभयं**
**मत्ता पूर्णसुधारसार्द्रहृदया कङ्कालमालाधरा॥ २५ ॥**

---

ध्यायेदिति शेषः। वायुबीजं विशेषयति—मधुरमित्यादिना। मधुरं माधुर्य्यविशिष्टम् आनन्दमयमित्यर्थः।

अनाहताख्यं पद्मं तन्मुनिभिः परिकीर्त्यते।
आनन्दसदनं तत्तु पुरुषाधिष्ठितं परम्॥

इति तन्त्रसारवचनात्। धूमावलीधूसरमिति धूमपुञ्जधूसरवर्णं पाणिचतुष्टयेन लसितं चतुर्बाहुं कृष्णाधिरूढं कृष्णसारवाहनं परं श्रेष्ठमिति विशेषणचतुष्टयं वायुबीजस्य। अत्र वायुबीजस्थित्या समानवर्णवाहनवायुदैवतस्थितिरपि पूर्ववदुन्नेया।

एवं वायुबीजस्य स्वरूपं निरूप्य तदन्तरीश्वरावस्थितिमाह—तन्मध्य इति। तन्मध्ये वायुबीजमध्ये ईशाभिधम् ईश्वराख्यं शिवं चिन्तयेदित्यर्थः।

ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः।

इत्यादि ईश्वराख्यस्याऽनाहतपद्माधिष्ठातृत्वावधारणात्। ईशं विशेषयति—हंसाभमित्यादिना। हंसाभं शुक्लवर्णं तथा पाणिभ्यां लोकत्रयाणामपि अभयं वरञ्च दधतं विदधानमित्यर्थः।

तथाचायमस्य निष्कर्षः—प्रागुक्तवायुमण्डलान्तर्धूमधूम्रं कृष्णसारवाहनं चतुर्भुजं वायुबीजम्। तदन्तर्वराभयकरं शुक्लवर्णं करुणामयम् ईश्वराभिधानं शिवं ध्यायेदिति।

२५। अत्र पद्मे पद्मकर्णिकायामित्यर्थः काकिनीशक्तिरास्ते। अत्राविशेषेणोक्तावपि ईशपार्श्वे काकिन्याः स्थितिरवधेया रुद्रजामलोत्तरखण्डे सप्तपञ्चाशत्तमपटले—

ईश्वरं योगिनामीशं ध्यायेद् हृत्पद्ममण्डले।

इत्यनेनेश्वरध्यानमभिधाय—

'तत्पार्श्वे ध्यानमाकुर्य्यात् काकिनीं परमेश्वरीम्'।

इत्यनेन काकिन्या ईश्वरपार्श्ववर्त्तित्वप्रतिपादनादिति ध्येयम्। सा कीदृशीत्याह—नवेत्यादि। पूर्णसुधारसार्द्रहृदया—पूर्णः पूर्णानन्दकरो यः सुधारसः सहस्रारान्तराल-

---

1. 'योगीश्वराणां मुदा' C. 2 '-त्रिशूल-'? C.

**तत्तद्रूपो भवेदात्मा तां तां गतिमवाप्नुयात् ।**

तत्रेति तेषु त्रिषु ईश्वरतत्त्वाधिष्ठितेषु स्थानेषु चरतः प्राणस्येति चरन्तं प्राणमनादृत्य संवित्प्रधानतया प्राणभूमिकां गुणीकृत्य यस्मिन्यस्मिन् स्थाने स योग्यात्मा तिष्ठति, तत्तद्रूपतामनुभूय तत्तन्मयत्वमाप्नोतीत्यर्थः ।

अथ–

**निरोधिनीं भेदयित्वा ततो नादं व्रजेद्बुधः ।।३८०।।**

**वंशशब्दसमः शब्दस्तत्र सूक्ष्मः प्रजायते ।**

सूक्ष्मत्वं पूर्वापेक्षमीश्वरतत्त्वम् ।

ततोऽपि–

**भेदयेन्नादसंस्थानं ब्रह्मरन्ध्रं सुदुर्भिदम् ।।३८१।।**

---

इस तरह प्राणचार इस प्रक्रिया में जिस क्षेत्र से हो कर चलता है और जिस स्थान पर ठहरता है, आत्मा उन उन स्थानों पर उसी भाव से भावित होता रहता है । परिणामतः वही वही गति भी प्राप्त करता है । ये स्थान ईश्वर तत्त्वाधिष्ठित माने जाते हैं । इनमें संवितत्त्व का ही प्राधान्य होता है । प्राण एक तरह से गौण रहता है । परिणामतः स्थानानुरूपता प्राप्त करता है और उन स्थानों से तन्मयभाव से जुटता भी रहता है । इसके बाद अर्थात् निरोधिनी भेदन के बाद प्रबुद्ध साधक नाद स्थान की ओर प्रस्थान करता है । नाद भेदन के समय वंश ध्वनि का सुरीला शब्द श्रुति गोचर होता है । यह शब्द एकदम सूक्ष्म होता है ।।३७९-३८०।।

यह तन्त्र की साधना यात्रा है । साधक एक एक अधः भूमियों को पार करता हुआ अब वहाँ पहुँच गया है, जो अत्यन्त सुदुर्भिद भूमि मानी जाती है । इसे ब्रह्मरन्ध्र कहते हैं । यही नाद संस्थान भी माना जाता है । नाद की यहाँ विश्रान्ति होती है । इसे नादान्त पद संज्ञा से भी विभूषित कर सकते हैं ।

ब्रह्मरन्ध्र के भेदन के समय भी एक प्रकार की ध्वनि होती है । इसको शुम् शुम् के समान मानते हैं । ब्रह्मरन्ध्र को ऊर्ध्व कवाट का छिद्र कहते हैं । अत्यन्त साव-धानी पूर्वक इसका भेदन करना चाहिये । अतिशय सजगता से ही इसका भेदन किया जाना चाहिये ।।३८१।।

**भिद्यतो ब्रह्मरन्ध्रस्य शब्दः शुमशुमायते ।**

नादस्य सम्यक् स्थानं विश्रान्तिर्यत्र तन्नादसंस्थानं ब्रह्मरन्ध्रं सुदुर्भिदं नादान्तपदं तदेव च ब्रह्मरन्ध्रमूर्ध्वकवाटछिद्रं सुदुर्भिदं [1]सातिशयावधानैरेव भेत्तुं शक्यम् ।

एवं नादनादान्तस्थानं सदाशिवाधिष्ठितं भित्त्वा–

**शक्तिमध्यगतः प्राणो वंशनादान्तसन्निभः ।।३८२।।**

शक्तिभेदस्पर्शाद्वंशनादान्ततुल्यो भवति, न तु शक्तिस्थानभेदाद्वंशनादस्य मधुरध्वनिरूपस्यान्तोऽनुरणनरूपः सूक्ष्मस्तत्तुल्यो[2] भवति ॥३८२॥

अथ–

**तां वै तु भेदयेच्छक्तिं दुर्भेद्यां सर्वयोगिनाम् ।**
**भिद्यते च सदा शक्तिः शान्तः शुमशुमस्ततः ।।३८३।।**

दुर्भेदत्वं चास्याः तदनुभवाह्लादस्य स्पृहणीयतमत्वेन त्यक्तुमशक्यत्वात् शान्त इति प्रवृत्तिस्थानकरणाभिघातादेव शब्दवृत्तिः शाम्यति, इह तु शमित्वा आनन्दस्पर्शात्मतामेतीत्यर्थः ॥३८३॥

---

नाद और नादान्त के ये स्थान सदा शिवाधिष्ठित माने जाते हैं । ब्रह्मरन्ध्र को नाद संस्थान की संज्ञा से विभूषित करते ही हैं । इस स्थान का भेदन किया जा चुका है । इसके बाद प्राण, शक्ति स्थान में प्रवेश करता है । शक्ति के भेद का स्पर्श जिस समय होता है । स्वयं प्राण वंश नादान्त तुल्य स्पन्दनशील हो जाता है । शक्ति का धर्म ही स्फुरण है, स्पन्द है । यह स्पन्द भी नादान्त तुल्य ही कहा जा सकता है । यहाँ वंशनादान्त तुल्य शब्द प्रयोग से यह अर्थ भी निकलने की सम्भावना हो जाती है कि, शक्ति स्थान के भेद से वंश नाद की मधुर ध्वनि रूप अनुरणन रूप ही प्राण होता है । यह अर्थ उचित नहीं है ॥३८२॥

उस शक्ति का भेदन साधक करे, यह परमेश्वर का आदेश है । यह भी दुर्भेद्य ही मानी जाती है । सभी योगी इसका भेदन नहीं कर पाते । जिस समय इसका भेदन होता है, उस समय इससे शुमशुमायित शब्द सुनायी पड़ता है । यह अत्यन्त शान्त अवस्था होती है । भेदभिन्नता की स्थिति में उस समय परमानन्दानुभूति से साधक भर जाता है । उसमे उतना आकर्षण होता है कि, शान्ति पूर्वक विश्रान्ति का भाव ही वहाँ प्रधान हो जाता है । मानो आनन्द आत्मा को अपने आक्रोश में ले लेता है । यही वहाँ का शान्त भाव है ॥३८३॥

---

१. ख.पु. चातिशयेति पाठः । २. ख.ग.पु. सूक्ष्मतुल्य इति पाठः ।

किञ्च,

**शक्तिं भित्त्वा ततो देवि यच्छेषं व्यापिनी भवेत् ।**
**अनुभावो भवेत्तत्र स्पर्शो यद्वत्पिपीलिका ।।३८४।।**

शक्तिभेदानन्तरं यन्मन्त्रावयवरूपं वस्तु शेषमिति शिष्यमाणं तद्व्यापिनी भवेत् शक्त्यन्तसर्वाध्वव्यापनाद्व्यापिन्याख्यो मन्त्रावयवः सः । 'तच्छेषे व्यापिनी भवेत्' इति तु स्पष्टः पाठः । तत्र चानुभवः प्रशान्तशब्दव्याप्तिकत्वात् स्पर्शप्रथारूपो यद्वत्पिपीलिकेति सञ्चरन्तीनां पिपीलिकानामिवेत्यर्थः । पिपीलिका इत्यत्र नांशब्दस्य लोप ऐश्वरः ॥३८४॥

अत्रापि कलाविभागमाह-

**स्थानत्रयमिदं देवि पञ्चपञ्चकलान्वितम् ।**

तत्र नादस्थाने श्रीसदाशिवाधिष्ठिते

'इन्धिका दीपिका चैव रोचिका मोचिका तथा ।
ऊर्ध्वगा........................................॥' (स्व. १०-१२२६)

इति वक्ष्यमाणाः पञ्च कलाः, शक्तितत्त्वे व्यापिनीपदे च श्रीशिवनाथाधिष्ठिते, क्रमेण-

'सूक्ष्मा चैव सुसूक्ष्मा च तथा चैवामृतामिता ।
व्यापिनी......................................॥' (स्व. १०-१२४२)

इति पञ्च कलाः-

'व्यापिनी व्योमरूपा चानन्तानाथा त्वनाश्रिता ।' (स्व. १०-१२५२)

---

भगवान् कहते हैं कि, देवि ! शक्ति का भेदन करने के बाद अब ऊपर व्यापिनी ही शेष रह जाती हैं । शक्ति के अन्त में यह तत्त्व समस्त अध्वाओं को व्याप्त कर अवस्थित होने के कारण व्यापिनी कहलाता है । इसमें पहुँचने पर पिपीलिका स्पर्श रूप सूक्ष्म स्पर्शानुभूति होती है । शक्ति की शान्ति का महाप्रभाव यहाँ तक पहुँचता है । यह स्पर्श प्रधान अनुभाव का क्षेत्र होता है । पिपीलिका में सम्बन्ध कारक का बहुवचन न रहना ईश्वर वाक् होने के कारण निर्दोष प्रयोग ही माना जाता है ॥३८४॥

इस तरह १-नाद संस्थान, २-शक्ति संस्थान और ३-व्यापिनी रूप स्थानत्रय भी पाँच पाँच कलाओं से समन्वित होते हैं । नाद में सदाशिव देव का अधिष्ठान है । इसकी कलायें निम्नलिखित हैं—१. इन्धिका, २.दीपिका, ३.रोचिका, ४.मोचिका और ५.ऊर्ध्वगा । इनका वर्णन इसी ग्रन्थ के पटल १० के श्लोक १२२६ में आया हुआ है ।

इति पञ्चैताश्च सर्वाः स्वावसरे निर्वक्ष्यामः ।

यत एवं ततः-

**यत्र यत्र चरेत्प्राणस्तत्तद्रूपमवाप्नुयात् ।।३८५।।**

प्राणो जीवस्तत्तदनुभवं प्राप्नोतीत्यर्थः ।

तदनुभवाभ्यासप्रकर्षात् तु-

**यत्र यत्रावतिष्ठेत तां तां गतिमवाप्नुयात् ।**

तत्तदात्मैव भवतीत्यर्थः ।

एवं च-

'समनान्तं वरारोहे पाशजालमनन्तकम् ।' (स्व. ४-४३०)

इति वक्ष्यमाणमेतत्सर्वम्-

**तस्माद्वै सुप्रयत्नेन भित्त्वा याति परां गतिम् ।।३८६।।**

शोभनः प्रयत्नो दिव्यकरणधाराधिरोहरूपः ।।३८६।।

---

शक्ति और व्यापिनी में शिवाधिष्ठान शास्त्र द्वारा स्वीकृत है । इनकी कलायें भी क्रमशः इस प्रकार हैं—

१- शक्ति की कलायें—१.सूक्ष्मा, २.सुसूक्ष्मा, ३.अमृता, ४.अमिता और ५.व्यापिनी ।

२- व्यापिनी की कलायें—१.व्यापिनी, २.व्योम, ३.अनन्ता, ४.अनाथा और ५.अनाश्रिता । इन कलाओं का वर्णन भी इसी ग्रन्थ के पटल १० के श्लोक संख्या १२३९ और १२५० में आया हुआ है । यह पहले भी कहा जा चुका है कि, प्राणचार जहाँ भी होता है, जीव उसके अनुभव से अवश्य ही प्रभावित होता है ।।३८५।।

वह अर्थात् जीव जहाँ भी अवस्थित रहेगा, यह निश्चय है कि, उसी उसी अनुभवात्मक स्थिति को प्राप्त करता है । इसमें स्थान के अनुभव का प्रकर्ष ही कारण होता है । अतः उसी तादात्म्य को प्राप्त करना सरल हो जाता है । स्वच्छन्दतन्त्र के इसी पटल के श्लोक ४३० में कहा गया है कि, वरारोहे शिवे ! "समना पर्यन्त शरीर भाव में अनन्त पाश राशि का जाल बिछा हुआ है ।" अतः इन चक्रों का भेदन कर विश्वभाव को अतिक्रान्त कर लेना आवश्यक है । इस प्रक्रिया में अध्यवसाय पूर्वक लगकर वह स्थिति प्राप्त करनी चाहिये, जिससे परागति की उपलब्धि हो सके । यहाँ प्रयत्न का तात्पर्य दिव्य करण धारा के अधिरोह की उत्कर्ष प्रकर्ष प्रक्रिया को अपनाना मात्र ही है ।।३८६।।

अत्र क्रममाह–

**भित्त्वा वै व्यापिनीं देवि समनायां मनस्त्यजेत् ।**
**मनसा तु मनस्त्यक्त्वा जीवः केवलतां व्रजेत् ।।३८७।।**

मन इत्यविकल्पं चेतः । मनसेति स्पर्शपर्यन्तस्य मन्तव्यस्य क्षीणत्वाद् अविकल्पमननमात्ररूपेण चित्तेनैव[१] तादृशमेव च मन एकाग्रताप्रकर्षात् त्यक्त्वा वेद्याभासजिघृक्षासंकोचरूपं स्वं वेदनं प्रशमय्य जीव आत्मा केवलत्वमेति शुद्धो वेदितृमात्ररूपो भवतींत्यर्थः ॥३८७॥

एवं भेदनं च पदार्थानां भावप्राप्तिवशादित्युपक्रान्तं निर्वाह्य क्रमप्राप्तामात्मव्याप्तिमाह–

**जीवो वै केवलस्तत्र आत्मज्ञानक्रियान्वितः ।**
**बन्धनाशेषनिर्मुक्तः सत्तामात्रस्वरूपकः ।।३८८।।**
**समस्ताध्वपदातीतः शुद्धविज्ञानकेवलः ।**
**गृहणाति नापरं भावं न परं च शिवात्मकम् ।।३८९।।**

---

व्यापिनी का भेदन कर समना में अपने मन को डुबा देना चाहिये । मन से ही मन का परित्याग करने से जीव कैवल्य प्राप्त कर लेता है । यहाँ आचार्य क्षेमराज ने मन का अर्थ अविकल्प चेतस किया है । यह एक विचारणीय बिन्दु है ।

मन इन्द्रियार्थों में विचरण करता है । इन्द्रियार्थ वैकल्पिक होते हैं । रूप, रस, गन्ध और स्पर्श तक तो विकल्प भाव उच्छलित होते ही रहते हैं । इनको पार कर लेने पर अर्थात् उक्त विकल्पों के क्षीण हो जाने पर अविकल्पमय मनन योगियों के लिये सम्भव है । मन निर्विकल्प भाव भावित हो जाय और वही मन अपना परित्याग कर दे, यह एक विलक्षण निर्विकल्पात्मिका प्रकल्पना है । ऐसा योगी को करना पड़ता है । अथवा उक्त प्रकार के दिव्य करणात्मक ऊहापोहों में व्यापृत रहने पर इस प्रकार की सांस्कारिकता का उदय गुरुकृपा से भी सम्भव है ।

इस उच्च स्तर पर पहुँचने पर एक दिव्य एकाग्रता का महाभाव उत्पन्न होना योगी साधक के सौभाग्य का विषय है । वहाँ मन अपने आप विसर्जित हो जाता है । इसे ही आप मन से मन का परित्याग समझ सकते हैं ।

वेद्याभास के ग्रहण होने का भाव वहाँ संकुचित हो जाता है । स्वात्म संवेदन का प्रशमन हो जाता है । उस समय जीवात्मा केवलत्व को प्राप्त कर लेता है । शुद्ध अनुमन्ता प्रमाता भाव से भरित हो रहता है ॥३८७॥

---

१. ख.पु. चिन्तनेनेति पाठः ।

# योगपादः

एकाकिनस्तु शान्तस्य यतचित्तविरागिणः ।
युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।। २४१ ।।

युक्तस्वप्नावबोधस्य तत्त्वतः शृणु षण्मुख ।
यो ध्याता यच्च तद् ध्यानं तद्वै ध्यानप्रयोजनम् ।। २४२ ।।

सर्वाण्येतानि यो वेत्ति स योगं योक्तुमर्हति ।
आत्मा ध्याता मनो ध्यानं ध्येयः सूक्ष्मो महेश्वरः ।। २४३।।

यत् परात् परमैश्वर्यमेतद्ध्यानप्रयोजनम् ।
मानापानौ समं भुक्त्वा सुखदुःखे समे तथा ।। २४४ ।।

हर्षं भयं विषादं च संत्यज्य योगमभ्यसेत् ।
शून्यागारे वने रम्ये देवतायतने शुभे ।। २४५ ।।

नदीतीरे विविक्ते वा गृहे घोरवनेऽपि वा ।
प्रच्छन्ने च विविक्ते च निःशब्दे जनवर्जिते ।। २४६।।

गुणदोषविनिर्मुक्ते निर्विकल्पे निरातपे ।
स्नात्वा शुचिरुपस्थाप्य प्रणम्य शिरसा शिवम् ।। २४७ ।।

योगाचार्यं नमस्कृत्य योगं युञ्जीत मानवः ।
पद्मकं स्वस्तिकं वापि उपस्थाप्याञ्जलिं तथा ।। २४८ ।।

पीठार्थमर्धचन्द्रं वा सर्वतोभद्रमेव वा ।
आसनं रुचिरं बध्वा ऊर्ध्वकायः समं शिरः ।। २४९ ।।

सर्वसङ्गान् परित्यज्य आत्मसंस्थं मनो गुह ।
न दन्तैः संस्पृशेद् दन्तान् सृक्विर्णी च न जिह्वया ।। २५० ।।

किंचिदञ्चितनेत्रस्थं शिवं सम्यक् तदोच्चरेत् ।
संभावयति तत्त्वानि तन्मात्राद्यानि देहिनाम् ।। २५१ ।।

पुनर्विनाशयत्येव अस्त्रयुक्तः षडानन ।
न पृथक् हृदयं तस्य न शिरो न शिखा गुह ।। २५२ ।।

वर्मास्त्रनेत्रसहितं तस्मादेव प्रवर्तते ।
प्राणापानौ स (मे) कृत्वा सुषुम्नान्तरचारिणौ ।। २५३ ।।

तपोवृत्तिविशुद्धात्मा शिवं ध्यायेद् विचक्षणः ।
अविनाभावसंयुक्तः ज्योतीरूपं सुनिर्मलम् ।। २५४ ।।

सुसूक्ष्मं व्यापकं नित्यं निर्विकल्पं सदा बुधः ।
उत्तमा मध्यमाधमाः सगर्भास्त्रिविधा स्मृताः ।। २५५ ।।

प्राणायामांश्च तान् सर्वान् पूरककुम्भकरेचकान् ।
प्राणायामैर्दहेद् दोषान् धारणाभिस्तु किल्बिषम् ।। २५६ ।।

प्रत्याहारेण संत्यज्य ध्यानेनानीश्वरान् गुणान् ।
उदरं पूरयित्वा तु वायुना यावदीप्सितम् ।। २५७ ।।

प्राणायामो भवेदेष पूरको देहपूरकः ।
पिधाय सर्वद्वाराणि निःश्वासोच्छ्वासवर्जितः ॥ २५८ ॥

संपूर्णकुम्भवत् तिष्ठेत् प्राणायामः सकुम्भकः ।
ततोर्ध्वं रेचयेत् वायुं मृदुनिःश्वाससंयुतम् ॥ २५९ ॥

रेचकस्त्वेष विख्यातः प्राणसंशयकारकः ।
अभिव्यक्तानि जानीयात् स्वधर्मगुणलक्षणात् ॥ २६० ॥

विद्यां कलां ततः कालं मायां विद्यां ततः परम् ।
दृष्ट्वा तु क्रमशः सर्वान् पुनरस्त्रेण भेदयेत् ॥ २६१ ॥

विद्येश्वरं ततस्तत्त्वं तया सादाशिवं परम् ।
हित्वाकृष्टानि चास्त्रेण ततः सूक्ष्मं शिवं विशेत् ॥ २६२ ॥

अमृतात्मा शिवः साक्षात् तस्मिन् विष्टस्तु योगवित् ।
सर्वज्ञः सर्वगः सूक्ष्मः सर्वेशः सर्वकृद् भवेत् ॥ २६३ ॥

सर्वेष्वपि हि शास्त्रेषु ज्ञेयं वस्तुचतुष्टयम् ।
पशुः पाशः पतिश्चैव शिवं चेति यथाक्रमम् ॥ २६४ ॥

ज्ञात्वा तु तत्त्वसद्भावं तत्र सारं तु दुर्लभम् ।
सर्वथा वर्तमानोऽपि गृह्णाति न पुनस्तनुम् ॥ २६५ ॥

इति सर्वज्ञानोत्तरागमे योगपादः समाप्तः

मन्त्ररूपमिदमीरितं मया सर्वथा गुरुमुखेन लभ्यते ।
गुर्वनुग्रहमृते महीतले मन्त्र एष न हि सिद्धिदायकः ॥ ३९ ॥

इति श्रीनागभट्टविरचिते त्रिपुरासारसमुच्चये
द्वितीयः पटलः ॥

# तृतीयः पटलः

अथेदं शरीरं स्वकीयाङ्गुलीभिर्बुधैः षणवत्यङ्गुलायाममुक्तम् ।
दिनेशाङ्गुलीभिः शरीरात् समीरोऽधिकः प्राणसंज्ञो मतो योगविद्भिः १
इह प्राणवायुं सदाभ्यासतो यो नरो न्यूनभावं नयत्येनमङ्गात् ।
समत्वं शरीरेण वा भूतलेऽस्मिन् स पूज्यो बुधैरुत्तमो योगवित्सु २

---

न्यासेषु दीपनीयोगमाह विद्येति । विद्यान्यासषडङ्गन्यासवदनन्यासेषु योजनीयेति । एवं कृते विद्या प्रबुद्धा भवति । एवं प्रकारेण मूलविद्या मन्त्रस्याङ्गं स्वशरीरे न्यसतः पुंसः लोकत्रयं वशमेति पापानि शाम्यन्ति सद्यः सह ॥ ३८ ॥

इदं मायामन्त्रस्वरूपं कथितं गुरुणा वा यदि लभ्यते तदा परं सिध्यति अन्यथा गुरुप्रसादमन्तरेण एष मन्त्रो न सिध्यतीति ॥ ३९ ॥

इति त्रिपुरासारसमुच्चयटीकायां द्वितीयः पटलः ।

एवं साधकानां सकलपुरुषार्थसारभूतं मन्त्रस्वरूपमुक्त्वा पुरुषार्थान्तराय परिहाराय योगाङ्गभूतप्राणायामप्रकारान् तद्विषांश्च वक्तुमुपक्रमते अथेदं शरीरमित्यादिना । इदं शरीरं पण्डितैः षडधिकनवत्यंगुलदैर्घ्यम् उक्तं अस्य शरीरस्य परिमाणं तस्यैवांगुलिमानेन । प्राणसंज्ञकोवायुः शरीराग्निर्गमस्थानाद्द्वादशांगुलीभिरधिको मतः द्वादशांगुलपर्यन्तं सञ्चरति ॥१॥

इहेति । इह भुवि यो नरः सदाभ्यासतः सदाभ्यासेन एनं प्राणवायुं शरीरान्न्यूनभावं सकलाङ्गव्यापकत्वं नयति । शरीरेण समाङ्गत्वं तौल्यं वा

चतुर्दशात्रापघने प्रधाना नाड्यः स्मृतास्तास्वपि तिस्र एव ।
इडा सुषुम्नापि च पिङ्गलाख्या मुख्या सुषुम्नैव च तासु नाडी ॥३॥
इडा नाम नाडी स्थिता वामभागे तनोर्दक्षिणे पिङ्गला नाम नाडी ।
तयोः पृष्ठवंशं समाश्रित्य मध्ये सुषुम्ना स्थिता ब्रह्मरन्ध्रन्तु याश्च ४
सुषुम्नान्तराले स्थिता चित्रनाडी युता पञ्चवर्णोज्ज्वला पञ्चदेवैः ।
तदन्तर्गतं ब्रह्मरन्ध्रं सुसूक्ष्मम मृणालान्तरालोल्लसत्तन्तुतुल्यम् ॥५

---

आसनाङ्गव्यापकत्वं वा करोति स योगवतां मध्येऽस्मिन् भूतले पूज्यते इति ॥ २ ॥

प्राणाश्रयभूता नाडीर्दर्शयति चतुर्दशेति । तदुक्तं नाडीनामाश्रयः पिण्डो नाड्यः प्राणस्य आश्रय इति । अस्मिन् शरीरे चतुर्दश नाड्यः प्रधानीभूताः सन्ति अपि चतुर्दशसु मध्ये चतस्रः प्रधानाः स्मृताः ॥ ३ ॥

तासां तिसृणां कथयति । इडेति इडा पिङ्गला सुषुम्ना चेति तास्वपि तिसृषु मध्ये सुषुम्नैव प्रधानीभूता । चतुर्दशनाडीनां नामानि यथा । इडा च पिङ्गला चैव सुषुम्ना च सरस्वती । गान्धारी हस्तिजिह्वा च पूषा च यशस्विनी ॥ अलम्बुषा कुहूश्चैव शङ्खिनी चित्रिणी तथा । विश्वोदरी विश्वमुखी व्याप्ता ह्येता चतुर्दश ॥ एतास्वपि तिस्रो मुख्याः यास्वपि योगः प्रतिष्ठितः तास्वपि सुषुम्नैव मुख्या सा च द्वादशान्तं पृष्ठवंशं समाश्रित्य सकलाधारत्वेनाधोमुखी ऋजुभूतातिष्ठति । आधारो नाम पद्मस्थानात् द्व्यंगुलादूर्ध्वं मेढ्राद्द्व्यंगुलादधोभागे चतुरंगुलायामविस्तारं अंगुलोन्नतं त्वगादिधातुभिर्वेष्टितं चतुर्दलात्मकं पण्डराकारं पद्मं तत्कर्णिकामध्ये त्रिकोणायोनिः तन्मध्ये सकलप्रपञ्चनिमित्तोपादानभूता कुण्डल्याख्या चिन्मयी शक्तिः त्रिगुणितादिरूपेण सूर्येन्दु वैश्वानराणां मूलभूता भ्रमति या त्रिकोणमुत्थिता सुषुम्ना नाम नाड़ी वीणादण्डाख्यपृष्ठवंशस्य पुरोभागमवलम्ब्य ब्रह्मरन्ध्रपर्यन्तम् ऊर्ध्वाकारा तिष्ठति । तथात्र तन्त्रचूड़ामणिः । मेरुदण्डे वहिः पार्श्वे चन्द्रसूर्यातिमस्तके । किम्वा मध्ये-- सुषुम्ना सन्निविष्टा च तन्मध्ये चित्ररूपिणी । तत्रैव ग्रथितं पद्मं मूलादिपद्म-

**ब्रह्मसूत्रमिदमेव देहिनां जीवभूतममृतैककारणम् ।**
**यद्वदन्ति मुनयः पुरातना दिव्यमार्ग इति भव्यचेतसः ॥ ६ ॥**

---

पञ्चकम् । कलिकाकाररूपेण डाकिन्याद्यावलम्बितम् । मूलद्वारं समाच्छाद्य स्थिता नागस्वरूपिणी । वायुना भिद्यते मुक्तं दृढं चित्रा नयेत्ततः । तच्छ्वासोज्वलकामस्य शिखयाऽतिसमुज्ज्वला । प्रतिचक्रप्रबुद्धा सा जीवात्मानं परे कुले । नियोजयति तद्योगादमृतं क्षरते चिरम् । व्योम प्रोद्भिद्य नासाग्रे गतौ चन्द्रदिवाकरौ । अधोचक्रं महापद्मं क्रोडीकृत्य सुषुम्नया । व्यावृत्य नासिकामध्यं गतं चित्रा तु तद्गता । ऊर्ध्वं भित्त्वा तु लिङ्गं वै इतरान् पुष्करान् ततः । वहीरुद्धमनाकांक्षाकांक्षिणी मोक्षदायिनी । जीवनांहृष्टसम्बद्धा स्थिरा परमसन्निधौ एतद्भेदं विजानाति भित्त्वा याति परं पदम् । इत्यादि वहुशः । योगार्णवेऽपि । सुरशृङ्गाटपार्श्वेन तेजैव सव्यतः क्रमात् सूर्याचन्द्रमसौ नाड्यो गते नासाद्वयावधि । तन्मध्ये द्वितीयं भित्त्वा सुषुम्ना पद्मकोटरे । ब्रह्मरन्ध्रावधिर्याता भित्त्वा व्योम सुरालयम् । सुखेनाच्छाद्य तद्वारं कुण्डलीशक्तिरुज्ज्वला । निद्रावशगता देवी प्रसुप्तभुजगोपमा । तत्त्रिकोणस्थ वामदक्षिणकोणयोः सम्भूते सुषुम्नाया वामदक्षिणभागे इडापिङ्गले स्थिते । तयोर्मध्ये इडा नाम नाडी चापाकृतिर्भूत्वा लिङ्गमूलस्थाने सुषुम्नामाश्लिष्य दक्षिणभागं गता तदाकारां पुनरपि नाभिस्थाने वामभागं गता । तदा पुनरपि हृदयस्थानमाश्लिष्य दक्षिणभागं गता । तदा करौ पुनरपि जानुमूलमाश्लिष्य वामनासापुटं गच्छति । एवं दक्षिणभागसम्भूता पिङ्गला सुषुम्नामाश्लिष्य दक्षिणनासाविवरं गच्छति । सुषुम्नामूलपुरोभागादुत्थिता आजिह्वान्तं सरस्वती नाम नाडी स्थिता । केचित्तु त्रयं वर्णतति । एताः सुषुम्नास्तिस्रश्च यासु योगः प्रतिष्ठितः । ताश्च नासापुटद्वन्द्वब्रह्मरन्ध्रविनिर्गताः । सरस्वत्यादिचत्वारो मुखरन्ध्रविनिर्गताः । तास्वेका शब्दजननी अन्या स्वरसवाहिनी । अपरा रसनाधारा परा तोयवहा शिवा । अन्याः षट्नेत्रकर्माङ्गमेदोद्वारविनिर्गताः । शङ्खिनी नाभिसम्बन्धा या मांतुर्हृदि रुध्यते । यया

इडायां चरत्येषं शीतांशुमाली
अतो वामभागेऽमृतं सम्प्रदिष्टम् ।
रविः पिङ्गलायां चरत्येव तस्माद्
विषं दक्षिणो भाग उक्तो मुनीन्द्रैः ॥ ७ ॥

जानीयादुदयं बुधः स्वजठरे कन्देऽशरीरे नृणाम्
घ्राणात्तिग्मकराङ्गुले खलु लयं सन्ध्ये च पूर्वापरे ।
उत्पत्तिश्च लयश्च सन्ततमधोवृत्तिं निशां वासरम्
चोर्ध्वां वृत्तिमधस्तथा हिमकरं चोर्ध्वां दिनेशं गतिम् ॥८॥

---

गर्भगतः पिण्डः पुष्यतेऽन्नरसादिभिः । एताभ्य एवं नाडीभ्यः शाखोपशाख-प्रकारेण सार्द्धलक्षत्रयसंख्यानां नाडीनां सम्भवः । कुत्र का नाडी तिष्ठति इति शिष्याकांक्षायमाह इडेति शरीरस्य वामांशमाश्रित्य इडा नाम नाडी दक्षिणभागं पिङ्गला तयोर्नाड्योर्मध्ये देहस्य पृष्ठवंशमाश्रित्य ब्रह्मरन्ध्रपर्यन्तं सुषुम्ना अवस्थितेति । सुषुम्नाया अभ्यन्तरे चित्रा नाडी स्थिता पञ्चभिर्वर्णैः श्वेतरक्तादिभिरुज्ज्वला पञ्चभिर्देवैर्ब्रह्माविष्णुरुद्रेश्वरसदाशिवैः संयुक्ता । तदुक्तम् । ब्रह्मा जनार्दनो रुद्र ईश्वरश्च सदाशिवः चित्राख्यनाड्यन्तःस्थाश्च पञ्चभूताधिदेवताः ॥ ४-५ ॥

ब्रह्मेति । इदमेव ब्रह्मसूत्रं शरीरिणां प्राणभृतां जीवभूतम् अमृतै-ककारणम् अस्मिन्नेव ज्ञायते मरणं न चरतीत्यर्थः । यद्ब्रह्मसूत्रं प्राचीनां मुनयो दिव्यमार्ग इति कथयन्ति निर्वाणोपयोगी स एव मार्ग इत्यर्थः ॥ ६ ॥

इडायामिति । एष शिशिरकिरणो वामे इडासंज्ञायां नाड्यां चरति तेन वामभागेऽमृतमुक्तं पिङ्गला वामादिभ्यश्चरति सा च दक्षिणभागमाश्रितेति स भागो विषसंज्ञकः आदित्यस्य खेचरत्वात् वायुनियमेन सिध्यतीति ॥ ७ ॥

तस्योत्पत्तिविनाशज्ञानमाह जानीयादिति । बुधः अशरीरे वायोर्नृणां कन्दे मूलभूते आधारे चक्रे उदयम् उद्भवं जानीयात् । तथा आधारचक्रे

तुषारांशुनाडी प्रपन्ने तु देवे तदा शान्तिकादीनि कर्माणि कुर्यात् ।
बुधो रौद्रकर्माणि मार्त्तण्डनाडीमुखे मिश्रकर्माणि नाड्यौ प्रपन्ने ॥ ९ ॥
भूतानमुदयं द्वयोरपि बुधः संलक्षयेत् पक्षयो-
स्तत्राद्यो वसुधोदयं निशितधीर्घ्राणस्य दण्डस्पृशि ।
देवेऽधःस्पृशि वारिणो हुतवहस्योर्ध्वं गते तूक्देयम्
तिर्यक्संस्पृशि मारुतस्य परितः स्पृष्टे मरुद्वत्मनः ॥ १० ॥
वश्यस्तम्भनयोः प्रशस्त उदयो भूमेर्जलस्योदयः
शस्तः शान्तिकपौष्टिकादिषु शुभेष्वह्नाय वह्नेः पुनः ।
शत्रोर्मारणदारणादिकरणेषूच्चाटनोच्छासयोर्वायोः
शान्तिकनिर्विषीकरणयोर्व्योम्नो हितश्चोदयः ॥ ११ ॥

---

गुदोपरिलिङ्गाधःस्थिते वायुरुत्तिष्ठति घ्राणाद्बहिर्द्वादशांगुले विनश्यतीत्यर्थः । तदेव स्थानद्वयं पूर्वापरे सन्ध्ये कन्दात् पूर्वसंख्या घ्राणे द्वादशांगुलं वहिर्यांति । पश्चादेतीति स्थानद्वयम् उत्पत्ति लयं विनाशं च ते एव ज्ञातव्ये । आधारेति । वायोरधोगमनं निशां जानीयात् ऊर्ध्वंगमनं वासरं दिवसं जानीयात् । उक्तं हि अहरेव प्राणो रात्रिरपान इति तथाधोवृत्ति चन्द्रं जानीयात् ऊर्ध्वं गमनमिति । अतएव योगार्णवे वर्षेत्यधोमुखश्चन्द्रः शोषेत्यूर्ध्वंमुखोरविरिति ॥ ८ ॥

केन वायौ कानि कर्माणि कर्त्तव्यानीत्याह तुषारांशुनाडीमिति तुषारांशुनाडीं इडां गते वायौ शान्तिजनकानि कर्माणि कुर्यात् । सूर्यनाडीं पिङ्गलां गते रात्रौ रौद्राणि दारुणानि कर्माणि कुर्यात् । चन्द्रमसः शीतलांशुत्वात् सूर्यस्य खरकरत्वादिति भावः । उभयनाडीस्थे वायौ शशिकानि रौद्राणि च कर्माणि कुर्यात् ॥ ९ ॥

भूतानामिति । द्वयोरपि पक्षयोः शुक्लकृष्णायोर्भूतानां पृथिव्यप्तेजोवाय्वाकाशानाम् उद्भयं सलक्षयेत् अवधारयेत् । तत्र भूतेषु मध्ये पृथिव्या उदयं घ्राणमध्यदण्डते वायौ यदा प्रशस्यते दण्डाकारगतिर्भवति तदा

धरणेरुदयो गदार्दितानाम्
यदि दूतः समुपेत्य पृच्छतीह ।
सहसा नहि रोगजा प्रबाधा
प्रशमं याति चिकित्सितापि सम्यक् ॥ १२ ॥

जलोदये व्याधिरुपैति शान्तिं मृत्युर्भवत्येव वसूदये च ।
तथोदये चापि समीरणस्य व्योम्नोऽचिरेणैव रुजां विनाशः ॥१३॥

देवे दक्षिणभागगेऽथ पुरुषो रोगातुरो दक्षिणे
स्थित्वा पृच्छति पृच्छकः स पुरुषो जीवत्यरोगश्चिरम् ।
वामायां तु रुजाकुलीकृततनौ वामाश्रिते चेश्वरे
वामा पृच्छति चेत् स्थिता गतगदा वामाचिरं जीवति ॥ १४ ॥

---

भूमेरुदयं जानीयात् । देवे वायौ अधःस्पृशि सति वारिणो जलस्य उदयं जानीयात् ऊर्ध्वं गते वायौ हुतवहस्याग्नेरुदयं जानीयात् । तिर्यक् पार्श्वद्वयं संस्पृशि वायोरुदयं जानीयात् । समस्तनासारन्ध्रे व्यापके वायौ वहति सति मरुद्वर्त्मन आकाशस्य उदयं जानीयात् ॥ १० ॥

एतज्ज्ञानफलमाह वश्येति । भूमेरुदये वश्यजनकं स्तम्भजनकञ्च कर्म कुर्यात् । जलभूतस्योदये सति शान्तिजनकं तुष्टिजनकञ्च कर्म कुर्यात् । झटिति स तु मारणादिजनके कर्मणि वह्नेरुदयः प्रशस्तः । शत्रोर्देशोन्मूलने नगरोच्छेदे च वायोरुदयः प्रशस्तः । निर्विषीकरणसान्त्वने च आकाशस्योदयः प्रशस्तः ॥ ११ ॥

प्रश्नमाह धरणेरिति । पृथिव्या उदये सति नैरुज्यममुकस्य भविष्यति दूत आगत्य पृच्छति तदा रोगजा पीडा सद्यः कृतप्रतिक्रियापि हठेन शान्तिं नयतीति वक्तव्यमित्यर्थः । जलस्योदये सति यदि पृच्छति तदा व्याधिः शान्तिं याति । वसूदयेऽग्नेरुदये यदि पृच्छति तदा रोगार्त्तस्य मृत्युर्भवति । वसुहुताशनमिति विश्वः । वायोरुदये यदि पृच्छति तदा मृत्यु-

देवे गते पृच्छति वामभागं स्थित्वा नरो दक्षिणतो यदीह ।
व्यत्यासतोऽस्मादपि कृच्छ्रसाध्यं वदन्ति सन्तः खलु रोगजातम् १५
अन्तर्गते पृच्छति पृच्छकश्चेद्देवे नरो जीवति वीतरोगः ।
तेनैव रोगेण बहिर्गतेऽस्मिन् परेतराजस्य पुरं प्रयाति ॥१६॥
सर्वेषु कार्येषु यदीश्वरेऽस्मिन् अन्तर्गते वाञ्छितसिद्धयः स्युः ।
बहिर्गतेऽमङ्गलमीश्वरेऽपि शुभाशुभं कर्मफलं तु विद्यात् ॥१७॥
आरभ्य दर्शप्रथमामुदेति वामे पुटे त्रीणि दिनानि देवः ।
वामेतरे त्रीणि ततो दिनानि पूर्णा तिथिर्यावदथैवमेव ॥१८॥
अथारभ्य शुक्लान्यपक्षादिभूताम् तिथिं त्रीणि देवो दिनान्यभ्युदेति ।
पुटे दक्षिणे त्रीणि वामे तु यावत् कुहूरेवमेवं समालक्षयेन्ना ॥१९॥

---

रित्यर्थः । आकाशोदये यदि आगत्य पृच्छति तदा त्वरयैव रोगाणा विनाशो भवति ॥ १२-१४ ॥

प्रकारान्तरमाह । देवे वायौ दक्षिणां सङ्गते सति तत्रैव स्थित्वा दूतो यदि पृच्छति तदा रोगार्त्तो जनो नीरोगः सन् बहुशतत्रयं जीवति । स्त्रियां रोगगतायां वामभागगतो वायुर्भवति तत्राश्रितो दूतः पृच्छति तदानीं रोगात् सा चिरं जीवति इति ॥ १५ ॥

देव इति । वामप्रदेशं गते वायौ दक्षिणांशं गत्वा दूतो यदि पृच्छति तदा कष्टसाध्यं नैरुज्यं वक्तव्यम् । दक्षिणगे वायौ वामभागगः पृच्छति तदा कष्टसाध्यं नैरुज्यं वदेत् । अन्तर्गत इति । अभ्यन्तरं गते वायौ यदि पृच्छकः पृच्छति तदा नीरोगी जीवति । घ्राणाद्बहिर्द्वादशांगुलाद्बहिर्गते वायौ यदि पृच्छति तदा तेनैव रोगेण यमालयं रोगी यातीति । कार्यान्तरे तत् प्रयोजनं कथयति । यदीश्वरे वायौ अन्तर्गते अत कार्ये आकांक्षितसिद्धिर्भवति बहिर्गते द्वादशांगुलादधिकं गते सर्वकार्याणि नश्यन्तीति । कति दिनानि कुत्र तिष्ठतीति कथयति ॥ १६-१७ ॥

एकस्य पक्षस्य विपर्ययेण रोगाभिभूतिर्भवतीह पुंसाम् ।
तयोर्द्वयोर्बन्धुसुहृद्विपत्तिः पक्षत्रये व्यत्ययतो मृतिः स्यात् ॥२०॥

यदात्मनः कालवशात् समीरणो
विपर्युदेति प्रकृतिं विहाय सः ।
तदा निरुध्य श्वसनं निपीड़येद्
यथा स्थितं पक्षमुपैति चात्मनः ॥ २१ ॥

द्वावेव धत्तः सकलञ्च कालं दिवाकरः कैरवबान्धवश्च ।
भोक्त्री सुषुम्ना सकलस्य चास्य कालस्य दोषादिवसात्मकस्य २२

---

आरभ्येति । दर्श एव प्रथमा तिथिर्यस्याः प्रतिपदः सा दर्शप्रथमा प्रतिपत् तेन शुक्लप्रतिपदादितिथित्रये वामे चतुर्थ्यादि दक्षिणे सप्तम्यादि वामे दशम्यादि दक्षिणे त्रयोदश्यादि वामे कृष्णप्रतिपदादि दक्षिणे चतुर्थ्यादि वामे सप्तम्यादि दक्षिणे दशम्यादि वामे त्रयोदश्यादि दक्षिणे। अथेत्यनन्तरं शुक्लान्यपक्षादिभूतां कृष्णप्रतिपत्तिथिमुपक्रम्य त्रीणि दिनानि दक्षिणभागे वायुरुदेतीत्यादिसंख्या उक्ता एवं ना पुरुष उदरं लक्षयेत् ॥ १८-१९ ॥

एकस्येति यद्येकत्र पक्षे वायोर्वैपरीत्यं भवति तदा तस्य पुरुषस्य रोगजनितोऽभिभवो भवति। शुक्लप्रतिपदादिनित्रयं यावद्वायुर्वामपुटे सञ्चरति तत्र यदि दक्षिणपुटे भवति एवं पंचदशदिनपर्यन्त यदि व्यत्ययो भवति तदा रोगाभिभूतिर्भवति मासमात्रं वैपरीत्येन सुहृदां विपत्तिः पंचचत्वारिंशद्दिनानि यावद्व्यत्ययो तस्य पुरुषस्य मरणं भवतीति वायोर्वैपरीत्ये रोगादिकं भवतीति स्वाभाविकी गतिः ॥ २० ॥

विपरीतोदये शुभोदयः कथं स्यादित्याह यदेति । स्वकीयादृष्टवशाद्वायुर्वैपरीत्ये उदेति तदादिबोधं कृत्वा श्वासं पीडयेत् यथा पुटान्तरं गच्छति ॥ २१ ॥

द्वावेवेति । कुमुदबन्धुश्चन्द्रः सूर्यश्चासौ सकलं कालं धत्तः दिवारात्रिरसात्मकस्य रात्रिन्दिवोपलक्षितस्य कालस्य भोक्त्री भक्षिका सुषुम्ना परं

ततः क्रमेणैव विशुद्धनाडीपथान्तरः प्राणसमीरणस्य ।
शनैः शनैः संयमने प्रयत्नं यथाविधानं विदधीत धीरः ॥२३॥
शीतांशुमार्गेण शनैः समीरमापूरयेत् स्वोदरमादरेण ।
विकारमात्राभिरपेततन्द्रः कालाग्निमूलार्पितचित्तवृत्तिः ॥२४॥
ततो धारयेन्मारुतं शुद्धचेताश्चतुः षष्टिमात्राः समापूरितं तम् ।
बहिर्भास्वता रेचयेन्मन्दमेनं तदर्द्धाभिरन्तर्निरुद्धं तु ताभिः ॥ २५ ॥
विपरीतमतो विदधीत बुधः पुनरप्यथ तद्विपरीतमिति ।
अमुना विधिना सुमनाः सततं मरुतो विदधीत सुसंयमनम् ॥२६॥
प्रस्वेदं जनयति यः प्राणायामेषु सोऽधमः प्रोक्तः
कल्पोमध्यः पुंसां भूमित्यागं तनोस्तनोति परः ॥ २७ ॥

---

मान्या नाडीभोक्तृत्वं नाम चित्कलासमवेतस्य तस्योपाधितया रूपत्वमापाद्य सर्वस्वाभिभावकत्वमित्यर्थः ॥ २२ ॥

तत इति । सुषुम्नैव मोक्त्री तदा क्रमेण विशोधितनाडीमार्गान्तरः सन् प्राणवायोः शनैः शनैः संयमने नियमे प्रयत्नं यथा कथितप्रकारेण कुर्वीत ॥ २३ ॥

तमेव प्रकारं कथयति शीतांशुमार्ग इति । शीतांशोश्चन्द्रस्य वर्त्मना वामनाड्या वायुभिः स्वकीयमुदरं विकारमात्रया षोडशमात्रया पूरयेत् । अपेता तन्द्रा निद्रा यस्य सः कालाग्निमूलाग्निमूलार्पितचित्तवृत्तिः । कालाग्निमूले मूलाधारेऽर्पिता चित्तवृत्तिर्व्यापारो येन ॥ २४ ॥

तत इति । पूरितं वायुं चतुष्षष्टिमात्रापर्यन्तं धारयेत् तस्य गतागतं विरोधयेत् भास्वता सूर्यमार्गेण दक्षिणया शनैस्तदर्द्धाभिर्द्वात्रिंशन्मात्राभिरभ्यन्तरे निरुद्धं तं वायुं रेचयेत् त्यजेत् ॥ २५ ॥

विपरीतमिति । अतः प्रकृताद्विपरीतं विदधीत कुर्यात् । पुनरपि तद्विपरीतं प्रकृतक्रमेणादिकं पुनरपि तद्विपरीतम् एवमभ्यसेत् अमुना प्रकारेण मरुतो वायोर्नियमं न कुर्यात ॥ २६ ॥

तावद्विदधीत बुधः प्राणायामं समाहितो विधिवत् ।
यावत् सम्भवति भुवि प्राणायामस्योत्तमस्य गुणः ॥ २८ ॥

अयं प्राणायामः सकलदुरितध्वंसनकरो
विगर्भः प्रोक्तोऽसौ शतगुणफलो गर्भकलितः ।
जपध्यानापेतः स तु निगदितो गर्वरहितः
स गर्भस्तून्मुक्तो मुनिपरिवृतैर्योगनिरतैः ॥ २९ ॥

शुचिः प्राणायामान् प्रणवसहितान् षोडश वशी
प्रभाते सायञ्च प्रतिदिवसमेवं वितनुते ।
द्विजो यस्तं भ्रूणप्रहरणकृतांहोऽभिकलितम्
पुनन्त्येते मासादिह दुरिततूलौघदहनाः ॥ ३० ॥

त्रायन्त्यमी षड्भिरपीह मासैर्जन्मान्तरोपार्जितपापपुञ्जान् ।
संवत्सराद्ब्रह्मपदं तदेकं प्रकाशयन्त्येव यदच्युताख्यम् ॥३१॥
इह रेचकपूरकौ विहाय स्थिरधीः कुम्भकमेव केवलं यः ।
सततं कुरुते मनोजवत्वं लभते वीतजरामयः स मर्त्यः ॥३२॥
न हि तस्य सुदुर्लभं त्रिलोक्यामिह यः केवलं कुम्भके निषण्णः ।
अणिमादिगुणाष्टकं करस्थम् ननु तस्यैव निरस्तमृत्यु भीतेः ॥३३॥
राजदन्तयुगलादिमस्पृशन् सन्निधाप्य रसनां तदन्तिके ।
काकचंचुपुटमारुतं पिबेत् प्राणसंयमनमेतदुत्तमम् ॥ ३४ ॥

---

प्रस्वेदमिति । अयं सुगमः ॥ २७-२८ ॥

अयमिति । गर्भो गर्भशून्यः प्राणायाम उक्तः सन् सकलदुरितानि विनाशयति गर्भेण सहितोऽयं शतगुणफलसहितः कथितः विगर्भापेक्षया को विगर्भः कः सगर्भः इत्याकांक्षायामाह जपेति । जपैर्ध्यानैश्च शून्यो यः गर्भरहितः ताभ्यां युक्तो यः सगर्भः कथितः ॥ २९ ॥

शुचिरित्यादि । चतुष्टयं सुगमम् ॥ ३०-३३ ॥

द्विकचंचुसमीरकं शनर्धयतः सम्परिकृत्य सन्ध्ययोः ।
श्रमदाहगरोदरामयज्वरगुल्माः प्रशमं प्रयान्ति च ।। ३५ ॥
उभयोरपि सन्ध्ययोर्मुहूर्त्ते पिकधातुर्धयतस्त्रिमासमात्रम् ।
सरसं द्विकचंचुगन्धवाहं भुवि सारस्वतसिद्धिरुत्तमा स्यात् ॥३६॥
विषमुग्रमुदग्रवीर्यभाजां प्रविनाशं समुपैति पन्नगानाम् ।
किमु वृश्चिककीटलूतकानामिह काकोलमुखानिलस्य पानात् ॥३७॥
द्विकचंचुसमीररगं नरः सरसं यः परिकृष्य सन्ध्ययोः
कुरुते निजकुण्डलीमुखे क्षयरोगं स विमुच्य जीवति ।। ३८ ॥
द्विकचंचुसमीरणं नरो यः पिवतीहानिशमेव वीततन्त्रः ।
भवति ध्रुवमेव तस्य वर्षाच्छ्रवणं दर्शनमप्यतीव दूरात् ॥ ३९ ॥
बहुधा कथितेर्मुहुः किमेभिर्द्विकचञ्चवा तु समीरणस्य पानात् ।
जरसा सह नाशमाशु याति प्रबलं मृत्युकृतं भयं नराणाम् ॥४०॥

---

राजदन्तेति । राजदन्तयुगलद्वयस्यादिमस्पृशन् तेषाम् अन्तिके समीपे जिह्वां सन्निधाप्य काकचंचुपुटेन वायुं पिवेत् । काकचंचुपुटवन्मुखं कृत्वा पिवेदित्यर्थः । मध्यभूतदन्तचतुष्टयं राजदन्ताः एतदुत्कृष्टं वायोर्नियमनमिति ।। ३४ ॥

द्विकेति । द्विकचंचुभ्यां समीरणं वायुं धयतः पिवतः धेट् पा पाने । द्वाभ्यां ककाराभ्यां लक्षितो द्विकः काकः श्रमदाहं गरोविषम् उदरामयम् उदररोगः ज्वरः गुल्म इत्याद्याः प्रशमं प्रयाण्ति ॥ ३५ ॥

उभयोरिति । उभयोः प्रातः सायं सन्ध्ययोमुहूर्त्ते दण्डद्वयं यावत् प्रहरत्रयमात्रं वा कं श्मश्रु तस्य धातुः धर्त्तुः पुंसः काकचंचुपुटमारुतं पिवतः सारस्वतसिद्धिर्भवति सन्ध्यामुहूर्त्तमात्रं प्रहरत्रयं वेत्ति व्यवस्थितविकल्पार्थः ॥ ३६ ॥

विषमिति । काकोलः त्रयं सुगमम् ॥३७-४०॥

जिह्वां कृत्वाऽनाकुलस्तालुमूले दन्तैर्दन्तान् गाढमापीडयित्वा ।
मन्दं मन्दं यः पिबेद्गन्धवाहं सौधैः पूरैः साकमन्तः स्पृशद्भिः ॥४१॥
षण्मासाभ्यासेन रोगैरशेषैः पातेभ्योऽसौ मुच्यते साधकेन्द्रः ।
अब्दादेकाद्विश्रसां मृत्युदूतीं जित्वा भूमौ दीर्घकालं स जीवेत् ॥४२॥
वर्षत्रयाभ्यासवशादतीतमनागतं वेत्त्यलिनीलकेशः ।
विषं न देहे क्रमते तदीये दष्टे सुघोरैरपि पन्नगेन्द्रैः ॥ ४३ ॥
न कृत्रिमं स्थावरजङ्गमं वा विषं किमन्यैरपि कालकूटैः ।
गुणाष्टकं कालवशादुपेत्य महीतले क्रीडति भैरवो वा ॥ ४४ ॥
या मुण्डाधारदण्डान्तरविवरगताहारनीहारगौरी
सौधीं धारां नभोऽम्भोरुहकुहरविधोः संस्रवन्तीं वहन्ती ।
तस्या वज्राख्यनाड्याः खगमुदरदरीमध्यगं या विदध्यात्
तस्या ब्रह्माण्डभाण्डप्रलयमपघनं स्याद्घनं मृत्युमृत्योः ॥ ४५ ॥

---

जिह्वामिति । तालुप्रदेशे जिह्वां योजयित्वा उपरिस्थदन्तपङ्क्त्याऽधो दन्तावलि आपीड्य सौधैः पूर्वमुखावस्थितैः सह गन्धवाहं वायु पिबेत् अन्यत् सुगमम् । प्रकारान्तरमाह जिह्वामिति । सौधैर्मुखान्तर्गतरसैः विस्रसां जरां कृत्रिमविषं नारिकेलमिश्रितकर्पूरं स्थावरं हिमशैलजादिकं जङ्गमं पार्वतीयं व्याघ्रनाभिजन्यं गुणाष्टकम् अष्टसिद्धिर्भैरवावतारार्थे वाशब्दः ॥ ४१-४४ ॥

या मुण्डेति । सुषुम्नान्तर्गताया वज्राख्यनाड्या उदरमेव दरी कन्दरा तन्मध्यवर्त्तिनं खगं वायुं यो विधानं करोति तस्य पवनं शरीरं मृत्युमृत्योर्घनं मुद्गरं भवति । मृत्युर्यमः तस्य मृत्युर्नाशकः तस्य लोहमुद्गरो भवति । घनः स्याल्लोहमुद्गर इत्यमरः । सा का मुण्डाधारदण्डाधारदण्डान्तरविवरगर्त्ता मुण्डस्याधारभूतो दण्डः पृष्ठवंशात्मकः तदन्तर्गतसुषुम्ना तन्मध्यवर्त्तिनमित्यर्थः । कीदृशाद्वे हिमवच्छुभ्रामृतधारां वहन्ती धारयन्ती आकाशदेशावस्थितपद्मा-

मूर्च्छां गतो हरति रोगसमूहमध्यारुद्धः
करोति गगने गमनं नराणाम् ।
वातो मृतो वितनुतेऽमरतां समस्त-
मभ्यासतः सुलभमेव समीरणस्य ।। ४६ ॥

अथ पार्ष्णिनरुद्धकम्बुर्ना ध्वजमूलस्थितसव्यपादपार्ष्णिः ।
ऋजुकायशिरोधरो यतात्मा विषयेभ्यो विनिवर्त्तितेन्द्रियाश्वः ॥४७॥
काकीचञ्चुवग्रहृष्टैर्मुहुरुदरदरीं पूरयित्वा समीरैरस्तुष्ठा-
भ्यामुभ्यां नररिपुविवरे तर्जनीभ्यां च नेत्रे ।
नासारन्ध्रं निरुध्य स्थिरविमलमतिर्मध्यमाभ्यामथास्ब-
मन्याभिर्नातिगाढं कमलजनिलये स्थापयेन्मानसं स्वम् ।।४८॥

---

भ्यन्तरवर्त्तिनोविधोश्चन्द्रस्य क्षरन्तीम् तथाच यः सुषुम्नान्तर्गतवायुं निरोध-यति तस्य मरणं न भवतीत्यर्थः ।। ४५ ।।

मूर्च्छामिति । मूर्च्छा निश्चेष्टत्वे सति इति यावत् । अद्धा तत्तेन रोग-संघातं निवारयति । बद्धः सन् नाद्यन्तरे निरुद्धः आयत्तः सन् मनुष्याणाम् आकाशगमनं निराधारसंचारं करोति मृतः मनसा सह याति स्वाभीष्टदेशं तथा विलीनः अमरताम् अमरणं नयति । तथाच मूर्च्छितो हरति व्याधिं निहन्यान्मरणं मृतः । बद्धः खेचरतां कुर्यात् वशो वायुश्च भैरवि ।। ४६ ।।

प्रकारान्तरमाह तथेति । ना पुरुषः स्वीयमानसं कमलजन्मनो ब्रह्मणो निलये आधारकमलेऽवस्थापयेत् । कीदृक्पार्ष्णिना एकपादगुल्फेन निरुद्धः कम्बुनिरुद्धः कम्बुनिरुद्धगुदमार्गो येन सः ध्वजमूले लिङ्गमूलेऽवस्थापिता अपरपादपार्ष्णियेन सः । ऋजुकायः अवक्रशरीरः यतात्मा इन्द्रियमेव दुर्द्धरत्वादश्व इवाश्वः ।। ४७ ।।

काकीति । काकवधूमुखेनाकृष्टैर्वायुभिरुदरदरीं पूरयित्वा करद्वयस्यांगु-ष्ठाभ्यां नररिपुविवरे वक्ष्यमाणं नरो अर्जुनः तस्य रिपुः कर्णः कर्णविवर

यथाशक्त्याभ्यासं प्रतिदिवस मेवं विदधतः
सुषुम्नान्तश्चायं प्रवरति शनैर्देहपवनः ।
तदा नादो नैजो भवति सहसानन्दजननः
क्रमाद्वीणावादिप्रहतमृदुवीणारवशयः ॥ ४९ ॥

आदौ मत्तालिमालागलपथविगलत्तारझङ्कारहारी
नादोऽसौ वंशिकांस्यांनिलभरितलसद्वंशनिस्वानतुल्यः ।
घण्टानादानुकारी तदनु जलनिधिध्वानधीरो गभीरो
गर्जं पर्जन्यघोषः पर इह कुहरे वर्त्तते ब्रह्मनाड्याः ॥ ५० ॥
विजिते भवतीह तेन वायुः सहजो यस्य समुत्थितप्रणादः ।
अणिमादिगुणा भवन्ति तस्यामितपुण्यस्य महासुखास्पदस्य ॥५१॥
सुरराजतनुजवैरिरन्ध्रे विनिरुध्य स्वकाङ्गुलीद्वयेन ।
जलधेरिव धीरनादमन्तः प्रसवन्तं सहसा शृणोति मर्त्यः ॥५२॥
परिभावयतोऽपि नादमेनं त्रिदशाधीशतनूजवैरिजातम् ।
सततं भवतीह तस्य जन्तोर्गुणसम्पत्तिरपेतकल्मषस्य ॥ ५३ ॥
शृङ्गाण्यङ्गुलिभिर्निरुध्य विधिवत्कोदण्डयोः पण्डितो
मध्ये बद्धमरुन्निरुध्य वृषभश्रेष्ठञ्च षष्ठेन्द्रियम् ।

---

इत्यर्थः । तर्जनीद्वयेन नेत्रद्वयं मध्यमाभ्याम् अंगुलीभ्यां नासापुटं निरुध्य अन्याभिश्चतुर्भिर्मुखं निरुध्य ॥ ४८ ॥

यथेति । एवमनेन कथितप्रकारेण प्रतिदिनमभ्यसतः पुंसः सुषुम्नाभ्यन्तरे अयं वायुः संचरति यदि तदा सततानन्दजनको ब्रह्मप्रदो नाद उत्पद्यते क्रमेण पुनर्वीणासमरवो भवति वीणावादिप्रकृतत्वेनातिशयमधुरध्वनिरिति । द्वयं सुगमम् ॥ ४९-५१ ॥

सुरराजेति । सुरराज इन्द्रः तत्तनुजोऽर्जुनः तद्वैरी कर्णः तत्र स्वहस्तद्वयांगुलिद्वेन निरुध्य समुद्रस्येव गभीरं शब्दमभ्यन्तरे प्रसरन्तं शृणोति मर्त्यः तस्यापगतपाप्मनः गुणावाप्तिर्भवति मोक्षप्राप्तिर्भवतीत्यर्थः ॥ ५२-५३ ॥

साक्षात्तत्क्षणमेव पश्यति शनैस्त्रयन्तगीतं परम्
ज्योतिस्त्रैपुरमङ्कमुक्तशशभृल्लक्षाभलक्षप्रभम् ॥५४॥

इति श्रीनागभट्टविरचिते त्रिपुरासारसमुच्चये
तृतीयः पटलः ॥

# चतुर्थः पटलः

अथ पूरकयोगयोजितान्तः पृषदश्वो निजमूलचक्रदेशे ।
विदधीत बुधः समाहितोऽजोपपदग्रन्थिविभेदने प्रयत्नम् ॥ १ ॥
शकृत् समुत्सृज्य यथा शनैः एवं सङ्कोचयेत्कम्बुनि मार्गमर्वा ।
बुधस्तथाधारनियोजितात्मा सङ्कोचयेत्कम्बुनि मार्गमुच्चैः ॥ २ ॥

---

शृङ्गाणीति । शृङ्गाणीन्द्रियाणि तान्यंगुलीभिः प्रतिरुध्य कोदण्डयोर्भ्रुवोर्मध्ये निरुद्धपवनः वृषभश्रेष्ठः । वृषो विषयः तं भजत इति वृषभः वृषभाणीन्द्रियाणि तच्छ्रेष्ठं षष्ठेन्द्रियं मनः तन्निरुध्य इत्यर्थः । त्रयन्तगीतं वेदांतवेद्यं अंकमुक्तशशभृल्लक्षाभलक्षप्रभम् एककालोदितनिष्कलङ्कानेकचन्द्रप्रभम् । अयमर्थः । इन्द्रियाणि स्वकरांगुलोभिर्निरुध्य भ्रुवोर्मध्ये स्वान्तसम्मिन्नवायुं स्वप्रभावक्रमेण यो नियमयति स शशिप्रभं वेदान्तवेद्यं परं ज्योतिःस्वरूपमात्मानम् अनुभवतीत्यर्थः ५४ ॥

इति त्रिपुरासारटीकायां पदार्थादर्शे तृतीयः पटलः ।

एवं प्राणायामेन पवनजययोगविशेषांश्चोक्त्वा जितामरतामविकाराणामभ्युदयनिःश्रेयसप्राप्त्युपायभूतं मन्त्राणां छिन्नादिदोषपरिहारार्थं योनिमुद्राबन्धनप्रकारं वक्तुमुपक्रमते अथ पूरकयोग इत्यादिना । आदौ पूरकादियोगाभ्यासेन निजमूलचक्रदेशे मनः संयोज्य अजोपपदग्रन्थिविभेदने यत्नं प्रकुर्वीत अजो ब्रह्मा स एव उपपत्तिर्यस्य ग्रन्थिशब्दस्य तेन ब्रह्मग्रन्थिरित्यर्थः । समाहिताभ्यासध्यानः ॥ १ ॥

ग्रन्थिभेदप्रकारमाह शकृदिति । अर्वा अश्वः शकृद्विष्ठां समुत्सृज्य

विदधीत मुहुर्मुहुर्गुरूक्तक्रमतो हुंकृतिमङ्कलग्नपाणिः ।
दृढरुद्धगुदध्वजान्तरालस्थिततेजोमयपुष्कराग्रयोनिः ॥ ३ ॥
अथ कम्बुनि मारुतं जितात्मा प्रतिलोमेन शनैः प्रवेशयेत्तम् ।
कमलासनपङ्कजस्य मूलं स्वगुरुप्रोक्तविधानतो दुरापम् ॥ ४ ॥
अमुना विधिना मुहुः कृतेन क्रमशः कम्बुनि मारुतस्ततोऽसौ ।
अजपङ्कजमूलदेशमार्गप्रणयी ग्रन्थिविभेदनं करोति ॥ ५ ॥
परिहृत्य खगाधिपस्ततोऽसौ सरणिं चन्द्रमसो नभोमणेः ।
कमलं कमलासनस्य पश्चाद्विदधीतोर्द्ध्वमुखं प्रविश्य सम्यक् ॥६॥
प्रतिभानमथाद्भुतं प्रविष्टे भवनान्तः परमेष्ठिनः खगेशे ।
लघुता वपुषो भवत्युदग्रा जठरान्तर्ज्वलस्य चापि दीप्तिः ॥७॥

---

त्यक्त्वा येन प्रकारेण कम्बुनि मार्गं गुदमार्गं सङ्कोचयेत् तेन प्रकारेणाधारचक्रे संयुक्तात्मा पुरुषः । स्वीयं कम्बुनि मार्गं सङ्कोचं नयेत् ॥ २ ॥

विदधीतेति । मुहुर्मुहुर्वारंवारं गुरूपदिष्टप्रकारेण करकमलद्वयं नाभेरधःस्थिततेजोमयपद्माग्रस्य योनिञ्च यत्नेन निरुध्य गुदलिङ्गमध्यतेजोमयपुष्कराग्रे योनिर्येन निरुद्धमूलाधार इत्यर्थः । असमर्थः गुदध्वजयोर्मध्ये स्थितं यच्चतुष्पत्रं पद्मं तन्मध्ये त्रिकोणाकारा योनिरिति ॥ ३ ॥

अथेति । कम्बुनि मारुतमपानवायुं देशिकोक्तक्रमेणाकुञ्चा शनैरूर्ध्वं नीत्वा कमलासनपङ्कजाख्यं सुषुम्नामूलं प्रवेशयेत् ॥ ४ ॥

अमुना विधिनेति एवं मुहुर्मुहुरभ्यासेन अधोवृत्तं निरुध्य तदन्तर्ब्रह्ममार्गः स्थितग्रन्थिभेदनं करोतीत्यर्थः ॥ ५ ॥

परिहृत्येति । अपानश्च ऊर्ध्ववृत्तित्वेन प्राणात्मकत्वात् खगाधिपत्याख्यां लभते । एवमूर्ध्वगमनाय प्रवृत्तोऽपानवायुः सोमसूर्यात्मकेडापिङ्गलामार्गौ परिहृत्य कमलमूलं सुषुम्नामूलम् उपविश्य ऊर्ध्वमुखं करोति ॥ ६ ॥

प्रतिभानमिति । खगेशेऽपानवायौ ब्रह्मणो भवनाभ्यन्तरं प्रविष्टे सन्ति अद्भुतम् आश्चर्यजनकं प्रतिभानं भवति वपुषः उदग्रा लघुता भवति ॥ ७ ॥

तडित्कोटिप्रख्यं स्वरुचिजितकालानलरुचिम्
सहस्रादित्यांशुप्रकरसदृशोद्योतकलितम् ।
भ्रमन्तं योन्यन्तः स्फुरदरुणबन्धूककुसुमप्रभं
कामं ध्यायेज्जठरशशभृत्कोटिशिखरम् ॥ ८ ॥
तस्योर्द्ध्वेऽग्निशिखा चिरद्युतिलतापुञ्जप्रभाभास्वरा
सूक्ष्मा ब्रह्मपथान्तराम्बरगता चैतन्यमात्रा कला ।
एकीभूतमनन्तरं सह तथा ध्यायेद्धिया निश्चलम्
आत्मानञ्च निवातदीपनिभया हंसस्वरूपं बुधः ॥ ९ ॥
शक्तिः कुण्डलिनीति या निगदिता आईमसंज्ञा
जगन्निर्माणे सततोद्यता प्रविलसत्सौदामिनीसन्निभा ।
शङ्खावर्त्तनिभां प्रसुप्तभुजगाकारां जगन्मोहिनीम्
तन्मध्ये परिभावयेद्विषलतातन्तूपमेयाकृतिम् ॥ १० ॥

---

तडित्कोटिप्रख्यमिति । कामशरीराग्निं ध्यायेत् । कीदृशं विद्युदग्रतुल्यम् । स्वतेजसा विजिता कालानलस्य रुचिर्येन तादृशं सहस्रसंख्यादित्यतेजः समूहतुल्येन उद्योतेन कलितं सम्बद्धं योन्यन्तराधारचक्रस्याभ्यन्तरे भासमानं बन्धूकशब्देन रक्तवर्णाभं शशभृल्लक्षशिशिरम् । एतेन साधकानामानन्दजनकत्वं बोध्यते । काममिति कामशब्दोरहस्यागमे शरीरवैश्वानरे रूढः । एवं तेजोमयं कामं स्वाधारगमनं भावयेत् । तथाचोक्तं रुद्रयामले--भ्रमं योनिगतं ध्यायेत् कामं बन्धूकसन्निभम् । ज्वलत्कालानलप्रख्यं तडित्कोटिसमप्रभम् । इति ॥ ८ ॥

तस्येति । तस्य कामराजाख्यजातवेदस उपरि शिखारूपातिसूक्ष्मा विद्युत्सहस्रसन्निभा चिद्रूपा या कला सा ब्रह्मेति । केचित्तु विद्युत्सहस्रसन्निभा चिद्रूपात्मकला निष्कला ध्येया इत्यनुषज्यते । परमहंसस्वरूपात्मानं तया कलया एकीकृत्य चिन्तयेदिति ॥ ९ ॥

हूङ्कारेण गुरूपदिष्टविधिना प्रोत्थाप्य सुप्तां ततः
कृत्वा तां कलया तया परमया चिद्रूपया सङ्गताम् ।
मायां कुण्डलिनीं समाहितमनास्तामुच्चरेत् कौशिकीम्
शक्तिं ब्रह्ममहापथेन सहितामाधारतः स्वात्मना ॥ ११ ॥
भित्त्वा लिङ्गत्रयमथ बुधो ब्रह्मनाड्येह चोर्ध्वम्
गच्छन्तीं तां कमलजपदात्प्रापयेदात्मशक्तिम् ।
व्योमाम्भोजप्रणयिपरमानन्दकन्दं विसर्गस्थानं
चन्द्रोपरि परिगलद्रक्तपीयूषधारम् ॥१२॥
पीत्वा कुलामृतरसं पुनरेव दिव्यम् मध्यं विशेदपघनस्यं समाहितात्मा।
यायात्कुलादकुलमेव पुनश्च मात्रायोगेन देशिकवरप्रतिपादितेन ।१३

---

शक्तिरिति तया कलया चिद्रूपा कला कुण्डलिनीशक्तिरिति कथिता पूर्वोक्तशिखामध्यगां परिभावयेत् । अन्तर्व्याप्य स्थितां ध्यायेदित्यर्थः ॥ १० ॥

उक्तमर्थं संक्षिप्य दर्शयति हूङ्कारेति । हूङ्कारेण मन्त्रसहितेन गुरूक्तप्रकारेण तां कुण्डलिनीं आधारकमले सुप्तमुत्थाप्य प्रबोध्य अनन्तरं तया परमया चैतन्यरूपया मिलितां कुण्डलिनीं मायां कुलं मूलाधारः तत्रस्थां शरीरस्य देवतां चिन्तयेत् । अकुल शिव इत्युक्तः कुलं शक्तिः प्रकीर्त्तिता । कौलं तेजो विकारः स्यादिति त्रितयनिर्णय इति ॥ ११ ॥

भित्त्वेति । अग्रे कथितं लिङ्गत्रयं विभिद्य ब्रह्मनाड्या सुषुम्नया ब्रह्मणः स्थानादूर्ध्वं तां कुण्डलिनीं शक्तिम् आकाशाम्भोरुहप्रणयित्वम् आकाशाम्भोजस्थपरमानन्दस्थविसर्गस्थानं प्रापयेत् ध्यायेत् ॥ १२ ॥

पीत्वा कुलामृतरसमिति । एवं तां सहस्रारपर्यन्तं नीत्वा तत्रस्थं दिव्यं सुधारसं पीत्वा तेनैव मार्गेण विरोहक्रमेण अपघनस्य मध्यं कुलाख्यं यान्याधारं प्रापयेत् शरीरमध्यं मूलाधारमित्यर्थः । कथं ग्राहयेदित्याह मात्रायोगेन गुरूक्तमात्राप्रयोगक्रमेण गतागतं विदधीत । मात्रातु -बिन्दु-

सा शक्तिः सकलशरीरजीवभूता
प्राणोऽसाविति गदितात्र तन्त्रिमुख्यैः ।
उद्घातः स तु परिपठ्यते मुनीन्द्रैः
प्राणोऽन्तः स्पृशति यदा क्रमेण नीतः ॥ १४ ॥
अमुं स्वाधारस्थं प्रतिदिवसमभ्यासनिरतः
करोति श्रद्धावान् सततमवधूताखिलमलः ।
स मुक्तो दुःखौघैरगयतजराक्लेशमरणो
गुणग्रामोपेतः सुर इव चिरं जीवति भुवि ॥ १५ ॥

चतुर्विधा या कथितेह सृष्टिः प्रवर्त्तते सा सकलापि यस्याम् ।
प्रलीयते चापि जगत्समस्तं कालाग्निरुद्रादिशिवान्तमेतत् ॥१६॥
सेयं मयोक्ता खलु योनिमुद्रा बन्धस्तु देवैरपि दुर्लभः स्यात् ।
अनेन बन्धेन न साध्यते यन्नास्त्येव तत् साधकपुङ्गवस्य ॥ १७ ॥

---

नादस्तथा शक्तिर्मात्रात्रयमुदाहृतमिति । तथा हि मात्रापदेन पीठत्रयं विधीयते । आज्ञास्थानगतो विन्दुः तत्त्वाज्ञा प्रकाशकस्वरूपं पूर्णाख्यं पीठं तदुपरि ललाटमध्ये विन्द्वात्मकप्रकाशरूपस्य शिवात्मकस्फुरद्रूपनादात्मकस्य नादाख्यं द्वितीयं पीठं तदुपरि शिखा विश्वात्मिका शक्तिरूपं मया उक्ता खलु निश्चये अस्या मुद्राया बन्धनं देवैरपि दुर्लभञ्च । योनिमुद्राया अनेन बन्धनप्रकारेण यन्न साध्यते तदा स्मरणम् तथा सर्वमेवानया मुद्रया साध्यत इत्यर्थः । इयं का इह जगति या चतुःप्रकारा सृष्टिरुक्ता यस्यां प्रवर्त्तते यतो भवतीत्यर्थः । उद्भिदस्तरुगुल्माद्याः स्वेदजाः कृमिदशाद्याः जरायुजा मनुष्याद्याः अण्डजाः पक्षिसर्पादयः । केचित्तु शब्दसृष्टिः शब्दार्थसृष्टिः प्रकृतिपुरुषसृष्टिरिति मन्यते । अथवा नैयायिकमते पुरुषसृष्टिः सांख्यमते प्रकृतिपुरुषयोगात् पातञ्जमलते केवलप्रकृतेः मीमांसकमतेऽदृष्टादिति । चतुर्विधा सृष्टिः समस्तं जगदपि यस्यां कालाग्निरुद्रादिरूपां यस्यामेव लयं याति पूर्वोक्तध्यानविशेष एव मुद्रा ॥ १३-१७ ॥

**छत्त्वा रुद्धाः स्तम्भिताः कीलिता ये सुप्ता मत्ता मूर्च्छिता हीनवीर्याः।**
**दग्धाः श्रस्ताः शत्रुपक्षस्थिता ये बाला वृद्धा गर्विता यौवनेन ।२८**
**ये निर्जीवा ये च सत्त्वेन हीनाः षण्डीभूताश्चाङ्गमन्त्रैर्विहीनाः ।**
**एते मुद्राबन्धनेनापि येऽन्ये मन्त्राः सर्वे वीर्यवन्तो भवन्ति ॥२९॥**

---

छित्त्वेति । युग्मकम् । एते सर्वे मन्त्रा योनिमुद्राया ध्यानविशेषेण वीर्ययुक्ता भवन्ति एतेरुच्छिन्ना मनोर्यस्यादिमध्यान्ते स्वामिनं बीजमुच्यते । संयुक्तं वारियुक्तं वायुनाकान्तं त्रिधा पुनः । चतुर्धा पञ्चधा वाथ स मन्त्र श्छिन्नसंज्ञकः आदिमध्यावसानेषु भूबीजद्वन्द्वलांछितः रुद्धमन्त्रः स विज्ञेया भुक्तिमुक्तिविवर्जितः । ये च कीलिताः-आदिमध्यावसानेषु हंसः प्रासाद-वाग्भवौ । हकारो बिन्दुवान् जीवो वाग्भवश्च चतुष्कलः । माया नामामि च पदं नास्ति यस्य स कीलितः । ये स्तम्भिताः । एकं मध्ये स्वयं मूर्ध्नि यस्मिन्निन्द्रपुरन्दरौ । न विद्यते स मन्त्रः स्यात् स्तम्भितः सिद्धिरोधनः । ये च सुप्ताः । त्रिवर्णो हंसहीनो यः स सुप्तश्च उदाहृतः । ये च मत्ताः । मन्त्रा वाप्यथवा विद्या सप्ताधिकदशाक्षरः । फट्कारः पञ्चाकादियों मन्दोमत्त उदीरितः । ये च मूर्च्छिताः पञ्चधास्त्रं स्थितं मध्ये यस्य मन्त्रः स मूर्च्छितः । ये हीनवीर्याः । विरामस्थानगं यस्य हीनवीर्यः स कथ्यते । ये च दग्धाः । वह्निर्वायुसमायुक्तो यस्य मन्त्रस्य मूर्ध्वनि । सप्तधा दृश्यते तन्तु दग्धं मन्नीतमन्त्रवित् । ये च श्रस्ताः । अस्त्रं द्वाभ्यां त्रिभिः षड्भिरष्टा-भिर्दृश्यतेऽक्षरैः । स्तम्भः सोहऽभिहितो मन्त्रः । ये च शत्रुपक्षे स्थिताः । तारादिभिरननुकूलाः । ये च बालाः । सप्तार्णोमनुर्बालः । ये च वृद्धाः । त्रिंशद्वर्णश्चतुः पष्टिवर्णो मन्त्रः शताक्षरः । चतुःशताक्षरश्चापि वृद्ध इत्यभि-धीयते ॥ ये च युवानः । षोडशार्णो युवा प्रोक्तः । ये च जीवहीनाः । षष्टाक्षरो जीवहीनः । ये च सत्त्वहीनाः । द्विवर्णः सत्त्वहीनः स्यात् । ये अङ्गहीनाः । षड्विंशत्यक्षरो मन्त्रः षट्त्रिंशद्वर्णकस्तथा । एकोनविंशद्वर्णो-

गुरुतल्पनिषेवणञ्च पानं द्विजहत्या मधुनः सुवर्णचौर्यम् ।
अमुना विलयं प्रयान्ति सम्यक् सकृदप्याचरितेन बन्धनेन ॥ २० ॥
स तु मन्त्रिवरः स एव योगी गुणसिद्धेः पदमास्थितः स एव ।
अमुना चरतीह बन्धनं यः सततं स्वोचितधर्मकर्मनिष्ठः ॥ २१ ॥
अमुना भवतीह देहभाजां सतताभ्यासकृतेन बन्धनेन
न जरा पितृराजवैजयन्ती न च मृत्युप्रतिपादिता च भीतिः ॥ २२ ॥
एतस्यैव हि बन्धनस्य मनुजः प्राप्नोति शश्वत्कृताद-
भ्यासादणिमादिसिद्धिमतुलां संवित्तिमप्यूर्जिताम् ।
योगञ्चाप्रतिमं जयञ्च मरुतः कालस्य वा वञ्चनम्
तद्विष्णोः परमं पदन्तु सततं पश्यन्ति यत्सूरयः ॥ २३ ॥

इति श्रीनागभट्टविरचिते त्रिपुरासारसमुच्चये चतुर्थः पटलः ॥

## पंचमः पटलः

अथाधारपङ्केरुहाण्यत्र वक्ष्ये सुषुम्नान्तरस्थानि संक्षेपतोऽहम् ।
तदम्भोजपत्रस्थितांश्चापि देवांस्तदम्भोजवर्णान् षडाधारदेवीः ॥१॥

---

वाप्यङ्गहीन उदाहृतः । इत्यादिदोषदुष्टा अपि मन्त्रा अनेन ध्यानेन विशुद्धा भवन्तीत्यर्थः ॥ १८-१९ ॥

गुरुतल्पनिषेवणमिति । सकृदाचरितेनापि योनिमुद्राबन्धनेन पुरुषो महापातकान्मुक्तो भवतीत्यर्थः । अमुना इति । देहिनाम् अमुना योनिमुद्राबन्धनेन सर्वदा कृतेन ध्रुवा भवति । कीदृशी पितृराजस्य यमस्य बन्धनस्य सतताभ्यासात् मनुष्योऽणिमाद्यष्टविधगुणान् प्राप्नोति उत्तमां प्रतिपत्ति ज्ञानञ्च प्राप्नोति । योगाभ्यासञ्च प्राप्नोति वायौ विजयमाप्नोति कालस्य वा वञ्चनं सकलस्य च प्रेरणम् । वा स्यात् विकल्पोपमयोरेवार्थे च समुच्चये । विष्णोश्च तत्पदं स्थानं पश्यन्ति सूरयः ॥ २०-२३ ॥

इति त्रिपुरासारटीकायां पदार्थदर्शने चतुर्थः पटलः ।

अजग्रन्थिपद्मं पुरा यन्मयोक्तं तदाधारमाद्यं वदन्तीह शम्भुः ।
सुवर्णाभवर्णैश्चतुर्भिः समेतं दलैर्योगिगम्यं महाश्चर्यभूतम् ॥२॥
चतुर्ष्वब्जपत्रेषु देवीनिरुद्धान् जलाद्यग्निवर्णान् न्यसेत्केवलान् वा ।
सबिन्दूनमन्दप्रभावान् समिद्धस्फुरज्ज्योतिषो डाकिनी देवतात्र ॥३
मूलाधारे सततं ध्यानयोगात् स्तम्भक्षोभावुत्प्लुतिर्दार्दुरीव ।
भूमित्यागः खेचरत्वं क्रमेण नृणामेते षड्गुणाः सम्भवन्ति ॥ ४ ॥

---

एवमधिकारिणामभ्युदयनिश्रेयसप्राप्त्युपायभूतां योनिमुद्रामुक्त्वा अनन्तरं षडाधारेषु योगविशेषान् वक्तुमुपक्रमते अथाधारपङ्केरुहाणीत्यादि । सुषुम्नान्तरस्थानीति या पूर्वोक्ता सुषुम्नान्तरेऽवस्थिता या चित्रा नाडी तदन्तर्मूलाधारादिषट्पर्वाणि सन्ति तान्येव षडाधाराणीत्यर्थः । तेषामम्भोजानां पत्रावस्थितान् देवान् ब्रह्मादीन् अम्भोजालीवर्णान् शुक्लादीन् अक्षराणि च आधारभूतान् षडदेवांश्च वक्ष्ये इति सम्बन्धः ॥ १ ॥

अम्भोजानि कथयति अजेति । योनिमुद्रारक्षणप्रकारेण यदुक्तं चतुर्दलात्मकं पद्मं तदेवाधारमाद्यं ते योगिनः देवीनिरुद्धान् जलाद्यग्निवर्णान् वशषसान् पूर्वादिक्रमेण न्यसेत् जलेन्द्राग्निवायूनिति पाठे जलं वकारः इन्द्राग्निरिन्द्रद्वितीयं शकारः । एवमग्नेस्तृतीयं षकारः मध्यवर्ण उक्तः । एवं वायोर्यकारस्य चतुर्थो दन्त्यसकारः । तेन वं शं षं सं इति वर्णान् प्रथमाद्यं वीजं ततो वकारः तत आद्यं बीजं एवं क्रमेण चतुर्दलेषु चत्वारो वर्णा न्यस्तव्या इत्यर्थः । केवलान् वा केवलं बिन्दुयुक्तं न्यसेत् । तत्र चतुर्दले डाकिनीरूपा देवी एतत्सकलप्रपञ्चमूलभूतत्वात् मूलाधारमिति योगिनो वदन्ति । अस्मिन् मूलाधारे ध्यानाचरणात् पुंसः स्तम्भक्षाभौभवतः । निष्क्रियत्वं भवति । उत्प्लुतिः उत्पतनं दर्दुरी दार्दुरो मण्डूकस्तत्सम्बन्धिनी प्लुतिरिति । यावत् भूमित्यागश्च भवति तदनु खेचरत्वं भवति । आकाशेऽपि स्वेच्छाविहारित्वं भवति क्रमेण एते षड्गुणा भवन्ति ॥ २-४ ॥

कान्तिप्रकर्षो वपुषोऽपि नादव्यक्तिः प्रदीप्तिर्जठरानलस्य ।
लघुत्वमङ्गस्य निजेन्द्रियाणां पटुत्वमारोग्यमदीनता च ॥ ५ ॥
कृत्वा मनोनिश्चलमूलचक्रमध्ये नराः केवलमादरेण ।
भूतं भवच्चापि भविष्यदर्थं वदन्ति शास्त्राण्यपि वा श्रुतानि ॥६॥
विहाय सद्यः कमलासनस्य वक्त्राम्बुजं प्रीतितरङ्गसङ्गात् ।
तदीयवक्त्राम्बुरुहोदरान्तः सरस्वती नृत्यति दिव्यरूपिणी ॥ ७ ॥
अधिगम्य रसेन्द्रमन्त्रसिद्धी अपि कालञ्च विजित्य दुर्निवारम् ।
अजरामरतामवाप्य चान्ते परमानन्दपदे मुदा रमन्ते ॥ ८ ॥

एकीभूतार्णवाम्भः प्लुतमखिलजगत्पूर्वमासीदपूर्व-
ज्योतिर्मूर्त्तिस्तदन्तर्महितमहिमभूलिङ्गरूपी बभूव ।

---

अन्यान् गुणान् दर्शयति कान्तीति । शरीरस्य कान्तेरुत्कर्षो भवति । नादव्यक्तिः नादो ध्वनिविशेषः । जठरानलस्य उद्दीपनः इन्द्रियाणां चतुरादीनामकपटत्वं भवति । योगिनो हि इन्द्रियासन्निकृष्टमप्यर्थं पश्यन्ति । नैरुज्यञ्च भवति दुःखराहित्यञ्च भवति एतत् सर्वं वायोर्धारणाद् भवति ॥५॥

अन्य दपि प्रयोजनं दर्शयति कृत्वेति । अत्रमूलचक्रमध्ये आधारकमले आदरेण मनः स्थिर कृत्वा भूत वर्त्तमानं भविष्यदपि वदन्ति । अतीतानागतान् वदन्ति अश्रुतान्यनधीतान्यपि शास्त्राणि वदन्ति व्याख्यान्ति ॥ ६ ॥

प्रयोजनान्तरमाह विहायेति । कमलासनस्य ब्रह्मणो मुखाम्बुजं प्रीतिरेव तरङ्गस्तत्सम्बन्धात् त्यक्त्वा तदीयवक्त्राम्बुरुहोदरान्ते वायुधारणात् कर्त्तुर्मुखाम्भोरुहाभ्यन्तरे दिव्यरूपा सरस्वती नृत्यति अभिरमति ॥ ७ ॥

प्रयोजनान्तरमाह अधिगम्येति । रसेन्द्रमन्त्रसिद्धी अधिगम्य दुर्निवारञ्च कालं जित्वा अजरामरतामवाप्य अवसानकाले परमानन्दपदे मोक्षपदे रमन्ते । तस्मात् स्थानयोगात् जीवन्मुक्तो भवति। अवसाने परमात्मनि लीनो भवतीत्यर्थः ॥ ८ ॥

षट्सिद्धाधिष्ठितात्मा सकलसुरनुतः षड्भिरास्यैरुपेतः
षड्भिः कोषैश्च देवो भवभयतिमिरध्वं सहंसो महेशः ॥ ९ ॥
आद्यं लिङ्गवपुर्भृतो भगवतो देवोहिरण्डोऽभव-
द्वाली पूर्वमुखं शिवस्य तु महाकालस्तदूर्द्धाननम् ।
वक्त्रं दक्षिणमाशुशुक्षणिरसौ देवः पिनाकी पुनः
पाश्चात्यं छगलाण्ड एष भगवान् वामास्यमस्याभवत् ॥१०॥
स्वाधिष्ठानसमाह्वयं रसदलमूले ध्वजस्याम्बुजम्
बालादित्यनिभं दलोपरिगतैः पृष्ठादितर्काक्षरैः ।
विन्दूद्भासितमस्तकैर्भगवतोलिङ्गात्मनः शूलिनः
स्थानं योगिवरेण्यगोचरमिदं चास्याधिपा राकिणी ॥११॥
इह स्वाधिष्ठाने निहितनिजचेतो लयवशा-
दमन्दानन्दौघस्तिमितहृदयः साधकवरः ।

---

एकीभूतेति । पूर्वमखिलं जगत् एकीभूतं समुद्राम्भःप्लुतमासीत् । तस्याभ्यन्तरे महेशो देवो लिङ्गरूपो वभूव कीदृशः अपूर्वज्योतिःस्वरूपः अपूर्वतेज एव लिङ्गरूपत्वेन परिणाममगमदित्यर्थः । कीदृशः षड्भिः सिद्धैर्हिरण्डादिभिरधिष्ठितात्मा तस्य लिङ्गवपुर्भृतो भगवत आद्यम् ऊर्ध्वं मुखं हिरण्यनामा सिद्धपुरुषः आसीत् । पूर्वमुखं वाली नामा ऊर्ध्वाननम् अधआननमित्यर्थः । दक्षिणं वायुः पिनाकी पश्चिमास्यं उत्तरं युगलगण्डः तथा आधारात्मा हिरण्डः स्वाधिष्ठानात्मा वाली मणिपूरात्मा महाकालः अनाहतात्मा वह्निः विशुद्धात्मा पिनाकी पाश्चात्मा छगलण्डः । तल्लिङ्गम् एषु स्थानेषु चिन्तनीयम् ॥ ९-१० ॥

स्वाधिष्ठानमिति तदूर्ध्वं रसदलैः स्वकुलैः पृष्ठादितर्काक्षरैः पृष्ठं वकारः तदादितः मयवलः एभिर्विन्दुर्भूषितमस्तकैः सविन्दुकैर्युक्तबालादित्यनिभं प्रातःकालीनसूर्यतुल्यम् अस्य चक्रस्याधिपा राकिणी ॥ ११ ॥

समेताङ्गोऽनङ्गः क्षितितलगतो वा मृगदृशाम्

स्मरस्मेरापाङ्गं रमयति गणं कान्तिकलितम् ॥ १२ ॥

इह वेत्ति निधाय मानसं स्वं विविधं चाश्रुतशास्त्रजालमुच्चैः

अवधूतजरामयः स मर्त्यः सुचिरं जीवति वीतमृत्युभीतिः ॥१३॥

वपुषोऽशुचिता जनस्य शश्वत् परमां शुद्धिमिहातनोति पुंसाम् ।

शरदम्बुजपेलवस्य देहे दृढरूढो घनताञ्च शीतरश्मिः ॥ १४ ॥

चलितं सहसा महारसेन्द्रं कमलालोकनतो वियत्सरोजात् ।

इह ये विनिधारयन्ति सन्तो ननु धीराः पुरुषोत्तमास्त एव ॥१५॥

मदधौतकटो महागजेन्द्रो वशतामेति यथा शनैरुपायात् ।

बलवानिह वै सुधाकरोऽसौ क्रमरुद्धः स्ववशो भवत्यवश्यम् ॥१६॥

एतस्मिन् कुलिशाब्जयोगनिरतादादौ लयो जायते

रागादिन्द्रियदन्तिनां लयवशात्संवित्तिरप्यूर्जिता ।

अन्तर्लीनमहारसद्रवजुषां नृणान्तु चेतो यदा

आविर्भावमुपैत्यमन्दसहजानन्दच्छलेन्दूदयः ॥ १७ ॥

---

इह किल समलक्ष्याणां नियमितमरुतां योगिनीकलातिशयं दर्शयति इह स्वाधिष्ठान इति । लयवशात् पद्मोदरनिवेशवशात् समेताङ्गोऽनङ्गः मृगदृशीगणं रमयति । तथा स्मर स्मेरापाङ्गं स्मरेण स्मरेमलपप्रकाशम् अपाङ्गं नेत्रयोरन्तं यस्य गणस्य तम् । तथा कान्त्या लावण्येन कलितं संरब्धम् ॥१२॥

विशेषफलमाह इहेति । विगतजरामयः स मर्त्यः इह पद्मे स्वं मानसं निधाय अर्पयित्वा अश्रुतशास्त्रसमूहं विविधं नानाप्रकारं वेत्ति वीतमृत्युभीतिः त्यक्तयमभयः । अन्यपद्मस्य दर्शनात् अशुचिता जनस्य शरीरस्य नित्यं शुद्धिं तनोति पुंसः शीतरश्मिः शुक्रः दृढबन्धः घनतां निबिडतां यातीति शरदम्बुरुहवत् पेलवः सुन्दरः ॥ १३-१४ ॥

चलितमिति सहस्रदलाच्चलितं रसेन्द्रं शुक्रम् एतत्कमलालोकनतो ये विनिधारयन्ति ते पुरुषोत्तमाः एतत्पद्मभावनयोगयुक्ताः ॥ १५-१६ ॥

नाभिस्थं मणिपूरकं दशदलैर्नीलाञ्जनाभैर्युतम्
तड्डाद्यैश्च दशाक्षरैर्दलगतैर्बिन्दूल्लसन्मस्तकैः ।
लाकिन्या समधिष्ठितञ्च सततं ध्यानैर्नराः केवलम्
वश्याकर्षणनिर्विषीकरणपूःक्षोभादिकं कुर्वते ॥ १८ ॥
स्थानेऽस्मिन्निहितात्मनः सुकृतिनः पातालसिद्धिं पराम्
खड्गस्याप्रतिमस्य साधनमपि स्यादीप्सितञ्च क्षितौ ।
रूपं भूमिविसर्जनं परपुरे शक्तः प्रवेष्टुं जराहानिश्चा-
खिलदुःखरोगशमनं कालस्य वा वञ्चनम् ॥ १९ ॥
हृदये रसेन्द्रगोपसन्ध्याघनसिन्दूरसुवर्णमब्जम् ।
यदनाहतमित्युशन्ति सन्तो रविसंख्यैरपशोभितं दलैः ॥२०

---

एतस्मिन् कुलिशांचेति । तदेव योगः तस्मिन् रतात् रागादिन्द्रियदन्तिनां लयो भवति अतएव कुलिशत्वेन निरूपितम् । संवित्तः ऊर्जिता । अन्तर्नील-मिति । अन्तर्नीलं यन्महाबलं शुक्रं तदेव रसं तत्सेवितानां नृणां चेतो यदा आविर्भावं प्राप्नोति तदा अमन्दं महत् यत् सहजानन्दं तच्छलेन अविद्याध्वं साद्यभ्युदयात् इन्दुत्वेन निरूपितः ॥ १७ ॥

मणिपूरकमाह नाभिस्थमिति । नीलाञ्जनतुल्यैर्दशदलैर्युतम् ड्ढ ढ ण त थ द ध न प फ एतैर्दलगतैः बिन्दूल्लसन्मस्तकैः सबिन्दुकैर्युक्तं लाकिन्या समधिष्ठितञ्च एतद्ध्यानात् वश्याकर्षणनिर्विषीकरणं परपुरक्षोभकरणं परपुर-प्रवेशं तिरस्करणी लुकोविद्या इति यस्य प्रसिद्धिः । ननु रत्नात् मणिपूरक-मिति वचनात् कथं नीलरत्नमिति चेत् नीलरत्नस्यापि रत्नत्वान्न दोषः । पातालसिद्धिः अधो विवरकरणं मूकजरादिना खड्गसाधनमपि तान् ईप्सितसाधनं रूपञ्च केचित् परपुरे मृतशरीरे प्रवेष्टुं शक्तिमिति वदन्ति ॥ १८-१९ ॥

अनाहतचक्रमाह हृदय इति । इन्द्रगोपो रक्तवर्णकीटविशेषः क्रोधीशाद्यैः

क्रोधीशाद्यैर्भैरवैर्भानुसंख्यैर्दण्डोपेतं मण्डितं चण्डवीर्यैः ।
तत् काकिन्याधिष्ठितं दिव्यशक्त्या देव्या हंसेनापि देवेन शश्वत् २१

एतस्मिन् सततं निविष्टमनसः स्थाने विमानस्थिताः
क्षुभ्यन्त्यद्भुतरूपकान्तिकलिता दिव्यस्त्रियो योगिनः ।
ज्ञानञ्चाप्रतिमं त्रिकालविषयं क्षोभः पुरस्य श्रुतिर्दूरादेव
च दर्शनञ्च खगतिः स्याद्योगिनां मेलनम् ॥ २२ ॥

विशुद्धाख्यं कण्ठे नलिनमथ धूम्रानलरुचि-
युतं श्रीकण्ठादिस्वरपरिगतैः षोडशदलैः ।
इह स्थाने शाकिन्यतुलनिजशक्तिर्भगवती
स्थिता नित्यं देवी शरणगमनार्त्तिप्रशमनी ॥ २३ ॥

अभ्यासयोगादिह सन्निविष्टस्वान्तस्य शश्वन्नरपुङ्गवस्य ।
समर्थता स्यादनधीतशास्त्रसद्भावभावे वसुधातलेऽस्मिन् ॥ २४ ॥
स्थानेऽत्र संसक्तमना मनुष्यस्त्रिकालदर्शी विगताधिरोगः ।
जित्वा जरामञ्जननीलकेशः क्षितौ चिरं जीवति वीतमृत्युः ॥ २५ ॥

इह स्थाने चित्तं सततमवधायात्तपवनो
यदि क्रुद्धो योगी चलयति समस्तं त्रिभुवनम् ।
न च ब्रह्मा विष्णुर्न च हरिहरो नैव खमणि-
स्तदीयं सामर्थ्यं शमयितुमलं नापि गणपः ॥ २६ ॥

---

ककाराद्यैः ठकारान्तैः क ख ग घ ङ च छ ज झ ञ ट ठ इति क्रोधीशाद्द्वादशभैरवसहितैर्द्वादशाक्षरैर्युक्तं द्वादशदलात्मकं कर्णिकान्तर्गतं मूलमन्त्रशक्त्या काकिन्या चाधिष्ठितं हंसेन चात्मना च दण्डोपेतैः सबिन्दुभिर्मण्डितम् ॥ २०-२१ ॥

एतस्मिन्निति । एतस्मिन् स्थाने निविष्टमनसो योगिनः । कर्त्तृभूताः विमानस्थिताः दिव्यस्त्रियः कर्मभूताः अद्भुतरूपकान्त्या कलितम् ।

**एते तु नियमाः प्रोक्ता दश योगस्य साधकाः ।**

सिद्धान्त श्रवण, दान, मति, ईश्वर पूजन, सन्तोष, तप, आस्तिक्य, ह्री (लज्जा) जप तथा व्रत ये दश नियम कहे गए हैं जो योग के साधक हैं ॥ २४ ॥

सिद्धान्तश्रवणादीनां स्वरूपनिरूपणम्

**सिद्धान्तश्रवणं प्रोक्तं वेदान्तश्रवणं बुधैः ॥ २५ ॥**
**दानं न्यायार्जितार्थस्य सत्पात्रे प्रतिपादनम् ।**
**विहिते कर्मणि श्रद्धा मतिरित्यभिधीयते ॥ २६ ॥**
**यथाशक्त्यर्चनं भक्त्या विष्णोरीश्वरपूजनम् ।**
**सन्तोषोऽलमनेनेति प्रीतिर्यादृच्छिकेन वै ॥ २७ ॥**
**कृच्छ्रचान्द्रायणाद्यैश्च तपो देहविशोषणम् ।**
**आस्तिक्यमस्ति वेदैकगम्यं वस्त्विति निश्चयः ॥ २८ ॥**
**निषिद्धकर्मकरणे व्रीडा ह्रीः प्रोच्यते बुधैः ।**
**गुरूपदिष्टस्वाध्यायमन्त्राभ्यासो जपः स्मृतः ॥ २९ ॥**
**सदाचार्योपदिष्टेषूपायत्वप्रग्रहो व्रतम् ।**

बुद्धिमानों ने वेदान्तश्रवण को **सिद्धान्त श्रवण** कहा है । न्यायपूर्वक अर्जित धन का सत्पात्र में प्रतिपादन **दान** कहा है । वेदविहित कर्म में श्रद्धा रखना **मति** है । विष्णु की भक्तिपूर्वक यथाशक्ति अर्चना करना **ईश्वर पूजन** है, यदृच्छा से प्राप्त होने वाले धन में प्रीति रखना और जो प्राप्त हुआ है उसे अधिक न चाहने का नाम **सन्तोष** है । कृच्छ्र चान्द्रायणादि के द्वारा देह का शोषण करना **तप** है । वेद में ऐसी बात कही गई है, इसलिए उस पर श्रद्धा रखना **आस्तिक्य** है और निषिद्ध कर्म करने में लज्जा करना इसी को बुद्धिमानों ने **ह्री** कहा है । गुरु के द्वारा उपदिष्ट स्वाध्याय तथा मन्त्राभ्यास **जप** है । सर्वदा आचार्य से उपदिष्ट उपाय का अवलम्बन करते रहना **व्रत** है ॥ २५-३० ॥

अथासनानां स्वास्थ्यहेतुत्वम्

**आसनानि प्रवक्ष्यामि मुख्यानि विविधानि च ॥ ३० ॥**
**आस्थायैषामन्यतमं योगिनो यान्ति निर्वृतिम् ।**

मुख्यासनपरिगणनम्

**चक्रं पद्मासनं कूर्मं मायूरं कौक्कुटं तथा ॥ ३१ ॥**
**वीरासनं स्वस्तिकं च भद्रं सिंहासनं तथा ।**
**मुक्तासनं गोमुखं च मुख्यान्येतानि नारद ॥ ३२ ॥**

हे नारद ! अब मैं मुख्य मुख्य आसन, जो अनेक प्रकार के हैं, उनका वर्णन करता हूँ । उनमें से किसी एक आसन का अभ्यास करने से योगी जन सुख प्राप्त करते हैं । चक्र, पद्मासन, कूर्म, मायूर, कौक्कुट, वीरासन, स्वस्तिक, भद्र, सिंहासन, मुक्तासन तथा गोमुख, हे नारद ! मुख्य रूप से इतने आसन कहे गए हैं ॥ ३०-३२ ॥

चक्रासनम्

सव्योरुं दक्षिणे गुल्फे दक्षिणं दक्षिणेतरे ।
निदध्यादृजुकायस्तु चक्रासनमिदं परम् ॥ ३३ ॥

बायें ऊरु को दाहिने गुल्फ पर और दाहिने ऊरु को बायें गुल्फ पर रख कर मेरुदण्ड को सीधे कर बैठने से **चक्रासन** होता है ॥ ३३ ॥

पद्मासनम्

ऊर्वोरुपरि संस्थाप्य उभे पादतले सुखम् ।
पद्मासनमिदं प्रोक्तं सर्वकिल्बिषनाशनम् ॥ २९ ॥

दोनों ऊरु तलों पर दोनो पादतल सुखपूर्वक स्थापित करे तो इसे **पद्मासन** कहते हैं, जो सारे पापों को नष्ट कर देता है ॥ ३४ ॥

कूर्मासनम्

गुदं निपीड्य गुल्फाभ्यां व्युत्क्रमेण समाहितः ।
एतत् कूर्मासनं प्रोक्तं योगसिद्धिकरं परम् ॥ ३५ ॥

व्युत्क्रम से (उल्टे क्रम से अर्थात् बायें से दायाँ और दायें से बायाँ) एकाग्रचित्त होकर दाहिने गुल्फ से गुदा का बायाँ भाग तथा बायें गुल्फ से गुदा का दाहिना भाग दबा कर स्थापित करे तो इसे **कूर्मासन** कहते हैं । यह सर्वोत्कृष्ट योग-सिद्धिकारक आसन है ॥ ३५ ॥

मयूरासनम्

निवेश्य कूर्परौ सम्यङ् नाभिमण्डलपार्श्वयोः ।
अवष्टभ्य भुवं पाणितलाभ्यां व्योम्नि दण्डवत् ॥ ३६ ॥
समोन्नतशिरःपादो मायूरासनमिष्यते ।
एतत् सर्वविषघ्नं च सर्वव्याधिनिवारणम् ॥ ३७ ॥

दोनों कूर्परों को नाभिमण्डल के पार्श्वभाग में अच्छी प्रकार से स्थापित कर दोनों हाथ के तलवों से जमीन का आश्रय ले कर आकाश में दण्ड के समान शिर और पैर को ऊपर रखे तो इसे **मायूरासन** कहते हैं । इस आसन के करने से मलरूप विष का नाश हो जाता है और सारे रोग एवं शोक दूर हो जाते हैं ॥ ३६-३७ ॥

कुक्कुटासनम्

पद्मासनमधिष्ठाय जान्वन्तरविनिःसृतौ ।
करौ भूमौ निवेश्यैतद्व्योमस्थं कुक्कुटासनम् ॥ ३८ ॥

पद्मासन से बैठ कर जानु के भीतर से निकले हुये दोनों हाथों से पृथ्वी को थाम कर ऊपर उठ जाने का नाम **कुक्कुटासन** है ॥ ३८ ॥

वीरासनम्

एकत्रोरौ तु संस्थाप्य पादमेकमथेतरम् ।

ऊरुं पादे निवेश्यैतद्वीरासनमुदाहृतम् ॥ ३९ ॥

एक ऊरु पर एक पैर रखे, फिर दूसरे ऊरु को दूसरे पैर पर रखे तो इसे **वीरासन** कहा जाता है ॥ ३९ ॥

### स्वस्तिकासनम्

उभे पादतले कृत्वा जानूर्वोरन्तरे दृढम् ।
ऋजुकायः समासीत स्वस्तिकं तत् प्रचक्षते ॥ ४० ॥

दोनों पैर के तलवों को दोनों जानु के भीतर भली प्रकार रख कर सीधे-सीधे बैठे तो उस आसन को **स्वास्तिकासन** कहते हैं ॥ ४० ॥

### भद्रासनम्

सीवन्याः पार्श्वयोर्गुल्फौ निवेश्याग्रपदे दृढम् ।
बद्ध्वा कराभ्यां तत् प्रोक्तं भद्रासनमघापहम् ॥ ४१ ॥

सीवनी के दोनो पार्श्वभाग में दोनों गुल्फों को स्थापित कर दोनों पैर के अग्रभाग को दोनों हाथों से भली प्रकार बाँधे तो उसे **भद्रासन** कहते हैं । यह समस्त पापों को दूर करने वाला है ॥ ४१ ॥

### सिंहासनम्

सीवन्याः पार्श्वयोर्गुल्फौ व्युत्क्रमेण निवेश्य च ।
करौ जान्वोर्निधायोभौ प्रसार्य निखिलाङ्गुलीः ॥ ४२ ॥
नासाग्रन्यस्तनयनो व्यात्तवक्त्र ऋजुः सुधीः ।
एतत् सिंहासनं प्रोक्तं सर्वदेवाभिपूजितम् ॥ ४३ ॥

सीवनी के पार्श्वभाग में व्युत्क्रम से (दाहिने से बायाँ और बायें से दाहिना) दोनों गुल्फ स्थापित कर दोनों हाथों को, जिसमे अङ्गुलियाँ फैली रहे, दोनों जानुओं पर स्थापित करे । नासाग्र भाग में नेत्र स्थापित कर सिंह के समान मुख खोलकर सीधे-सीधे बैठना यह **सिंहासन** कहा गया है । सभी देवगण इस आसन की प्रशंसा करते हैं ॥ ४२-४३ ॥

### मुक्तासनम्

मेढ्रादुपरि विन्यस्य सव्यगुल्फमिहेतरम् ।
गुल्फं विन्यस्य पाणी चाप्यङ्गमध्ये निवेश्य च ॥ ४४ ॥
मुक्तासनमिदं प्रोक्तं स्थिता यत्र मुमुक्षवः ।

दाहिने अण्डकोश पर बायाँ गुल्फ और बायें पर दाहिना गुल्फ स्थापित कर दोनों हाथों को ठीक अपने अङ्गमध्य में स्थापित करे तो उसे **मुक्तासन** कहते हैं । मुमुक्षु लोग इसी आसन से बैठते.हैं ॥ ४४-४५ ॥

### गोमुखासनम्

उभयोर्गुल्फयोः कृत्वा पृष्ठपार्श्वावुभावपि ॥ ४५ ॥

व्युत्क्रमेणाथ पाणिभ्यां विन्यस्ताभ्यां विगृह्य च ।
पृष्ठगाभ्यां पदाङ्गुष्ठावेतद् गोमुखमुच्यते ॥ ४६ ॥

दोनों गुल्फों पर दोनों पृष्ठ और पार्श्वभाग स्थापित कर दोनों हाथों को व्युत्क्रम के अनुसार फैला कर पीछे रहने वाले पादाङ्गुष्ठ को पकड़ना इसे **गोमुख आसन** कहते हैं ॥ ४५-४६ ॥

**प्राणायामसिद्धये नाडीशुद्ध्यावश्यकता**

प्राणायामप्रसिद्ध्यर्थं नाडीशुद्धिमनन्तरम् ।
देहस्थवायुभिः कुर्यात् साग्निभिश्च तपोधन ॥ ४७ ॥

॥ इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां योगाङ्गयमनियमासन-
निरूपणं नामैकत्रिंशोऽध्यायः ॥ ३१ ॥

॥ आदितः श्लोकाः १८७२ ॥



प्राणायाम की सिद्धि के लिए प्रथम नाड़ी शुद्धि कर ले । फिर साधक देह अग्नि के सहित देहस्थ वायु के द्वारा प्राणायाम करे ॥ ४७ ॥

**॥ इस प्रकार श्रीपाञ्चरात्र आगम के तन्त्ररहस्य में अहिर्बुध्न्यसंहिता के योगाङ्ग यम नियम आसन निरूपण नामक इकतीसवें अध्याय की शैवागमावतार महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत हिन्दी पूर्ण हुई ॥ ३१ ॥**



# अथ द्वात्रिंशोऽध्यायः

## नाडीशुद्धिवायुजययोगाङ्गप्राणायामादिनिरूपणम्

**ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।**
**सुदर्शनस्य तद् दिव्यं भर्गो देवस्य धीमहि ।।**

जिसका अरा एक बार भी ध्यान करने पर संसार के करोड़ो पापसमूहों को नष्ट करता है, हम उस चक्र सुदर्शन देव के दिव्य तेज का ध्यान करते है ।

**नाडीसङ्ख्यास्थानादिप्रश्नः**

**नारदः—**

**नाडयः कति तिष्ठन्ति कीदृश्यः किंप्रमाणकाः ।**
**क्व वर्तन्ते शरीरेऽस्मिन् कथमासां विशोधनम् ।। १ ।।**

श्रीनारद ने कहा—हे भगवन् कितनी नाड़ियाँ है । उनका स्वरूप कैसा है ? तथा उनका प्रमाण क्या है? इस शरीर में वे कहाँ-कहाँ रहती हैं और किस प्रकार उनकी शुद्धि की जाती है ।। १ ।।

**वायुसङ्ख्यादिप्रश्नः**

**वायवः कति तिष्ठन्ति किंनामानश्च कीदृशाः ।**
**कानि कर्माण्यमीषां तु तत् सर्वं वक्तुमर्हसि ।। २ ।।**

इस शरीर में कितने वायु हैं? उनके नाम क्या हैं? और वे कैसे है? तथा इनके क्या कार्य हैं? वह सब हमें बताइये ।। २ ।।

**तदुत्तरकथनारम्भः**

**अहिर्बुध्न्यः—**

**तदेतत् परमं गुह्यं श्रृणुष्वानन्यमानसः ।**

अहिर्बुध्न्य ने कहा—हे नारद ! ये सभी बातें वड़ी गोपनीय हैं । सावधान होकर सुनिए ।। ३ ।।

**शरीरस्य षण्णवत्यङ्गुलपरिमाणत्वम्**

**शरीरं सर्वजन्तूनामङ्गुलीभिरनामयम् ।। ३ ।।**
**स्वाभिः स्वाभिः सुरमुने षण्णवत्यङ्गुलात्मकम् ।**

शरीरमध्यभागनिर्णयः

शरीरमध्यः क इति शुश्रूषा चेन्महामुने ॥ ४ ॥
श्रूयतां पायुदेशात्तु द्व्यङ्गुलात् परतः परम् ।
मेढ्रदेशादधस्तात्तु द्व्यङ्गुलान्मध्य उच्यते ॥ ५ ॥

हे नारद ! सभी जन्तुओं का शरीर स्वस्थ रहने पर उनकी-उनकी अङ्गुलियों के प्रमाणानुरूप अङ्गुल का मान होता है । हे महामुने ! यदि आपको इस बात की शुश्रूषा (= सुनने की इच्छा) हो कि शरीर का मध्य भाग कहाँ है? तो उसे सुनिए । पायु स्थान से दो अङ्गुल परे और मेढ्र स्थान से दो अङ्गुल नीचे शरीर का मध्यस्थान माना गया है ॥ ३-५ ॥

शरीरस्थवह्निमण्डलस्वरूपम्

चतुष्कोणं त्रिकोणं तद् वृत्तमाग्नेयमण्डलम् ।
चतुष्पदां नृणां चैव विहङ्गानां यथाक्रमम् ॥ ६ ॥

चतुष्पदों (जानवरों) का आग्नेयमण्डल चतुष्कोण, मनुष्यों का आग्नेयमण्डल त्रिकोण तथा पक्षियों का आग्नेयमण्डल वृत्ताकार होता है ॥ ६ ॥

नाडीमूलस्थानम्

मेढ्रान्नवाङ्गुलादूर्ध्वं नाडीनां कन्द उच्यते ।
चतुरङ्गुलमुत्सेधं चतुरङ्गुलमायतम् ॥ ७ ॥
अण्डाकारं परिवृतं मेदोमांसास्थिशोणितैः ।

नाभिचक्रस्थानम्

तत्रैव नाभिचक्रं तु द्वादशारं प्रतिष्ठितम् ॥ ८ ॥
शरीरं ध्रियते येन तस्मिन् वसति कुण्डली ।

मेढ्र से नव अङ्गुल ऊपर सभी नाड़ियों का कन्द है । जिसकी ऊँचाई चार अङ्गुल तथा लम्बाई भी चार अङ्गुल तथा मोटाई भी चार अङ्गुल है । वह मेद, मांस अस्थि तथा शोणित से परिपूर्ण है तथा अण्डे के आकार में स्थित है । उसी में १२ अरों वाली नाभिचक्र प्रतिष्ठित है । उसी के द्वारा शरीर धारण किया गया है । उसी में कुण्डली निवास करती है ॥ ७-९ ॥

नाभिचक्रस्यारेषु सुदर्शनमन्त्रवर्णन्यासः

सौदर्शनस्य मन्त्रस्य यानि वर्णानि सन्ति वै ॥ ९ ॥
विभज्य तानि सर्वाणि व्यञ्जनानि स्वरांस्तथा ।
चक्रेऽस्मिन् विन्यसेत् तानि प्राच्याद्यारेषु च क्रमात् ॥ १० ॥

शिष्टाक्षराणां चक्रमध्ये न्यासः

शेषाणि विन्यसेन्मध्ये चक्रस्यास्य समाहितः ।

नाभिचक्रं परितः कुण्डल्यवस्थितिः

वर्तते परितश्चक्रमष्टवक्त्राथ कुण्डली ॥ ११ ॥

सुदर्शन मन्त्र में जितने भी वर्ण कहे गए हैं, उन्हीं स्वर व्यञ्जन वर्णों को प्रविभक्त कर इस चक्र के पूर्वादि स्थित अरों में क्रमशः विन्यस्त करे तथा जो शेष रहे उसे चक्र के मध्य में समाहित चित्त हो विन्यस्त करे। ऐसे चक्र के चारों ओर आठ मुख वाली कुण्डली का निवास है ॥ ९-११ ॥

**अष्टप्रकृतिरूपेण भोगेनावेष्ट्य वैष्णवी।**
**ब्रह्मरन्ध्रं सुषुम्नायाः पिदधाति मुखेन वै ॥ १२ ॥**

यह विष्णु देवताक कुण्डली आठ प्रकृति वाले भोग (= फन) से उस चक्र को घेरकर सुषुम्ना से जाने वाले ब्रह्मरन्ध्र को अपने मुख से आच्छादित किये हुये है ॥ १२ ॥

**चक्रमध्ये अलम्बुसासुषुम्नयोः स्थितिः**

**अलम्बुसा सुषुम्ना च मध्ये चक्रस्य तिष्ठतः।**

**अन्यासां द्वादशनाडीनां स्थानभेदाः**

**अरे प्राच्ये सुषुम्नायाः कुहूर्नाडी वसत्यसौ ॥ १३ ॥**
**अनन्तरारयुग्मे च वारुणा च यशस्विनी।**
**दक्षिणारे सुषुम्नायाः पिङ्गला वर्तते क्रमात् ॥ १४ ॥**
**तदनन्तरयोः पूषा वर्तते च पयस्विनी।**
**सुषुम्नापश्चिमे चारे स्थिता नाडी सरस्वती ॥ १५ ॥**
**शङ्खिनी चैव गान्धारी तदनन्तरयोः स्थिते।**
**उत्तरे च सुषुम्नाया इडाख्या निवसत्यरे ॥ १६ ॥**
**अनन्तरं हस्तिजिह्वा ततो विश्वोदरा स्थिता।**
**प्रदक्षिणक्रमेणैव चक्रस्यारेषु नाडयः ॥ १७ ॥**
**वर्तन्ते द्वादशस्वेता द्वादश ब्रह्मणः सुताः।**

अलम्बुसा और सुषुम्ना ये दो नाड़ियाँ चक्र के मध्य में रहती हैं। सुषुम्ना के तथा पूर्व वाले के मध्य अरों में कुहू नामक नाड़ी का निवास है। उसके बाद वाले अरे में यशस्विनी एवं वारुणा नाड़ी का निवास है। सुषुम्ना तथा दक्षिण वाले अरे में क्रमशः पिङ्गला का निवास है। पुनः उसके बाद वाले दो अरे में पयस्विनी तथा पूषा का निवास है। सुषुम्ना तथा पश्चिम वाले अरे के मध्य में सरस्वती नाड़ी का निवास है। उसके बाद दो अरों में शङ्खिनी तथा गान्धारा नाड़ी का निवास है। सुषुम्ना तथा उत्तर के अरे के मध्य में इड़ा नाम की नाड़ी है। उसके अनन्तर वाले अरे में हस्तिजिह्वा तथा विश्वोदरा का निवास है। इस प्रकार चक्र के द्वादशारों में दाहिने क्रमानुसार ये बारह नाड़ियाँ जो ब्रह्मदेव की कन्यायें कही जाती हैं स्थित हैं ॥ १३-१८ ॥

**मुख्यानां चतुर्दशनाडीनां नामानि**

**इडा च पिङ्गला चैव सुषुम्ना च सरस्वती ॥ १८ ॥**
**कुहूः पयस्विनी चैव वारुणा च यशस्विनी।**

विश्वोदरा हस्तिजिह्वा गान्धारी शङ्खिनी तथा ॥ १९ ॥
अलम्बुसा च पूषा च मुख्यास्त्वेताश्चतुर्दश ।

देहवर्तिनाडीसङ्ख्या

द्विसप्ततिसहस्राणि नाडीनां देहवर्तिनाम् ॥ २० ॥

मुख्यास्तिस्रो नाड्यः

तासु तिस्रो मुख्यतमाः सुषुम्नेडा च पिङ्गला ।

इड़ा, पिङ्गला सुषुम्ना, सरस्वती, कुहू, पयस्विनी, वारुणा, यशस्विनी, विश्वोदरा, हस्तिजिह्वा, गान्धारी, शङ्खिनी, अलम्बुसा तथा पूषा ये १४ नाड़ियाँ मुख्य नाड़ियाँ कही गई हैं । ऐसे तो शरीर में रहने वाली कुल ७२ हजार नाड़ियाँ कही गई हैं । जिसमें सुषुम्ना, इड़ा और पिङ्गला ये तीन नाड़ियाँ मुख्य हैं ॥ १८-२१ ॥

तास्वपि सुषुम्ना मुख्यतमा

तासां सुषुम्ना मुख्या स्यादामूर्धान्तं व्यवस्थिता ॥ २१ ॥

जीवस्य नाडीचक्रे भ्रमणम्

प्राणारूढो भवेज्जीवश्चक्रेऽस्मिन् भ्रमते सदा ।
ऊर्णनाभिर्यथा तन्तुपञ्जरान्तर्व्यवस्थितः ॥ २२ ॥

इन तीनों में भी सुषुम्ना मुख्य है जो मूर्धान्त चली गई है । यह जीव प्राणवायु पर सवार होकर इसी चक्र में सर्वदा घूमा करता है । जैसे मकड़ी अपने तन्तुपञ्जर में नियमतः चलती रहती है ॥ २१-२२ ॥

सुषुम्नाया मध्यमरन्ध्रस्य कुण्डल्या पिधानम्

पञ्चरन्ध्र्याः सुषुम्नायाश्चत्वारो रक्तपूरिताः ।
कुण्डल्या पिहितं शश्वद् ब्रह्मरन्ध्रं तु मध्यमम् ॥ २३ ॥

सुषुम्ना में पाँच छिद्र है जिसमें चार तो रक्त से परिपूर्ण हैं । बीच का छिद्र जिसे ब्रह्मरन्ध्र कहते हैं वह कुण्डली से आच्छादित है ॥ २३ ॥

नाडीनां परिमाणनिरूपणम्

प्राच्यः पार्श्वः सुषुम्नाया ललाटान्तं समुच्छ्रितः ।
प्रतीच्यः कन्धरान्तस्तु द्वौ पार्श्वौ सव्यदक्षिणौ ॥ २४ ॥
आ पार्श्वशिरसः प्राप्तौ गुह्यमेतदुदाहृतम् ।

सुषुम्ना का पूर्वभाग ललाटान्त ऊँचा चला गया है । पश्चिमी भाग कन्धे के अन्त तक चला गया है । बायाँ और दाहिना भाग दोनों बगल से शिर पर्यन्त चला गया है । यह हमने गुह्य (गोपनीय) बात कही ॥ २४-२५ ॥

अलम्बुसाख्या नाडी स्यादापादान्तं व्यवस्थिता ॥ २५ ॥
आमेढ्रान्तं कुहूः प्राप्ता वारुणा विश्वदेहगा ।

आदक्षिणपदाङ्गुष्ठं सम्प्राप्ताथ यशस्विनी ॥ २६ ॥
प्राप्ता दक्षिणनासान्तं पिङ्गलाख्या तु नाडिका ।
पूषा पयस्विनी चैव दक्षिणाक्षिश्रुती गते ॥ २७ ॥

अलम्बुसा नाम की नाड़ी पैर के अन्त तक चली गई है । कुहू मेढ्रान्त तक तथा वारुणा चारो ओर शरीर मे फैली है । यशस्विनी दाहिने पैर के अङ्गूठे तक और पिङ्गला नामक नाड़ी नासिका के दाहिने भाग तक एवं पूषा तथा पयस्विनी दाहिनी आँख तथा दाहिने कान तक गई है और सरस्वती नामक नाड़ी जिह्वा के मूलभाग पर्यन्त गई है ॥ २५-२८ ॥

जिह्वामूलमभिप्राप्ता नाडी नाम्ना सरस्वती ।
शङ्खिनी वामकर्णं च गान्धारी वामलोचनम् ॥ २८ ॥
वामघ्राणं गता नाडी इडा नाम्नेति विश्रुता ।
प्राप्ता वामपदाङ्गुष्ठं हस्तिजिह्वा तु नाडिका ॥ २९ ॥
विश्वोदरोदरं प्राप्ता प्रोक्ता नाडीगतिर्मया ।

शङ्खिनी बायें कान तक तथा गान्धारी बाई आँख तक गई है । इडा नाम से प्रसिद्ध नाड़ी बाई नासिका तक गई हुई है । हस्तिजिह्वा नामक नाड़ी बायें पैर के अङ्गूठे तक तथा विश्वोदरा उदर भाग तक गई हैं यहाँ तक हमने नाड़ियों की गति का वर्णन किया ॥ २८-३० ॥

इडापिङ्गलयोश्चन्द्रसूर्यावस्थितिः

इडायां वर्तते चन्द्रः पिङ्गलायां प्रभाकरः ॥ ३० ॥
द्वावेव कुरुतः कालं भुङ्क्ते तं ब्रह्मनाडिका ।

शारीरवायुवृत्तान्तकथनम्

श्रूयतां वायुवृत्तान्तः शरीरान्तरवस्थितः ॥ ३१ ॥

इड़ा में चन्द्रमा का निवास है तथा पिङ्गला मे सूर्य का निवास है । यही दो समय का निर्माण करते है और ब्रह्मनाड़ियाँ उसका भोग करती हैं । अब शरीर के भीतर रहने वाले वायु का वृत्तान्त सुनिये ॥ ३०-३१ ॥

शरीरे दश वायवः

प्राणापानसमानाश्चाप्युदानो व्यान एव च ।
नागः कूर्मश्च कृकरो देवदत्तो धनञ्जयः ॥ ३२ ॥

प्राण, अपान, समान, उदान, व्यान, नाग, कूर्म, कृकर, देवदत्त तथा धनञ्जय ये दश वायु शरीर के भीतर सञ्चरण करते हैं ॥ ३२ ॥

प्राणादिवायूनां स्थाननिरूपणम्

सदा निवसति प्राणो नाभिचक्रे समीरणः ।
आस्यनासिकयोर्मध्ये हृदि प्राणः प्रकाशते ॥ ३३ ॥

अपानो वसति प्रायो गुदमेढ्रोरुजानुषु ।
उदरे वृषणे कट्यां जङ्घानाभ्योः प्रदीपवत् ॥ ३४ ॥
गुदाग्न्यगारयोस्तिष्ठन् मध्येऽपानः प्रकाशते ।

प्राणवायु नियमतः नाभिचक्र में निवास करता है । वह मुख, दोनों नासिका तथा हृदय में प्रकाशित होता है । गुदा, मेढ्र, दोनों ऊरु तथा दोनों जानुओं में अपान का निवास है जो उदर, वृषण, कटि, जङ्घा तथा नाभि स्थान में प्रदीपवत् प्रकाश करता है । गुदा तथा उदराग्नि में रहता हुआ अपान मध्य में प्रकाश फैलाता है ॥ ३३-३५ ॥

व्यानः श्रोत्राक्षिमध्ये च कृकाट्यां गुल्फयोरपि ॥ ३५ ॥
घ्राणे गले च स्फिग्देशे वसत्यत्र न संशयः ।
उदानः सर्वसंधिस्थः पादयोर्हस्तयोरपि ॥ ३६ ॥
समानः सर्वगात्रेषु सर्वं व्याप्य व्यवस्थितः ।

व्यान श्रोत्र तथा आँख के मध्य में, कृकाटी, दोनों गुल्फ, घ्राण, गला तथा स्फिग (नितम्ब) देश में निवास करता है, इसमें संशय नहीं । समस्त पैर और हाथ की सन्धियों में उदान रहता है । समान सारे शरीर को व्याप्त कर व्यवस्थित रूप में निवास करता है ॥ ३५-३७ ॥

प्राणादीनां वृत्तिनिरूपणम्

निश्वासोच्छ्वासकादीनि प्राणकर्म इतीष्यते ॥ ३७ ॥
हानोपादानकर्मैव व्यानकर्मेति चेष्यते ।
उदानकर्म तत् प्रोक्तं देहस्योन्नयनादिकम् ॥ ३८ ॥
पोषणादि समानस्य शरीरे कर्म कीर्तितम् ।
उद्गारादिगुणो यस्तु नागकर्मेति चेरितम् ॥ ३९ ॥

निश्वास (श्वास का नीचे आना) उच्छ्वास (श्वास का ऊपर जाना) ये प्राण के कर्म हैं । ग्रहण तथा त्याग व्यान के कर्म हैं । उदान का कर्म वह है जिससे शरीर चलता है ऊपर उठता है । शरीर पोषणादि समान कर्म है । उद्गार आदिगुण (डकार निकालना) यह नाग कर्म कहा गया है ॥ ३७-३९ ॥

निमीलनादि कूर्मस्य क्षुतं कृकरकस्य च ।
देवदत्तस्य देवर्षे तन्द्रीकर्मेति चेरितम् ॥ ४० ॥
धनञ्जयस्य शोफादि सर्वकर्म प्रकीर्तितम् ।
एवं वायुगतिः सर्वा कर्म तेषां च कीर्तितम् ॥ ४१ ॥

निमीलन (बन्द करना) यह कूर्म का कार्य है तथा छींकना कृकर का काम है । देवदत्त का काम जँभाई लेना है । धनञ्जय का काम शरीर में शोफ उत्पन्न करना है । इस प्रकार सभी वायु का कार्य हमने कहा । साथ ही साथ वायु जिस प्रकार शरीर में चलते हैं, उसे भी कहा ॥ ४०-४१ ॥

नाडीशोधनविधिः

ततश्च सर्वनाडीनां कुर्याच्छोधनमात्मवान् ।

तच्छोधनप्रकारः

इडया वायुमापूर्य बाह्य षोडशमात्रकैः ॥ ४२ ॥
धारयन्नुदरे वायुं मात्रा द्वात्रिंशतं ततः ।
स्मरेत् स्वमण्डले वह्निं तत्र रेफं सबिन्दुकम् ॥ ४३ ॥
नासाग्रे शशिनो बिम्बं स्मरेत् पीयूषवर्षिणम् ।
स्मृत्वा चन्द्रे वकारं च सबिन्दुं रेचयेत् ततः ॥ ४४ ॥
पुनः पिङ्गलयापूर्य यथोक्तेनैव वर्त्मना ।
धृत्वा च मातरिश्वानमिडया रेचयेत् पुनः ॥ ४५ ॥
एवं त्रिसन्ध्यां त्रिः कृत्वा कुर्यान्नित्यं समाहितः ।

उक्तक्रमेण शोधयतो मासत्रयेण नाडीशुद्धिसिद्धिः

एवं नियमयुक्तस्य कुर्वतः सर्वनाडयः ॥ ४६ ॥
मासत्रयेण शुद्धाः स्युरिति योगविदो विदुः ।

इसलिए आत्मावान् पुरुष को उचित है कि वह अपनी सभी नाडियों का शोधन करे। उनकी शुद्धि का प्रकार इस प्रकार है—षोडश मात्रात्मक बाह्य वायु द्वारा इडा नाडी को परिपूर्ण करे। फिर ३२ मात्रात्मक काल पर्यन्त उस वायु को उदर में धारण करे और अग्निमण्डल मे 'रं' इस अग्नि बीज का स्मरण करे। फिर नासाग्रभाग मे पीयूषवर्षी चन्द्र बिम्ब का स्मरण कर 'वं' इस बीज का जप करते हुये उस वायु का त्याग कर देवे। फिर उसी प्रकार कही गई विधि के अनुसार पिङ्गला से पूर्ण कर उतने ही काल तक उसे भीतर रख कर ईडा नाड़ी द्वारा उसे त्याग देवे। इस प्रकार तीनो सन्ध्या काल में तीन-तीन प्राणायाम समाहित चित्त से करे। इस प्रकार नियमपूर्वक ऐसा करने वाले पुरुष की समस्त नाडियाँ तीन मास में शुद्ध हो जाती है, ऐसा योगियों का कहना है ॥ ४२-४७ ॥

ततो वायुजयः

ततश्च मरुतां कुर्युर्विजयं देहवर्तिनाम् ॥ ४७ ॥

वायुजयान्मनसः स्थैर्यम्

ततश्च वायवो देहे यत्र यत्र वसन्ति वै ।
तत्र तत्र मनःस्थैर्यं वह्निना सह नारद ॥ ४८ ॥

इसके बाद शरीर में रहने वाले वायु पर विजय प्राप्त करे। उसकी विधि इस प्रकार है—इस शरीर में जहाँ-जहाँ वायु का निवास कहा गया है, हे नारद ! वहाँ पर अग्नि बीज (रं) का स्मरण करते हुये मन को स्थिर रखने का प्रयास करे ॥ ४७-४८ ॥

प्राणायामविधिः

प्राणायामं ततः कुर्यात् सर्वपापप्रणाशनम् ।

शिखादिस्थानेषु मनोः षडक्षरन्यासः

शिखास्थाने नाभिचक्रे हृदयाम्बुरुहे ततः ॥ ४९ ॥
कण्ठकूपे भ्रुवोर्मध्ये जिह्वामूले तथैव च ।
मनोः षडक्षराण्येषु क्रमेणैव विचिन्तयेत् ॥ ५० ॥

इसके बाद सारे पापों का नाश करने वाले प्राणायाम को प्रारम्भ करे । शिखास्थान में, नाभिचक्र में, हृत्कमल में, कण्ठकूप में, दोनों भ्रुवों में तथा जिह्वा के मूल में इन छः स्थानों में षडक्षर मन्त्र का क्रमशः स्मरण करे ॥ ४९-५० ॥

प्राणायामप्रकारः

वायुं षोडशमात्राभिरिडयापूर्य चिन्तयेत् ।
हृन्मध्ये परमात्मानं चक्ररूपिणमव्ययम् ॥ ५१ ॥
यावच्छक्ति जपेन्मन्त्रमिमं सौदर्शनं स्मरन् ।
पुनः षोडशमात्राभी रेचयेत् पिङ्गलाह्वया ॥ ५२ ॥
अनया पुनरारोप्य धृत्वा चेतरया त्यजेत् ।
पूरणे कुम्भके चैव रेचने प्रणवं जपेत् ॥ ५३ ॥
दश पञ्चाशतं चैव चतुर्दश शतं क्रमात् ।
गायत्रीं यदि वा जप्त्वा कुर्यादुक्तेन वर्त्मना ॥ ५४ ॥
एवं प्रतिदिनं कुर्यात् प्राणायामांस्तु षोडश ।
एते पुनन्ति मासेन महापातकिनं नरम् ॥ ५५ ॥

षोडश मात्रात्मक काल पर्यन्त वायु को ईडा से परिपूर्ण कर हृदय के मध्य में अव्यम चक्र स्वरूप परमात्मा का स्मरण करे और अपनी शक्ति के अनुसार इस सुदर्शन मन्त्र का जप करे । तदनन्तर षोडशमात्रात्मक काल पर्यन्त पिङ्गला नाडी द्वारा उसे छोड़ता रहे । इसी प्रकार पिङ्गला से वायु पूर्ण कर ईडा नाडी से उसे त्यागे । वायु को पूर्ण करते समय एवं उसे रोकते समय तथा रेचन करते समय प्रणव का जप करे । प्राणायाम की यह क्रिया पाँच सौ अथवा चौदह सौ गायत्री जप करने के पश्चात् उक्त प्रकार से करे । इस प्रकार प्रतिदिन १६-१६ प्राणायाम करे । तो साधक कृत ये प्राणायाम एक महीने के भीतर महापातकी मनुष्यों को भी पवित्र कर देते हैं ॥ ५१-५५ ॥

प्रत्याहारनिरूपणम्

प्रत्याहारं ततः कुर्यादङ्गैः पञ्चभिरन्वितम् ।
स्वभावेनेन्द्रियार्थेषु प्रवृत्तं मानसं बुधैः ॥ ५६ ॥
तद्दोषदर्शनात् तेभ्यः समाहृत्य बलेन तु ।
निवेशनं भगवति प्रत्याहार इति स्मृतः ॥ ५७ ॥

प्राणायाम के अनन्तर पांच अङ्गों से युक्त प्रत्याहार करे । बुद्धिमान् पुरुष स्वभाव से इन्द्रियार्थों में (इन्द्रियों के तत्तद्विषय रूप, रस, गन्ध, स्पर्श और शब्द) प्रवृत्त मन को उन

विषयों में दोष दर्शन करते हुये उससे अलग हटावे। इस प्रकार विषयों से मन को पृथक् हटा कर उसे भगवान् में लगाना ही प्रत्याहार है ॥ ५६-५७ ॥

### धारणानिरूपणम्

विषयेषु च वैराग्यादभ्यासाद् गुणदर्शनात्।
परमात्मनि संरोधो मनसो धारणा स्मृता ॥ ५८ ॥

मन से विषयों में वैराग्य का अभ्यास करे। परमात्मा में गुणदर्शन करे। तदनन्तर उसे परमात्मा में लगावे तब मन की इसी प्रक्रिया को विद्वज्जन धारणा कहते हैं ॥ ५८ ॥

### ध्याननिरूपणम्

तदेवं धृतचित्तस्तु चक्ररूपं जनार्दनम्।
ध्यायीत नियतस्तस्मिन् युञ्जानः प्रथमं मनः ॥ ५९ ॥

इस प्रकार धारणा द्वारा चक्ररूपी भगवान् जनार्दन का स्मरण करते हुये पहले उसमें अपना मन लगाकर नियमपूर्वक ध्यान करे ॥ ५९ ॥

### वर्णाश्रमधर्माणां ध्यानेतिकर्तव्यतात्वम्

रमणीये शुचौ देशे विविक्ते सजले वने।
वर्णाश्रमोचिते धर्मे वर्तमानः प्रसन्नधीः ॥ ६० ॥
शान्तः सर्वगुणोपेतः सममासनमास्थितः।
ऋजुकायः स्वनासाग्रन्यस्तदृग् भक्तिमान् हरौ ॥ ६१ ॥
प्राणायामोत्थितेनैव वायुना साग्निना मुखम्।
कुण्डल्यास्तु विनिर्भिद्य सुषुम्नामध्यवर्तिना ॥ ६२ ॥
विकास्य हृदयाम्भोजे तदाकाशे शिखास्पदे।
स्फुरद्वह्निशिखामध्ये चिन्तयेदद्भुताकृतिम् ॥ ६३ ॥

अब परमात्मा के ध्यान की विधि कहते हैं—रमणीय पवित्र स्थान में जहां बिल्कुल एकान्त हो अथवा किसी जलाशय के सन्निकट अथवा वन में वर्णाश्रमोचित धर्म में स्थित रहने वाला प्रसन्न चित्त, शान्त तथा सभी गुणों से संयुक्त रहने वाला साधक सम आसन पर बैठकर शरीर के मेरु दण्ड को बिल्कुल सीधा रख कर विष्णु में भक्ति रखते हुये अपने नेत्रों को नासाग्रभाग में लगावे। फिर प्राणायाम के द्वारा उठे हुए अग्नि सहित वायु से जो सुषुम्ना के मध्य भाग से बह रहा हो उससे कुण्डलिनी का मुख भेदन करे पुनः उसे फैला कर अग्निज्वाला से देदीप्यमान हृत्कमल रूपी आकाश में अद्भुत आकृति का ध्यान करे। अब उस ध्येय के अद्भुत आकार का वर्णन करते हैं ॥ ६०-६३ ॥

### ध्यानालम्बनभूतध्येयस्वरूपनिरूपणम्

पिङ्गाक्षं पिङ्गकेशाढ्यं ज्वलज्ज्वलनतेजसम्।
दंष्ट्राकरालवदनं भ्रुकुटीभीमदर्शनम् ॥ ६४ ॥
विद्युत्पुञ्जप्रतीकाशैरूर्ध्वकेशैर्विराजितम्।

विचित्रानन्दमाणिक्यमुक्ताढ्यमुकुटोज्ज्वलम् ॥ ६५ ॥
पूर्णचन्द्रप्रतीकाशमणिताटङ्कमण्डितम् ।
भुजाभिरष्टभिर्युक्तं रत्नाम्बरधरं विभुम् ॥ ६६ ॥
शङ्खचक्रगदाशार्ङ्गमुसलैः परमायुधैः ।
पाशाङ्कुशाम्बुजैरन्यैरुपेतं परदारुणैः ॥ ६७ ॥
दिव्यमाल्याम्बरधरं दिव्यचन्दनचर्चितम् ।
हारकेयूरकटककाञ्चीमञ्जीरमण्डितम् ॥ ६८ ॥
अन्यैश्च विविधैश्चित्रैर्भूषणैरुपशोभितम् ।
पद्मासनस्थं भक्तानां विश्वेषामभयप्रदम् ॥ ६९ ॥
एवं ध्यायन् विमुच्येत मुक्तः सकलकिल्बिषैः ।

पीले-पीले आँखों वाले और पीले-पीले केशों वाले, जलती हुई अग्नि के समान तेज वाले, बड़े-बड़े दाँतों से भयङ्कर मुख वाले, भुकुटी की कुटिलता से महाभयङ्कर दिखाई पड़ने वाले, बिजली के समान पीले-पीले ऊपर की ओर उठे हुये केशों से विराजमान, विचित्रानन्द से परिपूर्ण, मुक्ता और मणियों से जटित मुकुट धारण किये हुये, पूर्णमासी के चन्द्रमा के समान मणि का कुण्डल धारण किये हुये, आठ भुजाओं से युक्त एवं रक्त वर्ण का वस्त्र धारण किये, शङ्ख, चक्र, गदा, शार्ङ्ग एवं मुशल आदि श्रेष्ठ आयुधों से तथा शत्रु विनाशकारी पाश, अङ्कुश एवं कमल से युक्त दिव्य माल्याम्बर धारण किये हुये, दिव्य चन्दन चर्चित, हार, केयूर, कटक, काञ्ची तथा मञ्जीर से मण्डित और इसी प्रकार अन्यान्य अनेक विचित्र आभूषणों से विभूषित पद्मासन से विराजमान अपने समस्त भक्तों को अभय प्रदान करने वाले ऐसे चक्राकार विष्णु का ध्यान कर मनुष्य अपने समस्त पापों से विमुक्त हो जाता है ॥ ६४-७० ॥

### समाधिनिरूपणम्

तदेवं स्मृतिसन्तानजनितोत्कर्षणं क्रमात् ॥ ७० ॥
अर्थमात्रावभासं तु समाधिं योगिनो विदुः ।

इस प्रकार के निरन्तर स्मरण से क्रमशः उत्कर्ष प्रदान करने वाला तथा अर्थ मात्र से अवभासित होने वाला विशेष ध्यान समाधि कहा जाता है, ऐसा योगियों ने कहा है ॥ ७०-७१ ॥

### समाधिनिष्ठस्य महिमानुवर्णनम्

ततः समाधिमास्थाय तन्मयत्वमुपागतः ॥ ७१ ॥
तस्य प्रभावमखिलमश्नुते शक्तिशालिनः ।
अणिमादिगुणाः सर्वे भवन्त्यस्य महात्मनः ॥ ७२ ॥

समाधिनिष्ठ साधक की महिमा—इस प्रकार समाधि में लीन हो कर तन्मयता को प्राप्त हुआ साधक उस शक्तिशाली चक्र के सम्पूर्ण प्रभावों का भोक्ता बन जाता है और उस महात्मा में अणिमादि गुण अपने आप आ जाते हैं ॥ ७१-७२ ॥

निःसहायः सपत्नानामनीकानि बहून्यपि ।
हिनस्त्येष यथा चक्रं चक्रं दैतेयरक्षसाम् ॥ ७३ ॥
मनीषितानि सर्वाणि स्वयमस्योपयान्ति वै ।
सिद्धा विद्याधरा यक्षाः कैंकर्यं तस्य कुर्वते ॥ ७४ ॥
देवाश्च ऋषयः सर्वे गन्धर्वाप्सरसां गणाः ।
तदाज्ञाकारिणः सर्वे पिशाचोरगराक्षसाः ॥ ७५ ॥
निखिलभुवनजन्मस्थेमभङ्गैकहेतु-
र्भवति सकलवेत्ता सर्वदृक् सर्वशक्तिः ।
अभिमतबहुरूपो दैत्यरक्षांसि निघ्नन्
परिहृतपरिवारो वर्तते पूर्णकामः ॥ ७६ ॥

॥ इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां नाडीशुद्धिवायुजय-योगाङ्गप्राणायामादिनिरूपणं नाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥

॥ आदितः श्लोकाः १९४८ ॥



बिना किसी की सहायता के अपने शत्रुओं की बहुत सी सेना का विनाश कर देता है जिस प्रकार अकेला चक्र अनेक दैत्यों एवं राक्षसों का विनाश कर देता है । ऐसे समाधिनिष्ठ पुरुष के सभी अभिलषित पदार्थ स्वयं उपस्थित हो जाते हैं । सिद्ध, विद्याधर तथा यक्ष उसके आज्ञाकारी हो जाते हैं । सभी देवता, ऋषि, गन्धर्व, अप्सराओं के समूह, पिशाच, उरग और राक्षस भी उसके वशवर्त्ती हो जाते हैं । वह सारे संसार को जन्म देने वाला, उसे विनष्ट करने वाला, सर्वज्ञ तथा सर्वशक्तिमान् हो जाता है । सारे लोग उसके अनुरूप हो जाते हैं तथा वह दैत्यों एवं राक्षसों का विनाश कर डालता है । उसका कोई परिवार तो नहीं होता पर वह पूर्णकाम अवश्य बन जाता है ॥ ७१-७६ ॥

**॥ इस प्रकार श्रीपाञ्चरात्र आगम के तन्त्ररहस्य में अहिर्बुध्न्यसंहिता के नाडीशुद्धि-वायुजययोगाङ्गप्राणायामादिनिरूपण नामक बत्तीसवें अध्याय की शैवागमावतार महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत हिन्दी पूर्ण हुई ॥ ३२ ॥**



मोक्ष की सिद्धि के लिये लम्बा कुण्ड बनाना चाहिये । जिस समय में जिस कुण्ड को जैसा कहा गया उस समय उसी प्रकार का कुण्ड बनाना चाहिये । हे देवि! यह मैंने तुमको होमक्रम की विधि बतलायी ॥ ९९-१०२ ॥

[ योगविध्यभिधानं योगमाहात्म्याभिधानं च ]

**अथ योगविधिं मत्तः शृणु सावहिता सती ॥ १०२ ॥**
**जपहोमार्च्चनध्यानप्रयोगाश्चैकतो मताः ।**
**एकतो वायुरोधेन देहषट्चक्रभेदनम् ॥ १०३ ॥**
**सदाशिवेन यः प्रोक्तः क्रमो योगविधेर्मम ।**
**तस्मिन् कृते किमेभिर्वा प्रयोगैः साधनैरपि ॥ १०४ ॥**
**यो योगेन तनूमेतां साधयेद् विधिवर्त्मना ।**
**परार्द्धशतजीवी स एवमाह सदाशिवः ॥ १०५ ॥**

**योगविधि और उसका माहात्म्य**—अब मुझसे सावधान होकर योगविधि को सुनो । जप, होम, पूजा, ध्यान, अनुष्ठान एक ओर तथा वायुरोध के द्वारा देहस्थ-षट्चक्र का भेदन एक ओर । सदाशिव ने योगविधि का जो क्रम मुझको बतलाया उसके करने पर ये प्रयोग और साधन व्यर्थ हैं । जो (मनुष्य) योग के द्वारा विधिवत् इस शरीर की साधना कर लेता है वह परार्धशत जीवी होता है—ऐसा उन महादेव सदाशिव ने बतलाया ॥ १०२-१०५ ॥

[ योगोपकारि देहसंस्थानविवरणम् ]

**तत्रादौ देहसंस्थानमाकर्णय वरानने ।**
**द्वे सहस्रे तु नाडीनां (तिष्ठन्ति) देहपञ्जरे ॥ १०६ ॥**
**कीकसानि च तिष्ठन्ति द्वात्रिंशदिति निश्चयः ।**
**वायवो दश तिष्ठन्ति पञ्च तेषु महत्तराः ॥ १०७ ॥**
**सूर्य्याचन्द्रमसोः स्थानं देहमध्ये व्यवस्थितम् ।**
**आकाशभूमिसलिलवह्नीनां तत्र संस्थितिः ॥ १०८ ॥**
**वायुस्तु सर्वदेहेषु चलत्येव प्रतिक्षणम् ।**
**यस्मात् प्रयात्यणुर्भूत्वा तस्मात् प्राण इतीर्यते ॥ १०९ ॥**
**अग्निस्थानं यदेतस्मिंस्तज्जाम्बूनदसन्निभम् ।**
**त्रिकोणाकारतो ज्ञेयमितरेषां तु मण्डलम् ॥ ११० ॥**

**देहसंस्थान का विवरण**—हे वरानने! उसमें पहले देहसंस्थान को सुनो । इस देहरूपी पिंजड़े में दो हजार नाड़ियाँ हैं । बत्तीस कीकस (=हड्डियाँ) हैं । वायु दश हैं, उनमें पाँच वायु महत्तर हैं । सूर्य और चन्द्रमा का स्थान देह के मध्य में कहा गया है । उसमें आकाश, भूमि, जल और अग्नि की सत्ता है । सम्पूर्ण देह में वायु प्रतिक्षण चलता रहता है । चूँकि यह अणु होकर प्रयाण करता है इसलिये इसे प्राण

(=प्र+अणु—यहाँ उकार का उच्चारण सौविध्य के कारण लोप होने और दीर्घ सन्धि होने से 'प्राण' शब्द का उद्‌भव हुआ है) कहते हैं । इस शरीर में जो अग्निस्थान है वह सुवर्ण जैसा है । यह त्रिकोणाकार बतलाया गया है । अन्य (=आकाश, पृथ्वी और जल) का स्थान गोल है ॥ १०६-११० ॥

**त्रिकोणमग्निस्थानं यद् देहमध्यं तदुच्यते ।**
**यद्यत्र तिष्ठति तनौ त्वं तदादौ निबोध मे ॥ १११ ॥**
**अधो मेढ्राद् द्व्यङ्गुलं तत्तावदेव गुदोपरि ।**
**एकाङ्गुलप्रमाणं तद् देहमध्यं प्रकीर्तितम् ॥ ११२ ॥**
**देहमध्यादूर्ध्वमस्ति कन्दं देवि नवाङ्गुलम् ।**
**चतुरङ्गुलमुच्छ्रायमायामं तावदेव च ॥ ११३ ॥**
**आकारेणाण्डसदृशं त्वगस्थिपरिवेष्टितम् ।**
**तत्र सञ्चरति प्राणः स्वे स्थाने परमोपरि ॥ ११४ ॥**
**तस्योपरिष्टाद् विज्ञेयं कुण्डलीस्थानमुत्तमम् ।**
**कृत्स्नो योगविधिस्तत्र सिद्धिश्चापि प्रतिष्ठिता ॥ ११५ ॥**

जो त्रिकोण अग्निस्थान है वह देह का मध्य कहा जाता है । जो इस शरीर में जहाँ रहता है पहले उसको मुझसे जानो । वह देहमध्य एक अङ्गुल परिमाण वाला है । वह मेढ़ (=लिङ्गमूल) से दो अङ्गुल नीचे गुदा के उतना (=दो अङ्गुल) ही ऊपर स्थित है । हे देवि! देहमध्य से ऊपर नव अङ्गुल परिमाण वाला कन्द है । यह चार अङ्गुल ऊँचा और उतना ही चौड़ा है । यह आकार में अण्डा के समान तथा त्वचा और अस्थि से परिवेष्टित है । उसी स्थान में प्राण सञ्चरण करता रहता है। उसके ऊपर उत्तम कुण्डली का स्थान है । उसी में सम्पूर्ण योगविधि और सिद्धि प्रतिष्ठित है ॥ १११-११५ ॥

**कन्दमध्ये स्थितास्तत्र मुख्या नाड्यश्चतुर्दश ।**
**एकैकस्यां द्विचत्वारिंशच्छतं परिनिष्ठिताः ॥ ११६ ॥**
**तिस्रस्तास्वपि मुख्याः स्युः सुषुम्णेडाथ पिङ्गला।**
**पयस्विनीसरस्वत्यौ वारणा च कुहूस्तथा ॥ ११७ ॥**
**गान्धारी शङ्खिनी पूषा हस्तिजिह्वाप्यलम्बुषा ।**
**विश्वोदरायशस्विन्यौ मुख्या ह्येताश्चतुर्दश ॥ ११८ ॥**
**मोक्षमार्गे सुषुम्णा सा ब्रह्मरन्ध्रे प्रतिष्ठिता ।**
**तस्या वामे इडा ज्ञेया चन्द्रसञ्चारसञ्चिता ॥ ११९ ॥**
**दक्षिणे पिङ्गला नाडी रविसञ्चारशोभिता ।**
**सरस्वती कुहूश्चैव सुषुम्णापार्श्वयोः स्थिता ॥ १२० ॥**

उस कन्द के मध्य में चौदह मुख्य नाड़ियाँ स्थित हैं । एक-एक नाड़ी में एक सौ बयालिस (अथवा बयालिस सौ छोटी-छोटी नाड़ियाँ) संयुक्त हैं । इन सभी

(नाड़ियों) में इडा पिङ्गला और सुषुम्णा मुख्यतम हैं । पयस्विनी, सरस्वती, वारणा, कुहू, गान्धारी, शङ्खिनी, पूषा, हस्तिजिह्वा, अलम्बुसा, विश्वोदरा और यशस्विनी (और उपर्युक्त इडा आदि तीन कुल मिलाकर) ये चौदह नाड़ियाँ मुख्य हैं । (इनमें से) सुषुम्णा मोक्षमार्ग में ब्रह्मरन्ध्र में स्थित है । उसके बायें चन्द्र-सञ्चार वाली इडा और दक्षिण में सूर्यसञ्चरण वाली पिङ्गला नाड़ी सुशोभित है । सुषुम्णा के दोनों पार्श्वों में सरस्वती और कुहू स्थित हैं ॥ ११६-१२० ॥

**गान्धारी हस्तिजिह्वा च इडायाः पृष्ठपार्श्वयोः ।**
**पूषा पयस्विनी चैव पिङ्गलापृष्ठपार्श्वयोः ॥ १२१ ॥**
**कुहोश्च हस्तिजिह्वाया मध्ये विश्वोदरा स्थिता ।**
**पयस्विनीकुहोर्मध्ये वारणा च प्रकीर्तिता ॥ १२२ ॥**
**पूषायाश्च सरस्वत्याः स्थिता मध्ये यशस्विनी ।**
**गान्धार्याश्च सरस्वत्याः शङ्खिनी मध्यसंस्थिता ॥ १२३ ॥**
**अलम्बुषा च देवेशि कन्दमध्यादधः स्थिता ।**
**पूर्वभागे सुषुम्णाया मेढ्रान्तं च कुहूः स्थिता ॥ १२४ ॥**
**अधश्चोर्ध्वं च विज्ञेया वारणा सर्वगामिनी ।**
**पयस्विनी च याम्यस्य पादाङ्गष्ठाङ्गुमिष्यते ॥ १२५ ॥**
**पिङ्गला चोर्ध्वगा याम्ये नासान्तं विद्धि पार्वति ।**
**याम्ये पूषा च नेत्रान्तं पिङ्गलायास्तु पृष्ठतः ॥ १२६ ॥**

गान्धारी तथा हस्तिजिह्वा इडा के पीछे और पार्श्व में स्थित हैं । पूषा और पयस्विनी पिङ्गला के पीछे और पार्श्व में स्थित हैं । कुहू और हस्तिजिह्वा के मध्य में विश्वोदरा स्थित है । पयस्विनी और कुहू के मध्य में वारणा (स्थित) कही गयी है । पूषा और सरस्वती के मध्य में यशस्विनी है । गान्धारी और सरस्वती के मध्य में शङ्खिनी स्थित है । हे देवेशि! अलम्बुसा कन्द के मध्य से नीचे वर्त्तमान है । सुषुम्णा के पूर्वभाग में मेढ्र के अन्त तक कुहू स्थित है । वारणा सर्वगामिनी है । वह ऊपर नीचे सब जगह फैली हुई है । पयस्विनी दायें पैर के अङ्गूठे तक गयी है । हे पार्वति! पिङ्गला (सुषुम्णा के) दायीं ओर ऊपर दायें नासारन्ध्र तक गयी है । पूषा नाड़ी पिङ्गला के पीछे दायीं ओर दायें नेत्र पर्यन्त गयी हुई है ॥ १२१-१२६ ॥

**यशस्विनी नाडिका च याम्यकर्णान्तमिष्यते ।**
**सरस्वती तथा चोर्ध्वमाजिह्वायां प्रतिष्ठिता ॥ १२७ ॥**
**आसव्यकर्णाद् देवेशि शङ्खिनी चोर्ध्वगा मता ।**
**गान्धारी सव्यनेत्रान्तमिडायाः पृष्ठतः स्थिता ॥ १२८ ॥**
**हस्तिजिह्वा तथा सव्यं पादाङ्गुष्ठाङ्गमिष्यते ।**
**विश्वोदरा च या नाडी सव्येऽसव्ये गता स्मृता ॥ १२९ ॥**
**अलम्बुषा महाभागा पादमूलादधोगता ।**

यशस्विनी नाडी दाहिने कान तक जाती है । उसी प्रकार सरस्वती ऊपर की ओर जिह्वा में प्रतिष्ठित है । हे देवि! शङ्खिनी ऊपर की ओर बायें कान तक गयी है । गान्धारी इडा के पीछे बायें नेत्र तक स्थित है । इसी प्रकार हस्तिजिह्वा बायें पैर के अङ्गूठे तक स्थित है । जो विश्वोदरा नाडी है वह बायें-दायें सर्वत्र फैली हुई है । महाभागा अलम्बुसा नाडी पादमूल से नीचे गयी है ॥ १२७-१३० ॥

**प्राणोऽपानः समानश्च उदानो व्यान एव च ॥ १३० ॥**
**नागः कूर्मः कृकरश्च देवदत्तो धनञ्जयः ।**
**एते नाडीषु सर्वासु चरन्ति दश वायवः ॥ १३१ ॥**
**एतेषु वायवः पञ्च मुख्याः पूर्वोदिताः प्रिये ।**
**तेषु मुख्यतमः प्राणः कन्दस्याधः प्रतिष्ठितः ॥ १३२ ॥**
**मुखनासिकयोर्मध्ये हृदये नाभिमण्डले ।**
**कन्दमध्येऽपि च प्राणः स्वयमेवावतिष्ठते ॥ १३३ ॥**
**अपानो मेढ्रपाय्वोश्च ऊरुवङ्क्षणजानुषु ।**
**जङ्घोदरे च कट्यां च नाभिमूले च तिष्ठति ॥ १३४ ॥**
**व्यानः श्रोत्राक्षिमध्ये च हृत्कट्यां गुल्फयोरपि।**
**समानः सर्वदेहेषु सर्वव्यापी प्रतिष्ठितः ॥ १३५ ॥**
**भुक्तं सर्वरसं गात्रे व्यापयन् वह्निना सह ।**
**द्विसप्ततिसहस्रेषु नाडीमध्येषु सञ्चरन् ॥ १३६ ॥**
**समानो वायुरेवैकः स्थितो व्याप्य कलेवरम् ।**
**नागादिवायवः पञ्च त्वगस्थ्यादिषु संस्थिताः ॥ १३७ ॥**

प्राण, अपान, समान, उदान, व्यान, नाग, कूर्म, कृकर, देवदत्त और धनञ्जय—ये दश वायु सभी नाड़ियों में सञ्चरण करते रहते हैं । हे प्रिये! इनमें से पाँच मुख्य हैं जिन्हें पहले ही कह दिया गया है । उन (पाँचों) में भी प्राण मुख्यतम है । यह कन्द के नीचे स्थित रहता है । मुख और नासिका के मध्य में, हृदय नाभिमण्डल मे तथा कन्द के मध्य में प्राण स्वयं स्थित रहता है । अपान वायु मेढ्र, पायु, ऊरु, वङ्क्षण (=जङ्घा और कूल्हे का जोड़ वाला भाग) जानु (=जाङ्घ), जङ्घा, पेट, कटि और नाभिमूल में रहता है। व्यान कान, आँख, हृदय, कटि, गुल्फ (=टखना) में रहता है । समान वायु सर्वव्यापी सम्पूर्ण शरीर में प्रतिष्ठित है । अग्नि के साथ वह खाये-पीये समस्त रस को पूरे शरीर में फैलाता है । बहत्तर हजार नाड़ियों के बीच सञ्चरण करता हुआ यह समान वायु अकेला है जो सम्पूर्ण शरीर को व्याप्त कर स्थित है । नाग आदि पाँच वायु, त्वचा, अस्थि आदि में संस्थित हैं ॥ १३०-१३७ ॥

**निःश्वासोच्छ्वासकादिश्च प्राणकर्म इतीष्यते ।**
**अपानवायोः कर्मैतद् विण्मूत्रादिविसर्जनम् ॥ १३८ ॥**
**प्राणोपादानचेष्टादि व्यानकर्मेति कीर्तितम् ।**

उदानकर्म तत् प्रोक्तं देहस्योन्नमनादिकम् ॥ १३९ ॥
शोषणादि समानस्य शरीरे कर्म कीर्त्यते ।
क्षेपणादिगुणो यश्च नागकर्मेति कीर्तितम् ॥ १४० ॥
निमीलनादि कूर्मस्य क्षुत् तृष्णा कृकरस्य च।
देवदत्तस्य देवेशि निद्रा तन्द्रेति कीर्तितम् ॥ १४१ ॥
धनञ्जयस्य शोषादि सर्वकर्म प्रकीर्तितम् ।

निःश्वास-उच्छ्वास आदि प्राण वायु का कर्म माना जाता है । मल मूत्र आदि का त्याग अपान वायु का कर्म है । प्राण, उपादान, चेष्टा आदि व्यान वायु का कर्म कहा गया है । देह का ऊपर उठाना नीचे झुकाना आदि उदान वायु का कर्म है । शरीर में शोषण आदि समान वायु का कर्म कहा जाता है । जो फेंकना आदि गुण हैं वह नाग का कर्म कहा गया है । पलक गिराना आदि कूर्म का, क्षुत् तृष्णा आदि कृकर का कर्म है । हे देवेशि! निद्रा तन्द्रा आदि देवदत्त का कर्म कहा गया है । शोषण आदि सब कर्म धनञ्जय का कहा गया है ॥ १३८-१४२ ॥

ज्ञात्वैवं नाडिकास्थानं वायुयानं च यत्नतः॥ १४२ ॥
नाडीनां शोधनं कुर्याद् यथाविधि पुरःसरः ।
ततस्तपोवनं गत्वा फलमूलोदकान्वितम् ॥ १४३ ॥
तत्र रम्ये शुचौ देशे नद्यां देवालयेऽपि वा ।
सुशोभनं स्थलं कृत्वा सर्वरक्षासमन्वितम् ॥ १४४ ॥
त्रिकालस्नानसंयुक्तः शुचिर्भूत्वा समाहितः ।
मन्त्रैर्न्यासैर्न्यस्ततनुः सितभस्मधरः सदा ॥ १४५ ॥
समस्थलोपरि कुशान् समास्तीर्याथ वाऽजिनम् '
विनायकं सुसम्पूज्य कुशपुष्पोदकादिभिः ॥ १४६ ॥
गुरून् देवीं नमस्कृत्य तत्र चावध्य चासनम् ।
उदङ्मुखः प्राङ्मुखो वा पवित्रासनसङ्गतः ॥ १४७ ॥
समग्रीवशिरःकायः संवृतास्यः सुनिश्चलः ।
सुषुम्णा वर्त्मना वायुं कुण्डलिन्यां धमेत् क्षणम् ॥ १४८ ॥

**नाड़ी-शोधन**—इस प्रकार नाड़ीसंस्थान और वायु का गमनागमन जानकर साधक यथाविधि नाड़ियों का शोधन करे । फल-फूल जल से युक्त तपोवन में जाकर रमणीय पवित्र स्थान में नदी या देवमन्दिर में समस्त रक्षा से युक्त सुन्दर स्थान बनाकर (साधक) त्रिकाल स्नान करे । पवित्र होकर चित्त को शान्त कर मन्त्र और न्यास से शरीर को युक्त करे । सदा श्वेत भस्म धारण करे । समतल भूमि पर कुश या चर्म का आसन बिछाये । कुश पुष्प जल आदि से गणेश की पूजा कर गुरु और देवी को प्रणाम करे । पुनः (पद्म अर्धपद्म स्वस्तिक आदि में से कोई एक) आसन लगाकर उत्तरमुख या पूर्वमुख हो आसन पर बैठ जाय । शिर गर्दन शरीर सीधा

रखे। मुख बन्द रखे । निश्चल होकर सुषुम्णा के रास्ते वायु को एक क्षण के लिये कुण्डलिनी में ले जाय ॥ १४२-१४८ ॥

**गच्छत्यभिव्यक्तिमिदं नादब्रह्म सनातनम् ।**
**तन्नादं पिङ्गलामार्गे समानीय हृदब्जके ॥ १४९ ॥**
**इडया पूरयेत् तावद् यावद् वर्णात्मकं भवेत्।**
**भूमेरुपरि धातारं रत्या बिन्दुसमन्वितम् ॥ १५० ॥**
**बिम्बमध्यस्थमोंकारसम्पुटाकृतमुन्नतम् ।**
**एकीकृत्य तु तत् सर्वमाकर्षेद् हस्तिजिह्वया ॥ १५१ ॥**
**विश्वोदरालम्बुषाभ्यां ब्रह्मरन्ध्रे निवेशयेत्।**

(उस समय) यह सनातन (अर्थात् नित्य) नादब्रह्म अभिव्यक्त होता है । उस नाद को पिङ्गलामार्ग से हृदयकमल में ले आकर इडा से तब तक पूरित करते रहना चाहिये जब तक कि वह वर्ण का आकार नहीं ले लेता । भूमि (=ल) के बाद धाता (=क) को रति[1] (=औ) और बिन्दु से युक्त करे । फिर बिम्ब (=ह्रीयंड्री) के मध्य में स्थित ॐकार से सम्पुटित करे । (इस प्रकार ॐ लकौं ड्रीं ओऽम् बना?) इन सब वर्णों को एक बार हस्तिजिह्वा नाडी से आकृष्ट करे और विश्वोदरा तथा अलम्बुसा नाड़ियों के द्वारा ब्रह्मरन्ध्र में प्रविष्ट कराये ॥ १४९-१५२ ॥

[ देव्या निराकारस्वरूपध्यानम् ]

**निवेश्य तां तत्र देवीं निराकारां विचिन्तयेत् ॥ १५२ ॥**
**एकां ज्योतिर्मयीं शुक्लां सर्वगां व्योमरूपिणीम् ।**
**अत्यन्तनिर्मलां शुद्धामादिमध्यान्तवर्जिताम् ॥ १५३ ॥**
**अतिसूक्ष्मामनाकाशामस्पृश्यां तामचाक्षुषीम् ।**
**कूटस्थामप्यदृश्यां तां सच्चिदानन्दविग्रहाम् ॥ १५४ ॥**
**अगन्धामरसां स्वच्छामप्रेयामनूपमाम् ।**
**आनन्दामजरां नित्यां सदसत्सर्वकारिणीम् ॥ १५५ ॥**
**सर्वाधारां जगद्रूपाममृत्युं चाव्ययामजाम् ।**
**अनवस्थामप्रतर्क्यां बहिस्थां सर्वतोमुखीम् ॥ १५६ ॥**
**सर्वदृक् सर्वतः पादां सर्वस्पृक् सर्वतः शिराम्।**
**निरञ्जनीं निर्विकारां शुद्धचैतन्यरूपिणीम् ॥ १५७ ॥**
**नादोपाहतबीजेन ध्यायंस्तत्र यजेदिमाम् ।**
**कुलाकुलसमुद्भूताममृतानन्दसञ्चयाम् ॥ १५८ ॥**
**सूर्यकोटिसमां शुभ्रां नादबीजतया स्थिताम् ।**
**षट्चक्रभेदेन यजेद्योगे कुण्डलिनीहृदोः ॥ १५९ ॥**

---

१. भूमि धाता रति आदि के बीजभूत अन्य वर्ण भी हैं । उनको यथोचित रूप में क्रमबद्ध किया जा सकता है ।

**देवी का निराकार ध्यान**—उस (=ब्रह्मरन्ध्र) में प्रवेश कराकर वहाँ उसका निराकार ध्यान करे कि वह एक, ज्योतिर्मयी, शुक्ला, सर्वगा, व्योमरूपिणी, अत्यन्त निर्मल, शुद्ध, आदिमध्यान्तहीन, अतिसूक्ष्म, अनाकाश (=रिक्ततारहित), अस्पृश्य, अचाक्षुषी, कूटस्थ होती हुई भी अदृश्य, सच्चिदानन्दरूपिणी, गन्ध रस से रहित, स्वच्छ, अप्रमेय, अनौपम्य, आनन्दरूप, अजर, नित्य, सत् असत् सब की रचना करने वाली, सबका आधार, जगद् रूप, मृत्यु रहित, अव्यय, जन्मरहित, अवस्था-रहित, अप्रतर्क्य, अग्नि में स्थित, सर्वव्यापिनी, सर्वदृक्, सर्वतः पैर वाली, सर्वस्पर्श वाली, सर्वशिरवाली, निर्मल, निर्विकार, शुद्धचैतन्य रूप है । नाद से प्राप्त बीजमन्त्र के द्वारा ध्यान करता हुआ साधक वहीं (=ब्रह्मरन्ध्र में ही) उनकी पूजा करे । कुल (=शक्ति) और अकुल (=शिव) से उत्पन्न अमृत आनन्द की समूह रूप, करोड़ों सूर्य के समान (तेजोमयी), शुभ, नादबीज के रूप में स्थित देवी की षट्चक्रभेदन के द्वारा कुण्डलिनी और हृदय के सन्धिस्थल में पूजा करे ॥ १५२-१५९ ॥

**आधारपद्ममध्येऽन्तर्द्विपत्रे त्रिदलेऽपि च ।**
**स्वाधिष्ठाने षोडशारे पीठे च मणिपूरके ॥ १६० ॥**
**द्वादशे च विशुद्धेऽपि तत्राप्यष्टदले तथा ।**
**हृदये दशपत्रे तु द्वादशार्द्धे चतुर्दले ॥ १६१ ॥**
**कण्ठे भाले यजेद् देवीं जिह्वया नादमुच्चरन् ।**
**गच्छन्तीं ब्रह्ममार्गेण सूक्ष्मषट्चक्रभेदिनीम् ॥ १६२ ॥**
**प्रच्योतदमृतं दिव्यं क्षीरधारोपमं द्रवम् ।**
**पीत्वा सदाशिवेनैव सामरस्यपदं गताम् ॥ १६३ ॥**
**यजेद् ध्यायेन्नमस्कुर्याद् यद् यदिच्छेदनन्यधीः ।**

**षट्चक्र-भेद के द्वारा कुण्डलिनी का जागरण**—दो दलों वाले मूलाधार कमल, तीन दलों वाले स्वाधिष्ठान, षोडशदल वाले मणिपुर, द्वादशान्त, अष्टदल विशुद्ध, दशदलहृदय, षड्दल और चतुर्दल वाले कण्ठ और भाल में देवी की पूजा जिह्वा से नाद का उच्चारण करते हुए करना चाहिये । सूक्ष्म षट्चक्र का भेदन करने वाली वह देवी ब्रह्ममार्ग से जाने वाली अमृत का क्षरण करती हुई, क्षीरधारा के समान दिव्य द्रव का पान कर सदाशिव के साथ समरसता को प्राप्त हुई है । साधक एकचित्त होकर जिस-जिस की कामना करता हो (उस-उस उद्देश्य की पूर्त्ति के लिये देवी का) यजन, ध्यान और नमन करे ॥ १६०-१६४ ॥

[ एतदीयफलश्रुतिः ]

**सामरस्यपदं प्राप्तां यः क्षणं चिन्तयेत् सुधीः ॥ १६४ ॥**
**राजसूयाश्वमेधानां तेनेष्टा यज्ञकोटयः ।**
**काष्ठां कलां क्षणं व्याप्य यः स्थितस्तत्र साधकः ॥ १६५ ॥**
**वाजपेयः पुण्डरीको विश्वजित् तेन वै कृतः ।**

**ध्यान का फल**—जो विद्वान् (देवी के साथ) सामरस्यपद को प्राप्त इसका एक क्षण के लिये भी ध्यान करता है (समझ लेना चाहिये कि) उसने करोड़ों राजसूय और अश्वमेध यज्ञ कर लिये हैं । जो साधक एक काष्ठा कला या क्षण तक उस (ध्यानावस्था) में स्थित रहता है मानो उसने वाजपेय पुण्डरीक और विश्वजित् याग कर लिया ॥ १६४-१६६ ॥

[ कुण्डलिन्याः स्वस्थाननिवेशः ]

**पुनस्तेनैव मार्गेण नयेत् कुण्डलिनीमधः ॥ १६६ ॥**
**पश्यन्त्यापरया तत्र वैखर्या वर्त्मनापि च ।**
**संयोज्य लम्बिकामार्गात्तालुमूलादधो नयेत् ॥ १६७ ॥**
**जिह्वयाकृष्य तां विद्यां हृदब्जे विनिवेशयेत् ।**
**आमूलाद् ब्रह्मरन्ध्रान्तमेकीभूतं विचिन्तयेत् ॥ १६८ ॥**
**हृदब्जादपि निष्काश्य तथा नाडीचयादपि ।**
**प्रदीपकलिकाकारां कन्द एव निवेशयेत् ॥ १६९ ॥**

**कुण्डलिनी का स्वस्थान में निवेश**—(साधक जिस मार्ग से कुण्डलिनी को ब्रह्मरन्ध्र तक ले गया था) पुनः उसी मार्ग से कुण्डलिनी को नीचे ले जाय । इस क्रम में वह पश्यन्ती-परा-बैखरी के मार्ग से भी उसे संयुक्त कर लम्बिकामार्ग से तालुमूल से नीचे ले आये । जिह्वा से आकर्षण कर उस विद्या का हृदयकमल में प्रवेश कराये । फिर मूलाधार से लेकर ब्रह्मरन्ध्र तक एकीभूत रूप में ध्यान करे । तत्पश्चात् प्रदीप की कलिकासदृश उसको हृदय और नाड़ीसमूह से निकाल कर कन्द में प्रविष्ट करा दे ॥ १६६-१६९ ॥

[ योगाभ्यासस्यास्य माहात्म्याभिधानम् ]

**एतदभ्यासयोगेन यत्फलं तच्छृणुष्व मे ।**
**न क्षुत् पिपासा न जरा न मृत्युर्नामयादि च ॥ १७० ॥**
**पुरीषमूत्रे नैव स्यान्निद्रा तन्द्रा भवेन्न च ।**
**यावान् दोषः शरीरस्य तेषु कोऽपि न जायते ॥ १७१ ॥**
**अतीतानागतं वेत्ति वाक्सिद्धिरपि जायते ।**
**सरस्वती तस्य मुखे स्वयमेत्य वसेत् सदा ॥ १७२ ॥**
**परार्द्धजीवी च भवेत् कामरूपी भवत्यपि ।**
**देवानाकर्षयेच्चापि खेचरो जायते तथा ॥ १७३ ॥**
**वर्णितुं शक्यते नास्य महिमा वर्षकोटिभिः ।**
**साक्षात् स रुद्रो भवति पाञ्चभौतिकदेहभृत् ॥ १७४ ॥**
**प्राप्नोति मोक्षमेवासौ षण्मासाभ्यन्तरे नरः ।**

**इस योगाभ्यास का माहात्म्य**—इस अभ्यासरूपी योग से जो फल मिलता है वह मुझसे सुनो । इससे (योगी को) भूख-प्यास जरा मृत्यु रोग नहीं होते । मल-मूत्र

का त्याग और निद्रा-तन्द्रा भी नहीं होती । शरीर के जितने दोष हैं उनमें से कोई भी नहीं होता । (वह साधक) अतीत और अनागत को जान लेता है । उसको वाक्सिद्धि प्राप्त हो जाती है । उसके मुख में सदा सरस्वती निवास करती है । वह कामरूपी और परार्द्धजीवी होता है । देवताओं को आकृष्ट करता और आकाशचारी हो जाता है। उसकी महिमा का वर्णन करोड़ों वर्ष तक नहीं किया जा सकता । पाञ्चभौतिक शरीर धारण किया हुआ भी वह साक्षात् रुद्र हो जाता है । यह मनुष्य छह महीने के भीतर मोक्ष प्राप्त कर लेता है ॥ १७०-१७५ ॥

[ मोक्षोत्कर्षस्य सिद्धीनां चापकर्षस्याभिधानम् ]

**मोक्षैकसाधकस्यास्य विधेरन्यास्तु सिद्धयः ॥ १७५ ॥**
**केवलं विघ्नकारिण्य इत्येतद् विद्धि पार्वति ।**
**मूढास्तु केवलं सिद्धीरभिकाङ्क्षन्ति नित्यशः ॥ १७६ ॥**
**मोक्षार्थमेव यतते धीरः संसारसागरे ।**
**नाड्यश्चतुर्दश प्रोक्ताः पूर्वं मुख्यतमा हि याः ॥ १७७ ॥**
**तासु वायुनिरोधेन भूयस्यः स्युर्हि सिद्धयः ।**
**तेषां प्रकारा नाख्याता विस्तरत्वान् मया प्रिये ॥ १७८ ॥**
**केवलं सिद्धिहेतुत्वं तेषां नात्रोपयोगिता ।**
**विधिमेनं विधातुं यो न समर्थो विमूढधीः ॥ १७९ ॥**
**स चिन्तयेत्तु साकारां तां देवीं हृदयाम्बुजे ।**

**मोक्ष उत्कृष्ट और सिद्धियाँ अपकृष्ट हैं**—मोक्ष के साधक इस (योगी) के लिये सिद्धियाँ विधि से भिन्न प्रकार की होती हैं । हे पार्वति! यह समझ लो कि वे केवल विघ्नकारिणी ही होती हैं । मूर्ख लोग प्रतिदिन केवल सिद्धियों को चाहते हैं किन्तु धीरपुरुष इस संसारसागर में मोक्ष के लिये ही प्रयास करते हैं । पहले जो मुख्य चौदह नाड़ियाँ बतलायी गयीं उनमें प्राणवायु को रोकने से सिद्धियाँ प्राप्त होती हैं । हे प्रिये! विस्तार के भय से मैंने उन (=सिद्धियों) के भेद नहीं बताये । यहाँ उन सिद्धियों की उपयोगिता केवल (सांसारिक वैभव की) हेतु बनने में नहीं है । (वरन् उनकी सहायता से देवी के निराकार चिन्तन का मार्ग प्रशस्त करना चाहिये) । जो मूढ इस विधि का अनुष्ठान करने में समर्थ नहीं है वह अपने हृदयकमल में साकार उसका चिन्तन करे ॥ १७५-१८० ॥

**ध्यानं सम्प्रति वक्ष्यामि शृणु देवि समाहिता ॥ १८० ॥**
**ध्यानमेव हि जन्तूनां कारणं सौख्यमोक्षयोः ।**

[ देव्याःसाकाररूपध्यानम् ]

**हृत्पद्माष्टदलोपेते कन्दमूलसमुत्थिते ॥ १८१ ॥**
**द्वादशाङ्गुलनालेऽस्मिंश्चतुरङ्गुलमुच्छ्रिते ।**

प्राणायामैर्विकसिते केशरान्वितकर्णिके ॥ १८२ ॥
हृत्सरोरुहमध्येऽस्मिन् प्रकृत्यात्मिककर्णिके ।
अष्टैश्वर्य्यदलोपेते विद्याकेशरसंयुते ॥ १८३ ॥
ज्ञाननाले महाकन्दे प्राणायामप्रबोधिते ।
विश्वार्च्चिषं महावह्निं वमन्तीं सर्वतोमुखीम् ॥ १८४ ॥
भयङ्करीं जगद्योनिं ललज्जिह्वाकरालिनीम् ।
भासयन्तीं स्वकं देहमापादतलमस्तकम् ॥ १८५ ॥
प्रेतभूतपिशाचादिडाकिनीयोगिनीगणैः ।
भैरवाद्यैः परिवृतां श्मशानतलवासिनीम् ॥ १८६ ॥
ज्वलत्करालज्वलनचितामध्यकृतस्थितिम् ।
शवोपरि समारूढां विमुक्तचिकुरोच्चयाम् ॥ १८७ ॥
निष्क्रान्तरसनाकम्पप्रकम्पितजगत्त्रयाम् ।
दन्तमण्डलनिर्गच्छच्चारुचन्द्रिकया तया ॥ १८८ ॥
द्योतयन्तीं जगत् सर्वं चन्द्रमण्डलवत् सदा ।
तुङ्गपीवरवक्षोजभरनम्रकलेवराम् ॥ १८९ ॥
प्रत्यालीढपदां देवीमट्टहासभयप्रदाम् ।
पार्श्वस्थिताभ्यां फेरुभ्यामतीव विकरालिनीम् ॥ १९० ॥
नृमुण्डमालासन्दोहकृतमालावगुण्ठिनीम् ।
सद्यःकृत्तनृमुण्डाभ्यां कुण्डलद्वयशोभिनीम् ॥ १९१ ॥
कठोरपीवरानीलदोः षोडशविराजिताम् ।
नरान्त्रविहिताबद्धयोगपट्टपरिच्छदाम् ॥ १९२ ॥
दिगम्बरां खर्वतनुं हसन्तीं कामलालसाम् ।
संवर्त्तकालज्वलनदुर्निरीक्ष्यतनुप्रभाम् ॥ १९३ ॥
कल्पान्तघोषमार्तण्डकोटिस्तम्भनकारिणीम् ।
निर्वातदीपवत्तस्मिन् दीपितां हव्यवाहने ॥ १९४ ॥
ततस्तस्य शिखामध्ये संस्थितां जगदम्बिकाम् ।
ध्यात्वा कामकलाकालीं सोऽहमस्मीति भावयेत् ॥ १९५ ॥
तद्रूपतां समासाद्य मुक्तिं तेनैव गच्छति ।

**देवी के साकार रूप का ध्यान**—हे देवि! अब मैं (उसका) ध्यान बतलाऊँगा। सावधान होकर सुनो। ध्यान ही जीवों के सुख और मोक्ष का कारण है। कन्दरूपी मूल से उठा हुआ हृदयकमल आठ दलों वाला है। उसका नाल बारह अङ्गुल का है (अर्थात् मूलाधार से हृदय तक की दूरी बारह अङ्गुल है)। यह कमल चार अङ्गुल ऊँचा है। इसकी कर्णिका में केशर है और यह प्राणायाम के द्वारा विकसित है। इस हृदयकमल के बीच प्रकृति कर्णिका के रूप में है। अष्ट सिद्धियाँ (उस कमल के) आठ दल हैं। विद्या केशर है। ज्ञान नाल है। ऐसा महाकन्द जब

प्राणायाम से प्रबोधित होता है तो उसमें (कामकलाकाली का ध्यान करना चाहिये । वह काली) विश्वज्वाला वाली महा अग्नि का वमन कर रही है । परिपूर्ण, भयङ्कर, संसार का कारण है । लपलपाती हुई जिह्वा के कारण विकराल है । पैर से लेकर मस्तक तक अपने शरीर को भासित कर रही है । प्रेत, भूत, पिशाच आदि डाकिनी एवं योगिनीगणों तथा भैरव आदि से परिवृत है । जलती हुई विकराल अग्नि की चिता के मध्य में स्थित, शव के ऊपर आरूढ, खुले बालों वाली, (मुँह के अन्दर से बाहर) निकली हुई जीभ के कम्प से तीनों लोकों को कँपा देने वाली, दाँतों से निकलने वाली चारुचन्द्रिका से समस्त संसार को चन्द्रमण्डल के समान सदा प्रकाशित करने वाली है । उनका शरीर ऊँचे-चौड़े स्तनों के भार से नम्र है । पैर आगे की ओर बढ़ा है । अट्टहास से भय देने वाली है । अगल-बगल दो शृगालिने स्थित हैं जिनसे वह अतीव विकराल हैं । नरमुण्डसमूह की माला पहनी है । तत्काल काटे गये दो नरमुण्डों के कुण्डल से शोभायमान है । कठोर पुष्ठ नीली सोलह भुजाओं (की करधनी से) शोभायमान हैं । मनुष्य की आँतों से योगपट्ट बाँधी हैं । दिगम्बर, छोटी देहवाली, हँसती हुई, कामासक्त, प्रलय काल की अग्नि की भाँति दुर्निरीक्ष्य शरीर प्रभावाली है । कल्प के अन्त में उत्पन्न हुए शब्द से करोड़ों सूर्यों को स्तम्भित करने वाली तथा उस अग्नि में निर्वातदीप के समान दीपित हैं । उस अग्निशिखा के मध्य स्थित जगदम्बा कामकलाकाली का ध्यान कर 'सोऽहमस्मि' (मैं वहीं कामकला काली हूँ) ऐसी भावना करनी चाहिये । साधक तद्रूपता को प्राप्त कर उसी से मुक्त हो जाता है ॥ १८०-१९६ ॥

[ध्यानविधिना विविधसिद्धिप्राप्त्युपायस्य वर्णनम्]

**अथवा सिद्धिलिप्सा चेद् भवत्येव न संशयः॥ १९६ ॥**
**ध्यायन् वै पञ्चघटिकाः सर्वरोगैः प्रमुच्यते ।**
**घटिकादशकध्यानात् पृथिव्या जयमाप्नुयात् ॥ १९७ ॥**
**नाडीपञ्चदशध्यानाद् वह्निनासौ न दह्यते ।**
**घटिकाविंशतिध्यानाद् वायुवद् व्योमगो भवेत्॥ १९८ ॥**
**मूत्रं पुरीषं जयति पञ्चविंशतिनाडिभिः ।**
**सम्पूर्णदिवसेनैव सर्वसिद्धिः प्रजायते ॥ १९९ ॥**
**अहोरात्रेण देवेशि जीवन्मुक्तो भवेन्नरः ।**
**इति योगविधिः सर्वः कथितस्ते मया क्रमात्॥ २०० ॥**

**ध्यान से विविध सिद्धियाँ**—अथवा यदि (साधक को) सिद्धिलाभ की इच्छा हो तो निःसन्देह वह पाँच घड़ी (=२ घण्टा) ध्यान कर समस्त रोगों से मुक्त हो जाता है । दश घड़ी ध्यान करने से पृथिवी पर विजय प्राप्त करता है । पन्द्रह घड़ी ध्यान करने से वह अग्नि से नहीं जलता । बीस घटिका तक ध्यान करने से वायु के समान व्योमचारी हो जाता है । पच्चीस नाडी तक ध्यान से मल-मूत्र पर नियन्त्रण

प्राप्त करता है । पूरा एक दिन ध्यान करने से सर्वसिद्धि मिलती है । हे देवेशि! एक दिन-रात ध्यान करने से मनुष्य जीवन्मुक्त हो जाता है । इस प्रकार मैंने तुमको क्रम से योगविधि बतलायी ॥ १९६-२०० ॥

[ पूजायाः कोटित्रयनिर्देशः ]

**उत्तमो मध्यमः पक्षस्तथैवाधम एव च ।**
**उत्तमो योगमार्गेण मध्यमो ध्यानसंश्रयात् ॥ २०१ ॥**
**पूजाध्यानादिभिर्ज्ञेयोऽप्यधमाराधनक्रमः ।**
**कृते युगे वा त्रेतायां योग एवोत्तमो विधिः ॥ २०२ ॥**
**ध्यानमेव द्वापरादौ कलौ न्यासार्चनं खलु ।**
**अल्पायुषोऽल्पमेधाश्च स्वल्पप्रज्ञा महालसाः ॥ २०३ ॥**
**दुराचारा नास्तिकाश्च कामलोभपरायणाः ।**
**ईदृशाश्च नराः सर्वे भविष्यन्ति कलौ युगे ॥ २०४ ॥**
**नायं योगो महेशानि भविष्यति गुरुं विना ।**
**केवलं न्यासपूजादि करिष्यन्ति फलार्थिनः ॥ २०५ ॥**

**योगविधि की श्रेणियाँ**—(यह योगविधि) उत्तम मध्यम और अधम (तीन प्रकार की) होती है । उत्तमविधि योगमार्ग की, मध्यम ध्यान का आश्रयण और पूजा ध्यान आदि अधम आराधन का क्रम है । सत्ययुग अथवा त्रेता में योग ही उत्तमविधि थी । द्वापर में ध्यान और कलियुग में न्यास, पूजा (प्रशस्य मानी गयी) है । कलियुग में मनुष्य अल्पायु, मन्दबुद्धि, स्वल्पप्रज्ञा वाले, महाआलसी, दुराचारी, नास्तिक, कामी और लोभी होंगे । हे महेशानि! यह योग गुरु के बिना नहीं किया जा सकता । फल अर्थात् सिद्धि चाहने वाले केवल न्यास.पूजा आदि करेंगे ॥ २०१-२०५ ॥

[ विश्वासस्य फलदायकत्वाभिधानम् ]

**तथाप्यास्थावतां देवि फलं किञ्चित् प्रयच्छति ।**
**एवं ज्ञात्वा तु यः कुर्याद् ध्यानन्यासार्चनानि हि ॥ २०६ ॥**
**अवश्यं फलभाग् भूयान्नात्र कार्या विचारणा ।**
**ध्यानेऽर्चने जपे न्यासे होमे च बलिकर्मणि ॥ २०७ ॥**
**भावना यादृशी यस्य सिद्धिः स्यादेव तादृशी ।**
**इति ते कथितो देवि प्रपञ्चः कामकालिकः ॥ २०८ ॥**
**वद सत्यं पुनर्मत्तः किमन्यच्छ्रोतुमिच्छसि ॥ २०९ ॥**

**॥ इत्यादिनाथविरचितायां पञ्चशतसाहस्र्यां महाकालसंहितायां सामान्यविशेषप्रयोगो नाम सप्तमः पटलः ॥ ७ ॥**

**विश्वास फलदायक है**—(यद्यपि कलियुग में योगी और ध्यानी नहीं होते) तथापि हे देवि! आस्था वालें को (यह विधि) कुछ फल देती ही है । ऐसा जानकर जो व्यक्ति ध्यान न्यास अर्चन करता है वह अवश्य फल का भागी होता है । इसमें सन्देह नहीं करना चाहिये । ध्यान पूजा जप न्यास होम और बलि-कार्य के विषय में जिसकी जैसी भावना होती है उसको वैसी सिद्धि मिलती है । हे देवि ! यह मैंने तुमको कामकलाकाली का विस्तार बतलाया । सच बताओ कि तुम मुझसे और क्या सुनना चाहती हो ॥ २०६-२०९ ॥

**॥ इस प्रकार श्रीमद् आदिनाथविरचित पचास हजार श्लोकों वाली महाकाल-संहिता के कामकलाकाली खण्ड के सामान्यविशेषप्रयोग नामक सप्तम पटल की आचार्य राधेश्याम चतुर्वेदी कृत 'ज्ञानवती' हिन्दी व्याख्या सम्पूर्ण हुई ॥ ७ ॥**

...*...

# पञ्चमः पटलः

## अथ मन्त्रचैतन्यकथनम् ।

श्रीपार्वत्युवाच ।।

भगवन् देवदेवेश लोकानां हितकारक ।
चतुर्वर्गप्रदं देव चैतन्यं मे प्रकाशय ।।१।।

श्रीशिव उवाच–

शृणु देवि प्रवक्ष्यामि चैतन्यं परमाद्भुतम् ।
रहस्यं परमं गुह्यं गोपनीयं त्वया पुनः ।।२।।
चित्शक्त्या ध्वनितं देवि परिणामक्रमेण तु ।
वर्णभावं समाश्रित्य निर्गुणं सद्गुणात्मकम् ।।३।।
षट्चक्रञ्च तथा भित्वा शब्दरूपं सनातनम् ।
नादबिन्दु-समायुक्तं चैतन्यं परिकीर्त्तितम् ।।४।।
अथवान्य प्रकारेण श्रूयतां पद्मलोचने ।
विना येन न सिध्यन्ति जपपूजादिकानि च ।।५।।

---

**अधुना मन्त्रचैतन्य का कथन कहा जा रहा है —**

***पार्वती ने कहा—*** हे भगवन्! आप देवतागणों के ईश्वर हैं एवं सर्वलोक हितकारक हैं। धर्म, अर्थ, काम एवं मोक्षप्रदायक मन्त्रचैतन्य-पद्धति को आप मेरे निकट प्रकाशित करें ।।१।।

***शिव ने कहा—*** हे देवि! मैं परमाद्भुत मन्त्रचैतन्य का वर्णन कर रहा हूँ, श्रवण करें। यह अत्यन्त रहस्यपूर्ण एवं गोपनीय है। आप भी इसे सर्वप्रयत्न से गोपन करें ।।२।।

***हे देवि!*** मूलाधार से सहस्रार पर्यन्त षट्चक्र में सभीवर्ण चित्शक्ति में अवस्थान कर रहे हैं। चित्शक्ति निर्गुण होने पर भी वर्णभावाश्रय के कारण वह गुणात्मकरूप से प्रकाशित हो रहा है ।।३।।

नादबिन्दुयुक्त वर्णमयी शक्ति जब षट्चक्रों का भेदन कर उत्थित होता है, तभी वह सनातन चित्शक्ति-रूप में प्रकाशित होता है ।।४।।

***हे कमललोचने!*** जिस मन्त्र-चैतन्य के बिना जप-पूजा प्रभृति कुछ भी सिद्ध नहीं होता है, मैं उसके प्रकारान्तर विधान को बता रहा हूँ, श्रवण करें ।।५।।

अनाहतस्य मध्ये तु ग्रथितं वर्णमुत्तमम् ।
सुषुम्नावर्त्मना देवि कण्ठदेश-विनिर्गतम् ।।६।।
चैतन्यञ्च महेशानि योगीनां योगरूपकम् ।
सहस्रारे वर्णरूपं परिणाम क्रमेण तु ।।७।।
कर्णिकामध्यसंस्थे तु नादबिन्दु समन्वितम् ।
एवं संचिन्तयेद् देवीं चैतन्यमुत्तमं पुनः ।।८।।
मन्त्राक्षराणि चित्शक्तौ ग्रथितानि महेश्वरि ।
तानि संचिन्तयेदेवि सहस्रारे दले सदा ।।९।।
चैतन्यमन्त्ररूपा सा चैतन्यानन्ददायिनी ।
चैतन्यं नादशक्तिश्च चैतन्यं वर्णरूपकम् ।।१०।।
मणिपुरे सदा चिन्त्यं मन्त्राणां प्राणरूपकम् ।
अथवान्य प्रकारेण श्रूयतां वरवर्णिनि ।।११।।
कामबीजं रमाबीजं शक्तिबीजं सुरेश्वरि ।
एतानि पूर्वमुच्चार्य मातृकां तदनन्तरम् ।।१२।।

---

***हे देवि!*** अनाहत पद्म में उत्तमवर्ण ग्रथित है। सुषुम्नावर्त्म में कण्ठदेश से वह बहिर्गत होता है ।।६।।

***हे महेशानि!*** चैतन्य या चित्शक्ति ही योगिगणों की योगसाधना का विषयवस्तु है। वह चित्शक्ति ही सहस्रार में वर्णरूप में, परिणाम में (अर्थात् विलीन अवस्था में) कर्णिका के मध्य में नादबिन्दु-संयुक्त होकर अवस्थान कर रही है। इस रूप में देवी का (कुलकुण्डलिनी का) ध्यान करने पर उत्तम मन्त्रचैतन्य का लाभ होता है ।।७-८।।

***हे महेश्वरि!*** मन्त्राक्षरसमूह सर्वकाल में चित्शक्ति में ग्रथित अवस्था में है। सहस्रार में सहस्रदल कमलदलसमूह में उन समस्त मन्त्राक्षरों का चिन्तन करें। जो सहस्रार में चित्शक्ति-रूप में अवस्थिता हैं, वही मन्त्रचैतन्य-स्वरूपा हैं, वहीं चैतन्य एवं आनन्द दायिनी हैं। चैतन्य ही नादरूपी शक्ति हैं एवं चैतन्य ही वर्णरूपी हैं ।।९-१०।।

मणिपुर में सर्वदा मन्त्र के प्राणरूपी चैतन्य का ध्यान करें। हे वरवर्णिनि! प्रकारान्तर से मन्त्र-चैतन्य (विधान) का श्रवण करें ।।११।।

***हे सुरेश्वरि!*** कामबीज (क्लीं), रमाबीज (श्रीं) एवं शक्तिबीज (ह्रीं) को मातृकावर्ण के पूर्व में युक्त करें। उसके बाद, उक्त बीजत्रय-संयुक्त मातृकावर्ण के

पुटितं मूलमन्त्रञ्च शतमष्टोत्तरं जपेत् ।
कोटि-कोटि-गुणं तच्च लभते नात्र संशयः ।।१३।।
अथवान्यप्रकारेण चैतन्यं शृणु पार्वति ! ।
येन विज्ञानमात्रेण परमं पश्यति ध्रुवम् ।।१४।।
सूर्यमण्डलमध्यस्थं चिन्तयेन्मूलमन्त्रकम् ।
अष्टोत्तरशतं जप्त्वा मूलमन्त्र-स्वरूपकम् ।।१५।।
गुरुं संचिन्तयेत्तत्र शिवरूपं सनातनम् ।
शक्तिञ्च चिन्तयेत्तत्र ब्रह्मरूपां सनातनीम् ।।१६।।
एवं संचिन्तयेत् यस्तु जपेद्वापि सुरेश्वरि ।
नासाध्यं तस्य लोकेऽस्मिन् मुक्तिर्देवि करे स्थिता ।।१७।।

इति कुब्जिकातन्त्रे पार्वती-परमेश्वर-संवादे पञ्चमः पटलः ।।५।।

---

द्वारा मन्त्र को पुटित कर पहले अष्टोत्तरशत जप करें। (एवं उसके बाद यथाविधिनियम से केवल मन्त्र-जप करते रहें।) इसप्रकार मन्त्रजप करने पर, उसके द्वारा कोटि-कोटि गुण जपफल का लाभ होता है। इसमें कुछ भी सन्देह नहीं है ।।१२-१३।।

***हे पार्वति!*** अन्य प्रकार की मन्त्र-चैतन्य-विधि को बता रहा हूँ, श्रवण करें। इस पद्धति के ज्ञानलाभ मात्र से साधक निश्चय ही इष्टदर्शन का लाभ करता है ।।१४।।

सूर्यमण्डल के मध्य में मूलमन्त्र अवस्थित है— इस प्रकार चिन्तन करते हुए अष्टोत्तर शतबार मूलमन्त्र का जप करें। उसके बाद मूलमन्त्रस्वरूप सनातन एवं शिवरूपी गुरु को उस सूर्यमण्डल के मध्य में चिन्तन करें। उन परमशिव के साथ सूर्यमण्डल के मध्य में ब्रह्मरूपा सनातनी आद्याशक्ति का भी ध्यान करें। हे सुरेश्वरि! जो व्यक्ति इस प्रकार ध्यान करता है या मन्त्र का जप करता है, त्रिभुवन में उसके लिए असाध्य कुछ भी नहीं रहता एवं मुक्ति भी उसके करतलगत हो जाती है ।।१५-१७।।

***कुब्जिकातन्त्र में पार्वती-परमेश्वर-संवाद में***
***पञ्चम पटल समाप्त ।।५।।***



# षष्ठः पटलः

## योनिमुद्राकथनम्।

श्रीशिव उवाच—

अथ वक्ष्ये महेशानि शरदिन्दुनिभानने ।
अतीवपरमं गुह्यं न प्रकाश्यं कदाचन ।।१।।
रहस्यं परमं गुह्यं सर्वदेवेषु वन्दितम् ।
चतुर्वेदैरगम्यन्तु संसारार्णव - तारकम् ।।२।।
सर्वाम्नायै र्महादेवि वन्दितं सुरसुन्दरि ।
गोपनीयं गोपनीयं गोपनीयं महेश्वरि ।।३।।

---

**सम्प्रति योनिमुद्रा का कथन कहा जा रहा है —**

(मूलाधार से कुलकुण्डलिनी शक्ति को क्रमान्वय से स्वाधिष्ठान, मणिपुर इत्यादि चक्र का एक के बाद एक का भेदन कर, उनको सहस्रार में आनयन-कार्य को ही तन्त्र में 'योनिमुद्रा' नाम से कहा गया है। योनिमुद्रा के सहयोग से मन्त्र का जप करने पर, मन्त्र अतिशीघ्र फल प्रदान करता है। तोड़लतन्त्र के नवम उल्लास में,षट्चक्र के किस चक्र में जप के द्वारा किस-किस फल को प्राप्त किया जा सकता है, वह वर्णित हुआ है। इस पटल में कुलकुण्डलिनी शक्ति को, विभिन्न चक्रों में स्थापित करते समय, उनके विभिन्न प्रकार के ध्यान का विषय वर्णित हुआ है। जो वेदान्त की माया है, वही तन्त्र की आद्याशक्ति है, वही कुलकुण्डलिनी हैं एवं वही दक्षिणाकालिका हैं। 'दक्षिणा' शब्द कालिका का विशेषण-मात्र है। पूर्व अध्याय में उक्त हुआ है कि—मातृकावर्णसमूह चैतन्यरूपी है एवं चैतन्यशक्ति में वे अवस्थान करते हैं। अत: चैतन्यरूपिणी कुलकुण्डलिनी के उत्थापन के साथ अभीष्ट मन्त्र का जप करने पर, वह द्रुत सिद्ध होता है, इस विषय में आश्चर्य क्या है?)

*शिव ने कहा*—हे महेशानि, हे शरदिन्दु-निभानने! इसके अनन्तर मैं चतुर्वेद के भी अगम्य संसारार्णव-त्राणकारी, सर्वदेववन्दित, अतिशय रहस्यजनक एवं परम गोपनीय तथ्य को बता रहा हूँ। यह परमतत्त्व अतीव गोपनीय है। कदापि किसी के भी निकट इसे प्रकट न करें ॥१-२॥

*हे महादेवि, हे सुरसुन्दरि!* यह परम गुह्यतत्त्व सर्वाम्नाय-वन्दित है अर्थात् यह गुह्यतत्त्व ही सर्वतन्त्रों में श्रेष्ठ एवं सारतत्त्व है। हे महेश्वरि! सर्वदा सर्वप्रयत्न से इसे गोपन करें ॥३॥

न प्रकाश्यं महादेवि स्वयोनिरिव पार्वति ।
निशीथे नग्नकेशस्तु नग्नशक्ति-समन्वित: ।।४।।
चिन्तयेदिष्टदेवीं च योगिनां योगरूपिणीम् ।
गुह्यदेशे नामपाद-गुल्फं संयोजयेत् सुधी: ।।५।।
शरीरं च स्थिरीकृत्य जिह्वायां तालुकां न्यसेत् ।
नासाग्र-नेत्रयुग्मञ्च कर्त्तव्यं च महेश्वरि ।।६।।
कण्ठासमं तथा कृत्वा चिन्तयेत् वाहिनीं शिवाम् ।
भुजङ्गरूपिणीं देवीं मूलाधार-निवासिनीम् ।।७।।
प्रातराधार-कमले हुतभुङ्मण्डले स्थिताम् ।
चतुर्भुजां महादेवीं परमामृत-बृंहिताम् ।।८।।
श्यामवर्णां महादेवीं महापद्मासनस्थिताम् ।
अभयं वरदञ्चैव दक्षिणे धारिणीं सदा ।।९।।
खड्गं मुण्डं वामभुजे धारयन्तीं सनातनीम् ।
मुक्तकेशीं स्मितमुखीं श्मशानालय वासिनीम् ।।१०।।
दन्तुरां दक्षिणे व्यापि मुक्तकेशीं दिगम्बरीम् ।
शवानां करसंघातै: कृतकाञ्चीं हसन्मुखीम् ।।११।।

---

***हे महादेवि!*** यह गुह्यतत्त्व स्व-योनिवत् गोपनीय है। निशीय में नग्नकेश एवं नग्नशक्ति-समन्वित साधक योगिगणों के योगरूपिणी स्वीय इष्टदेवी का चिन्तन करें। (इस स्थल पर 'इष्टदेवी' शब्द से 'कालिकादेवी' को समझना चाहिए।) हे महेश्वरि! गुह्यदेश में वामपद के गुल्फ का संयोग कर देह को स्थिर-रूप में रक्षा करें। उसके बाद सुधी साधक तालुमूल में जिह्वाग्र का संयोग करके, नासाग्र में उभय चक्षुओं की दृष्टिओं को सन्निबद्ध कर, अवस्थान करें ।।४-६।।

उसके बाद कण्ठदेश को समभाव (ऋजुभाव) में रक्षा कर, मूलाधार-निवासिनी भुजङ्गरूपिणी परम शिवारूपिणी आद्याशक्ति का चिन्तन करें ।।७।।

(मूलाधार में देवी का ध्यान इस प्रकार है) — प्रात:काल आधारकमल पर अग्निमण्डल में स्थिता, परमामृत में वर्द्धिता, महादेवी आद्याशक्ति, श्यामवर्णा, महापद्मासनस्थिता हैं। वह चतुर्भुजा हैं। वह सर्वदा दक्षिण (दाहिने) दिशा के ऊर्ध्वहस्त में अभय (मतान्तर में अभयमुद्रा) एवं निम्नहस्त में वर (मतान्तर में वरमुद्रा) को धारण की हुई हैं ।।८-९।।

वह वामदिशा के ऊर्ध्वहस्त में खड्ग एवं निम्न हस्त में नरमुण्ड को धारण की हुई हैं। वह सनातनी, महामाया, मुक्तकेशी, स्मितहास्यमुखी एवं श्मशानालयवासिनी हैं ।।१०-११।।

लम्बमानां मुण्डमालां धारयन्तीं सदा शिवाम् ।
शवस्य हृदये चैज दक्षपादं निवेशिताम् ।।१२।।
महाकालेन रत्यर्थमत्यन्तलालसां पराम् ।
चन्द्र-सूर्य-बह्निरूप-लोचनत्रय-संयुताम् ।।१३।।
अर्द्धचन्द्रधरां देवीं पीनोन्नत-पयोधराम् ।
शिवाभिर्घोररावाभिश्चतुर्दिक्षु समन्विताम् ।।१४।।
चतुर्वेदैरपाराञ्च सर्वदेव-विभूषिताम् ।
कामदां कामरूपाञ्च भक्तानां त्राणकारिणीम् ।।१५।।
चतुर्वर्गप्रदां भीमां वन्दे दक्षिणकालिकाम् ।
स्वाधिष्ठाने महादेवि चिन्तयेद् बिन्दुरूपकम् ।।१६।।
तत्र देवीं च संचिन्त्य निर्मलां विश्वरूपिणीम् ।
अभयं वरदञ्चैव हस्तञ्च सुरसुन्दरि ।।१७।।
धनुर्बाणधरां देवीं पाशाङ्कुशधरां पुनः ।
बाणलिङ्ग-समायुक्तां नीलवर्णानल-प्रभाम् ।।१८।।

---

परम शिवानी, गलदेश में लम्बमान मुण्डमाला को धारण कर, शव के हृदय पर, उनके दक्षिण पद को स्थापित कर, दण्डायमान हैं ।।१२।।

वह महाकाल के साथ रमण करने के लिए अत्यन्त लालसा परायणा बनकर अवस्थिता हैं। वह त्रिनयना हैं। उनका नयनत्रय चन्द्र, सूर्य एवं वह्नि स्वरूप हैं ।।१३।।

देवी अर्द्धचन्द्रधारिणी, पीनोन्नतपयोधरा एवं चतुर्दिशाओं में घोररावा शिवाकुलपरिवेष्टिता हैं ।।१४।।

सर्वदेव-विभूषिता, चतुर्वेद-के द्वारा उपासिता, कामदायिनी, कामरूपा एवं भक्तों के त्राणकारिणी, चतुर्वर्गप्रदा, भीमा, दक्षिणा कालिका की वन्दना कर रहा हूँ। (इस रूप में, मूलाधारचक्र में परमशिवा का ध्यान करें। इसके अनन्तर स्वाधिष्ठानचक्र में कुलकुण्डलिनी को ध्यान को कहा जा रहा है)— हे महादेवि! स्वाधिष्ठान में परमा शिवा का बिन्दुरूप में ध्यान करें ।।१५-१६।।

स्वाधिष्ठान में विश्वरूपिणी निर्मलादेवी का चिन्तन करें। हे सुरसुन्दरि! स्वाधिष्ठान में देवी चतुर्भुजा हैं। उनके एक हस्त में वरमुद्रा है (मतान्तर में, वर है) एवं अपर हस्त में अभयमुद्रा (मतान्तर में, अभय) है। देवी धनुर्बाण, पाश एवं अङ्कुश-धारिणी, बाणलिङ्ग समायुक्ता, नीलवर्णा एवं अनलप्रभामयी हैं ।।१७-१८।।

लोलजिह्वां महादेवीं विष्णुरूपां सनातनीम् ।।
बाणयुग्म-लसत्वर्णां दुष्टासुर-निसूदनीम् ।।१९।।
व्याघ्रचर्म-परिधानां ब्रह्मरन्ध्र-निवासिनीम् ।
अतिप्रसन्नवदनां स्मेरानन-सरोरुहाम् ।।२०।।
मणिपुरे चिन्तयेत्तु तेजःपुञ्ज-सनातनीम् ।
दिगम्बरीं करालास्यां मुक्तकेशीं चतुर्भुजाम् ।।२१।।
रक्तवर्णां महादेवीं रक्तवस्त्र विधारिणीम् ।
पद्मासनां महादेवीं सर्वनाग-विभूषिताम् ।।२२।।
शङ्खचक्रगदापद्म-धारिणीं सुरपूजिताम् ।
धर्मार्थदायिनीं देवीं भक्तानां त्राणकारिणीम् ।।२३।।
सर्वसिद्धिप्रदां देवीं जगतां मोहिनीं पुनः ।
महामायां मोहिनीञ्च ज्ञानिनां ज्ञानदां सतीम् ।।२४।।
सुन्दरीं रमणीं वामां चतुर्वर्ग-फलप्रदाम् ।
शान्तां शान्तप्रिया-मुग्रदैत्य-विनाशिनीम् ।।२५।।

---

सनातनी महादेवी विष्णुरूपा लालजिह्वा, बाणयुग्मधारिणी, अत्युज्ज्वल-वर्णा एवं दुष्टासुर-विनाशिनी हैं ।।१९।।

उनके परिधान में व्याघ्रचर्म है एवं ब्रह्मरन्ध्र में उनका वास है। वह अत्यन्त प्रसन्नवदना, पङ्कजनयना एवं स्मितहास्यमुखी हैं ।।२०।।

*(अधुना मणिपुर चक्र में देवी कुलकुण्डलिनी के ध्यान का कथन कहा जा रहा है) —*

मणिपुर में सनातनी महादेवी महामाया को तेज:पुञ्जरूपिणी, दिगम्बरी, करालास्या, मुक्तकेशी एवं चतुर्भुजा, रक्तवर्णा, रक्तवस्त्रपरिधाना, पद्मासना, सर्वनागविभूषिता, शङ्खचक्रगदापद्मधारिणी एवं सुरगण-पूजिता, धर्मार्थदायिनी एवं भक्तगणों की त्राणकारिणी-रूप में चिन्तन करें ।।२१-२३।।

मणिपुरचक्र में देवी सर्वसिद्धिप्रदा, जगन्मोहिनी महामाया एवं ज्ञानियों के ज्ञान-सम्मोहिनी, सती, सुन्दरी रमणी-रूप में वह चतुर्वर्गफलप्रदा, शान्ता, शान्तप्रिया एवं उग्रदैत्य विनाशिनी हैं ।।२४-२५।।

मधुमांसप्रियां कृष्णां यशोदानन्द-वर्द्धिनीम् ।
भक्तिगम्यां महादेवीं महाकाल-निवासिनीम् ।।२६।।
सर्वेषां जननीं नित्यां चिन्तयेत् सुरपूजिताम् ।
अनाहते महादेवीं चिन्तयेत् परदेवताम् ।।२७।।
अष्टभुजां महादेवीं रक्तवर्णां त्रिशक्तिकाम् ।
धनुर्बाणञ्च खड्गञ्च चक्रञ्च दधतीं शिवे ।।२८।।
पाशाङ्कुशधरां देवीं ब्रह्मादि-सुरवन्दिताम् ।
अर्द्धचन्द्रधरां देवीं पीनोन्नत-पयोधराम् ।।२९।।
पद्मासनां महामायां महापद्मासनस्थिताम् ।
एवं संचिन्तयेद्देवीं ब्रह्ममार्गेण गामिनीम् ।।३०।।
विशुद्धे च महाचक्रे चिन्तयेत् परमेश्वरीम् ।
दशभुजां महादेवीं पीतवर्णां सनातनीम् ।।३१।।
कपालं खेटकं खड्गं दर्पणं चामरं तथा ।
दक्षिणे विभ्रतीं देवीं कामराजोपरि स्थिताम् ।।३२।।

---

देवी मधुमांसप्रिया एवं यशोदानन्दवर्द्धिनी कृष्णास्वरूपिणी हैं। वह केवल भक्तिगम्या हैं। वह महाकालनिवासिनी महादेवी हैं एवं सभी के लिए जननीस्वरूपा, सुरपूजिता एवं नित्या हैं। इस प्रकार, मणिपुर में देवी का ध्यान करें। उसके बाद अनाहत चक्र में परदेवतारूपिणी नित्यास्वरूपा महादेवी का चिन्तन करें ।।२६-२७।।

*(अनाहत चक्र में कुलकुण्डलिनी के ध्यान का कथन कहा जा रहा है)—*

***हे शिवे!*** अनाहतचक्र में महादेवी अष्टभुजा, रक्तवर्णा एवं त्रिशक्तिरूपिणी हैं। वह धनुर्बाण, खड्ग, चक्र, पाश एवं अङ्कुश-धारिणी, ब्रह्मादि देवगण वन्दिता, अर्द्धचन्द्रधारिणी, पीनोन्नतपयोधरा, पद्मासना एवं महापद्मासन पर अवस्थिता हैं। ब्रह्ममार्गगामिनी, कुलकुण्डलिनी देवी का ध्यान, इसी प्रकार से अनाहत चक्र में करें ।।२८-३०।।

*(इसके अनन्तर विशुद्ध-चक्र में देवी के ध्यान को बताया जा रहा है)—*

उसके बाद विशुद्ध-चक्र में महादेवी सनातनी परमेश्वरी को पीतवर्णा एवं दशभुजा-रूप में ध्यान करें। वह अपने दक्षिण के पञ्चहस्तों में नरकपाल, खेटक, खड्ग, दर्पण एवं चँवर को धारण करके कामराज के ऊपर अवस्थान कर रही हैं ।।३१-३२।।

वामे खड्गं महापद्मं कर्त्तृकां पाशमङ्कुशम् ।
धारयन्तीं महादेवीं महासिंहासन स्थिताम् ।।३३।।
दिव्यवस्त्र परिधानां जटामुकुट मण्डिताम् ।
ब्रह्मविष्णुमहादेव-वन्दितां सुरसुन्दरीम् ।।३४।।
आज्ञाचक्रे महेशानि द्विभुजां चिन्तयेत् सुधीः ।
सिंहस्कन्ध समारूढ़ां द्विभुजां सुमनोहराम् ।।३५।।
वराभय-धरां चैव नानामणि-विभूषिताम् ।
जटामुकुट संयुक्ता-मर्द्धचन्द्र विभूषिताम् ।।३६।।
रत्नकाञ्ची-समायुक्तां रत्नमाला-सुशोभिताम् ।
रक्तवस्त्र परिधानां कमलापति-सेविताम् ।।३७।।
संसार-दुःख-शमनीं संसारार्णव-तारिणीम् ।
सुषुम्नावर्त्मना देवि चिन्तयेत् ध्यानरूपिणीम् ।।३८।।
षट्चक्रभेद योगेन चिन्तयेत् परमेश्वरीम् ।
सहस्रारे दले चैव चिन्तयेद् जगदीश्वरीम् ।।३९।।

---

(अपने) वाम दिशा के पञ्च हस्तों में यथाक्रम से खड्ग, महापद्म, कर्त्तृका, पाश एवं अङ्कुश को धारण करके, महादेवी सनातनी महासिंहासन पर अवस्थान कर रही हैं ।।३३।।

उनके परिधान में दिव्यवस्त्र हैं, उनका मस्तक जटामुकुट-मण्डित है। वह ब्रह्मा, विष्णु, शिव एवं सुरसुन्दरीगणों के द्वारा पूजिता-रूप में विराजमाना हैं ।।३४।।

*(इसके अनन्तर आज्ञाचक्र में कुलकुण्डलिनी के ध्यान का कथन कहा जा रहा है)—*

***हे महेशानि!*** आज्ञाचक्र में देवी को द्विभुजा-रूप में चिन्तन करें। देवी (यहां पर) द्विभुजा, अति मनोहर मूर्त्ति, सिंहस्कन्धसमारूढ़ा, वर एवं अभयमुद्रा (मतान्तर में वर एवं अभय) — धारिणी, नाना मणि-विभूषिता, जटामुकुट-संयुक्ता, अर्द्धचन्द्र-विभूषिता, रत्नकाञ्ची-समायुक्ता, रत्नमाला-सुशोभिता, रक्तवस्त्र-परिधाना, कमलापति-सेविता, संसारदुःख-शमनी (निवारण, प्रशमन या दमनकारिणी), संसारार्णवतारिणी एवं सुषुम्ना के मध्य में विराजमाना हैं। इस रूप में, आज्ञाचक्र में देवी का ध्यान करें ।।३५-३८।।

इस प्रकार षट्चक्रभेदक्रम से परमेश्वरी का चिन्तन करें। उसके बाद सहस्रार में, सहस्रदलकमल के मध्य में जगदीश्वरी का ध्यान करें ।।३९।।

कामं भ्रमन्तं तन्मध्ये पञ्चबाण विभूषितम् ।
गङ्गादिसर्वतीर्थञ्च अमृतं प्रतिपत्रके ।।४०।।
बसन्तादि महादेवि सर्वर्त्तुपरि शोभितम् ।
श्वेतवर्णं महादेवि सहस्त्रदलमुत्तमम् ।।४१।।
सर्वदेव समायुक्तं सर्वशक्ति समन्वितम् ।
सर्वमन्त्रमयं देवि चतुर्वेद विभूषिताम् ।।४२।।
एकादशमहादेवं ब्रह्मविष्णुशिवात्मकम् ।
कर्णिका स्वर्णवर्णाञ्च तत्र देवीं विचिन्तयेत् ।।४३।।
चिन्मयं परमं शिवं ध्यानगम्यं सनातनम् ।
सारात् सारतरं परादपि परं वचोऽगोचरम् ।।४४।।
नित्यानन्द-निरन्तरं निरूपमं वेदैरपारं परम् ।
शिवशक्तिमयं देवि निर्गुणं सगुणात्मकम् ।।४५।।
प्रदीपकलिकाकारं योगिनां ध्यानरूपिणम् ।
चैतन्यरूपिणं देवं परमामृतबृंहितम् ।।४६।।

---

उस सहस्त्रदल-पद्म के मध्य में काम सर्वदा पञ्चबाण-विभूषित होकर विचरण कर रहे हैं। उस सहस्त्रदल-पद्म के प्रति पत्र में गङ्गादि सर्वतीर्थ एवं अमृत विद्यमान है ।।४०।।

*हे महादेवि!* उस सहस्त्रदलपद्म के पत्रसमूह अत्यन्त श्वेतवर्ण हैं एवं उसके प्रत्येक पत्र में वसन्तादि ऋतुसमूह विद्यमान हैं ।।४१।।

*हे देवि!* उस सहस्त्रदलपद्म में सर्वदेव-समायुक्त, सर्वशक्तिसमन्वित, सर्वमन्त्रमय एवं चतुर्वेद-विभूषित ब्रह्मा, विष्णु एवं शिवात्मक एकादश महादेव विद्यमान हैं, उनका तथा उसकी कर्णिका में स्वर्णवर्णा देवी का चिन्तन करें ।।४२-४३।।

चिन्मय परमशिव, सनातन एवं ध्यानगम्य हैं। वह सार से भी सारतर हैं, परम से भी परमतर हैं एवं वाक्य के अगोचर अर्थात् वाक्यातीत हैं ।।४४।।

वह नित्यानन्द, निरन्तर एवं निरूपम हैं, वह वेद के अनधिगम्य परम सत्ता हैं। वह शिवशक्तिमय एवं निर्गुण होने पर भी सगुणात्मक हैं ।।४५।।

वह योगिगणों के ध्यानगम्य परमशिव प्रदीपकलिकाकार, चैतन्य एवं परमामृत-स्वरूप हैं। उस चित्रूपी परमामृत के मध्य में त्रिगुणात्मक देवी सनातनी का ध्यान निम्नोक्तरूप में करें।

देवी घोरदंष्ट्रा, करालवदना, लोलजिह्वा, चतुर्भुजा हैं। देवी के वामदिशा के

तन्मध्ये चिन्तयेद्देवीं त्रिगुणाञ्च सनातनीम् ।
घोरदंष्ट्रां करालास्यां लोलजिह्वां चतुर्भुजाम् ।।४७।।
सद्यश्छिन्न-शिर:-खड्ग-वामाधोर्ध्व-कराम्बुजाम्।
अभयं वरदञ्चैव दक्षिणाधोर्ध्व-पाणिकाम् ।।४८।।
नीलमेघप्रभां तन्वीं घोररूपां दिगम्बरीम् ।
कण्ठावसक्तमुण्डानीं गलद्रुधिर चर्चिताम् ।।४९।।
कर्णावतंशतानीत शवयुग्म भयानकाम् ।
बालार्कमण्डलाकार-लोचनत्रय-भषिताम् ।।५०।।
सृक्वद्वयगलद्रक्त-धाराविस्फुरिताननाम् ।
मुक्तकेशीं स्मितमुखीं श्मशानालय वासिनीम् ।।५१।।
शवानां करसंघातै: कृतकाञ्चीं हसन्मुखीम् ।
शवरूप-महादेव-हृदयोपरि-संस्थिताम् ।।५२।।
महाकालेन रत्यर्थमुपविष्टां स्मरातुराम् ।
शिवाभिर्घोररावाभिश्चतुर्दिक्षु समन्विताम् ।।५३।।
अति प्रसन्न वदनां स्मेरानन सरोरुहाम् ।
अनाहतन्तु तत्रैव तड़ित्कोटि समप्रभाम् ।।५४।।

---

निम्न हस्त में सद्यस्छिन्न नरमुण्ड एवं वामोद्ध्र्व-हस्त में खड्ग है। वह दक्षिण दिशा के ऊर्ध्वहस्त में वरमुद्रा एवं निम्न हस्त में अभय मुद्रा को धारण कर अवस्थान कर रही हैं ।।४६-४८।।

देवी नीलमेघप्रभा, तन्वी, घोररूपा, दिगम्बरी, रुधिरस्रावी नरमुण्ड उनके कण्ठदेश में विलम्बित हैं ।।४९।।

देवी उत्फुल्लवदना हैं। उनके ओष्ठद्वय के दोनों प्रान्तदेशों से रक्तधारा विगलित हो रही है। वह मुक्तकेशी, स्मितमुखी, श्मशानालयवासिनी, शवहस्त-कृतकाञ्ची परिधाना (=मृतों के हस्तों के द्वारा रचित कटिहार को जिन्होंने धारण किया है) एवं शवरूप महादेव के हृदय के ऊपर अवस्थिता हैं ।।५१-५२।।

महाकाल के साथ रति की लालसा में वह वहाँ पर कामातुर होकर अनस्थन कर रही हैं। उनकी चारों दिशाओं में घोर-निनादकारी शिवासमूह विद्यमान हैं ।।५३।।

उनका वदनमण्डल अतिशय प्रसन्न तथा कमललोचनद्वय लज्जापूर्ण हैं। अनाहत-चक्र में देवी कोटिविद्युत्प्रभामयी हैं एवं अनाहत-चक्र के ऊर्ध्वदेश में

तस्योर्ध्वे तु शिखा तन्वी चिद्रूपा परमाकला।
तया सहितमात्मानं एकीभूतं विचिन्तयेत् ।।५५।।
गच्छन्तं ब्रह्ममार्गेषु लिङ्गभेद क्रमेण तु ।
सूर्यकोटि प्रभाकारं चन्द्रकोटि सुशीतलम् ।।५६।।
अमृतं तद्धि सङ्गस्थं परमानन्द लक्षणम् ।
गत्वा कुलाकुलं दिव्यं पुनरेव विशेत् कुलम् ।।५७।
एवमभ्यस्यमानस्य अहन्यहनि निश्चयात् ।
जरामरणदुःखाद्यैर्मुच्यते भवबन्धनात् ।।५८।।
चतुर्विधा तु सृतय अस्यां योनौ प्रवर्त्तते ।
योनिमुद्रेयमाख्याता सर्वसिद्धिप्रदायिका ।।५९।।

---

कुलकुण्डलिनी परमकलारूपिणी, चित्रूपा, तन्वी शिखा मात्र हैं। उन शक्तिस्वरूपा परमकला के साथ आत्मा के एकत्व का चिन्तन करें ।।५४-५५।।

चित्रूपिणी परमकला मूलाधार के षट्चक्रस्थ लिङ्गसमूह को भेद के क्रम से, सुषुम्नावर्त्म से (मार्ग से) सहस्रार में गमन करती हैं। वह कोटि सूर्यों के समान प्रभामयी एवं कोटि चन्द्रों के समान स्निग्ध द्युति-सम्पन्ना हैं ।।५६।।

वह सहस्रार-स्थित अमृत के साथ युक्त होने पर, परमानन्द का लक्षण प्रकाशित होने लगता है। इस प्रकार देवी कुलकुण्डलिनी कुल (मूलाधार) से दिव्य अकूल (सहस्रार) में गमन करती हैं। उसके बाद, पुनः कुल में प्रवेश करती हैं ।।५७।।

जो व्यक्ति इस प्रकार कुलकुण्डलिनी को प्रतिदिन मूलाधार से सहस्रार में उत्थापन एवं पुनः सहस्रार से मूलाधार में आनयन करता है, वह व्यक्ति निश्चय ही जरा, मृत्यु प्रभृति दुःखों से मुक्ति लाभ कर, अन्त में भवबन्धन से भी मुक्त हो जाता है ।।५८।।

चतुर्विध सृष्टि इनकी योनि से प्रवर्त्तित होती है। इस योनिमुद्रा को सर्वसिद्धि-प्रदायक कहा जाता है। मूलाधार-कमल में सुमनोहर त्रिकोण है, उसके मध्य में

---

*विशेष*—'कुल' किसे कहते हैं—इसे 'महानिर्वाणतन्त्र' के सप्तम उल्लास में इस प्रकार कहा गया है—

"जीवप्रकृति तत्त्वञ्च दिक्कालाकाशमेव च ।
क्षित्यप्तेजोवायवश्च कुलमित्यभिधीयते ।।९७।।"

जीव, प्रकृति, तत्त्व (पञ्चविंशति तत्त्व) दिक्, काल, आकाश, पृथिवी, जल, तेज एवं वायुको 'कुल' नाम से अभिहित किया जाता है। **'अकुल' अर्थात् परमशिव ।**

मूलाधारसरोजे तु त्रिकोणं सुमनोहरम् ।
कामं भ्रमन्तं तन्मध्ये बालार्ककोटि सन्निभम् ।।६०।।
तदूर्ध्वे कुण्डलीशक्तिं तडित्कोटि समप्रभाम् ।
प्रसुप्तभुजगाकारां सार्द्धत्रिवलयान्विताम् ।।६१।।
मूलाधारे त्रिकोणे तां भावयेत् सुरसुन्दरीम् ।।६२।।
आरोप्यारोप्य शक्तिं कमलज-निलया-मात्मसाक्षात्क्रमेषु ।
स्थानेष्वाज्ञावसाने प्रणिहितहृदय-श्चिन्तयेत्तत् क्रमेण ।।६३।।
नित्यानन्दावसानं खड्गमुद्गर-महा-पद्ममध्यान्तरस्थाम् ।
ध्यायेच्चैतन्यरूपा-मभिनवजलदां मोक्षमार्गैकमार्गाम् ।।६४।।
साक्षाल्लाक्षा-रसाभां गगनगता-महा-पद्मसंस्थाच्च हंसात् ।
पीत्वा दिव्यामृतौघं पुनरपिच विशेन्मध्यदेशं कुलस्य ।।६५।।
चक्रे चक्रे क्रमेणामृतसरसि सर्वे-स्तर्पयेद्देवतास्ता ।
हाकिन्याद्याः समस्ताः सकलकुल-गतां तर्पयेत् कुण्डलीं ताम् ।।६६।।
इन्दौ तदूर्ध्वे बोधिन्यां नादनादान्त एव च ।
शक्तौ पुनर्व्यापिकायां सुपुष्पमणि गोचरे ।।६७।।

---

कोटि बालसूर्य-तुल्य काम भ्रमण कर रहे है। उनके ऊर्ध्व में कोटि विद्युत् की प्रभा के समान, निद्रित, सर्पाकार, सार्द्ध त्रिवलययुक्त, कुण्डलिनी शक्ति अवस्थान कर रही हैं। मूलाधार के त्रिकोण में उन सुरसुन्दरी की भावना करनी चाहिए ।।५९-६२।।

आत्मा के साथ साक्षत्-क्रम से ब्रह्मा के आश्रय-रूप इन शक्ति का बारम्बार आरोपण कर, उनके आदेश से हृदय में स्थापित कर, क्रम से उनका चिन्तन करना चाहिए ।।६३।।

जो नित्य आनन्दमयी, खड्ग, मुद्गर, महापद्म में अवस्थानकारिणी, चैतन्यरूपा, अभिनव मेघतुल्या, मोक्षमार्ग के एकमात्र पथस्वरूपा गगनगत महापद्मस्थ हंस से दिव्यामृत का पान कर जो साक्षात् लाक्षारस-तुल्या बन गयी हैं, उनका ध्यान करें। वह (देवी कुलकुण्डलिनी) पुन: कुल में प्रवेश कर जाती हैं ।।६४-६५।।

अमृत सरोवर-रूप प्रतिचक्र में हाकिनी प्रभृति देवीगणों का तर्पण करें एवं सकल कुल-गता उन कुलकुण्डलिनी का तर्पण करें ।।६६।।

इन्दु एवं उसके ऊर्ध्व में नाद-नादान्त की प्रकाशिका शक्ति में एवं सुपुष्प तथा मणियुक्त व्यापिका-रूप चित्शक्ति में मन्त्र के सभी अक्षर निहित हैं। परम अमृत-युक्त परमव्योम में उस चित्-शक्ति का चिन्तन करें एवं पूजा होमादि के

मन्त्राक्षराणि चित्शक्तौ प्रोतानि परिभावयेत् ।
तामेव परमव्योम्नि परमामृतबृंहिते ।।६८।।
दर्शयेदात्मसम्भावं पूजा होमादिकं विना ।
एवं संचिन्तयेन्मन्त्री स योगी नात्र संशयः ।।६९।।
सर्वपापात् विनिर्मुक्त इष्टदेवीं प्रपश्यति ।
षण्मासे सर्वसिद्धिः स्याद्दुर्गतिश्च प्रणश्यति ।।७०।।
अष्टादश महासिद्धिर्वत्सरान्ते भविष्यति ।
एवं संचिन्तयेद्देवीं परमात्मस्वरूपिणीम् ।।७१।।
स एव शङ्करः साक्षात् स एव विष्णुरण्ययः ।
स एव परमं ब्रह्म स एव देवतोत्तमः ।।७२।।
इति ते कथिता देवि योनिमुद्रा महेश्वरि ।
वत्सरेण लभेत् सिद्धिं पूर्णकामं लभेत् पुनः ।।७३।।

**इति कुब्जिकातन्त्रे पार्वती-परमेश्वर-संवादे षष्ठः पटलः ।।६।।**

बिना ही आत्मसाक्षात्कार करें। इस प्रकार, जो मननशील साधक चिन्तन कर सकता है, वह योगी है—इस विषय में कोई सन्देह नहीं है ।।६७-६९।।

इस प्रकार कार्य करने पर, साधक सर्व पापों से मुक्तिलाभ करके स्वीय इष्टदेवी का साक्षात् लाभ करता है। साधक इस प्रकार कार्यों से छः महीने में सर्व प्रकार की सिद्धियों का लाभ करता है एवं उसकी समस्त दुर्गतियाँ विनष्ट हो जाती हैं ।।७०।।

एक वर्ष तक इसीप्रकार लगातार साधना करने पर वर्ष के अन्त में अष्टादश महासिद्धयों का लाभ होता है। उपर्युक्त नियम से परमात्मारूपिणी देवी का चिन्तन करें ।।७१।।

जो व्यक्ति इसप्रकार महाशक्ति का ध्यान करता है, वह व्यक्ति साक्षात् शङ्कर, साक्षात् अव्ययरूपी विष्णु, साक्षात् परमब्रह्म है एवं वह व्यक्ति देवगणों में श्रेष्ठ देवता है ।।७२।।

*हे देवि! हे महेश्वरि!* मैंने आपको इसप्रकार योनिमुद्रा-साधन को बताया है। एक वर्षकाल के मध्य ही साधक योनिमुद्रा के द्वारा पूर्णमनस्काम बनकर सिद्धिलाभ करता है ।।७३।।

***कुब्जिकातन्त्र में पार्वती-परमेश्वर-संवाद में षष्ठ पटल समाप्त ।।६।।***



॥ श्रीः ॥

# ईशानशिवगुरुदेवपद्धतिः ।

## श्रीमदीशानशिवगुरुदेवमिश्रविरचिता ।

(तुरीयो योगपादः)

---

### अथ प्रथमः पटलः ।

अथ मोक्षस्तु संसिध्येत् सम्यग् ज्ञानेन देहिनः ।
ज्ञानं जायेत वैराग्याद् वैराग्यं च स्वभावतः ॥ १ ॥
स्वभावो नाम संसारस्वरूपस्य निरूपणम् ।
संसारस्त्वात्मबुद्धिः स्याद् देहे स्वत्वेन वस्तुषु ॥ २ ॥
देहोऽपि द्विविधो ज्ञेयः स्थूलसूक्ष्मप्रभेदतः ।
पृथिव्यादीनि भूतानि श्रोत्राद्याधारकान्यपि ॥ ३ ॥
वागादिकर्मेन्द्रियाणि वातपित्तकफास्तथा ।
त्वगसृङ्मांसमेदोस्थिमज्जाशुक्लैश्च नाडिभिः ॥ ४ ॥
मूलाधारे कुण्डलिन्यां नाभिहृत्कण्ठमूर्धसु ।
चतुष्षडष्टजगतीविकाराक्षिच्छदाम्बुजैः ॥ ५ ॥
युक्तं स्थूलशरीरं स्यात् सूक्ष्मं पुर्यष्टकात्मकम् ।
तत्तच्छब्दादयः पञ्च मनो बुद्धिरहङ्कृतिः ॥ ६ ॥
देहद्वयं तु साध्यात्मं साधिभूताधिदैवतम् ।

तद्यथा —

श्रोत्रादयश्च वागाद्यास्तथाध्यात्मानि वै पृथक् ॥ ७ ॥
शब्दादिवक्तव्यादीनामधिभूतत्वमिष्यते ।
खवायुतेजांसि जलं पृथिवी च तथानलः ॥ ८ ॥
इन्द्रो विष्णुश्च मित्रश्च प्र (दे? जे) शश्चाधिदैवतम् ।
अध्यात्मानि मनो बुद्धिरहंकारश्च तत्त्रयम् ॥ ९ ॥

मन्तव्यं चैव बोद्धव्यं मानश्चैवाधिभूतकम् ।
चन्द्रो जीवो विरिञ्चश्चाप्यधिदैवान्यनुक्रमात् ॥ १० ॥
गुणत्रयमयी या सा प्रकृतिः पुरुषस्तथा ।
रागो विद्यादितत्त्वानि मायान्तान्यखिलानि तु ॥ ११ ॥
मलं कर्म च माया च सर्वमस्य प्रवर्तकम् ।
जाग्रत् स्वप्नः सुषुप्तिश्चेत्यवस्थात्रितयं तथा ॥ १२ ॥
कामः क्रोधश्च लोभश्च मोहश्च मदमत्सरौ ।
षड्र्मय इमे व्याप्ये मोहाब्धौ व्यापकाः स्मृताः ॥ १३ ॥
एवम्भूतं शरीरं यदाममृत्कुम्भसन्निभम् ।
जन्मादिभिः षड्विकारैरध्यस्तमतिनश्वरम् ॥ १४ ॥
अस्वतन्त्रं कर्मवशात् प्रविशन् निर्विशन्नपि ।
प्रवसन्नपि संसारे भ्रमत्यात्मा ह्यलक्षितः ॥ १५ ॥
शरीराणि तथैतानि पञ्चधा मानसानि च ।
जरायुजान्यण्डजानि स्वेदजान्युद्भिदान्यपि ॥ १६ ॥
तत्र देवादिदेहाः स्युर्मानसाश्चाजरायुजाः ।
जरायुजा मनुष्याणां पशूनां च भवन्ति हि ॥ १७ ॥
सरीसृपाहिविहगशरीराण्यण्डजानि तु ।
जरायुजाश्चाण्डजाश्च देहाः स्युर्जलचारिणम् ॥ १८ ॥
स्वेदजाः क्रिमयः प्रोक्ताः स्थावराश्चोद्भिदा मताः ।
सर्वे स्वकर्मवशगा भवन्ति न भवन्ति च ॥ १९ ॥
मृतिजन्मजले घोरे सुखदुःखझषाकुले ।
शोकमोहादिकलिले त्वगाधे भवसागरे ॥ २० ॥
उन्मज्जन्तो निमज्जन्तः पुण्यपापैकबन्धनैः ।
निबद्धा देहिनः सर्वे स्वर्गभूनरकादिषु ॥ २१ ॥
मांसासृक्पूयविण्मूत्रस्नायुमज्जास्थिपञ्जरे ।
त्वचावृते शरीरेऽस्मिन् सौन्दर्यं स्मर्यते कुतः ॥ २२ ॥
अस्थिपञ्जरसारेऽस्मिन् मूत्रश्लेष्ममलाशये ।
मांसकेशनखस्नायुरुधिरत्वक्समावृते ॥ २३ ॥

देहे चेत् प्रीयते कश्चित् प्रीयते नरकेऽपि सः ।
यद्वाप्यज्ञानिभिर्देहे सुखबुद्ध्यात्र भण्यते ॥ २४ ॥

शब्दादीन्द्रियसौख्यान्यप्यन्वयव्यतिरेकतः ।
असाराणि यथा गीतं मत्तोन्मत्तप्रलापवत् ॥ २५ ॥

वादयन्तश्च दृश्यन्ते यथोन्मत्ता विकुर्वते ।
स्पर्शसौख्यं तथोपाधेरुपाध्यन्तरसङ्गमात् ॥ २६ ॥

व्रणादेस्तु यथापूयमूत्रादेर्निर्गमात् सुखम् ।
पामकण्डूतिसौख्यं वा तत्तुल्यं सुरते सुखम् ॥ २७ ॥

चक्षुरिन्द्रियसौख्यं यन्नृत्तकान्तादिदर्शने ।
उन्मत्तचेष्टितान्नृत्तं न किञ्चिदपि हीयते ॥ २८ ॥

स्वक्षी सुनासा सुमुखी सुदतीत्यादिदर्शने ।
सौख्यं त्वगस्थिमांसादौ कतरत् स्यान्मनोहरम् ॥ २९ ॥

आस्वाद्येषु पदार्थेषु रसनेन्द्रियचापलात् ।
क्षुत्तृण्निवृत्त्या सौहित्यं दुःखापायो न तत् सुखम् ॥ ३० ॥

निद्रादुःखं यदि लभेत् सौख्यं स्वापे सुखं यथा ।
तदात्मसुखभुग्दृष्टं करणानां तु संहृतौ ॥ ३१ ॥

घ्रेयेष्वपि सुगन्धेषु यत्नात् प्राप्येषु दृश्यते ।
अयत्नेन वनादौ च प्राप्तुं तच्छक्यते सुखम् ॥ ३२ ॥

गर्भवासे च जनने बाल्ये वास्य कुतः सुखम् ।
अस्वतन्त्रस्येव परैर्यन्त्रितस्येव पक्षिणः ॥ ३३ ॥

यौवनेऽनिष्टसंयोगादिष्टलाभे वियोगतः ।
रागाद्याक्रान्तचित्तस्य कुतः सौख्यं शरीरिणः ॥ ३४

वार्धक्येऽप्यसमर्थस्य विषयांस्तु बुभुत्सतः ।
प्रक्षीणेन्द्रियवृत्तेस्तु रोगरागाद्युपद्रवैः ॥ ३५ ॥

पीड्यमानस्य तत्सौख्यं कुतो वास्य मरिष्यतः ।
म्रियमाणस्य यद् दुःखे नरकेऽपि न तद् भवेत् ॥ ३६ ॥

ततः पापकृतां दुःखं यमलोकाय गच्छताम् ।
तद्दर्शनेन पततां पतितानां पतिष्यताम् ॥ ३७ ॥

नरकेषु प्रसिद्धं हि दुःखं तस्मान्न भण्यते ।
यदि पुण्यकृदेव स्यात् स्वर्गे देवादिदेहवान् ॥ ३८ ॥

विमानादिषु दिव्येषु भोगेष्वनन्तेष्वपि ।
दृष्ट्वा (पापा ? त्वल्पां) श्रियं दीप्तामन्येषामात्मनोऽधिकाम् ॥ ३९ ॥

सन्तप्त एष विषयान् भुङ्क्ते दुःखं धिया वहन् ।
ततोऽपि क्षीणपुण्यानां पतनाद्यवलोक्य तु ॥ ४० ॥

यादृशं हृदये दुःखं न तद् वर्णयितुं क्षमम् ।
अथ राज्यादिषु सुखं स्याच्चेत् सन्ध्यादिदुःखिनः ॥ ४१ ॥

पुत्रेभ्योऽपि भयं यस्य तस्य सौख्यं कुतो भवेत् ।

अत्र पराशरः —

"यावतः कुरुते जन्तुः संबन्धान् मनसः प्रियान् ।
तावन्तोऽस्य निखन्यन्ते हृदये शोकशङ्कवः ॥

यद् यद् गृहे तन्मनसि यत्रतत्रावतिष्ठतः ।
*नाशव्ययादिभीत्या क्व परिग्रहवतां सुखम् ॥"

इति ।

तथा चाहुः —

"यतो यतो निवर्तेत ततस्ततः सुखी भवेत् ।
निवर्तनाद्धि सर्वतो न वेत्ति दुःखमण्वपि" ॥

इति ।

तथापि तृष्णया जन्तुः पीड्यमानो दिवानिशम् ।
अर्थाद्यार्जनवैतृष्ण्यं न कदाचिन्निगच्छति ॥

तथाचोक्तं —

"जीर्यन्ति जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः ।
चक्षुश्श्रोत्रे च जीर्येते तृष्णैका निरुपद्रवा ॥

यत् पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।
नालमेकस्य तु यतस्तां तृष्णां दूरतस्त्यजेत् ॥"

---

* 'नाशदाहापहरणं तत् तस्यास्यैव तिष्ठति' इति विष्णुपुराणे पठ्यते ।

अतो न कर्मणा कार्यं प्रजया वा धनेन वा ।
त्यागेनैवामृतत्वं हि प्राप्तुं शक्यं मनीषिभिः ॥ ४२ ॥

तस्माद् धर्मार्थकामेभ्यो मोक्ष एव विशिष्यते ।
अस्थिरत्वात् त्रिवर्गाणां दुस्संपादतयापि च ॥ ४३ ॥

अलमलमतिविस्तरेण । प्रस्तुतमेवानुसन्धीयते ।

इत्थं विज्ञाय संसारमसारं तद्विरागतः ।
मोक्षमार्गः परो योगः साङ्गः साध्यो विपश्चिता ॥ ४४ ॥

स च सन्न्यसनात् सम्यग् योगः प्राप्यो न चान्यथा ।
सन्न्यासो मुण्डनान्न स्याद् दण्डादेर्ग्रहणादपि ॥ ४५ ॥

काषायावरणाद्यं च मुण्डनं दण्डधारणम् ।
यदन्यदप्येवमाद्यं देहस्योक्तं न देहिनः ॥ ४६ ॥

जडस्येह शरीरस्य घटकुड्यादिधर्मणः ।
वेषलक्षणमात्रेण देही मोक्षं कथं व्रजेत् ॥ ४७ ॥

अत एव शरीरस्य कर्तृत्वं नापि भोक्तृता ।
शरीरकर्मणां कर्ता संस्कार्यस्तत्फलार्थिभिः ॥ ४८ ॥

अत एव हि सन्न्यासस्त्यागः स्यात् काम्यकर्मणाम् ।
काम्यानां कर्मणां न्यासं सन्न्यासं कवयो विदुः ॥ ४९ ॥

लोकार्थपुत्रैषणाभ्यो निवृत्तो यः सदैव हि ।
स्ववर्णाश्रमयुक्तानां तथा स्वसमयस्य तु ॥ ५० ॥

विहितानां तु धर्माणां तत्फलेष्वनपेक्षया ।
ईश्वरार्पणबुद्ध्या तु करणं न्यास इष्यते ॥ ५१ ॥

तद्वान् यतिश्च सन्न्यासी न स्यात् केवलमुण्डितः ।
ज्ञेयः स नित्यसन्न्यासी यो न द्वेष्टि न काङ्क्षति ॥ ५२ ॥

ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथवा यतिः ।
चीरवासा जटी वापि द्विदण्डो वाथ मुण्डितः ॥ ५३ ॥

विवासाः शुक्लवस्त्रो वा काषायवसनोऽथवा ।
कर्मसन्न्यासनं कृत्वा साङ्ख्ययोगं समाश्रितः ॥ ५४ ॥

---

१. 'स' ख. पाठः.

शिवानुग्रहमासाद्य योगी मोक्षमवाप्नुयात् ।
विज्ञाय संसारमसारमेवं वैराग्यतोऽनुग्रहतश्च शम्भोः ।
संप्राप्य योगं तु गुरूपदेशाद् योगी विमुक्तिं न चिरादुपैति ॥ ५५ ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ सिद्धान्तसारे
उपरिभागे योगपादे योगलक्षणं नाम
प्रथमः पटलः ॥

---

## अथ द्वितीयः पटलः ।

अथ योगस्तु विज्ञेयो गुणैश्वर्यविमुक्तिदः ।
चित्तवृत्तिनिरोधं तु योगमाह पतञ्जलिः ॥ १ ॥
युजेर्धातोः समाधौ तु क्षेत्रज्ञपरमात्मनोः ।
युक्तिर्योगः समुद्दिष्टस्तथाचाह महामुनिः ॥ २ ॥
"मनो हि सर्वभूतानां कारणं बन्धमोक्षयोः ।
वृत्तिहीनं मनः कृत्वा स्वात्मानं परमात्मनि ॥
परमात्मा समायोज्य योगं कु + + + + ।
+ + + + विमुक्तैः स्यान्मुख्योऽयं योग इष्यते ॥"

इति ।

सम्यक् शिवगतं चित्तं यदा न चलति स्थिरम् ।
शिवत्वव्यक्तभावस्य कैवल्यं योग इष्यते ॥ ३ ॥
तच्च रागादिदोषाणां वर्जनेन प्रकाशते ।
ते च नश्यन्ति रागाद्या योगाङ्गानां निषेवणात् ॥ ४ ॥
योगाङ्गानि च तान्यष्टौ प्रवदन्ति हि तद्विदः ।

तद्यथा —

यमाश्च नियमास्तद्वदासनं प्राणसंयमाः ॥ ५ ॥
प्रत्याहारा धारणाश्च ध्यानानि च समाधयः ।
यमाः पञ्चप्रकाराः स्युर्नियमाश्चैव पञ्चधा ॥ ६ ॥
आसनानि च पञ्च स्युः प्राणायामास्तु नैकधा ।
प्रत्याहाराः पञ्चविधा धारणा बहुधा स्मृताः ॥ ७ ॥

---

१. 'नः' ।, २. 'रात्मना स', ३. 'क्तिः' क. पाठः.

ध्यानानि नैकधा त्वेकः समाधिरथवा त्रिधा ।
अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ ॥ ८ ॥
यमाः पञ्चविधास्तेषां पृथग्भेदा भवन्ति हि ।
मनोवाक्कर्मभिर्हिंसास्त्रिविधाः प्राणिनामिह ॥ ९ ॥
ताभ्यो निवृत्तिं सर्वत्र अहिंसां परिचक्षते ।
सत्यं यथार्थकथनं सर्वभूतहितं च यत् ॥ १० ॥
परपीडाकरं सत्यमेवं सत्यं विदुर्बुधाः ।
असत्यमपि भूतानां हितं चेत् सत्यमेव तत् ॥ ११ ॥
परपीडाकरं सत्यं यदा मौनं तदा भजेत् ।
अन्यैः परिगृहीतानां त्यक्तानां वाश्रमादिषु ॥ १२ ॥
निक्षिप्तानां तृणानां वा कर्मणा मनसा गिरा ।
परार्थानामनादानमस्तेयं परमं स्मृतम् ॥ १३ ॥
ब्रह्मचर्यमिति प्राहुरिन्द्रियाणां तु संयमम् ।
तत्राप्युपस्थविषयनिवृत्तिं तु विशेषतः ॥ १४ ॥

**किन्तु,**

दर्शनस्पर्शनापेक्षासङ्कल्पाभाषणादिभिः ।
योषित्संभोगवैमुख्यं ब्रह्मचर्यं परं विदुः ॥ १५ ॥
तत्रापि च गृहस्थानां स्वदारान्नव्यतिक्रमात् ।
ऋतुस्नाताभिगमनं ब्रह्मचर्यं परं स्मृतम् ॥ १६ ॥
अर्जनक्षयसंरक्षाहिंसादोषादिदर्शनात् ।
अस्वीकरणमर्थानां मुख्यः स्यादपरिग्रहः ॥ १७ ॥
भिक्षूणामयमुद्दिष्ट अन्येषामन्यथा स्मृतः ।
ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथवा मुनिः ॥ १८ ॥
सकुटुम्बस्तु यस्तस्य गुर्वादीनां तु पुष्टये ।
असत्प्रातिग्रहेभ्यस्तु निवृत्तिरपरिग्रहः ॥ १९ ॥

॥ एवं यमाः ॥

नियमाः शौचसन्तोषौ स्वाध्यायस्तप एव च ।
तद्वदीश्वरपूजेति पञ्च भिन्नास्तु ते पुनः ॥ २० ॥

---

१. 'तत् परपीडाकरं सत्यं यदा', २. 'आ' क. पाठः.

शौचं तु शुद्धिर्विज्ञेया मनोवाक्कायकर्मणाम् ।
अचिन्तनमकृत्यानां यत् तच्छौचं तु मानसम् ॥ २१ ॥

अक्री(नं? बं) वाचिकं स्यात् तु कायिकं तु मृदा जलैः ।
मलानां क्षालनञ्चान्तःकरणस्य विशोधनम् ॥ २२ ॥

पापानामननुष्ठानं कर्मिणां शौचमिष्यते ।
वर्णाश्रमादिधर्माणामविरोधागतेन तु ॥ २३ ॥

धनधान्यादिना वृत्त्या तृप्तिः सन्तोष उच्यते ।
(ग )तेष्वननुशोकः स्याद् भविष्यार्थेष्वलोलता ॥

वर्तमानेष्वसक्तिश्च सन्तोषः परिपठ्यते ।
हर्षागमेष्वनुत्सेकः शोकस्थानेष्वशोकता ॥ २५ ॥

समता चापि सर्वेषु सोऽपि सन्तोष उच्यते ।
प्रणवस्य तथाभ्यासस्तथोपनिषदामपि ॥ २६ ॥

तत्फलानभिसन्धानात् स्वस्वमन्त्रजपोऽपि च ।
स्वाध्याय इति निर्दिष्टस्त्रिविधोऽपि च योगिनाम् ॥ २७ ॥

तथाचाहुः —

"स्वाध्यायाद् योगमासीत योगात् स्वाध्यायमात्मनि ।
स्वाध्याययोगसम्पत्त्या परमात्मा प्रकाशते ॥

शब्दब्रह्म च तद् ब्रह्म वेदितव्ये उभे अपि ।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥"

इति ।

एकभुक्तोपवासाद्यैः कृच्छ्रचान्द्रायणादिभिः ।
कर्शनं तु शरीरस्य यत्तत्तप उदाहृतम् ॥ २८ ॥

तत्राप्यनशनं नेष्टं नेष्टमत्यशनं तथा ।
व्रतचोदितकालाशी तपस्वी योगभाग् भवेत् ॥ २९ ॥

तथाचाह भगवान् —

"नात्यश्नतस्तु योगोऽस्ति नचैकान्तमनश्नतः ।
नचातिस्वप्नशीलस्य जाग्रतो नापि चार्जुन! ॥

युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।

युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥"

इति ।

आभ्यन्तरैस्तथा बाह्यैर्द्रव्यैर्गन्धादिभिः क्रमात् ।

चोदिताराधनं शम्भोर्यत् तदीश्वरपूजनम् ॥ ३० ॥

तत्राप्यनभिसन्धाय फलं भक्त्योपपत्तितः ।

देवस्येष्टस्य यजनं कर्मणा मनसापि च ॥ ३१ ॥

योगिनां योगसिद्ध्यर्थं शस्तमीश्वरपूजनम् ।

याज्ञवल्क्यो वसिष्ठश्च योगाचार्यौ महामुनी ॥ ३२ ॥

पृथग्यमांश्च नियमान् दशभेदानिहोचतुः ।

"अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयार्जवम् ॥ ३३ ॥

क्षमा धृतिर्मिताहारः शौचं चेति यमादयः ।

तपः सन्तोष आस्तिक्यं दानमीश्वरपूजनम् ॥ ३४ ॥

सिद्धान्तश्रवणं चैव ह्रीर्मतिश्च जपो हुतम् ।

एते तु नियमाः" । इति

॥ नियमाः ॥

आसनान्यपि चोक्तानि बहुधा पूर्वपद्धतौ ॥ ३५ ॥

तेषां पञ्चैव शस्तानि योगसिद्धिकराणि वै ।

स्वस्तिकं पद्मसंज्ञं च भद्रं योगासनं तथा ॥ ३६ ॥

गोमुखं चेति तेषां तु लक्षणं पृथगुच्यते ।

उपविश्य तु विष्टरेऽथ जान्वोर्विवरेऽङ्गुष्ठनिपीडनं विधाय ।

ऋजुमध्यगलक्षणाग्रकायो भवति स्वस्तिकमासनं निविष्टम् ॥ ३७ ॥

चरणाग्रयुगं तथोपरिष्टादधिरोप्योरुयुगस्य मूलदेशे ।

उपविश्य पुरेव पद्मसंज्ञं कथितं तद्विपरीततस्तु भद्रम् ॥ ३८ ॥

अधिरोप्य तु दक्षिणाङ्घ्रिमूरावथ सव्यं चरणं तु दक्षिणोरौ ।

अधिरोप्य पुरेव सूपविष्टो यदि योगासनमिष्टदं तदाहुः ॥ ३९ ॥

वृषणे तु निगृह्य वामजङ्घापदगुल्फे त्वधिरूढसस्फिगूरूः ।

उपरिस्थितदक्षिणोरुजानुः खलु योगी स तु गोमुखासनस्थः ॥ ४० ॥

॥ आसनानि ॥

प्राणस्य धारणं देहे प्राणायाम इतीरितः ॥ ४१ ॥

स च नैकविधः प्रोक्तो योगशास्त्रविशारदैः ।
पूरकः कुम्भकश्चैव रेचकश्चेति ते त्रयः ॥ ४२ ॥

प्राणसंयमनानां तु ख्यात्यान्यङ्गान्यनुक्रमात् । (?)
त्रिभिरङ्गैर्युतस्त्र्यंग स्याकुत्पूरकं विना (?) ॥ ४३ ॥

नासापुटेन वामेन पूरयेदुदरेऽनिलम् ।
निर्दिष्टोद्घातमात्राभिर्विज्ञेयः स तु पूरकः ॥ ४४ ॥

पूरितस्याथवा वायोः केवलस्य निरोधतः ।
संपूर्णकुम्भवत् तिष्ठेद् यदासौ कुम्भकः स्मृतः ॥ ४५ ॥

वामेतरेण घ्राणेन (मा?म)रुतः पूरितस्य तु ।
शनैः क्रमेण यो मोक्षो रेचकः परिपठ्यते ॥ ४६ ॥

तत्र षोडशमात्रस्तु सामान्यः पूरको मतः ।
कुम्भकः षष्टिमात्रः स्यात् पञ्चोद्घातस्तु संस्मृतः ॥ ४७ ॥

युग्मोद्घातो रेचकः स्याच्चतुर्विंशतिमात्रकः ।
प्राणायामो ह्ययं मन्दो मध्योऽस्माद् द्विगुणो भवेत् ॥ ४८ ॥

त्रिगुणस्तूत्तमो ज्ञेयः क्रमेणाभ्यासयोगतः ।
अगर्भाश्च सगर्भाश्च प्राणायामास्तु ते स्मृताः ॥ ४९ ॥

अन्तर्मन्त्रजपोपेताः प्राणायामाः सगर्भकाः ।
अन्तर्जपविहीना ये ते त्वगर्भा इति स्मृताः ॥ ५० ॥

प्राणयामादगर्भात् तु सगर्भः श्रेष्ठ उच्यते ।

तद्यथा —

कुम्भीकृत्योदरे वायुं स्वस्वमन्त्रं धिया जपेत् ॥ ५१ ॥

प्राणायामं सगर्भं तु कुर्यात् तद्गतमानसः ।
एकाक्षरः स्वमन्त्रश्चेत् तस्य स्याद् द्विशतं जपः ॥ ५२ ॥

प्रत्यक्षरविवृद्ध्यात्वा त्रिंशद्वर्णाननुक्रमात् ।
भावयित्वायतप्राणः प्राणायामं समाचरेत् ॥ ५३ ॥

---

१. 'ह्रापयि' ख. पाठः

अष्टार्णादिप्रकृत्यन्तं तत्राप्येकैकलोपतः ।
प्राणायामा विधातव्यास्तत्तद्ध्यानोपबृंहिताः ॥ ५४ ॥

तत्र विज्ञाय देहं च नाडीर्वायुं च तस्थितम् ।
तच्छुद्धिं च विधायाथ प्राणायामं समाचरेत् ॥ ५५ ॥

तद्यथा —

षण्णवत्यङ्गुलो देहो देहो लब्धाङ्गुलैः स्वकैः ।
ऊर्ध्वं शरीरादधिकं प्राणः स्याद् द्वादशाङ्गुलम् ॥ ५६ ॥

मेढ्राद् ऊर्ध्वं द्व्यङ्गुलं तु देहमध्यमुदीरितम् ।
मूलाधारः स च त्र्यश्रो देवादीनां नृणामपि ॥ ५७ ॥

पश्वादीनां तु वेदाश्रस्त्वण्डजानां तु वर्तुलम् ।
चतुष्पदानां हृन्मध्ये क्रोडमध्येऽण्डजन्मनाम् ॥ ५८ ॥
मूलादूर्ध्वं मनुष्याणां नाभिकन्दो नवाङ्गुलात् ।
नाभिचक्रं तदूर्ध्वं तु द्वादशारमसुस्थितिः ॥ ५९ ॥
नाभेरधस्तात् कन्दाख्ये कुण्डलिन्यष्टवर्तुला ।
प्रसुप्तभुजगाकारा चतुरङ्गुलविस्तृता ॥ ६० ॥
द्वासप्ततिसहस्राणि नाड्यस्तन्मध्यनिर्गताः ।
अष्टाविंशतिसंख्याः स्युस्तासां मुख्यास्तु नाडयः ॥ ६१ ॥

तासां च दश वै श्रेष्ठा इडाद्यास्तास्वपि त्रयम् ।
इडा पिङ्गा सुषुम्ना च गान्धारी हस्तिजिह्विका ॥ ६२ ॥

सुयशालम्बुषा पूषा कुहूश्चैव च शङ्खिनी ।
एतास्विडा पिङ्गला च सुषुम्ना चोत्तमाः स्मृताः ॥ ६३ ॥

तासामथ सुषुम्नाख्या ब्रह्मनाडी परा स्मृता ।

इति नाडीदशकम् ॥

---

विमला धोषणी पृथ्वी ततस्त्वाप्यायनी मता ॥ ६४ ॥

तेजोवती वायवी च गगना चैव रोधनी ।
रसावाहा च मृद्वङ्गी स्रंसनी चापि मर्शनी ॥ ६५ ॥

शब्दस्पर्शवहे दूर्णा सुरूपा रसधारणी ।
सर्वगा चेति निर्दिष्टा नाडयोऽष्टादश क्रमात् ॥ ६६ ॥

अथ प्राणादयः पञ्च नागाद्याश्चापि पञ्च हि ।
प्राणस्तु हृत्पद्मगत आसनाद्धृदयस्थितिः ॥ ६७ ॥

निःश्वासोच्छ्वासकासादीन् कुर्वन् वक्षः समाश्रितः ।
प्रयाणं कुरुते नित्यं य (स्या ? स्मात्) प्राणः प्रकीर्तितः ॥ ६८ ॥

अवाङ्मूत्रमलादीनांमपानो(?) हस्तादिसन्धिगः ।
हानोपादानकर्मा च तस्माद् व्यान इति स्मृतः ॥ ६९ ॥

ऊर्ध्वं नयत्युदानस्तु नाभेराशिरसि स्थितः ।
गात्रनेत्रविकाराद्यं कर्मोदानस्य तु स्मृतम् ॥ ७० ॥

समानः सर्वकायं तु व्याप्य सन्धिषु च स्थितः ।
त्वगसृङ्मांसमेदोस्थिसंस्था नागादिवायवः ॥ ७१ ॥

ललाटिकोरश्शङ्खांसनाभिस्थास्ते त्वनुक्रमात्(?) ।

अथ वर्णाः—

नीलेन्द्रगोपगोक्षीरविद्युदर्केन्दुसप्रभाः ॥ ७२ ॥

कुन्दभिन्नाञ्जनार्काश्मकुसुम्भकुसुमोपमाः ।
आहारपचनाद्यन्तं प्राणकृत्यमितीरितम् ॥ ७३ ॥

पोषणाद्यं समानस्य कर्मेति परिपठ्यते ।
उद्गाराद्यं तु नागस्य कूर्मस्योन्मीलनादिकम् ॥ ७४ ॥

कृकरस्य क्षुतं कर्म जृम्भाद्यं देवदत्तजम् ।
धनञ्जयस्य शो (भा? षाद्यं) मृतं च न विमुञ्चति ॥ ७५ ॥

मध्येन तु शरीरस्य सुषुम्ना सूत्रवत् स्थिता ।
बिन्दोर्मूर्धानमासाद्य ब्रह्मरन्ध्रेण निर्गता ॥ ७६ ॥

इडा च पिङ्गला चैव वामतोऽस्याश्च दक्षिणे ।
सुषुम्नायां स्थिते वामदक्षिणप्राणयोः स्मृते ॥ ७७ ॥

इडापृष्ठात्तु गान्धारी सव्यनेत्रविनिर्गता ।
हस्तिजिह्वा च वामाङ्घ्रेरङ्गुष्ठाग्राद् विनिर्गता ॥ ७८ ॥

सुयशा दक्षिणस्याङ्घ्रेर्ज्येष्ठिकाग्रान्तनिर्गमा ।
अलम्बुषा त्वधो नाभेः पायुमूलान्तनिर्गमा ॥ ७९ ॥

---

१. 'नां व्यानो ह' क. पाठः. २. 'स्मृ' ख. पाठः.

पूषा तु पिङ्गलापृष्ठाद् दक्षिणश्रोत्रनिर्गता[1] ।
नाड्यो विमलाद्यास्तु दश हस्ताग्रनिर्गताः ॥ ८० ॥

कुहूस्तु पिङ्गलापृष्ठाद् दक्षिणाक्षिविनिर्गता[2] ।
विश्वोदरोदरं याता सरस्वत्यपि मेढ्गा ॥ ८१ ॥
अन्तस्सुषिरसंयुक्ताः सर्वा अपि च नाडयः ।
पूर्णरक्ताश्च ताः सर्वाः पद्मतन्तुवि + + + ॥ ८२ ॥
तासां शाखोपशाखानां भेदस्तु बहुधा स्मृतः ।
देहाद् बहिर्निर्गताग्रा रोमसंज्ञाः शरीरगाः ॥ ८३ ॥
श्मश्रूणि मुखजातानि केशाः शिरसि निर्गताः ।
तिस्रः कोट्योऽर्धकोटिश्च केशरोमाणि देहगाः ॥ ८४ ॥

जरायुजानां देहेषु पशूनां त्रिगुणाः स्मृताः ।
पक्षिणां तु ततोऽर्धार्धं सिरारोमाणि संख्यया ॥ ८५ ॥
सिरारोमादिनियमो नहि कीटादिजातिषु ।
स्थावराणामपि तथा सर्वे ते प्राणिनः[3] स्मृताः ॥ ८६ ॥
एवं नाडीर्विदित्वा तु प्राणायामं समाचरेत् ।
एवं यमाश्च नियमा(नि ? श्च) तथासनानि
प्राणादयश्च पवना अपि नाडिचक्रम् ।
योगस्य यानि बहिरङ्गतयोदितानि
सेव्यानि तानि विदितानि यथोपदेशम् ॥ ८७[4] ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ सिद्धान्तसारे उपरिभागे
योगपादे योगलक्षणादिपटलो द्वितीयः ॥

---

## अथ तृतीयः पटलः ।

अथ योगं विविदिषुः प्राप्य योगविदं गुरुम् ।
शुश्रूषार्थप्रदानाद्यैराराध्य परितोष्य च ॥ १ ॥

तस्माद् विज्ञाय योगं तु दत्त्वा तु गुरुदक्षिणाम् ।
अनुज्ञातस्तु गुरुणा गत्वा देशं मनोरमम् ॥ २ ॥

---

१. 'कुण्डला' ख. पाठः. २. 'णो' क. पाठः. ३. 'नां', ४. 'हा' ख. पाठः

पुण्यक्षेत्रनदीतीर्थवनसानुमदादिकम् ।
तत्राश्रमे मठे वाथ प्राज्यमूलफलोदके ॥ ३ ॥
ग्रामे देवालये वापि स्वगृहे वा मनोरमे ।
परिशुद्धा(त्म)वान् योगी निस्संगो विजितेन्द्रियः ॥ ४ ॥
स्ववर्णाश्रमकर्माणि चोदितानि समाचरन् ।
युक्ताहारविहारस्तु युक्तस्वप्नात्रबोधनः ॥ ५ ॥
शान्तस्त्रिषवणस्नायी सर्वत्र समदर्शनः ।
पिचुतूलादिसंपूर्ण आसने सोत्तरच्छदे ॥ ६ ॥
विशुद्धे सम्यगासीनो विजितासनमास्थितः ।
विनायकं गुरुं चाथ नमस्कृत्य ततः शिवौ ॥ ७ ॥
ऋजुकायशिरोग्रीवः कृत्वान्तर्यजनं हृदि ।
योगं युञ्जीत मतिमान् न द्रुतं न विलम्बितम् ॥ ८ ॥
अथ ये ग्रन्थयः पञ्च भूतशुद्धौ प्रदर्शिताः ।
हृत्कण्ठतालुभ्रूमध्यब्रह्मरन्ध्रस्थिताः क्रमात् ॥ ९ ॥
तानूर्ध्ववायुना भित्त्वा मुक्त्वा दक्षिणनासया ।
वामनासापुटेनाथ पूरयेन्मरुतोदरम् ॥ १० ॥
पूरकस्तु स विज्ञेयो मात्राषोडश(का? को) विधिः ।
निरुन्ध्यान्निर्गमं तस्य कुम्भकाख्यः स तु स्मृतः ॥ ११ ॥
स चापि षष्टिमात्रः स्याद् रेचकस्तस्य रेचनात् ।
पिधाय वामघ्राणं तु दक्षिणेनैव रेचयेत् ॥ १२ ॥
स तु रेचक उद्दिष्टो मानं तेषां निगद्यते ।
पूरके ह्यष्टमात्राभिर्नाभिपद्मे चतुर्मुखम् ॥ १३ ॥
अकारमूर्तिमगुणं समाधिस्थं चतुर्भुजम् ।
कुम्भके च चतुष्षष्टिमात्रामात्रं तु धारयेत् ॥ १४ ॥
उकारमूर्तिं शङ्खाभं वासुदेवं हृदम्बुजे ।
शङ्खचक्रधरं सौम्यं समाधिस्थं चतुर्भुजम् ॥ १५ ॥
किरीटिनं स्मरेच्छक्त्या यावत् तावत् तु कुम्भयेत् ।
रुद्रं मकारमूर्तिं तु भ्रूमध्यकमले स्मरन् ॥ १६ ॥

---

1. 'ण्य' क. पाठः.

शुक्लवर्णं समाधिस्थं चतुर्बाहुं त्रिलोचनम् ।
एणटङ्कधरं सौम्यमिन्दुमौलिं कपर्दिनम् ॥ १७ ॥
मात्राद्वादशमात्रं तु दक्षिणेनैव रेचयेत् ।
अथ प्रणवतो वायुं समापूर्य भ्रुवोऽन्तरात् ॥ १८ ॥
बिन्दुमत्यक्षरे तस्मिन् नियम्यात्मानमात्मनि ।
मनसा तपदोङ्कारं जपेन्मात्रत्रयाधिकम् ॥ १९ ॥
एष प्राणजयोपायो दृष्टादृष्टफलप्रदः ।
भूतशुद्ध्युक्तमार्गेण प्राणायामास्तु पञ्च ते ॥ २० ॥
शोषणाद्यास्त्रयश्च स्युः सहैतान् पृथगाचरेत् ।
सन्ध्ययोर्वायुमाकृष्य पिबन् वाग्मी च जायते ॥ २१ ॥
व्याधयो ह्यस्य नश्यन्ति मासान् मासैस्तु वा क्रमात् ।
बधिरो मूर्ध्न्यथात्मानमाधायापूर्य मारुतम् ॥ २२ ॥
पिधाय सर्वद्वाराणि व्योमेन्दोरमृताप्लुतम् ।
कर्णाभ्यां विसृजेद् वायुं बाधिर्यादेष मुच्यते ॥ २३ ॥
पार्श्वयोर्वाथ नाभौ वा धारयेद् गुल्मशूलनुत् ।
यत्र यत्र रुजा देहे तत्र तत्र तु मारुतम् ॥ २४ ॥
आरोप्य प्राणनियमात् तं तं रोगं व्यपोहति ।
अथापानं समुत्कृष्य वह्निस्थाने नियोजयेत् ॥ २५ ॥
निरुन्ध्याच्च षडक्षाणि ततो नादः प्रवर्तते ।
नाभेरामूर्धतो वीणाध्वनिर्नादः प्रवर्तते ॥ २६ ॥
सुषुम्नयोर्ध्वङ्गमया तच्छ्रुत्वासौ विमुच्यते ।
ब्रह्मरन्ध्रेण तस्याथ प्राणोऽप्युच्चरतीच्छया ॥ २७ ॥
हृदयाम्भोरुहान्तःस्थः प्राणो हंस इतीरयन् ।
उच्छ्वासं जनयेच्छश्वदहोरात्रे तु संख्यया ॥ २८ ॥
षष्ट्युच्छ्वासः स्मृतः प्राणः षट् प्राणा घटिका स्मृता ।
घटिकानां स्मृतः षष्ट्या त्वहोरात्रस्तु मानुषः ॥ २९ ॥
श्वासनिःश्वासविच्छेदः प्राणायामात् प्रवर्तते ।
अथोदरे नाभिपद्मे ध्यात्वा तु चतुराननम् ॥ ३० ॥

अकारमूर्तिमिडया पूरयेन्मरुतोदरम् ।
कुम्भीकृत्य यथापूर्वं धियैव प्रणवं जपन् ॥ ३१ ॥
स्थिरीकृत्य तु संहृत्य रेचयेद् दक्षिणेन तु ।
अथवा हृदयाब्जस्थं वासुदेवं चतुर्भुजम् ॥ ३२ ॥
शङ्खचक्रधरं सौम्यं शुक्लवर्णं किरीटिनम् ।
चतुर्बाहुमुदारस्थमुकारमयविग्रहम् ॥ ३३ ॥
स्मरञ्जपन् धिया तारं पूर्ववत् पूरकुम्भकौ ।
रेचकं च विधाय स्यात् प्राणायामस्तु वैष्णवः ॥ ३४ ॥
भ्रुवोरन्तरतोऽम्भोजे मकारमयविग्रहम् ।
भस्माङ्गरागधवलं रुद्रं ध्यायंस्त्रिलोचनम् ॥ ३५ ॥
सूपविष्टं चतुर्बाहुं पूर्ववत् प्रणवं जपेत् ।
पूरकाद्यैर्यथापूर्वं रौद्रोऽयं प्राणसंयमः ॥ ३६ ॥
बिन्दुस्थानेऽम्बुजासीनमष्टबाहुं चतुर्मुखम् ।
ईश्वरं प्रोक्तरूपादिं ध्यायंस्तारं जपन् धिया ॥ ३७ ॥
पूरकाद्यैर्यथापूर्वं प्राणायामोऽयमैश्वरः ।
तथैव मूर्ध्नि कमले ध्यायन् देवं सदाशिवम् ॥ ३८ ॥
तारं जपन् धिया प्राग्वत् प्राणानायम्य पूर्ववत् ।
सर्वदोषहरोऽयं स्यात् सादेशः प्राणसंयमः ॥ ३९ ॥
कारणाधीशसंयुक्ताः पञ्चैते प्राणसंयमाः ।
सर्वकल्मषदोषघ्नाः सर्वे सर्वार्थसाधकाः ॥ ४० ॥
योगसिद्धिकराः पञ्च प्राणायामा भवन्ति हि ।
अथ हृत्पद्ममध्ये वा बि(न्दू? न्दौ) वा व्योमपङ्कजे ॥ ४१ ॥
सूर्यादिमण्डलाधीशतत्त्वतत्त्वेशमूर्तिभिः ।
पुर्यष्टकाष्टच्छदने स्वस्वाङ्गावरणान्विते ॥ ४२ ॥
यो यो यस्या देवताया भक्तस्तां तत्र संस्मरन् ।
तत्तन्मन्त्रं जपन् बुद्ध्या पूरकादिक्रमेण तु ॥ ४३ ॥
प्राणसंयमनं कुर्वन् योगसिद्धिमवाप्नुयात् ।
अथवा हृदयाब्जादौ पश्यञ् ज्योतिर्निरञ्जनम् ॥ ४४ ॥

ब्रह्मादिकारणोपाधिनिर्मुक्तं चिद्घनं शिवम् ।
ध्यायंस्त्रिमात्रं चिन्मात्रप्रणवं वा धिया जपन् ॥ ४५ ॥
प्राणायामं प्रकुर्वीत न चिरात् सिद्धिमश्नुते ।
मूलाब्जात् कुण्डलिन्यास्तु ध्यायञ्च्छक्तिं विनिर्गताम् ॥ ४६ ॥
विद्युल्लेखोपमामूर्ध्वङ्गमामा व्योमपङ्कजा(न्?त्) ।
परमामृतनिःष्यन्दैः प्लाव्यमानां ततोऽपि हि ॥ ४७ ॥
निवृत्तां पुनरायान्तीं मूलाम्भोजं पुनः पुनः ।
सुषुम्नयोर्ध्वं गच्छन्तीममृतासारवर्षिणीम् ॥ ४८ ॥
ध्यायञ्च्छक्तिं परां सूक्ष्मां चिन्मात्र(प्रणवं) तु वा ।
जपन् धिया यथापूर्वं प्राणानायम्य योगवित् ॥ ४९ ॥
योगसिद्धिमवाप्नोति नचिरान्नात्र संशयः ।
अथवा प्रणवाद्यां तु सप्तव्याहृतिपूर्विकाम् ॥ ५० ॥
गायत्रीं शिरसोपेतां त्रिः पठन् मनसा हृदि ।
व्योम्नि वा परमात्मानं सावित्रीं सूर्यमेव वा ॥ ५१ ॥
ध्यायन् प्रागुक्तमार्गेण पूरकादिक्रमेण तु ।
प्राणसंयमनं कुर्वन् योगी सिद्धिमवाप्नुयात् ॥ ५२ ॥
षड्भिर्द्वादशभिश्चाथ तथा षोडशभिः क्रमात् ।
मनोवाक्कर्मजानीह पातकानि विनाशयेत् ॥ ५३ ॥
प्राणायामस्ततश्चापि द्विगुणैस्त्रिगुणैरपि ।
अष्टोत्तरशतस्यापि(?)भ्रूणहत्यां च नाशयेत् ॥ ५४ ॥

अत्र याज्ञवल्क्यवसिष्ठौ—

''अपि भ्रूणहनं मासात् पुनात्यहरहः कृतः ।
ऋतुत्रयात् पुनात्येनं जन्मान्तरकृतादघात् ॥
वत्सरादिह सर्वज्ञो ब्रह्मविच्चापि जायते ।
प्रस्वेदकम्पोत्थानानां जननाः कुंभकाः (पुनः) ॥
कनिष्ठमध्यश्रेष्ठाः स्युः फलं तेषां च तादृशम् ।
प्राणायामैः क्रमाभ्यस्तैर्विजिता: स्युश्च वायवः ॥

निःश्वासोच्छ्वसनाद्यं च विना ज्ञानं च शक्यते ।
विनैव पूरकं तद्वद् रेचकं च विनैव तु ॥
कुम्भकेनैव सुचिरमपि तिष्ठेज्जितानिलः ।
मनोजव(इ?ग)तिश्च स्याद् दूरादर्थांश्च पश्यति ॥
खेचरो द्वादशाब्देन जरापलितवर्जितः ।
चिरजीवी च भवति ततो द्विगुणवत्सरैः ॥
ऋषिगन्धर्वदेवादीन् पश्यत्याभाषतेऽपि च ।
ततोऽपि द्विगुणैर्वर्षैर्लभते चाणिमादिकान् ॥"

प्राणायामा[धि]कारः ।

---

इन्द्रियाणां यथास्वं स्वं विषयं परिधावताम् ।
बलादाहरणं तेषां प्रत्याहारं प्रचक्षते ॥ ५५ ॥
कर्मणां वि(जि? हि)तानां तु नित्यादीनां विधिं विना ।
मनसा ह्यनुष्ठानं प्रत्याहारं विदुर्बुधाः ॥ ५६ ॥
अथवाष्टादशस्थानेष्वाकृष्याधाय मारुतम् ।
स्ववशे स्थापनं केचित् प्रत्याहारं वदन्ति हि ॥ ५७ ॥

तानि तानि स्थानानि —

पादाङ्गुष्ठद्वयं गुल्फे जङ्घे जानूरुपायवः ।
मेढ्रं कटिस्ततः कन्दो नाभी हृदयवक्षसी ॥ ५८ ॥
कण्ठकूपं तथा तालु घ्राणं नेत्रे भ्रुमध्यकम् ।
मूर्धा चाष्टादशैतेषु स्थानात् स्थानं क्रमेण तु ॥ ५९ ॥
आकृत्य धारणं वायोः प्रत्याहारः स्मृतो बुधैः ।
अनेन रोगशान्तिः स्यादायुषो वर्धनं तथा ॥ ६० ॥

प्रत्याहाराधिकारः ।

---

यमाद्यैः पञ्चभिः (क? )स्तैर्विशुद्धस्य तु योगिनः ।
आत्मन्यवस्थितिं बुद्धेर्धारणं सम्प्रचक्षते ॥ ६१ ॥
प्रदेशावस्थितं देहे बुद्धेस्तु मरुता सह ।
+ + + + + + + + + + + + + + + + ॥ ६२ ॥

+ + + + + + + + + + + + + + + + |
+ + + + + भूतेषु ब्रह्मादीन् कारणेश्वरान् ॥ ६३ ॥
जान्वादिभूतशुद्ध्युक्तमार्गेण स्वस्वबीजतः ।
स्मृत्वा बुद्धिं तु तत्रैव प्रतीत्यन्तरवर्जिताम् ॥ ६४ ॥
संस्थाप्य प्राणसहितां धारणाभिश्च पञ्चभिः ।
त्रिभिस्त्रिभिर्भवे + + + + + + + + + + ॥ ६५ ॥
ब्रह्मादीन् कारणेशांस्तु स्वैःस्वैः संयोज्य कारणैः ।
प्रणवाक्षरसम्भेदात् क्षित्याद्यैर्मण्डलाक्षरैः ॥ ६६ ॥
निष्कले द्वादशान्तस्थे शिवे संयोज्य चिद्घने ।
तन्मयं च स्वमात्मानं [1]गं सर्ववेदिना ॥ ६७ ॥
+ + + + + + + + + + + + + + + + |
+ + + + + + + + + + + + + + + भाक् ॥ ६८ ॥

धारणाधिकारः ।

---

अथ ध्यानं द्विधा प्रोक्तं सकलं निष्कलं तथा ।
साकारं सकलं ध्यानं निराकारं तु निष्कलम् ॥ ६९ ॥
चतुर्भुजादिशुक्लादिद्विन्त्र्यक्षैकाननादिभिः ।
भेदैरिष्टसुराकारस्मरणं हृदयादिषु ॥ ७० ॥
साकारध्यानमुद्दिष्टं निराकारमथोच्यते ।
हृत्पद्मे वा भ्रुवोर्मध्ये बिन्दौ वा द्वादशान्तगे ॥ ७१ ॥
लैङ्गिकं परमं ज्योतिर्ध्यायेदङ्गुष्ठमात्रकम् ।
कदम्बगोलकाकारं भाभासितदिगन्तरम् ॥ ७२ ॥
तस्मान्नीवारशूकाभं ज्योतिरूर्ध्वं सुषुम्नया ।
निर्गतं द्वादशान्तस्थशिवेनाप्यैक्यतां गतम् ॥ ७३ ॥
स्वदेहरोमकूपेभ्यो निर्यज्ज्योतिश्शिखोज्ज्वलम् ।
विश्वमावृत्य तु व्याप्तं ध्यायेन्निश्चलमानसः ॥ ७४ ॥
ध्यानानामुत्तमं त्वेतद् योगश्चायं परो मतः ।
एवं सन्ततयुक्तात्मा योगी निर्धूतबन्धनः ॥ ७५ ॥

---

१. 'त' ख. पाठः.

अणिमादिगुणैश्वर्याण्यधिगम्याप्यविस्मितः ।
षडूर्मिभिरसंस्पृष्टो मैत्रादिगुणवर्जितः ॥ ७६ ॥
क्षमादमशमोपेतः सर्वभूतानुकम्पकः ।
छित्त्वा गुणमयान् पाशान् परं निर्वाणमृच्छति ॥ ७७ ॥
धारणानां द्वादशकैरायतं ध्यानमिष्यते ।
ध्यानाद् द्वादशकायामः समाधिर्भवति स्फुटम् ॥ ७८ ॥

ध्यानाधिकारः ।

---

समाधिः समभावः स्याज्जीवात्मपरमात्मनोः ।
तद्वच्छिवाह्वयं ब्रह्म परंज्योतिः सुनिर्मलम् ॥ ७९ ॥
एकं ज्ञानघनं शान्तं सर्वकारणकारणम् ।
अवस्थात्रयनिर्मुक्तं षड्भावविकृतेः परम् ॥ ८० ॥
सर्वानुग्राहकं विश्वव्यापि नित्यं निरञ्जनम् ।
आकाशादिमहाभूतैः शब्दाद्यैर्विषयैरपि ॥ ८१ ॥
दशेन्द्रियमनोबुद्धिसाहङ्कारगुणैरपि ।
प्राणादिभिः प्रकृत्या च पुरोगाभ्यामविद्यया ॥ ८२ ॥
नियत्या कलया कालमायाभ्यां च विवर्जितम् ।
सादेशेश्वरविद्याभिः शक्त्या चाखिलकारणम् ॥ ८३ ॥
नादान्तभासकं शश्वत् पञ्चकृत्यैकहेतुमत् ।
अनाद्यन्तं परं सूक्ष्मं तद् योऽहं सोऽहमित्यपि ॥ ८४ ॥
चित्ताधानं शिवे सम्यक् स समाधिरिति स्मृतः ।
यदा समरसं चित्तं सर्वत्र समदर्शनात् ॥ ८५ ॥
रागादिदोषरहितं हेयोपादेयनिःस्पृहम् ।
आहितं स्याच्छिवे शश्वत् समाधिः परमः स्मृतः ॥ ८६ ॥
अनात्मबुद्धिर्देहेऽस्मिन्नस्वबुद्धिश्च वस्तुषु ।
एषणात्रयमुक्तस्य कर्मपुत्रार्थवर्जनात् ॥ ८७ ॥
सर्वारम्भपरित्यागात् सर्वसङ्गविवर्जनात् ।
सर्वव्यापिनि चिन्मात्रे शिवेनैक्येन भावना ॥ ८८ ॥

अविच्छेदेन सततं समाधिः पा(शमोचनः) ।
+ + + + + + + + + + + + त एव वा ॥ ८९ ॥

जिघ्रतो मौनिनो वाचं ब्रुवतः शयितस्य वा ।
आसीनस्यापि मिषतो मीलिताक्षस्य तिष्ठतः ॥ ९० ॥

जाग्रतः स्वपतो वापि स्वप्नान् वा परिपश्यतः ।
गच्छतोऽपि यदा चेतः समाधिस्थस्य निश्चलम् ॥ ९१ ॥

करणानां तु संहारादव्यक्तिर्विषयेष्वपि ।
स योगः परमो ज्ञेयस्तद्वान् योगीन्द्र उच्यते ॥ ९२ ॥

ऐश्वर्याण्यणिमादीनि योगस्यावान्तरं फलम् ।
अष्टैश्वर्यगुणा योगस्यान्तराया भवन्ति हि ॥ ९३ ॥

ते(ष ? षु)योग + + + + + + + नाभिरोचयेत् ।
फलं हि मोक्षो योगस्य तस्मात् तदभिरोचयेत् ॥ ९४ ॥

एवं साङ्गोऽत्र योगस्तु समासात् संप्रदर्शितः ।
संस्मृत्य योगशास्त्रेभ्यः शिवानुग्रहतः स्फु(टम्) ॥ ९५ ॥

+ + + त्र हि मुख्यमित्थमुदितं भोगा यतो वाञ्छिताः
पश्वादिप्रविचारचारुविशदज्ञानक्रियायोगतः ।
अष्टैश्वर्यगुणास्तथैव सुलभं निःश्रेयसं श्रेय(सा)
तामीशानशिवोऽभ्यधाद् सुरगुरुः सिद्धान्ततापद्धतिम् ॥ ९६ ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ सिद्धान्तसारे उपरिभागे
योगपादे प्राणायामादिपटलस्तृतीयः ।

योगपादः समाप्तः ॥

---

समाप्ता चेयमीशानशिवगुरुदेवस्य कृतिः
सिद्धान्तसारपद्धतिः ॥

शुभं भूयात् ॥

रैकात्मकं जगुः ॥१६॥ अतश्चित्तलयेनैवाऽहं गणेशो न संशयः । चित्तपंचकमुत्सृज्य पूर्णयोगमवाप्नुयात ॥१७॥ तत्र समाधिजं सौख्यं वदामि युक्तिभावतः । गणेशोऽहं तदाकारो भवामि यदि योगतः ॥१८॥ तदा संयोगजः प्रोक्तोऽनुभवो योगिनां हृदि । यदाऽहं गणनाथश्चेन्नागतो न गतः कदा ॥१९॥ तदा ह्ययोगजः प्रोक्तोऽनुभवः शांतिदायकः । अतोऽयोगमयो योगः कथं तत्र प्रवर्तते ॥२०॥ चित्तं नानाविधं दक्ष संयोगायोगधारकम । योगे योगात्मकोऽहं च तदा शांतिः प्रलभ्यते ॥२१॥ शांतीनां शांतिरूपा सा योगशांतिः प्रजापते । तस्मात परं विद्यते न ब्रह्म योगात सुनिश्चितम ॥२२॥ अतोऽयं गणनाथस्तु ब्रह्मणस्पतिरुच्यते । संयोगाऽयोगकादीनां ब्रह्मणां पातृभावतः ॥२३॥ एतत सर्वं समाख्यातं रहस्यं परमाद्भुतम । गजाननस्य ते दक्ष प्रकृतं शृणु सांप्रतम् ॥२४॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे नवमे खंडे योगचरित्रे गणेशस्वरूपवर्णनं नाम तृतीयोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ तपसा भक्तिभावेनागतं दृष्ट्वा गजाननम् । अयोगो हर्षितोऽत्यंतमुत्थाय प्रणनाम तम् ॥ १ ॥ ततः पूज्य गणेशानं प्रभुं नानोपचारकैः । पुनः प्रणम्य विघ्नेशं तुष्टाव करसंपुटः ॥२॥ अयोग उवाच । शांतिस्वरूपाय सुशांतिदाय वाणीमनोहीनतमाय ढुंढे । वाणीमनोयुक्तविचारिणे वै योगाय योगाधिपते नमस्ते ॥३॥ वाणीमनोयुक्तमयं वदामि नो विश्वरूपोऽसि कथं स्तवीमि । नित्यं गणेशाय नमो महात्मन् योगाय योगाधिपते नमस्ते ॥४॥ वाणीमनोहीनमयं कथं त्वां ब्रुवेऽद्य संयोगमयं कदा च । नो योगरूपं त्वथ ते नमो वै योगाय योगाधिपते नमस्ते ॥५॥ त्वत्तः प्रसूतानि महानुभाव ब्रह्माणि विश्वानि पराणि भूयः । त्वय्येव लीनानि ह्यभिन्नभावाद्योगाय योगाधिपते नमस्ते ॥६॥ नित्यं ह्ययोगाय निवृत्तिदाय मायाविहीनाय गणाधिपाय । वाणीमनोहीनतया सुलभ्य योगाय योगाधिपते नमस्ते ॥७॥ स्वानंदरूपाय सुशांतिदाय सिद्ध्या च बुद्ध्या सह खेलकाय । वाणीमनोहीन निजात्मलभ्य योगाय योगाधिपते नमस्ते ॥८॥ अव्यक्तरूपाय च साहजाय मोहेन हीनाय सदा शिवाय । त्रैविध्यनाथाय च नेति कर्त्रे योगाय योगाधिपते नमस्ते ॥९॥ सामान्यरूपाय त्रयीमयाय द्वंद्वप्रकाशाय च विष्णवे ते । आनंदनाथाय सुखेलकाय योगाय योगाधिपते नमस्ते



जीवित रहता है । इस स्थान पर सदैव चित्त को सावधानीपूर्वक स्थापित कर वायु को ऊपर की ओर खींचे । यदि ऐसा योगी क्रुद्ध होता है तो वह सारे त्रिभुवन को कम्पित कर देता है । उसके सामर्थ्य को ब्रह्मा, विष्णु, हरिहर, सूर्य और न गणेश ही शमन करने में समर्थ हो सकते हैं ॥ ६२-६३ ॥

आज्ञाचक्रम् तद्ध्यानफलम्

**द्विदलं हक्षवर्णाभ्यां शुभाभ्यां परिमण्डितम् ।**
**विद्युत्कोटिप्रभं चक्रं भ्रुवोरूर्ध्वे मनोन्मनी ॥ ६४ ॥**

**६. आज्ञाचक्र भेदन**—यह चक्र ह क्ष इन दो वर्णों से सुशोभित है करोड़ों बिजली के समान आभा वाला है । इसका निवास भ्रू के मध्य में है जहाँ मनोन्मनी का निवास है ॥ ६४ ॥

**विन्दुयुक्तं सर्ववर्णं सर्वपद्मेषु चिन्तयेत् ।**
**योनिमध्ये स्थितं लिङ्गमितरं तरुणारुणम् ॥ ६५ ॥**
**जालन्धरं महापीठं हाकिनीं तत्र चिन्तयेत् ।**
**बिन्दुस्थां हाकिनीं शुक्रमेदोमज्जास्वरूपिणीम् ॥ ६६ ॥**

उपर्युक्त कहे गये मूलाधार से लेकर आज्ञाचक्र पर्यन्त छह चक्रों में विन्दु युक्त सभी वर्णों का ध्यान करे । यहाँ योनि के मध्य में इतर तरुण एवं अरुण वर्ण वाला लिङ्ग है । यह जालन्धर महापीठ है । वहाँ तत्त्वज्ञ साधक **हाकिनी** का ध्यान करे । यह हाकिनी शुक्र, मेद तथा मज्जा की अधिष्ठात्री देवी है जिसका निवास स्थान बिन्दु है ॥ ६५-६६ ॥

**अक्षमालाञ्च डमरुं कपालं पुस्तकं तथा ।**
**चापं मुद्रां दधानाञ्च शुक्लां नेत्रत्रयान्विताम् ॥ ६७ ॥**
**पद्ममध्येऽन्तरात्मानं प्रभारूपं हि कारणम् ।**
**ओङ्कारज्योतिषं कल्पप्रदीपाभं जगन्मयम् ॥ ६८ ॥**
**बालसूर्यप्रतीकाशां सदा बिन्दुमदक्षरम् ।**
**ततः सङ्क्षोभणद्वारे ध्यायेत् पद्मं सुशोभनम् ॥ ६९ ॥**

यह शुक्ल वर्ण वाली त्रिनेत्रा हाकिनी अपने हाथों में अक्षमाला, डमरु, कपाल, पुस्तक और धनुष मुद्रा धारण किये हुये है । यहाँ इस पद्म के मध्य में प्रभा स्वरूप अन्तरामा, जो सब का कारण कही गयी है, उसका निवास है । यहाँ ॐकार रूप ज्योति स्थित है । वह कल्प प्रदीप की आभा वाली जगन्मयी हैं और वह उदीयमान सूर्य की समान लाल वर्ण की आभा से युक्त हैं । उस सङ्क्षोभण द्वार पर बिन्दु युक्त अक्षरों से युक्त अत्यन्त शोभा वाले द्विदल पद्म का साधक को ध्यान करना चाहिये ॥ ६७-६९ ॥

**ध्यानयोगनिरतस्य जायते पूर्वजन्मकृतकर्मणां स्मृतिः।**
**तत्र विन्दुनिलये च दूरतो दर्शनश्रवणयोः समर्थता ॥ ७० ॥**

उस पद्म में ध्यान करने वाले योगी को पूर्व जन्म में किये गये समस्त कर्मों की स्मृति हो जाती है । उस विन्दु निलय में ध्यान करने से दूर से ही (वाञ्छित) दर्शन और श्रवण का सामर्थ्य हो जाता है ॥ ७० ॥

**इह सन्निहितस्वचित्तवृत्तिः प्रतिमायाः प्रतिजल्पनं करोति।**
**गमनञ्च पुरे परेषां पुनरुत्थानमप्यहो मृतस्य ॥ ७१ ॥**

इसमें अपनी चित्तवृत्ति को सन्निविष्ट करने वाला साधक प्रतिमा से भी बातचीत कर सकता है । वह दूसरे लोकों में गमन करता है और मृतक को भी जिला देता है ॥ ७१ ॥

**निरालम्बां मुद्रां निजगुरुमुखेनैव विदिता-**
**मिह स्थाने कृत्वा स्थिरनिशितधीः साधकवरः ।**
**सदाऽभ्यासात् पश्यत्यमरनिलयानन्तरखिला-**
**मुडुश्रेणीं विष्णोरपि पदमुडूनामपि पतिम् ॥ ७२ ॥**

कुशाग्र बुद्धि वाला श्रेष्ठ साधक अपने गुरु से प्राप्त की गई निरालम्ब मुद्रा यदि यहाँ बनावे, तो इस प्रकार सदैव के अभ्यास से वह अपने हृदय में ही समस्त देव स्थानों को देख सकता है । विष्णु का पद, आकाश, उसमें रहने वाले तारे तथा चन्द्रमा का भी दर्शन कर लेता है ॥ ७२ ॥

**भेदान्ते पद्मषट्कं च प्रस्फुटञ्चोर्ध्ववक्त्रकम् ।**
**भवत्येव न सन्देहोऽप्यथ स्यात् साधकस्य च ॥ ७३ ॥**

उन षट् पद्मों का भेदन करते ही वे कमल खिल जाते हैं । उनका मुख ऊपर हो जाता है इसमें सन्देह नहीं है । इसी प्रकार साधक का भी मुख खिल जाता है और वह भी ऊर्ध्वमुख हो जाता है ॥ ७३ ॥

**तदूर्ध्वे चार्धचन्द्रे च भानुमण्डलमुत्तमम् ।**
**मकारविन्दुरूपेण तदूर्ध्वे चन्द्रमण्डलम् ॥ ७४ ॥**

उसके ऊपर विद्यमान अर्धचन्द्र में मकार रूप वाला उत्तम भानुमण्डल है । फिर उसके ऊपर चन्द्रमण्डल है ॥ ७४ ॥

**विन्दोरुपरि नादं हि शुद्धस्फटिकसन्निभम् ।**
**चेतसा सम्प्रपश्यन्ति नादान्ते वृषभध्वजम् ॥ ७५ ॥**
**शुद्धस्फटिकसङ्काशं कपर्दशशिभूषणम् ।**

**व्याघ्राम्बरं तु तन्मध्ये अधोमुखं सशक्तिकम् ॥ ७६ ॥**
**स्थाने ह्यत्र परीतश्च वरदाभयपाणिकम् ।**
**प्रसन्नवदनं शान्तं सर्पयज्ञोपवीतिनम् ॥ ७७ ॥**
**नादोपरि महादेवं पश्यन्ति ज्ञानचक्षुषा ।**
**नान्यत् पश्यन्ति तत्रैव अन्तरं वृषभध्वजम् ॥ ७८ ॥**

उस विन्दु के ऊपर शुद्ध स्फटिक के समान नाद है । फिर योगीजन उस नाद के बाद भगवान् वृषभध्वज (सदाशिव) का दर्शन करते हैं जो शुद्ध स्फटिक के समान आभा वाले, कर्पद (जटाजूट) में चन्द्रमा का आभूषण धारण किये हुए हैं, बाघम्बर पर अधोमुख शक्ति (उमा) के साथ बैठे हुये हैं । वे अपने गणों से घिरे हुये वर और अभयमुद्रा हाथ में धारण किये हुये हैं । वहाँ योगिजन वृषभध्वज को छोड़कर किसी अन्य का दर्शन नहीं करते । वह शिव प्रसन्न मुख, शान्तमुद्रा एवं सर्प का यज्ञोपवीत धारण किये हुये नाद के ऊपर विराजमान है । योगी जन उन सदाशिव का दर्शन अपने ज्ञानचक्षु से करते हैं ॥ ७५-७८ ॥

**पुरत्रयविनिष्क्रान्तो यत्र वायुः प्रलीयते ।**
**तत्र संस्थं मनः कृत्वा तद्ध्यानमीश्वरं विदुः ॥ ७९ ॥**

जिस तीन स्थान (नाभि, हृदय और कण्ठ) से वायु निकल कर जहाँ लीन हो जाती है, वहाँ उस कण्ठ स्थान में मन को स्थापित करे तो उस ध्यान को ईश्वर विषयक ध्यान कहा जाता है ॥ ७९ ॥

**विभाव्य साधकश्रेष्ठो भेदयेत्तदनन्तरम् ।**
**शङ्खिनीनालं संस्थाप्यव्याप्तिशून्यं विभर्त्ति यः ॥ ८० ॥**
**अमृतोदधिसङ्काशं शतयोजनविस्तृतम् ।**
**चन्दनोद्यानमध्यस्थं वेदिकां तु तदन्तरे ॥ ८१ ॥**

वहाँ शंखिनी नाल (कण्ठ देशावच्छिन्न प्रदेश) में मन को स्थापित कर उसका भी भेदन कर देवे । जो सर्वत्र व्याप्त एवं शून्यता को धारण करता है । वहाँ अमृत के समुद्र के समान सौ योजन लम्बा चन्दनोद्यान है उसके मध्य में एक वेदिका है ॥ ८०-८१ ॥

**तन्मध्ये स्फटिकं ध्यायेत् पश्चिमाननमम्बुजम् ।**
**स्त्रवन्तममृतं नित्यं देव्यङ्गे कमलान्तरे ॥ ८२ ॥**

उस वेदी के मध्य में स्फटिक के समान अत्यन्त स्वच्छ पश्चिमाभिमुख कमल का ध्यान करे । जिससे देवी के अङ्ग में तथा अन्य कमलों में अमृत की धारा सर्वदा टपकती रहती है ॥ ८२ ॥

सहस्त्रारपद्मवर्णनम्

**सहस्त्रारपद्मं विसर्गादधस्ता-**
**दधो वक्त्रमारक्तकिञ्जल्कपुञ्जम् ।**
**कुरङ्गेण हीनस्त्रिशृङ्गस्तदन्तः**
**स्फुरद्रश्मिजालः सुधांशुः समास्ते ॥ ८३ ॥**
**तदन्तर्गतं ब्रह्मरन्ध्रं सुसूक्ष्मं**
**यदाधारभूतं सुषुम्णाख्यनाड्याः ।**
**तदेतत् पदं दिव्यमत्यन्तगुह्यं**
**सुरैरप्यगम्यं सुगोप्यं सुयत्नात् ॥ ८४ ॥**

वहाँ विसर्ग से नीचे अधोमुख सहस्त्रार पद्म है, जिसका पराग समूह अत्यन्त रक्त वर्ण का है । यद्यपि उसमें कुरङ्ग नहीं है किन्तु वह तीन शृङ्गों वाला है । उस सहस्त्रार पद्म में रश्मिजाल से उद्भासित चन्द्रमा का निवास है । उस चन्द्रमा के भीतर अत्यन्त सूक्ष्म ब्रह्मरन्ध्र है । जहाँ सुषुम्ना नाड़ी का आधार भूत निवास है । यह स्थान अत्यन्त दिव्य है, गुप्त है और देवताओं के लिये भी अगम्य है । अतः प्रयत्नपूर्वक इसे गुप्त रखे ॥ ८३-८४ ॥

**एतत् कैलाससञ्ज्ञं परमकुलपदं बिन्दुरूपी स्वरूपी**
**यत्रास्ते देवेदवो भवभयतिमिरध्वंसहंसो महेशः ।**
**भूतानामादिदेवो रसविसरसितां सन्ततामन्तरङ्गे**
**सौधीं धारां विमुञ्चन्नभिमत फलदो योगिनां योगगम्यः ॥८५॥**
**स्थानस्यास्य ज्ञानमात्रेण पुंसां**
**संसारेऽस्मिन् सम्भवो नैव भूयः ।**

यह सर्वश्रेष्ठ कौलों का परमपद है । अत्यन्त मनोहर स्वरूप वाला यह विन्दु रूप है । इसको कैलास नाम से भी कहा जाता है जहाँ संसार के भय रूपी तिमिर का नाश करने वाले हंस स्वरूप महेश निवास करते हैं । जो महेश समस्त भूतों के आदि देव हैं । जो अपने अन्तरङ्ग में स्थित रसपूर्ण अमृत की धारा बहाते रहते हैं । जो सब को अभिमत फल प्रदान करते हैं और योगीजनों के लिये अगम्य हैं । अतः इस स्थान को जान लेने मात्र से किसी भी पुरुष का पुनः संसार में आगमन नहीं होता ॥ ८५-८६ ॥

**भूतग्रामं सन्ततन्यासयोगात्**
**कर्तुं हर्तुं स्याच्च शक्तिः समग्रा ॥ ८६ ॥**
**स्थाने परे हंसनिवासभूते-**
**कैलासनाम्नीह विधाय चेतः ।**

**योगी गतव्याधिरधःकृताधि-**
**वाधश्चिरं जीवति मृत्युमुक्तः ॥ ८७ ॥**

**स्थानेऽस्मिन् क्षयवृद्धिभावरहिता नित्योदिताऽधोमुखी**
**बालादित्यनिभप्रभाशशभृतः साऽस्ते कला षोडशी ।**
**बालाग्रस्य विखण्डितस्य शतधा चैकेन भागेन या**
**सूक्ष्मत्वात् सदृशी निरन्तरगलत्पीयूषधाराधरा ॥ ८८ ॥**

यहाँ निरन्तर ध्यान करते रहने से साधक को समस्त भूतग्राम (सृष्टि) के निर्माण और हरण करने की समस्त शक्ति प्राप्त हो जाती है । इस हंस के निवास वाले अत्यन्त उत्कृष्ट कैलास नामक स्थान में चित्त को एकाग्र कर स्थापित करने वाला योगी व्याधिरहित होता है और सम्पूर्ण बाधाओं को नष्ट कर देता है तथा मृत्यु से मुक्त होकर चिरञ्जीवी बन जाता है । इस स्थान पर क्षय एवं वृद्धि भाव से रहित नित्य उदीयमान अधोमुखी **षोडशी कला** का निवास है जो बाल आदित्य के समान लाल वर्ण वाली और चन्द्रमा के समान शीतल सुखद प्रकाश देने वाली है। वह अत्यन्त सूक्ष्म है, एक बाल के अग्रभाग के सौ टुकड़े किये जाने पर उसके एक खण्ड के समान अत्यन्त सूक्ष्म है जिससे निरन्तर अमृत की धारा का प्रवाह प्रवाहित होता रहता है ॥ ८६-८८ ॥

**एतस्याः परतः स्थिता भगवती भूताधिदेवाधिपा**
**निर्वाणाख्यकलाऽर्धचन्द्रकुटिला सा षोडशान्तर्गता ।**
**बालाग्रस्य सहस्रधा विगलितस्यैकेन भागेन या**
**सूक्ष्मत्वात् सदृशी त्रिलोकजननी या द्वादशार्कप्रभा ॥ ८९ ॥**

इसके बाद समस्त भूतों की अधिदेवता अर्धचन्द्र के समान कुटिल **निर्वाण नाम की कला** का निवास है जो उस षोडशी कला के भीतर ही रहने वाली है । वह मनुष्य के बाल के अग्रभाग के हजार टुकड़े किये जाने पर उसके एक भाग के समान अत्यन्त सूक्ष्म है । वही त्रिलोकजननी है और द्वादश सूर्य के समान कान्तिमती है ॥ ८९ ॥

**निर्वाणाख्यकलापदोपरिगता निर्वाणशक्तिः परा**
**कोट्यादित्यसमप्रभाऽतिगहना बालाग्रभागस्य या।**
**कोट्यंशेन समा समस्तजननी नित्योदिता निर्मला**
**नित्यानन्दपदस्थलोरुविगलद्धारा निरालम्बना ॥ ९० ॥**

उस निर्वाण नामक कला के स्थान से ऊपर **परा निर्वाण शक्ति** है जो करोड़ों आदित्य की प्रभा से सर्वथा दुष्प्रेक्ष्य है । वह बाल के अग्रभाग के एक करोड़ टुकड़े किये जाने पर उसके एक भाग के समान अत्यन्त सूक्ष्मतम है, वह सब

लोकों की माता है तथा नित्य उदीयमान एवं निर्मल स्वरूपा है । उस नित्यानन्द पद स्थल से एक बहुत प्रवाह युक्त अमृतधारा निकलती है जिसका कोई आलम्बन नहीं है ॥ ९० ॥

**एतस्याः परतः परात्परतरं निर्वाणशक्तेः पदं**
**शैवं शाश्वतमप्रमेयममलं नित्योदितं निष्क्रियम् ।**
**तद्विष्णोः पदमित्युशन्ति सुधियः केचित् पदं ब्रह्मणः**
**केचिद्धंसपदं निरञ्जनपदं केचिन्निरालम्बनम् ॥ ९१ ॥**

इस निर्वाण शक्ति से ऊपर परात्परतर शाश्वत **शैव पद** है जो अप्रमेय अमल नित्योदित और निष्क्रिय है। उसे कोई विद्वान् **विष्णु पद** कहते हैं और कोई **ब्रह्म पद** कहते हैं तथा कोई उसे निरालम्बन, निरञ्जन, **हंसपद** कहते हैं ॥ ९१ ॥

**आरोप्याऽऽरोप्य शक्तिं कमलजनिलयादात्मना साकमेषु**
**स्थानेष्वाज्ञावसानेष्ववहितहृदयश्चिन्तयित्वा क्रमेण ।**
**नीत्वा नादावसानं खगत कुलमहापद्मसद्मान्तरस्थां**
**ध्यायेच्चैतन्यरूपामभिमतफलसम्प्राप्तये शक्तिमाद्याम् ॥ ९२ ॥**
**साक्षाल्लाक्षारसाभं गगनगतमहापद्मसद्मस्थहंसां**
**पीत्वा दिव्यामृतौघं पुनरपि च विशेन्मध्यदेशं कुलस्य ।**
**चक्रे चक्रे क्रमेणामृतरसविसरैस्तर्पयेत् देवतास्ता**
**हाकिन्याद्याः समस्ताः कमलजपदगां तर्पयेत् कुण्डलीं ताम् ॥ ९३ ॥**

ब्रह्मदेव के लय हो जाने वाले उस स्थान से अपनी आत्मा के साथ आज्ञा चक्र के अन्त तक रहने वाले इन इन स्थानों में शक्ति का क्रमशः आरोप कर सावधान चित्त वाला साधक क्रमशः एक-एक का ध्यान करे । उन शक्तियों को नाद में विलीन कर देवे । फिर अपने कुल महापद्म रूप सद्म में निवास करने वाली चैतन्यरूपा आद्या शक्ति का अभीष्ट फल प्राप्ति के लिये ध्यान करे । जो गगनगत महापद्म रूप सद्म में निवास करने वाली हंसिनी है तथा लाक्षा रस के समान आभा वाली है । वहाँ से दिव्य अमृत समूह का पान कर कुक्षि के मध्यदेश की ओर लौटे और आज्ञा चक्रादि छओ पद्मों में स्थित उन उन देवताओं का तर्पण क्रमशः उस अमृत रस से करे । इस प्रकार हाकिनी, काकिनी, राकिनी, शाकिनी, लाकिनी और डाकिनी को तृप्त कर सम्पूर्ण कमलों में जाने वाली उन कुण्डली का तर्पण करे ॥ ९२-९३ ॥

**कुण्डली कुण्डलाकारानक्रीभूता निवासिनी ।**
**इडा च पिङ्गला चैव सुषुम्नानिलयं व्रजेत् ॥ ९४ ॥**
**शक्तिं भैरवसंयोगादमृतानन्दमानयेत् ।**

**चन्द्रमार्गेण वायुञ्च पिबेत्तञ्च शनैः शनैः ॥ ९५ ॥**
**कुम्भकञ्च यथाशक्त्या सूर्यमार्गेण रेचयेत् ।**
**सूर्यमार्गे पिबेद्वायुं चन्द्रमार्गेण रेचयेत् ॥ ९६ ॥**

यह कुण्डली कुण्डलाकार है, मकर के ऊपर निवास करने वाली है, वह इड़ा, पिङ्गला तथा सुषुम्ना के घर में लौट आती है । तत्त्वज्ञ साधक शक्ति और भैरव के संयोग से अमृतानन्द प्राप्त कर चन्द्रमार्ग से धीरे-धीरे वायु का पान करे। फिर यथाशक्ति कुम्भक कर सूर्य मार्ग (दाहिनी नासा) से निकाल देवे, अथवा सूर्य मार्ग (दाहिनी नासा) से वायु पान करे और पुनः उसे चन्द्रमार्ग (बाई नासा) से निकाल देवे ॥ ९४-९६ ॥

**शून्यञ्च प्रतिविम्बचन्द्रसदृशं सूक्ष्मातिसूक्ष्मं परं**
**सर्वं व्याप्य तमोमयं जगति सद्धामप्रकाशं परम् ।**
**दृश्यादृश्यविनाशभेदसकलं ज्योतिर्मयं सर्वतो**
**ध्यात्वा तच्च पदं तु साधकवरैः दूरीकृतश्चान्तकः ॥ ९७ ॥**

वह शून्य, चन्द्रमा के प्रतिबिम्ब के सदृश है; सूक्ष्म से सूक्ष्म है । समस्त तमोमय जगत् में व्याप्त होकर उत्तम प्रकाश देता है और समस्त दृश्यादृश्य विनाश का भेदन करता है तथा सर्वत्र वह ज्योतिर्मय है । उत्तम साधक इस प्रकार के उस शून्य का ध्यान कर काल को भी दूर भगा देते हैं ॥ ९७ ॥

**एवमभ्यस्यमानस्य अहन्यहनि निश्चितम् ।**
**जरामरणदुःखाद्यैर्मुच्यते भवसागरात् ॥ ९८ ॥**

साधक द्वारा प्रतिदिन इस प्रकार के किये गये अभ्यास से वह जरा मरण दुःखादि से पूर्ण इस संसार सागर से मुक्त हो जाता है ॥ ९८ ॥

### योनिमुद्राबन्धफलकथनम्

**चतुर्विधा तु या सृष्टिर्यस्यां योनौ प्रजायते ।**
**पुनः प्रलीयते यस्यां कालाग्न्यादिशिवान्तकम् ॥ ९९ ॥**
**योनिमुद्रा परा ह्येषा बन्धस्तस्याः प्रकीर्त्तितः ।**
**तस्यास्तु बन्धमात्रेण तन्नास्ति यन्न साधयेत् ॥ १०० ॥**

जिस योनि में अण्डज, पिण्डज आदि चार प्रकार की सृष्टि उत्पन्न होती है और जिसमें कालाग्नि से लेकर शिव पर्यन्त लीन हो जाते हैं वह योनि है । उसका बन्ध योनिमुद्रा कही जाती है । उस योनि मुद्रा के करने मात्र से पृथ्वी में कोई ऐसी वस्तु नहीं है जो उसे प्राप्त न हो ॥ ९९-१०० ॥

**अन्यथा जप्यते यस्तु अन्यथा कुरुते तु यः ।**
**नासौ तत्फलपात्रश्च सत्यं सत्यं न संशयः ॥ १०१ ॥**

जो तत्त्वज्ञ साधक अन्य प्रकार से जप करता है और अन्य विधान से कार्य करता है वह फल का पात्र नहीं बनता । यह सत्य है, यह सत्य है और इसमें संशय नहीं है ॥ १०१ ॥

**छिन्ना बन्धाश्च ये मन्त्राःकीलिताः स्तम्भिताश्च ये।**
**दग्धाः सन्त्रासिता हीना मलिनाश्च तिरस्कृताः ॥ १०२ ॥**
**भेदिता भ्रमसंयुक्ताः सुप्ता सम्मूर्च्छिताश्च ये ।**
**वृद्धा बालास्तथा प्रौढास्तथा यौवनगर्व्विताः ॥ १०३ ॥**
**अरिपक्षे स्थिता ये च निर्व्वीर्याः सत्त्ववर्जिताः ।**
**अंशकेन विहीनाश्च खण्डशः शतधा कृताः ॥ १०४ ॥**
**विधिनानेन संयुक्ताः प्रभवन्त्यचिरेण तु ।**
**सिद्धिमोक्षप्रदाः सर्वे साधकेन नियोजिताः ॥ १०५ ॥**

जो-जो मन्त्र छिन्न, बन्ध, कीलित, स्तम्भित, दग्ध, सन्त्रासित, हीन, मलिन, तिरस्कृत, भेदित, भ्रमसंयुक्त, प्रसुप्त, सम्मूर्च्छित, वृद्ध, बाल, प्रौढ़, यौवनगर्वित, शत्रु पक्ष में स्थित रहने वाले, निर्वीय सत्त्ववर्जित अंश से विहीन और सौ-सौ टुकड़ों में खण्ड किये गये हैं । इस प्रकार सदोष मन्त्र इस योनिबन्ध के द्वारा बहुत शीघ्र ही समर्थ हो जाते हैं तथा साधक के द्वारा नियोजित (अनुष्ठित) किये जाने पर ये सभी सिद्धि और मोक्ष देने वाले हो जाते हैं ॥ १०२-१०५ ॥

**यद्यदुच्चरते मन्त्री वर्णरूपं शुभाशुभम् ।**
**तत्तत् सिध्यत्यसन्देहो योनिमुद्रानिबन्धनात् ॥ १०६ ॥**

इस योनि मुद्रा का इतना बड़ा प्रभाव है कि मन्त्री शुभाशुभ जिस वर्ण का उच्चारण करता है निःसन्देह सिद्ध हो जाता है ॥ १०६ ॥

**दीक्षयित्वा विधानेन अभिषिच्य सहस्रधा ।**
**ततोऽधिकारी भवति तन्त्रेऽस्मिन् साधकोत्तमः ॥ १०७ ॥**

विधानपूर्वक दीक्षा लेकर एक सहस्र बार अभिषिक्त होने पर इस तन्त्र में उत्तम साधक अधिकारी होता है ॥ १०७ ॥

**ब्रह्महत्यासहस्राणि त्रैलोक्यमपि घातयेत् ।**
**नासौ लिप्यति पापेन योनिमुद्रानिबन्धनात् ॥ १०८ ॥**

योनिमुद्रा के निबन्धन से सहस्रों ब्रह्महत्या के पाप, किं बहुना, समस्त

त्रिलोकी की हत्या का पाप उसे स्पर्श नहीं कर सकता ॥ १०८ ॥

**तस्मादभ्यसनं नित्यं कर्त्तव्यं पुण्यकाङ्क्षिभिः ।**
**अयासाज्जायते सिद्धिरभ्यासान्मोक्षमाप्नुयात् ॥ १०९ ॥**

इसलिये पुण्य की इच्छा करने वाले साधकों को सर्वदा इस योनिबन्ध मुद्रा का अभ्यास करना चाहिये । क्योंकि अभ्यास से सिद्धि होती है और अभ्यास से मोक्ष प्राप्ति होती है ॥ १०९ ॥

**सम्वित्तिं लभतेऽभ्यासात् योगोऽभ्यासात् प्रवर्तते ।**
**मन्त्राणां सिद्धिरभ्यासादभ्यासाद्वायुसाधनम् ॥ ११० ॥**

अभ्यास से ज्ञान होता है । अभ्यास से योग होता है । अभ्यास से मन्त्रों की सिद्धि होती है और अभ्यास से वायु साधन होता है ॥ ११० ॥

**कालवञ्चनमभ्यासात्तथा मृत्युञ्जयो भवेत् ।**
**एतद्भेदं विजानाति स याति परमं पदम् ॥ १११ ॥**

साधक अभ्यास से काल की वञ्चना कर सकता है तथा अभ्यास से ही मृत्युञ्जय हो जाता है । जो इस भेद को जान लेता है वह परम पद प्राप्त कर लेता है ॥ १११ ॥

**तदष्टधा तु जीवोऽसौ बहिर्याति दिने दिने ।**
**दिनेशाङ्गुलिमानेन तदर्धञ्चोपवासतः ॥ ११२ ॥**
**त्रिगुणं रतिकाले च द्विगुणं भोजनाद् बहिः ।**
**अत ऊर्ध्वं वहेद्वायुस्त्रिगुणं यदि दैवतम् ॥ ११३ ॥**
**न्यूनं धत्ते ततः प्राणः शरीरं परिमुञ्चति ।**
**शरीरसमतां नीत्वा न्यूनं वा साधकोत्तमः ॥ ११४ ॥**
**कुम्भयित्वा अधोवायुं कुण्डलीमुखवर्त्मनि ।**
**योजयित्वा ततो जीवं कुण्डल्या सहितं सुधीः ॥ ११५ ॥**
**गमागमं कारयित्वा सिद्धो भवति नापरः ।**
**पीयते खाद्यते यत्तु तत्सर्वं कुण्डलीमुखे ॥ ११६ ॥**
**हुत्वा सिद्धिमवाप्नोति न च बन्धेन बाध्यते ।**

यह जीव आठ प्रकार से शरीर पिण्ड के बाहर जाता रहता है । सामान्य प्रकार से बारह अङ्गुल, उपवास से उसका आधा छह अङ्गुल, रतिकाल में उसका तिगुना छत्तीस अङ्गुल और भोजनोपरान्त बारह अङ्गुल बाहर जाता है । यदि इसके बाद त्रिगुण वायु उससे ऊपर जावे अथवा न्यून परिमाण में यातायात करे तो प्राण शरीर को छोड़ देता है । शरीर को सीधा कर अथवा न्यून कर उत्तम साधक

अधोवायु का कुम्भक बनाकर उसे कुण्डली मुख में संयुक्त कर देवे । फिर कुण्डली सहित जीव को साधक एक-में मिलाकर गतागत करे तो वह सिद्ध हो जाता है । इस प्रकार करने से साधक जो खाता है अथवा पीता है वह सब कुण्डली के मुख में हवन करने से सिद्ध हो जाता है और किसी बन्धन से बँधता नहीं ॥ ११२-११७ ॥

### अवधूताचारकथनम्

**भिक्षा कार्या न च स्वार्थं कुण्डल्याः प्रकृतेः पुनः ॥ ११७ ॥**
**रे मातर्देहि मे भिक्षां कुण्डलीं तर्पयाम्यहम् ।**
**अवधूताश्रमे स्थित्वा भैरवानन्दतत्परः ॥ ११८ ॥**
**भैरवोऽहं न चान्योऽस्मि न चान्यो मत्परः क्वचित् ।**
**तन्त्रमन्त्रार्चनं सर्वं मयि जातं न चान्यथा ॥ ११९ ॥**

सिद्ध साधक को स्वार्थ के लिये भिक्षा न कर केवल कुण्डली के लिये ही भिक्षाटन करना चाहिये । वह किसी अवधूत आश्रम में निवास कर भैरवानन्द में तत्पर हो 'रे मातर्.....कुण्डली तर्पयाम्यहम्' पर्यन्त श्लोक वाक्य पढ़कर भिक्षाटन करे। मैं भैरव हूँ; इस जगत् में मुझसे अन्य कोई नहीं है । सारा मन्त्र तन्त्र का अर्चन मुझमें ही पर्यवसित होता है; यह अन्यथा नहीं है ॥ ११७-११९ ॥

**शिवोऽहं भैरवानन्दो मत्तोऽहं कुलनायकः ।**
**रक्तमाल्याम्बरधरो हेतुयुक्तः सदा भवेत् ॥ १२० ॥**

मैं शिव हूँ, भैरवानन्द हूँ, मैं मस्त हूँ और कुल सम्प्रदाय विशेष का आचार्य हूँ—इस प्रकार साधक भावना करे । इस प्रकार वह भैरव होकर लाल वर्ण की माला पहनकर हेतु (कुण्डलीनिस्सृत मद्यपान) युक्त सदा रहे ॥ १२० ॥

**एवं भिक्षां व्रजन् भिक्षुर्भैरवानन्दतत्परः ।**
**येन केनापि वेशेन येन केनाऽप्यलक्षितः ॥ १२१ ॥**

भिक्षा के लिये प्रव्रजन् करने वाला भिक्षु भैरवानन्द में तत्पर रहे । जिस किसी वेश को धारण कर जैसे कैसे भी हो सके तो अलक्षित रहे ॥ १२१ ॥

**यत्र कुत्राश्रमे तिष्ठन् कुलयोगीश्वरः सदा ।**
**उन्मत्तमूकजडवत् विरले लोकमध्यगे ॥ १२२ ॥**

ऐसा कुल योगी सर्वदा कौलों के आश्रम में ही निवास करे । इस लोक में उन्मत्त एवं मूक जड़वत् आचरण करे । अथवा किसी एकान्त स्थान में जाकर निवास करे ॥ १२२ ॥

**क्वचिच्छिष्टः क्वचिद्भ्रष्टः क्वचिद् भूतपिशाचवत्।**
**नानावेशधरो योगी विचरेत्तु महीतले ॥ १२३ ॥**

कहीं शिष्ट का आचरण करे। कहीं भ्रष्ट का आचरण करे और कहीं भूतप्रेत पिशाचवत् आचरण करे। इस प्रकार अनेक प्रकार का वेश धारण कर साधक पृथ्वी तल में विचरण करे ॥ १२३ ॥

**सर्वस्पर्शो यथा वायुर्यथाकाशश्च सर्वगः।**
**सर्वभक्षो यथा वह्निस्तथा योगी सदा शुचिः ॥ १२४ ॥**

जिस प्रकार वायु बिना विचारे जैसे तैसे ऊँच-नीच का स्पर्श करती है और आकाश जिस प्रकार सर्वगामी है तथा जिस प्रकार अग्नि सर्वभक्षी होकर भी सदा पवित्र रहता है उसी प्रकार सब का स्पर्श कर, सर्वगामी होकर एवं सर्वभक्षी होकर भी अवधूत योगी पवित्र रहता है ॥ १२४ ॥

**तथा म्लेच्छगृहान्नादि योगीहस्तगतं शुचि।**
**क्षीयते न च पापेन बध्यते न च जन्मना ॥ १२५ ॥**

जिस प्रकार म्लेच्छादि का अन्न योगी के हाथ में जाने पर शुद्ध हो जाता है, उसी प्रकार कुलमार्गानुसारी व्यक्ति पापादि के स्पर्श से अशुद्ध पापान्न का भक्षण कर भी (शुद्ध भाव के कारण) पाप से स्पृष्ट नहीं होता और जन्म-मरण के चक्कर से नहीं बँधता ॥ १२५ ॥

**यद्वन्मन्त्रबलोपेतः क्रीडन् सर्पैर्न दंश्यते।**
**तथा ज्ञानपरो योगी क्रीडन्निन्द्रियपन्नगैः ॥ १२६ ॥**

जिस प्रकार मदारी मन्त्र के बल से साँप से खेलता हुआ भी उसके द्वारा डँसा नहीं जाता, उसी प्रकार ज्ञानयोगी अपने इन्द्रियरूप साँपों से खेलता हुआ भी उसके बन्धन में नहीं पड़ता ॥ १२६ ॥

**पूजयन्ति महादेवीं कुलाङ्गकृष्टिमात्रतः।**
**गन्धं पुष्पञ्च ताम्बूलं नैवेद्यं यत्र यद्भवेत् ॥ १२७ ॥**
**मनसा तत् समुत्सृज्य बाह्यतः कुलवारिणा।**
**आत्मन्येव समायोज्य देवीरूपकुलेश्वरः ॥ १२८ ॥**

साधक कुल के द्वारा शरीर से आकृष्ट होकर उन महादेवी का गन्ध, पुष्प, ताम्बूल एवं नैवेद्यादि जितने पदार्थ प्राप्त हों, कुल वारि से उसे प्रोक्षित कर महादेवी की पूजा बाह्य रूप से करे। उसी प्रकार उन सभी पूजा द्रव्यों को अपनी आत्मा में एकत्रित कर मानस पूजा भी करे। वह कुलेश्वर अपने में देवी का

स्वरूप धारण कर देवी की पूजा करे ॥ १२७-१२८ ॥

**न पूजा नापि तन्नाम न निष्ठा न व्रतादिकम् ।**
**पूर्णोऽहं भैरवश्चाहं नित्यानन्दोऽहमव्ययः ॥ १२९ ॥**

अथवा साधक जब अपने में 'मैं भैरव हूँ' नित्यानन्द हूँ, मैं अव्यय हूँ, जब इस प्रकार की भावना करे तब पूजा नाम निष्ठा तथा किसी प्रकार के व्रत की उसे आवश्यकता नहीं है ॥ १२९ ॥

**निरञ्जनस्वरूपोऽहं निर्विकारो ह्यहं प्रभुः ।**
**सर्वशास्त्राभियुक्तोऽहं सर्वमन्त्रार्थपास्याः ॥ १३० ॥**
**अस्मत्परतरो देशो न जातो न जनिष्यति ।**
**आनन्दरूपवान् भूत्वा सर्वेषां प्रियकारक ॥ १३१ ॥**

वह सिद्ध साधक सर्वदा अपने में इस प्रकार ध्यान करे कि मैं निरञ्जन स्वरूप हूँ, निर्विकल्प हूँ, स्वयं प्रभु हूँ । मैं स्वयं सभी शास्त्रों का ज्ञाता हूँ; सभी मन्त्रार्थ का कारण हूँ । सब कुछ मैं स्वयं ही हूँ । हमारे अतिरिक्त कोई देश न है; न होगा और न पहले भी था । मैं स्वयं ही सब कुछ हूँ; मैं आनन्द रूपवान् होकर सभी का प्रिय कारक हूँ ॥ १३०-१३१ ॥

**न योगी न भोगी न वात्मा न काङ्क्षी**
**न वीरो न धीरो न वा साधकेन्द्रः ।**
**सदानन्दपूर्णो धरण्यां विवेकी**
**चिराज्जातधूतो द्वितीयो महेशः ॥ १३२ ॥**

मैं योगी नही हूँ; भोगी और आत्मा भी नहीं हूँ । मैं कुछ नहीं चाहता; मैं वीर, धीर अथवा साधकेन्द्र नहीं हूँ । मैं इस पृथ्वी मण्डल में सर्वदा आनन्दपूर्ण हूँ और विवेकी हूँ । बहुत दिन का चिरायु एवं अवधूत योगी हूँ । किं बहुना; मैं स्वयं दूसरा महेश्वर ही हूँ ॥ १३२ ॥

**श्रुतौ कुण्डलेऽसृग् गले मुण्डमाला**
**करे पानपात्रं मुखे हन्त हाला ।**
**परित्यक्तकर्मा लयन्यस्तधर्मा**
**विरक्तोऽवधूतो द्वितीयो महेशः ॥ १३३ ॥**

कानों में रक्त का कुण्डल, गले में मुण्डमाला, हाथ में मद्य पीने का पात्र, मुख में हलाहल (विष) और समस्त (सङ्कल्प विकल्प रूप) कर्म का त्याग करने वाला हूँ । सब में अपने आपको लीन करना ही मेरा धर्म है । विरक्त हूँ; अवधूत हूँ और बहुत क्या; द्वितीय महेश हूँ ॥ १३३ ॥

**वामे रामा रमणकुशला दक्षिणे पानपात्रं**
**मध्ये न्यस्तं मरिचसहितं शूकरस्योष्णमांसम् ।**
**स्कन्धे वीणा ललितसुभगा सद्गुरूणां प्रपञ्चः**
**कौलो धर्म्मः परमगहनो योगिनामप्यगम्यः ॥ १३४ ॥**

**॥ इति श्रीमज्ज्ञानानन्दपरमहंसविरचिते कौलावलीनिर्णये**
**एकविंशोल्लासः समाप्तः ॥ २१ ॥**

कौलिकों की बाएँ ओर कामकला में कुशल रामा (रमणी), दाहिनी ओर पान-पात्र, मध्य में मरिच सहित गर्मागर्म शूकर का मांस तथा स्कन्ध पर अत्यन्त मनोहर स्वर करने वाली वीणा स्थित रहती है । इस प्रकार कौल गुरुओं का प्रपञ्च कोई कैसे जान सकता है । वह तो योगीजनों के लिये भी अत्यन्त असाध्य और अगम्य है ॥ १३४ ॥

विमर्श—इस श्लोक का रहस्यार्थ भूमिका में देखें ।

**महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय के ज्येष्ठ पुत्र पण्डित रामरञ्जन मालवीय कृत श्रीमज्ज्ञानानन्द परमहंस विरचित कौलावलीनिर्णय नामक तन्त्र के एकविंश उल्लास की निरञ्जन हिन्दी व्याख्या पूर्ण हुई ॥ २१ ॥**



**॥ समाप्तोऽयं कौलावलीनिर्णयः ॥**



## ।। सप्तमः पटलः ।।

श्री देव्युवाच

आसां मन्त्रोदयं दिव्यं कथय स्व प्रसादतः।
येन विज्ञानमात्रेण मन्दपुण्योऽपि सिद्ध्यते।।१।।

एतच्छ्रुत्वा तु वैष्णव्यं देवदेवेन शूलिनः।
विहस्य सुचिरं कालं प्राश्यपञ्चामृतं चरुम्।।२।।

सन्दष्टोष्ठ पुटं नाथं प्राह गद्गदया गिरा।

श्री भैरव उवाच

श्रृणुत्वं खेचरी ज्ञानं स्वपिण्डे खगतिप्रदम्।
भुक्तिमुक्तिप्रदातारं सर्वकामविभूतिदम्।।४।।

शान्तौघरूपकं दिव्यं मन्त्रोद्धारं तु कौलिकम्।
द्विधाभेदेन वक्ष्यामि कर्णान्ते खटिकागमे।।५।।

शून्यं शून्यसमायुक्तं वह्निसम्पुटमध्यगम्।
मायानादकलोपेतं ना रुद्रो लभते स्फुटम्।।६।।

कामसम्पुटमध्यस्थं कामारिङ्कामसंस्थितम्।
नादबिन्दुकलोपेतं लभते योगिनी सुतम्।।७।।

सर्वगाद्यं पुनर्भद्रे सर्वगं बिन्दुभूषितम्।
षष्ठस्वरसमारूढं जीवं चन्द्रार्कभूषितम्।।८।।

एतत्पञ्चाक्षरं मन्त्रं स्वपिण्डे भोगमोक्षदम्।
प्रेतनाथस्य कथितं हृदयं सर्वकामदम्।।९।।

अधुना क्षेत्रपालानां सपत्नीकं शृणु प्रिये।
सप्तादशाक्षरं पूर्वं तृतयं तु चतुष्फलम्।।१०।।

चतुर्थं कथितं बीजं रक्षां तदनन्तरम्।
कामराजपराबीजमेतदष्टाक्षरान्तिमम्।।११।।

चणा - - क्षेत्रपालानां सपत्नीकां प्रकीर्तितम्।
सामान्यं हृदयं वीक्ष्य - - - रिक्षनन्तरम्।।१२।।

शक्तिबीजं शिवं शान्तं तृतीयं पारमेश्वरम्।
अनेनार्चयते दिव्यं गुरुपर्वक्रमान्तिमम्।।१३।।

तृतीयं भोगमन्त्राद्यं रावं रेफविवर्जितम्।
पायहा पञ्चमी बीजं एतत्पञ्चाक्षरान्तिमम्।।१४।।

धर्माधर्मक्षयकरं श्रीमन्त्रानक्षमान्वयम्।
अनेनार्चयते दिव्यं सिद्धचक्रं सदोदितम्।।१५।।

सर्वाधिकारफलदं शापानुग्रहसिद्धिदम्।
भोगहस्ते मयाख्यातं दिव्यरूपमकीलितम्।।१६।।

अथान्यं तु चतुष्पीठं चतुष्पीठसमन्वितम्।
सप्ताक्षरं महादीप्तं सुसिद्धं सर्वसिद्धिदम्।।१७।।

ह्रीं हुं क्रीं तृतीयं पूर्वं निष्फलं निष्फलात्मकम्।
सर्वगं पूर्व सम्भिन्नं जीवसृष्टिसमन्वितम्।।१८।।

एषोसौ कौलिकं गुह्यं मन्त्रराजात्मतो लभेत्।
हृदयं सर्वपीठानां योगिनीनां महोदयम्।।१९।।

अधुना शक्ति सङ्घट्टं तृतीयं परमेश्वरम्।
परा च अपरा चैव तृतीया तु परापरा।।२०।।

अपरे संस्थिता ह्येव इत्याद्या सर्वदेहिनः।
आसां मन्त्रोदयं वक्ष्ये स्वपिण्डे भोगमोक्षदा॥२१॥

शिव शक्तिमयं युग्मं पराबीजं सदारुणम्।
एतत् त्रिरक्षरं मन्त्रं परादेव्या प्रकाशितम्॥२२॥

ज्ञानविज्ञानफलदमपरा च मतश्शृणु।
तदेवाद्यं परं युग्मं पराख्यं वरुणोर्ज्जितम्॥२३॥

सर्वगो दीपितं कृत्वा अपरा तृतयोदितम्।
सर्वस्वहृदयान्तस्थं - - - - - - - - - - ॥२४॥

- - - - - - ष्टस्तु मदिरानन्दनन्दितः।
- - - - - - - - - - - भैरवं वपुम्॥२६॥

प्रस्तरे भूतलं - - - - - - - - - - - - - ॥२७॥

- - स्व स्वभाव स्वरूपेण शिवं भु - - - ॥२८॥

- - - न्यसेत्पुष्पं ध्यात्वां प्रेतं जगद् गुरुम्।
- - - - - - - - - - - - - सर्वकारणम्॥२९॥

पूजयित्वा ततः पश्चात् स्वे स्वे मन्त्रेण सुव्रते।
अर्चयेत् क्षेत्रपालेशं ततो धूपं सुकल्पयेत्॥३०॥

ततो वै स्थापयेल्लिंग गन्धधूपाद्यनुक्रमैः।
दधिक्षीराज्यमधुकै र्द्राक्षश्चेक्षुरमासवः॥३१॥

सुरादि सोत्तमैर्द्रव्यैर्दध्यमासादिनुक्रमैः।
पश्चाद्वेषोत्तमं दिव्यं महास्नानं प्रकल्पयेत्॥३२॥

मणिरत्नमये पात्रे सौवर्णे राजतेऽपि वा।
कास्ये चैवात्र सङ्घट्टे तदाभावास्तु बिल्वजे॥३३॥

मध्यवृत्तिपदोद्भूतं गृहीत्वा स्वकुलामृतम्।
कर्पूरागुरुसंयुक्ते मृगजामलयान्वितम्।।३४।।

मूलमन्त्रेति सत्कृत्वा मुनिसङ्ख्या विधानवित्।
अयमेवाथोऽयस्कान्ते पात्रान्ते लिङ्गमुत्तमम्।।३५।।

स्नात्वा चैवोपविष्टे वै लिङ्गावित्सङ्ख्यया शुभम्।
धर्माधर्मक्षये प्रोक्ते विशुद्धे विशुवे परे।।३६।।

चिच्चितान्तरसंल्लीने ध्यात्वा सङ्घट्टभैरवम्।
युक्ति युक्तं पिवेन्मद्यं पिङ्गलं निर्मलं रसम्।।३७।।

तत्क्षणाद् भवती वीरो वलीपलित वर्जितः।
- - - - - - - मपरे नित्यं द्वितीयमिव भैरवः।।३८।।

एवं स्नानविधिङ्कृत्वा कर्णिकान्ते जगद्गुरुम्।
मुनिसङ्ख्यार्चयेद्देवं पराशक्तिसमन्वितम्।।३९।।

अष्टत्रिंशाक्षरं घोरं काली सप्तादशाक्षरा।
पूजामन्त्रेण वो पश्चात् त्र्यक्षरे सर्वकामदे।।४०।।

भूतसङ्ख्यार्चयेद्देवं द्विधाशाक्ति स्त्रिधाशिवम्।
पश्चात्क्रमेऽर्चयेत्सर्वा गुरुसिद्धादिपीठगाः।।४१।।

तृसङ्घट्टं ततः पद्मं द्वादशारं ततोर्चयेत्।
षट्कोणं परमं धाम सर्वशक्त्यालयोद्भवम्।।४२।।

गृह्य पुष्पात्र्जलिं पश्चाज्जातंत्यक्त्वा तु भूतले।
विद्यायुग्मं ततः पूज्यं त्रिवर्णेशं सकृत् सकृत्।।४३।।

ततो वै समयाख्या तु भोगमोक्षार्थकामदा।
पञ्चषड्भिस्तु कोटीनां विद्यां समयमुत्तमाम्।।४४।।

या स्मृता राजराजेशी पञ्चशार्णा पराकला।
मूलमुख्यतरा दीप्ता धर्माधर्मक्षयङ्करी।।४५।।

यत्रोत्पन्नास्तु ते मन्त्रा अघोराद्यादिनुक्रमा।
सप्तादशाक्षराद्यादि मूलमुख्यतरान्तिमा।।४६।।

राजराजेश्वरादिव्या तया विद्याजगाम्बिके।
त्रिरावृत्तं प्रयोगेण नित्यमेवं प्रपूजयेत्।।४७।।

यया पूजित मात्रा वै सकृत्स्मृत्वा वानघे।
अनेन शरीरेण सायोज्यत्वं प्रयच्छति।।४८।।

पश्चात्प्रकल्पये धूपं पञ्चब्रह्मनवात्मकम्।
ततश्चाष्टाङ्गविधिना दण्डपातं प्रदक्षिणम्।।४९।।

कृत्वा दिव्या महाराणि कर्मणा मनसागिरा।
निवेदयेत्परे तत्त्वे पुष्पहस्तं प्रकल्पयेत्।।५०।।

धर्माधर्मं च - - पुण्यपापं शुभाशुभम्।
कामक्रोधमलं लोभं शब्द स्पर्श रसं तथा[क]।।५१।।

ब्रह्माविष्णुश्च रुद्रश्च ईश्वर श्च सदाशिवः।
एतत् सर्वमशेषेण नानावृत्यौघमण्डलम्।।५२।।

पञ्चाभूतात्मकं पिण्डं तत्त्व षट्त्रिंशबृंहितम्।
चतुर्विंशपदोपेतं षड्ध्वनिलयं परम्।।५३।।

षट्चक्रं षोडशाधारं त्रिलक्षं व्योमपञ्चकम्।
आब्रह्मभुवनं सर्वं स्वकुलं कौलिकं पशुम्।।५४।।

निवेदयेत्परे ब्रह्मे भैरवोत्सङ्गबृंहिते।
स्वदेहोत्कर्तनं कृत्वा ज्वलयेत् - - - ।।५५।।

---

क. खण्डितोऽत्र पाठः।

होम एतत्समाख्यातं यन्त्रस्याप्यायनं महत्।
एतद्वै त्रिविधं का - - - - - ट्कायिक वाचिकम्।।५६।।

कृत्वा पूर्वेनयेत्पश्चात् महापशूपहारकम्।
सर्वाङ्गलक्षणोपेतं प्रत्यग्रं तु नरेश्वरम्।।५७।।

स्वसातं सुमहानन्दं बद्धनेत्रपदं शुभान्।
तदनाप्तमशेषं व अजं वा महिषं वृषम्।।५८।।

मीनं चाथ वरारोहे यत्किञ्चिज्जीवरूपिणम्।
सुशुष्कं चैव सुस्नातं सुरोमं श्रृंङ्गिणं शुभम्।।५९।।

सर्वलक्षणसम्पूर्णं अक्षताङ्गमरोगिणम्।
ह्रीं क्षां क्षं तृतीये नेन आकर्णान्तावलोकयेत्।।६०।।

ततो नेत्रपटोद्धाट्य कुलाचारसमन्वितैः।
अर्घपुष्पासवोपेते शिरः पृष्ठे कटिस्थले।।६१।।

प्रेक्षयित्वा प्रधानेन दिव्येन वेघ रूपकैः।
यावन्न चालयेद्देहं तावन्न पशुपातयेत्।।६२।।

ह्रीं धूंक्षः तृतये नैव वीरकर्म समार्चयेत्।
- - - - - - - - - - कामविभूतिदम्।।६३।।

यदादौ चालयेद् वक्त्रं पश्चाद् देहं वरानने।
अशुभं ते तु विज्ञेयं दुःख शोकामयप्रदम्।।६४।।

यदादौ धुनते वक्त्रं पश्चाद्देहं पुनश्शिरम्।
सिद्धिदं तत्र विज्ञेयं सप्तदेहविलम्बितम्।।६५।।

प्रवृष्टिं तु यदा मुञ्चे पुरीषाण्डानि शोभने।
समैर्वित्तागमैविन्ध्या द्विषमं ज्ञानसिद्धिदम्।।६६।।

पुरीषं तु यदा मुञ्चेत् गृहीत्वा वीर वन्दिते।
स्वकुलामृतसंयुक्तं मातृभृङ्गिरजान्वितम्।।६७।।

कुहा कुष्ठसमोपेतं मुनिसंख्याभिमन्त्रितम्।।६८।।

सप्तादशाक्षरा विद्या नस्ये पाने पिवेद् गुदः।
आपादतलमुण्डान्तं सर्वाङ्गेषु समालभेत्।।६९।।

चतुष्षष्ठिविधैर्घोरैः कालकूटादिनुक्रमात्।
नाभिभूयति सो भद्रे शस्त्रास्त्रै तु स बाध्यति।।७०।।

स्तम्भयेत्सर्वसैन्यानि मन्त्रं देवासुरोपमः।
दिक्पूर्वोभिमुखे भूत्वा यदा यासौ धुनतेऽनघे।।७१।।

तदा अक्षागमं विन्द्याद दिव्यस्त्रीप्रियसंगमम्।
स्थानलाभं शरीरस्य वज्रकायवलं भवेत्।।७२।।

आग्नेया तु भवं घोरे वह्नि सञ्जाननं भवेत्।
दुर्भिक्षं राष्ट्र संपातं राजा चैव विनश्यति।।७३।।

याम्यायां मरणं घोरं कष्टारं - - - भा।
अतिवृष्टिरनावृष्टिः भवते वाम सुव्रते।।७४।।

मन्त्रहस्ताद्भवेत् - - - - - भूहानिर्वियोगम्।।७५।।

कटुबन्धुर्जनैस्सार्धं दुष्ट शत्रवभयं भवेत्।
सुभिक्षं वारुणे भागे सर्व सत्त्वसुसिद्धिदम्।।७६।।

- - - गास्साधकेन्द्रस्य सर्वभूताश्चराचराः।
वायव्यां विधुसंपातं विद्वेषोच्चाटमारणम्।।७७।।

वज्रपाताशिरभयं मरणेचार्थनाशनम्।
यत्किञ्चिदशुभं भद्रे तत्सर्वं वायवीदिशम्।।७८।।

**उत्तरे ज्ञान सिद्धिः स्याद्वश्याकर्षणमारणम्।**
**प्रसादं सर्वदेवीनां सिद्धिं चैव मनेप्सितम्।।७९।।**

**अधमां मध्यमां कामां कौबेर्यां धुनते यदा।**
**ईशान्यभिमुखो भूत्वा यदासौ धुनते पशुम्।।८०।।**

।। इति महाकौलागमे पातालपिङ्गलान्तरखण्डविनिर्गते श्री वृद्धस्वच्छन्द-
कौलाभिधाने व्याधिभक्षभैरवे सप्तमः पटलः।।

## ।। एकादशः पटलः ।।

श्री देव्युवाच

सूचिता ते महामुद्रा मोदिता सर्वकामदा।
कथय स्व प्रसादेन देव चन्द्रार्धशेखर।।१ ।।

महामुद्रोपदेशः

श्री भैरव उवाच

अकथ्या सा महामुद्रा योगिनीनां महोदया।
गोपिता सर्वकौलेषु मतयामलतन्त्रकैः।।२ ।।

कुलगर्भैश्च विविधैर्न ज्ञाता केनचित् स्फुटा।
भोगहस्ते मयाख्याता मन्त्रगर्भा पराकला।।३ ।।

अस्मिन्कौलागमे दिव्ये मुद्राद्या पारमेश्वरी।
सस्फुरन्ती महादिव्या योगिनीनां सुसिद्धिदा।।४ ।।

स्थूला[1] विश्वतनुर्देवी सूक्ष्मा चिन्मा(त्र) धर्मिणी।
परा नित्योदितानन्ता ब्रह्मसत्तास्वरूपिणी।।५ ।।

खभूपातालदिग्व्योमव्यापिनी सर्वतोमुखी।
एषा सा परमा मुद्रा कौलिकी भोगमोक्षदा।।६ ।।

भोगहस्तेति विख्याता स्वच्छन्देस्मिन् द्वितीयके।
संस्थिता सम्प्रवक्ष्यामि शृणुत्वं वीरवन्दिते।।७ ।।

जीवसम्पुटमध्योत्था मन्त्रगर्भा[2]पराकला।
सर्पवत् कुटिलाकारा भूरिकालानलोपमा।।८ ।।

---

१. मूला, क.।

२. मन्त्रयन्त्र०, ख.।

भित्वाषडध्वनिलयं च क्रान्तं षोडशादिकम्।
तत्क्षणाज्जायते तीव्रं रोमाञ्चमघनाशनम्॥९॥

ईषत्कुलामृतोपेतं महावामामृतोत्तमम्।
किञ्चित्सुरासवोपेतमेकं वीरमथापि वा॥१०॥

गृहीत्वा व्योमदेशे तु त्रिधामेनान्तरोदितम्।
मन्त्रयुग्मं तु वै कृत्वा चिद्व्योमस्थं परे पदे॥११॥

स्फूर्जद्रिणुरिवाकारं चलत्कल्लोलपाण्डुरम्।
मध्यदृष्टिनिरोधेन व्योमातीतं विराजते॥१२॥

तृप्यन्ति योगिनीं सोमां सिद्धां मात्रांश्चराचराम्।
सहजां पीठजां दिव्यां कुलकौलसमुद्भवाम्॥१३॥

खेचरीं भूचरीं सर्वां गोचराद्यादि दिक्चरीम्।
द्वादशक्रमभेदेन चतुष्षष्टिमनामयाम्॥१४॥

सप्तादशपदोद्भूतां दिव्यदिव्यां चराचराम्।[1]
अदृष्टविग्रहा शान्ता व्यक्ताव्यक्तपदोद्भवा॥१५॥

सानन्तादि शिवान्तान्ते याः स्थिताः दिव्यमातरः।
सर्वास्ता नन्दिता यान्ति सर्वसत्त्वाश्चराचराः॥१६॥

पानमुद्रा प्रभावेण नित्यतृप्ता मदान्विताः।
भवन्ति साधकेन्द्राणां खेचराद्यानि साष्टधा॥१७॥

प्रयच्छन्त्येप्सितान्कामान्नधमान्मध्यमोत्तमान्।
अन्यथा तर्पणं तासां महाकल्पायुतैरपि॥१८॥

दत्वा महासवं पूर्णं समुद्रेणैव जायते।
इति सत्यं परं भद्रे महामुद्रा प्रभावतः॥१९॥

---

१. श्लोक १३-१५ क. द्वितीया स्थाने प्रथमाविभक्ति-ज्ञेया।

तृप्तास्सिद्धिं साधयन्ति साधकैर्मानसेप्सिताम्।
एषा सा शाम्भवी मुद्रा सर्वज्ञत्वफलप्रदा।।२०।।

शिवसद्भावजननी परब्रह्मस्वरूपिणी।
भैरवेण समायुक्ता भैरवी सर्वबृंहिता।।२१।।

जीवसम्पुटमध्यस्था चन्द्रार्काग्निकलान्तगा।
सरहस्या मया ख्याता स्वपिण्डे भोगमोक्षदा।।२२।।

अनया सहिता वीराः कुलकौलसमुपासकाः।
नित्यं कौलक्रमैर्भक्ता पशवस्ते प्रकीर्तिताः।।२३।।

न सिद्ध्यन्ति न मुञ्चन्ति शिरश्छिन्नास्तु ते जनाः।
यस्याङ्गैः पतते पानं महामुद्राविमूर्च्छितम्।।२४।।

धर्माधर्मक्षयं गत्वा छन्नमूल इव द्रुमः।
संविद्धः पतते भूमौ सत्यं नास्त्यत्र संशयः।।२५।।

पशूनां गोपयेद्य[1]त्तन्मुद्रैषा पारमेश्वरी।
गोपनात्सिद्ध्यतेत्याशु अगोप्यानरकं व्रजेत्।।२६।।

।। इति श्री महाकौलागमेवृद्धस्वच्छन्दे एकादशः पटलः।।

---

१. यत्नान्मुद्रैषा, ख.।

[1]ब्रीं काराद्यन्त संरुद्धं ज्वलत्कालानलप्रभम्।
मनुनापं परातन्त्रं स्मृत्वा खे वह्निरूपिणी।।३७।।

पूर्वावर्ते भ्रममध्यस्थं साध्यदेहं तदाकृतिम्।
स्तम्भयेत्तत्क्षणात्सर्वं विषं स्थावरजङ्गमम्।।३८।।

अनेनाभ्यासयोगेन भ्रमन्ताधारमण्डले।
सकृत्स्मृत्वा पराशक्तिं परदेहान्तरोदिताम्।।३९।।

स्तोभं स्तम्भं ज्वरं दाहं हृच्छूलं च विसूचिकाम्।
एकाह्लं द्व्याह्निकं शीतं त्रिभिश्चातुर्थिकादयः।।४०।।

आज्ञया तु परे देहे सङ्क्रामं सम्प्रवर्तते।
इति सत्यं महाभागे भाषितं दिव्यरूपिणा।।४१।।

स्वर्णलाभ विधिः

ह्रीं हं फट् पुटिते मन्त्रे द्रवेत्कनकवर्चसम्।।४२।।

निर्विषीकरणम्

ध्यात्वा तं तु परस्थानात्साध्यदेहे परामृतम्।
वर्षन्ती तत्क्षणाद्भद्रे निर्विषत्वं प्रयच्छति।।४३।।

कामचञ्चुपुटं दिव्यं कृत्वा खे कं रणोत्तमम्।
कालकूट विषस्यापि भारं शतसहस्रकम्।।४४।।

[2]लीलयामृतवद्धीरो भक्षयित्वाजरो भवेत्।

अकाशोत्पतनसाधना

तदेव शुद्धकुन्देन्दु तुषारधवलप्रभम्।।४५।।
स्मृत्वाब्रह्मबिलान्तोत्थं व्योममण्डलसन्निभम्।
- - यात्यमृतं दिव्यं चलत्कल्लोलपाण्डुरम्।।४६।।

---

१. ब्रीं, क.।
२. मृतब्दर्भिक्षयित्वाजरे भवेत्, क.।

तत्र मध्यगतं साध्यं तदाकारामृतप्लुतम्।
ह्रीं सः ह्रूं सः चतुर्णां ते पुटितं मन्त्रराड् जपेत्।।४७।।

लीलया जायते मृत्युः कारणे खेचरीश्वरे।
वलीपलितनिर्मुक्तः कामेश्वर इवापरः।।४८।।

मेधावी तेजवान्वीरो वज्रकायत्वकं भवेत्।
अनेनैव शरीरेण कल्पायुः खेचरो भवेत्।।४९।।

सर्वविद्यावाप्तिविधानम्

तदेव सितकल्लोलां ध्यात्वा सप्तादशीकलाम्।
स्वस्थानोत्थां पराकाशां वर्षन्तीममृतोपमाम्।।५०।।

ह्स्त्रूं काराद्यन्त संरुद्धं मन्त्रनाथं जपेत्सदा।
तेनैवाप्लावितं देहं शिवाद्यावीचिगोचरम्।।५१।।

संस्मरेत्सप्तरात्रेण कविर्भवति तद्गतः।
सर्वशास्त्रार्थवित्तारो गद्यपद्यार्थतत्त्ववित्।।५२।।

वागीश्वरो भवेत्साक्षात्सर्व वाङ्मय कृद्भवेत्।
वाणी चास्खलिता नित्यं भवते तनु मध्यमम्।।५३।।

तस्य पाद राजे धूलिं नन्दयन्ति मनीषिणः।

देहान्तर सङ्क्रमणाविधिः

[१]त्र्यूं काराद्यन्त संरुद्धं चिदाकारपदोदितम्।।५४।।

मन्त्रनाथं जपेद्यस्मात् पिबमानं परामृतम्।
जीवसम्पुटमध्यस्थं लक्षं कृत्वा सदोदितम्।।५५।।

तत्त्वसङ्क्रम योगेन स्वेच्छया वीरवन्दिते।
लीलयां जीवसङ्क्रामं पुनश्चाकर्षयेच्छया।।५६।।

---

१. त्यूं, त्र्रूं, ख.। त्र्यूं, क.।

निग्रहानुग्रहञ्चैव ब्रह्माद्यादपि देवताम्।
कुरुते तत्र गर्भान्ते प्रविष्टस्तु न चान्यथा।।५७।।

त्रिकालज्ञत्वसाधना

ब्रूं कार सम्पुटं मन्त्रं कृत्वा जीवान्तरे जपेत्।
दर्पणाग्रे कुमारीं वा कन्यकां सप्तवत्सराम्।।५८।।

ताप - - चितां भद्रे दीपाग्रे वा वरानने।
- - शतं जप्त्वा आकर्षं कन्यकार्चयेत्।।५९।।

कुलाचारेण विधिवत्पुष्प(धूपा) सवादिकैः।
ततस्सावेष्टयेत्कन्या मन्त्रनाथप्रभावतः।।६०।।

रक्ताम्बरासवोन्मत्ता पृष्ट्वा[1] सा शुभाशुभम्।
दृष्ट्वा दर्शगतं देवं स्वरूपं देवतामयम्।।६१।।

भूतं भव्यं भविष्यञ्च सत्यं [2]तत्कथ्यते ध्रुवम्।
ॐ जूं सः त्रितयेनैव कुर्यात्तस्य विसर्जनम्।।६२।।

एषा ते सस्फुरा प्रोक्ता प्रसेना पारमेश्वरी।

सर्वरूपधारित्वसाधना

क्रूं काराद्यन्त संरुद्धं मन्त्रनाथं यदास्मरेत्।।६३।।

विशुद्ध पदवीलीनं तं तु स्मृत्वावधारयेत्।
क्षणाद्विद्धस्तु पतते वज्राहत इव द्रुमः।।६४।।

धर्माधर्मक्षये जाते निर्जीवश्चैलवद्भवेत्।
हंस जीव पुटो मन्त्रे बद्ध्वा धारामृतावहा।।६५।।

नखान्तं वामहस्तं वा स्पृष्ट्वा संज्ञां लभेत्पुनः।
अनाहतपदे लीनं वामसङ्घट्टसम्पुटम्।।६६।।

---

१. पृच्छित्वा, मा. पा.।
२. तत्कथये, मा. पा.।

संस्मरेन्मन्त्र मण्डलं स्वधाम्निस्थमनाहतम्।
तत्क्षणात्कुरुते दिव्यं स्वेच्छार्थं मनसेप्सितम्।।६७।।

पिण्डं चैव पदं रूपं रूपातीतं चतुर्थकम्।
प्रवेशं तु परे देहे निर्गममपहारकम्।।६८।।

द्रव्याणां कुरुते सर्वां चतुर्भागं गणाम्बिके।
यं यं समीहते रूपं स्थूलं सूक्ष्मं शुभाशुभम्।।६९।।

जलेन जलरूपं स्यात् स्थलेन स्थलरूपधृक्।
वायुर्वायुगुणे प्रोक्तमनले तेजरूपधृक्।।७०।।

पार्थिवे पार्थिवं रूपं खस्वरूपं खमध्यतः।
एवं बहुविधै रूपैस्स्वेच्छया (रूपधृग्भवेत्)।।७१।।

स्वेच्छारूपधारित्व साधना

? कार सम्पुटं मन्त्रं मणिपूरगतं स्मरेत्।
उत्थितं सूर्यचक्रात्तु निर्गतं कूर्ममण्डले।।७२।।

प्रविष्टं बोधयेत्सर्वं षट्कलाचक्रबृंहितम्।
भित्वाब्रह्मबिलाधारं घोरान्ते कर्षयेद्बलात्।।७३।।

प्रक्षिपेन्मणिपूरान्ते क्रमेणानेन सुव्रते।
प्रविष्टो जीवनिलये चालयेत्प्रतिमानघे।।७४।।

प्रहसन्स्फोटनञ्चैव वल्गनं शैलजादिभिः।
स्वेच्छया प्रतिभास्सर्वाः कुरुते नात्र संशयः।।७५।।

प्राणाकर्षण साधना

क्ष्रीं फें सम्पुटितं मन्त्रं जीवसम्पुटमव्ययम्।
प्रवेशं गुरुवक्त्रान्ते स्थितिश्श्रीकन्दमूलकैः।।७६।।

तत्रस्थं छेदनं कुर्यादविसर्गं पुनः पुनः।
एवमाकर्षयेत्प्राणान्सदेवासुरमानुषान्।।७७।।

खेचरीमुद्रासाधना

स विसर्गप्रयोगेण कृपयावेशयेत्पुनः।
आक्रम्य खेचरी[1] यन्त्रे रोधयेच्छशिनो गतिः।।७८।।

ऊर्ध्वचन्द्रप्रवाहेण स्फुरन्नाडीं प्रवेशयेत्।
पश्चाद्वै संस्मरेन्मन्त्रं क्ष्त्रूंकारस्य तु सम्पुटम्।।७९।।

हृत्कम्पनप्रयोगेण तत्पतेद्गगनान्तरे।
एषा च खेचरी मुद्रा अणिमादि फलप्रदा।।८०।।

शालिपुष्टिप्रयोगः

वषट्कार पुटं मन्त्रं शान्तिके संस्मरेत्सदा।
वौषट्कार पुटं दीप्तं पौष्टिके पुष्टिवर्धनम्।।८१।।

सर्वकामप्रदं प्रोक्तं दुरितौघ विनाशनम्।

रहस्यसाधना

ज्र्लूं फूं[2] सम्पुटितं मन्त्रं शृङ्गारपुटमध्यगम्।।८२।।

पातालोर्ध्वगतं यन्त्रं रविसोमाग्निसम्भवम्।
तत्र चित्तं लयीभूतं मनोमन्त्रात्मदैवतम्।।८३।।

पञ्चभूताहुतिं दत्त्वा सर्वद्वाराणि रोधयेत्।
प्रवेशं सूर्यचक्रस्य निर्गतं अमृतावहे।।८४।।

वेधघट्टनिरोधं वै रूपस्य परिवर्तनम्।

सर्वदर्शित्वसाधना

- - - जानु सङ्क्रामं निग्रहानुग्रहांस्तथा।।८५।।
जीव जे - - - पुटे लीनं कुरुते नात्र संशयः।
सानन्तादि शिवान्ताख्यं यावदव्यक्तगोचरम्[3]।।८६।।

---

१. खेचरो यन्त्रं, क.।

२. द्रर्लूं हूं। पार्श्वे-ज्र्लूं, ख.।

३. ०लक्षणम्, ख।

गत्यागमं तु सर्वेषां पश्यते[१] ससुरासुरम्।
रुद्रादिसर्वसत्त्वानां स्थूलसूक्ष्मचराचरम्॥८७॥

भूतं भव्यं भविष्यञ्च ज्ञायते वर्तमानकम्।
तत्रस्थं कुरुते कर्म अधमं मध्यमोत्तमम्॥८८॥

रोगनाशसाधना

फेंका हूं फट्[२] चतुर्बीजैः मन्त्रनाथं ससम्पुटम्।
स्वधामोत्थं परं तेजस्स्मृत्वा श्रीपारमेश्वरम्॥८९॥

जीवसम्पुटमध्यस्थं तत्त्वगर्भो[३]दरे क्षिपेत्।
कुरुते विविधं कर्मअधमं मध्यमोत्तमम्॥९०॥

ज्वरं चतुर्थिकादीनि वेदघट्टनिरोधकम्।
निग्रहानुग्रहञ्चैव भूतापस्मारमर्दनम्॥९१॥

विषग्रहादयस्सर्वे लूतागर्दभनाशनम्।
कुष्ठं[४] भगन्दरं रोगं व्याधिभिश्चैवमादयः॥९२॥

वश्याकर्षणविद्वेषो मारणोच्चाटनंस्तथा।
स्तोभं स्तम्भनमावेशं प्रवेशं निर्गमंस्तथा॥९३॥

जीवाकर्षं तु सङ्क्रामं भूतं भव्यं भविष्यकम्।
उत्क्रान्तिः खेचरत्वं च विलयं त्रिप्रभञ्जनम्॥९४॥

रसं रसायनं खड्ग[४] अङ्गुलिकाञ्जनगोचरम्।
प्रसेनासुष्ठु कथनं प्रतिमादिषु चालनम्॥८५॥

---

१. पच्यते, क.।

२. फेंकार हूं फट्, क.।

३. ०गर्भोधरे० मा. पा.।

४. खड्गाङ्गुलिकाञ्जनरोचनम्, ख.।

एवमाद्यादि कर्माणि उक्तानुक्तानि यानि च।
अन्यशास्त्रान्तरस्थानि दिव्यादिव्यानि यानि च।।९६।।

तानि साधयते नूनं आज्ञया वीरवन्दिते।
स्मरणान्मन्त्र नाथं वै भोक्तुं चैवाथ शाम्भवम्।।९७।।

तिष्ठन्ति दासवत् तत्र अधमं मध्यमोत्तमम्।
लीलया ना(त्र स)न्देहस्सत्यं भैरवभाषितम्।।९८।।

यावन्नाप्यायितं मन्त्रं शाक्तं चैवाथ शाम्भवम्।
तत्त्वगर्भान्तरारूढं स्वस्वभावं सदोदितम्।।९९।।

(वृद्धस्वच्छन्दनाथस्य) शास्त्रोक्तं साधकेश्वरम्।
जप्त्वा चाप्यायते मन्त्रं मन्दपुण्योऽपि लीलया।।१००।।

साधयेत्तानि कर्माणि कर्मणा मनसा गिरा।
भुञ्जते विविधान् भोगान्दिव्यादिव्यात्मनेप्सितान्।।१०१।।

स्वपिण्डे सिद्ध्यते चान्ते इत्याज्ञापारमेश्वरी।।१०२।।

।। इति श्रीमहाकौलागमे वृद्धस्वच्छन्दे चतुर्दशः पटलः।।

## ॥ अष्टादशः पटलः॥

कौलिकीचर्याजिज्ञासा

श्रीदेव्युवाच

भगवन्शाकिनीनाथ अद्य मे सफलं तथा।
अद्य प्राप्तं मया ज्ञानं सद्यः मे सफला गतिः॥१॥

क्रिया तु कीदृशी देव कौलिकी कथय प्रभो॥२॥

श्रीभैरव उवाच

रहस्यं दुर्गमं दिव्यं ज्ञातं ते पृच्छिते प्रियं।
यं ज्ञात्वा मन्दपुण्योऽपि जीवचन्द्रार्क तारकाः॥३॥

यावन्न ज्ञायते दिव्यं कवाटं योगिनी कुलम्।
शारीरं कौलिकाम्नायं अवतारतरङ्गिणी॥४॥

विधानं छिन्नमुण्डाया मन्त्रमेकादशाक्षारम्।
तावन्न सिद्ध्यते दिव्या क्रिया राज्यवती प्रिये॥५॥

श्री देव्युवाच

कीदृशं कौलिकाम्नायं शारीरं योगिनी कुलम्।
क्रिया तु कीदृशी नाथ कथयस्व प्रसादतः॥६॥

अथाम्नायक्रियोपदेशः

एतच्छ्रुत्वा तु देवेन रोमाञ्चित शरीरिणा।
सन्दष्टोष्ठ (पुटं) नाथ स्मृत्वा पञ्चामृतं चरुम्॥७॥

प्रहस्योवाच भगवान् हंसगद्गदया गिरा॥८॥

श्रीभैरव उवाच

शृणु तत्परमं ज्ञानं संज्ञानं तमनाशनम्।
अनाख्यं कौलिकाम्नायं निर्दहन्तोऽपि मानवाः॥९॥

ज्ञात्वा सिद्धिं प्रयच्छन्ति स्वपिण्डे पारमेश्वरीम्।
बन्धयन्ति ह्यविज्ञाता[1] देव्यस्संसार सागरे॥१०॥

तासां स्थानानि वक्ष्यामि देहस्थां शृणु तेऽनद्ये।
सप्तकोट्यस्तु देवीनां[2] खेचरीणां परं प्रिये॥११॥

तथान्याः पञ्चभिः कोट्यो भूचरीणां महाबलाः।
नवभिर्गोचरी कोट्यस्सप्तकोट्यस्तु दिक्चरी॥१२॥

सदाख्यव्योमोपदेशः

सादाख्यं तु महाव्योम गन्धतन्मात्रकं पदम्।
कपालविवरान्तस्थाः दिव्यदिव्याश्चतुर्विधाः॥१३॥

पञ्चाषड्भिश्च कोटीनां शाकिनीनां महौजसाम्।
पञ्चत्रिंशस्तु वा कोट्यश्शुष्काद्यां डाकिनीं पराम्॥१४॥

ईश्वराख्यंव्योम

ईश्वराख्यं महाव्योम रसतन्मात्रकं पदम्।
लीलाद्वारे स्थिता दिव्या लेलिहाना महाबला॥१५॥

विशं कोट्यस्तु देवीनां चामुण्डाद्याश्चकाकिनीः।
लाकिनीनां महारौद्रां दशकोट्यां महाबलाम्॥१६॥

रौद्रंव्योम

महालक्ष्म्यादिभिर्घोरा रूपतन्मात्रबृंहितम्।
रौद्रस्थानं समागृह्य संस्थिता ग्रसनोत्थिता॥१७॥

पञ्चविंशस्तु ताः कोट्यौ विच्याद्या राकिनीन्तिमाः।
रूपिका कालविच्याद्या नवकोट्योऽति भीषणाः॥१८॥

---

१. विज्ञात्वा। क.।
२. दिव्यानां। मा. पा.।

वैष्णवं व्योम

**वैष्णवं तु महाव्योम स्पर्शतन्मात्र रूपिणम्।**
**समाश्रित्य स्थिता देव्यो जगद्रूपैकघस्मराः॥१९।**

**सप्तादशास्तु ताः कोट्यो तासां चोच्छुष्कमातृणाम्।**
**चण्डाद्या - - - - - तथान्यान्ता डामरान्तिमा॥२०॥**

ब्राह्मं व्योम

**पञ्चपञ्चाशभिः कोट्य स्सिद्धिनां योगिनीं पराम्।**
**ब्राह्मव्योमं समाश्रित्य शब्दतन्मात्रबृंहितम्॥२१॥**

**खयन्त्रान्ते स्थितास्सर्वा वातचक्रवहास्सदा।**
**भक्षयन्ति बलाद्वीरान्सदेवासुरमानुषान्॥२२॥**

**षोडशस्तु महाकोट्यस्सिद्धनाथान्सदोदितम्।**
**सपत्नीकान्परान्नाथान् ज्ञानविज्ञानबृंहितान्॥२३॥**

विशुद्धस्थाननिर्देशः

**खगेन्द्र कूर्ममीनाद्यान् श्रीमच्छन्दाद्यनुक्रमान्।**
**विशुद्धस्थानमासाद्य संस्थितास्सर्वदेहिनाम्॥२४॥**

अनाहतादिनिर्देशः

**तथान्यद्द्वादशः कोट्यो अनाहतपदे स्थिता।**
**दशभिर्मणिपूरान्ते स्वाधिष्ठानगतास्तथा॥२५॥**

**चतुर्भिः कूर्म निलये आज्ञातत्त्वे भ्रुवान्तरे।**
**त्रिभिः कोट्यस्स्थितास्तत्र महासमयसम्भवाः॥२६॥**

**त्रयस्त्रिंशस्तु कोटीनां सुराणां रोमकूपगाः।**
**तत्समासस्वरा भद्रे जानुमध्ये प्रतिष्ठिताः॥२७॥**

**द्वासप्ततिसहस्राणां नाडीनां वीरवन्दिते।**
**चिच्चक्रं[1] तद्भवं ज्ञेयं जन्माधारमुखं स्मृतम्॥२८॥**

नन्दाद्या देवताः प्रोक्ता उपपीठास्सदोदिताः।
तीर्थान्यायतनास्सर्वे कालेऽस्मिन् प्रकटीकृतम्।।२९।।

साधिष्ठानं[1] तु यदूर्ध्वं सप्तभिर्भुवना स्स्मृताः।
तदधो सप्त पातालास्संस्थिता देहपञ्जरे।।३०।।

चुतर्दशविधं सर्गं भूतग्रामं चतुर्विधम्।
शिवाद्या वीचिपर्यन्तं यावत्कालाग्नि गोचरम्।।३१।।

षट्चक्रं षोडशाधारं त्रिलक्ष्यं व्योमपञ्चकम्।
एकस्तम्भं नवद्वारं- - - - - - - - - - - - - -।।३२।।

पञ्चविंशात्मको पेतं शारीरं देवतामयम्।
कं कपाल समोपेतं कञ्चकङ्कालभैरवम्।।३३।।

काद्यं कलामयं देहं कवाटस्तेन सोच्यते।
एवं ज्ञात्वा कुल व द्व्योम कृत्वा युक्तस्तु लीलया।।३४।।

मन्द पुण्योऽपि सुभगे कुले सामान्यतां व्रजेत्।

।। इति श्रीमहाकौलागमे वृद्धस्वच्छन्दे अष्टादशः पटलः।।

---

१. ०साधिष्ठाना० ख।

## ।। एकोनविंशः पटलः ।।

छिन्नमुण्डारहस्यप्रश्नः

श्री देव्युवाच

गङ्गा यमुनयोर्मध्ये यां चरन्तीं तपस्विनीम्।
संस्थिता तु तपः घोरं न श्रुता सा वद प्रभो।।१।।

कथं सा छिन्नमुण्डा वै सप्तभिः कुलपवर्त्ततैः।
निःसृतं भक्षते तोयं क्षरन्तं परमं रसम्।।२।।

मध्यदेश प्रयागस्था महाक्षीरार्णवामृतम्।
स्रवते हंसरूपेण अजरश्चामरप्रदम्।।३।।

क्व सा तरङ्गिणी प्रोक्ता किं ते वै कुलपर्वताः।
एतत् प्रश्नस्य वै नाथ निर्णयं कथय प्रभो।।४।।

प्रयाग रहस्यम्

श्री भैरव उवाच

न कदाचिन्मया भद्रे प्रश्नमेतच्छ्रुतं परम्।
अकथ्यं ते प्रवक्ष्यामि शृणुत्वं वामलोचने।।५।।

न मया कस्य चित्ख्यातः प्रयागः मध्यदेशमः।
तत्र सा संस्थिता देवी सोमार्कान्तरवर्तिनी।।६।।

छिन्नमुण्डायाः स्थितिकथनम्

अशिरा हंसिनी नेच्छा छिन्नमुण्डा तदा स्मृता।
गङ्गायमुनमध्यस्था तपोत्कृष्टा तपस्विनी।।७।।

चरते तु तपः घोरं तेजो मुण्डासनेस्थिता।
शुद्धदीपशिखाकारा तरुणादित्यवर्चसा।।८।।

तदा तस्यैष वै संज्ञा छिन्नमुण्डातपस्विनी।
या सा तस्योत्तरा नाडी प्रवाहेन्दुसमप्रभा॥९॥

सुषुम्णा सा तु विख्याता संक्षरदमृतावहा।
या स्थिता दक्षिणे भागे इडा सूर्यायतप्रभा॥१०॥

मन्दाकिनी तु - - - - - - - - - - - - - -।
- - - अभा प्रोक्ता पौर्णमा दक्षिणे स्थिता॥११॥

तयोर्मध्ये तु - - - - नित्योदितं स्मृतम्।
पिङ्गलानाम सा नाडी ख्यातादेवी॥१२॥

यत्तदादि परं धाम चिद्व्योम चित्कलालयम्।
अजस्रोतेति विख्यातमघोरं घोरनाशनम्॥१३॥

काद्यवेश्माष्टकान्तस्थं नवात्माबिन्दुरूपिणम्।
हरस्य मुकुटं नाथं कुलकौलेशभास्करम्॥१४॥

महाव्योम शशाङ्कं वै भैरवं तम नाशनम्[1]॥१५॥

प्रस्थाना प्रवहत्येषा व्योमगङ्गातरङ्गिणी।
प्रस्रवावर्तकल्लोलऊर्मिपातौघवाहिनी॥१६॥

विशुद्धास्यं महासेनं[2] शुद्धजाम्बूनदप्रभम्।
सर्वाधारमयं शम्भुं क्षालयित्वानघेश्वरम्॥१७॥

गतामनाहतं शाक्तं हिमवन्तं महागिरिम्।
गृहीतसरितास्तस्मात्प्रययौ तु हिमाचलम्॥१८॥

सादाख्यं तु नगश्रेष्ठं गृहीतममृतावहा।
सरिदन्यावनिं याता प्रविष्टामन्दिरं गिरिम्॥१९॥

---

१. काद्य इत्यारभ्य तमनाशनमिति - ख मातृकायामेव।

२. ०मेदं०, ख।

ईश्वराख्यं परं तत्त्वं हृत्पद्मावङ्गुलावकम्।
गृहीतं सरितस्तस्मात्प्रययौ निषधं गिरिम्।।२०।।

रौद्रस्थानं परं दिव्यमीश्वराधोर्ध्वमङ्गुलम्।
जग्राह परितस्तस्मात्पारियात्रगिरिं गता।।२१।।

वैष्णवं तु परं धाम रौद्राधोर्ध्वाङ्गुले स्थितम्।
तस्मात्तु सरितश्रेष्ठा गृहीतममृतावहा।।२२।।

गता गिरिवरं दिव्यं महानीलेति विश्रुतम्।
ब्रह्मस्थानवरं दिव्यं वैष्णवात्परतस्स्थितम्।।२३।।

पार्थिवं तां विजानीयाद्गृहीत्वा सरितार्णवम्।
निर्याता ब्रह्मपदवी व्योमगङ्गातरङ्गिणी।।२४।।

गङ्गायमुनसंसर्गे संस्थिता सा महाकुला।
तरङ्गावर्तकल्लोल चलत्तुहिन सङ्कुला।।२५।।

त्रिस्वरूपैकतां याता पराद्गरितभैरवात्।
प्रविलीनान्तरेधाम्नि छिन्नमुण्डामुखान्तरे।।२६।।

त्रिधामान्तरसङ्घट्टे तत्त्वसंहारभैरवे।
सदा पक्षद्वये पूर्णे कामिनीनां रजोवहा।।२७।।

संसारसागरोद्धारसेतुरूपा पराकला।
ज्ञात्वा चोत्तारयस्तस्मादज्ञात्वा बन्धकारिका।।२८।।

संसारोत्तारणी तारा सकृज्ज्ञात्वा तु लीलया।
तद्भावभक्तियुक्तानां वीराणां वीरवन्दिते।।२९।।

सदा तस्यैष्ष वै संज्ञा छिन्नमुण्डा तरङ्गिणी।
भक्षयित्वामृतं दिव्यं त्रिधामपुटबृंहितम्।।३०।।

कुलामृतम्

सुपक्वं क्षरते दिव्यमेकपञ्चामृतान्वितम्।
कुलामृतेति विख्यातं महावज्रोदकं रसम्।।३१।।

कुलामृतमाहात्म्यम्

सर्व सौभाग्यजननं सर्वापदनिवर्हणम्।
सर्वदुःख प्रशमनं सर्वदुःख निषूदनम्।।३२।।

सर्वाधिकारफलदं सर्वघोरनिर्वहणम्।
सर्व पापप्रशमनं ग्रहज्वरविषापहम्।।३३।।

अलक्ष्मिनाशनं पुंसामजश्चामरताप्रदम्।
द्वासप्तति सहस्राणां नाडीनां यन्मुखोत्तमम्।।३४।।

तया नाड्या तु सुभगे जीवाख्या अमृतावहा।
प्रविशेत्खेचरे चक्रे षट्कोणे सर्वबृंहिते।।३५।।

सोमार्काग्नि कलान्तस्थे महाक्षीरामृतार्णवे।
वह्निर्विंशान्तरारूढे जीवोऽमयपुरान्तरे।।३६।।

सुगुप्तैर्मातरैर्गुप्तै र्हल्लेखाद्यैर्महाबलैः।
संस्थिता अमृतं तत्र योगिनीनां महोदयम्।।३७।।

गृहीत्वा प्राप्तकालेन मध्यवृत्ति पदोत्थितम्।
एकादश परावर्त मन्त्रान्नेकादशाक्षरे।।३८।।

- - - स्तु मत्सुतोऽसौ न मानुषम्।
मृत्युजिद्वज्रकायश्च क्रमादजरामरो भवेत्।।३९।।

महाबलो महावीरो कामेश्वर इवापरः।
स भवेन्नात्र संदेहस्सत्यं भैरवभाषितम्।।४०।।

।। इति श्रीमहाकौलागमे वृद्धस्वच्छन्दे एकोनविंशः पटलः।।

## ।। षड्विंशः पटलः।।

श्री देव्युवाच

यत्त्वया सूचितं सर्वं दिव्यं दिव्ये महाबलाः।
चतुर्युगविभागेन परं सिद्धिमतो मताः।।१।।

किं प्रमाणं तु वै तासां कथं सिद्धा युगे युगे।
एतदाचक्ष्व मे नाथ भवभङ्गहरो हरः।।२।।

श्रीसप्तकोपदेशः

श्री भैरव उवाच

सप्तभिश्च महाकोट्यो अजवक्त्रा द्विनिर्गताः।
निराचारा निराकारा निरानन्दसमुद्भवाः।।३।।

पञ्चभिर्भूचरी कोट्यो नवकोट्यस्तु गोचराः।
सप्तभिर्खेचरी कोट्यो एवमेताश्चतुर्विधाः।।४।।

ज्ञात्वा वै सप्तकं दिव्यं नाम्ना श्रीदूतिडामरम्।
कृतौ सिद्धास्तु वै देव्यो स्ववीर्यबलबृंहिताः।।५।।

पञ्चाषड्भिस्तु ताः कोट्यो शाकिनीनां महाबलाः।
पञ्चत्रिंशस्तु कोटीनांस्तथा वै डाकिनी परा।।६।।

पश्चिमाननसम्भूता परान्तः पातिनीम्बिका।
ज्ञात्वा श्रीसप्तकं दिव्यं नाम्ना श्रीदूतिडामरम्।।७।।

कृतौ सिद्धास्तु वै देव्यो स्ववीर्यबलबृंहिताः।
[1]पञ्चषड्भिस्तु ताः कोट्यो शाकिनीनां महाबलाः।।८।।

---

१. पञ्चषड्भिरिति पदं ख. मातृकायामेव पठितम्।

पञ्चत्रिंशस्तुकोटीनां तथा वै डाकिनीं पराम्।
पश्चिमानन सम्भूता बृद्धान्तः पातिनीम्बिका॥९॥

ज्ञात्वा श्रीसप्तकं दिव्यं नाम्ना भैरवडामरम्।
महात्रेता युगे सिद्धा एता देव्यो महाबलाः॥१०॥

- - - - - - - र्लाकिकोटच्यस्स - - न्तराननना॥११॥

ज्ञात्वा वै सप्तकं दिव्यं नाम्ना श्री सिद्धडामरम्।
द्वापरे ताः महादेव्यो परां सिद्धिमतो गताः॥१२॥

पञ्चविंशस्तु ताः कोटच्यो राकिनी रौद्रमाताराम्।
नवभिः रूपिकां कोटच्योः पूर्ववक्त्राद्बभूव ह॥१३॥

सप्तादशस्तु तत्कोटच्यो डाभ्यां चोच्छुष्कमातराम्।
दक्षिणाननसम्भूता एता देव्यश्चतुर्विधाः॥१४॥

भविष्यन्ति कुलस्यान्ते चाण्डालकुलकन्यका।
ज्ञात्वा वै सप्तकं दिव्यं नाम्ना श्रीमातृडामरम्॥१५॥

सिद्धिं प्राप्य[१] प्रयत्नेन स्ववीर्यबलबृंहिताम्।
हिंसयन्ति हि वीराणां अज्ञातसिद्धिलम्पटाम्॥१६॥

ज्ञात्वा सिद्धिं प्रयच्छन्ति स्वपिण्डे पारमेश्वरीम्।
इति सत्यं महाभागे भाषितं दिव्यरूपिणा॥१७॥

तासां वै मूलजा ह्येका मुद्रापरमदुर्लभा।
नाम्ना वै खेचरी दिव्या सिद्धिमुक्तिफलप्रदा॥१८॥

सान्निध्यकरणीनन्ता पानमुद्रेति विश्रुता।
सर्वाधिकारफलदा सर्वकामविभूतिदा॥१९॥

सकृत्सन्दर्शनात्तस्य दिव्यादिव्यो महाबला।
तृप्ताश्चानन्दितान्तस्था[1] साधकानां वरप्रदा॥
ददन्ति विपुलान् कामान्नधमान्मध्यमोत्तमान्॥२०॥

॥ इति श्रीमहाकौलागमे वृद्धस्वच्छन्दे षड्विंशः पटलः॥

१. 'ष्ठा' मा. पा.।

## ॥ सप्तविंशः पटलः ॥

श्री देव्युवाच

यस्तु दिव्य वैरैर्दान्तैश्चतुर्भिस्सप्तकोत्तमैः।
चतुर्युग विभागेन दिव्यदिव्या महाबलाः॥१॥

सिद्धिं प्राप्तास्तु वीराणां सदेवासुरमानुषाम्।
कर्षयन्ति बलाज्जीवं पिशिताहारलम्पटम्॥२॥

स्मरेद्येषु मन्त्रेषु देव्यस्त्वाऽननबृंहिताः।
सृजन्ति संहरन्त्येवं लीलया सचराचरम्॥३॥

शिवाद्यावीचिपर्यन्तं तन्त्रार्थं पारमेश्वरम्।
सप्तकोट्यो महारौद्रो येनेदं दुःखितं जगत्॥४॥

सप्तकमन्त्रोद्धार कथनम्

श्री भैरव उवाच

हन्त ते कथयिष्यामि रहस्यं खेचरीमतम्।
सप्तकाख्यं महामन्त्रं स्वपिण्डे भोगमोक्षदम्॥५॥

वह्निसम्पुटमध्यस्थं द्विजिह्वान्तं सबिन्दुकम्।
मायानादकलोपेतं त्रैलोक्याकृष्टिकारकम्॥६॥

स्वरान्तं द्विस्वरोपितं द्विधाविन्दुकलान्वितम्।
तृतीयं कथितं बीजं कौण्डिली बिन्दुसंस्थितम्॥७॥

कामवेश्म सबिन्दुं च कला बं नाद संयुतम्।
कौण्डलीति पदकं षष्ठं देहं कौण्डालिकाकृतिम्॥८॥

सोमार्कान्तसमोपेतं महाक्रोधासनेस्थितम्।
खेटिकान्ते मया ख्यातं कर्णान्ते च अतश्शृणु॥९॥

अनेन कथितं सर्वमिदं विश्वं चराचरम्॥१०॥

एवं सौसप्तकं दिव्यं मन्त्रेण दूतिडामरम्।
अष्टाविंशस्तु ताः कोट्यो दिव्यादिव्यमहाबलाः॥११॥

खेचरीं भूचरीं चान्यां गोचरीं दिक्चरीं पराम्।
एताः कृतयुगोत्पन्ना दिव्यदिव्या महाबलाः॥१२॥

मन्त्रनाथ प्रसादेन परां सिद्धिमतोगताः।
ईदृशेशं परं मन्त्रं योगिनीनां महोदयम्॥१३॥

स्त्रीणां स्वाभाविकं सिद्धं सर्वकामविभूतिदम्।
पुरुषेणाधिकारोऽत्र अस्मिस्त्रीविदकर्मणि॥१४॥

वातचक्रं समासाद्य मध्वामुद्रां तु खेचरीम्।
पुष्पविक्षेपहस्तास्ता उत्पतन्ति नभस्तले॥१५॥

अदृष्टं सर्वभूतानां यावद्ब्रह्माण्ड सप्तकम्।
पूर्वेशं निर्गमं चैव रूपस्य परिवर्तकम्॥१६॥

कर्षयन्ति बलाज्जीवं सदेवासुरमानुषम्।
ईदृशं सप्तकं प्रोक्तं सृष्टि संहारकारकम्॥१७॥

- - - - - - - - - - - पिपीलया।
अशोध्याचरणं जायेद्रुद्रस्यापि अधोगतिः॥१८॥

नरकं शाश्वतं घोरं सत्यं भैरवभाषितम्।
दूतीनां सिद्धिदं प्रोक्तं नारुद्रोलभते स्फुटम्॥१९॥

दीप्तकालानलप्रख्यं सस्फुरन्तमकीलितम्।
प्रथमं कथितं दिव्यं द्वितीयं च अतश्शृणु॥२०॥

---

१. यात०, क.।

द्विकुब्जं वह्निमध्यस्थं मायानङ्गकलान्वितम्।
[१]सङ्करिष्णी पश्चाद्वह्निक्रोधासने स्थितम्।।२१।।

रावाख्यं बिन्दुसंयुक्तं सप्तमं योगिनीप्रियम्।
खटिका तु मयाख्यातं कर्णान्ते च अतश्शृणु।।२२।।

एषोऽसौ कौलिकं दीप्तं नाम्ना भैरवडामरम्।
अनया विविधा देव्यो याकिन्यो डाकिनीस्तथा।।२३।।

पञ्चाशीति तथा कोटयस्स्ववीर्य बलबृंहिताः।
महात्रेता युगे देव्या परा सिद्धिमतो गताः।।२४।।

प्रविश्य चिन्मये चक्रे सदेवासुरमानुषाः।
पूर्वेशं निर्गमं चैव रूपस्य परिवर्तनम्।।२५।।

कर्षयन्ति बलाज्जीवं जीव सम्पुटमध्यगम्।
निग्रहानुग्रहे शक्ता नैव जनन्ति मोहिताः।।२८।।

तृतीयं सम्प्रवक्ष्यामि सप्तकं पारमेश्वरम्।
वह्निसम्पुटमध्यस्थं हान्तं माया सबिन्दुकम्।।२९।।

रावि आविन्दु सम्भिन्नं कलार्थे बिन्दुभूषितम्।
पानुजं च प्रवक्ष्यामि विच्चे शून्यं सतारकम्।।३०।।

मृत्युवेदासनारूढं कर्णान्ते च अतश्शृणु।
एष सौसप्तकं घोरं नाम्ना श्रीसिद्धिडामरम्।।३१।।

अनेन सिद्धायोगिन्यो द्वापरे त्रिंशकोटयः।
स्ववीर्यबलयोगेन काकिन्यो लाकिनीघटाः।।३२।।

अनाहतपदेलीनं सदेवासुरमानुषाः।
भक्षयन्ति बलाज्जीवं जीवाधारपुटस्थितम्।।३३।।

---

१. 'सङ्कर्षिणी' पदं स्यात् साधु इति मे भतिः।

निग्रहानुग्रहस्वेच्छा विचरन्ति चराचरम्।
प्रभावात् स्मरणात्सिद्धिं मन्त्रनाथं सदोदितम्।।३४।।

तवस्नेहान्मया ख्यातं लभते योगिनीसुतः।
चतुर्थं सम्प्रवक्ष्यामि सप्तके मातृडामरे।।३५।।

सप्ताक्षरीविद्या

हरई मन्त्रजीवारिं जीववक्त्रो सतारकम्।
कं खं बीजद्वयं पश्चाच्छिवसूत्रन्तु चास्त्रराट्।।३६।।

खटिकान्ते समुद्दिष्टं कर्णान्ते च अतश्शृणु।।३७।।

एष सप्ताक्षरं मन्त्रं नाम्ना श्रीमातृडामरम्।
अनेन मन्त्रराजेन राकिन्यो रूपिकास्तथा।।३८।।

आद्या डामरिका देव्यो दिव्यरूपाश्चतुर्विद्याः।
द्विभिः कोटि च तानन्ता कोटिमेकाधिका कला।।३९।।

परासिद्धिमनुप्राप्ता दिव्यदिव्यो महाबलाः।
बिन्दुचक्रान्तरारूढा शापानुग्रहकृत्सदा।।४०।।

नानारूपधरा देव्यस्सदेवासुरमानुषाः।
पूर्वेशं निर्गमाकृष्टिरूपस्य परिवर्तनम्।।४१।।

भक्षयन्तिबलाज्जीवं आत्मने सिद्धिमुत्सुका।
पूजितासिद्धिदास्सर्वा हिंसयन्ति सुपूजिताः।।४२।।

प्रभावान्मन्त्रनाथस्य सत्यं नास्ति विशारदे।
एतद्रहस्यं परमं चतुष्कं सप्तकान्तिमम्।।४३।।

शक्तीनां सिद्धिदं प्रोक्तं सर्वकामविभूतिदम्।
स्त्रीमुखे निःक्षिपेत्प्रज्ञा स्त्रीमुखाद् ग्राहयेत्पुनः।।४४।।

लीलया मन्दपुण्योऽपि योगिनीं सततं व्रजेत्।।

।। इति श्रीमहाकौलागमे वृद्धस्वच्छन्दे सप्तविंशः पटलः।।

याागस्थाननिर्देशः

एवमाप्यायिता मन्त्राश्श्मशाने भूगृहेऽपि वा।
अटव्यां निजरि स्थाने नखाग्रे यत्र कुत्रचित्।।४४।।

नदी तीरैलिङ्गे च एकान्ते सर्वकामदम्।
भवते साधकेन्द्राणां स्वपिण्डे भोगमोक्षदम्।।४५।।

ददाति विपुलान्सिद्धीन्नधमान्मध्यमोत्तमान्।
एवं वै साधितं मन्त्रं कुरुकर्माण्यथेप्सितम्।।४६।।

एकान्ते च विविक्ते च निःसङ्गो ससहायवान्।
साधयेद्विविधान्भोगान्नधमान्यध्यमोत्तमान्।।४७।।

प्रवक्ष्यामि समासेन शृणुत्वं वीरवन्दिते।

।। इति श्री महाकौलागमे वृद्धस्वच्छन्दे षोडशः पटलः।।

अथ मूलाधारादिसप्तपीठेश्वरीणांध्यानम्–( षोढाकल्पे )

## ३६ अथ तत्रमूलाधारपीठस्थशाकिनीध्यानम्–

मूलाधारस्थपद्मेश्रुतिदलसहितेपंचवक्रांत्रिणेत्रांस्वर्णाभामस्थिसंस्थां सृणिमपिकमलंपुस्तकंज्ञानमुद्राम् ॥ बिभ्राणांबाहुदंडैस्सुललितवरदाद्या भिवीतांमनोज्ञांमुद्गान्नासक्तचित्तांमधुमदमुदितांशाकिनींभावयेत्ताम्॥ १ ॥
स्वर्णवर्णः ॥ १ ॥

## ३७ अथ स्वाधिष्ठानपीठस्थकाकिनीध्यानम्–

स्वाधिष्ठानाख्यपद्मेरसदललसितेवेदवक्रांत्रिणेत्रांपीताभांधारयंतींत्रि-शिखगुणकपालाभयान्त्रांतवर्गाम् ॥ मेदोधातुप्रतिष्ठामलिमदमुदितांबंधि-नींपूगशक्त्यावीतांदध्यन्नसक्तामभिमतफलदांकाकिनींभावयेत्ताम् ॥ १ ॥
पीतवर्णः ॥ १ ॥

## ३८ अथ मणिपूरकपीठस्थलाकिनीध्यानम्–

नाभौदिक्पत्रपद्मेत्रिवदनविलसत्त्रीक्षणांकृष्णवर्णांशक्तिंदंभोलिदंडाभ-यमपिचभुजैर्धारयंतींमहोग्राम् ॥ डामर्याद्यैःपरीतांपशुजनभयदांमांसधा-त्वासनस्थांगौडान्नेसक्तचित्तांसकलसुखकरींसंस्मरेल्लाकिनींताम् ॥ १ ॥
कृष्णवर्णः ॥ १ ॥

## ३९ अथ अनाहतपीठस्थराकिनीध्यानम्–

हृत्पद्मेभानुपत्रेद्विवदनविलसद्दंष्ट्रिणींश्यामवर्णांटंकंशूलंकपालंडमरुमपि

भुजैर्धारयंतींत्रिणेत्राम् ॥ रक्तस्थांकालरात्रिप्रभृतिपरिवृतांशुद्धरक्तेप्रवृत्तां श्रीमद्वीरेंद्रवंद्यामभिमतफलदांराकिनींभावयेत्ताम् ॥ १ ॥ श्यामवर्णः ॥ १ ॥

## ४० अथ विशुद्धपीठस्थडाकिनीध्यानम्–

श्रीवाकूपेविशुद्धेस्वरदलकमलेरक्तवर्णांत्रिणेत्रांश्रीखट्वांगंकपालंत्रिशिखमपिमहाचर्मसंधारयंतीम् ॥ वक्रेणैकेनयुक्तांपशुजनभयदांपायसान्नप्रसक्तांत्वक्स्थांवंदेमृतौघैःपरिवृतवपुषंडाकिनींवीरचंडाम् ॥ १ ॥ रक्तवर्णः १

## ४१ अथ आज्ञापीठस्थहाकिनीध्यानम्–

भ्रूमध्येबिंदुपद्मेद्विदलविलसितेशुभ्रवर्णांकराब्जैर्बिभ्राणांज्ञानमुद्रांडमरुकममलंचाक्षमालांकपालम् ॥ षड्वक्रामब्जसंस्थांत्रिनयनललितांहंसगत्यादियुक्तांहारिद्रान्नेप्रसक्तांसकलसुरनुतांहाकिनींभावयेत्ताम् ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

## ४२ अथ जालंधरपीठस्थयाकिनीध्यानम्–

मुंडव्योमस्थपद्मेसकलदलयुतेयाकिनींभैरवींतांयक्षिण्याद्यांसमस्तायुधलसितकरांसर्ववर्णांसमष्टिम् ॥ रादीनांसर्ववक्रांसकलसुखकरींसर्वधातुस्वरूपांसर्वान्नेसक्तचित्तांपरशिवरसिकांभावयेद्याकिनींताम् ॥ १ ॥ चित्रवर्णः ॥ १ ॥

---

## अथ सप्तमातृकादेवतानां ध्यानम्–( नृसिंहप्रासादे )

## ४३ तत्रब्राह्मीध्यानम्–

तत्रब्राह्मीचतुर्वक्राषड्भुजाहंससंस्थिता ॥ पिंगाभाभूषणोपेतामृगचर्मोत्तरीयका ॥ १ ॥ वरंसूत्रंस्रुवंधत्तेदक्षबाहुत्रयेक्रमात् ॥ वामेतुपुस्तकंकुंडींबिभ्रतीचाभयंकरम् ॥ २ ॥ पीतवर्णः ॥ १ ॥

## द्वादशःपटलः

अम्बरीष उवाच[1] -

नमो मुनिवरस्तस्मै कुम्भयोने महाप्रभो ।
कथ्यतां भूतशुद्धिस्स्याच्छ्रोतुं कौतूहलं हि मे ।। 1

अगस्त्य उवाच -

भूतात्मशुद्धिदं प्रोक्तं शोषणादीनि कारयेत् ।
अन्तर्बहिश्च शुद्धिस्स्यात्सप्राणायाम उच्यते ।। 2

पर्वताग्रे नदीतीरे गोष्ठे देवालयेषु[2] च ।
विष्णुवालये प्रत्यङ्मुखे नदीं पश्चिमवाहिनीम् ।। 3

बिल्वाम्रवटमूले वा अश्वत्थे वह्निमेव च ।
निर्मनुष्ये [3]महाटव्यमारामे मन्दिरेऽपि च ।। 4

पाटलं चम्पकं[4] वाथ केतकीमल्लिकादिषु ।
अशोकवकुलं[5] चैव सौगन्धिद्रुममूलके ।। 5

कदली[6]नालिकेरं च पूगाटव्ये पलाशके ।
ज्योतिष्मतीं वा प्लक्षं वा यत्र वा रोचितं[7] मनः ।। 6

शुचौ समानदेशेऽथ गोमयेनोपलेपिते[8] ।
स्नातश्शुक्लाम्बरधरो सपवित्रोर्ध्व पुण्ड्रकः ।। 7

कुशां चेलाजिनो वाथ [9]दारुजान्यासनानि च ।
कम्बलान् व्याघ्रचर्मान्वा आसनानि[10] च कल्पयेत् ।।8

---

1. अम्बरीषः -B G, 2. B पाठः, देवादयेषु - A, 3. C पाठः, महाटव्ये - A B G, 4. B पाठः, पञ्चकं - A, 5. B पाठः, बकुलं - A F, 6. B पाठः, गदली - A, 7. रोपितं - H, 8. C पाठः, लिप्यके - B, लिप्यते - G, 9. कुशं च लाजिनं - C, 10. C पाठः, दारुजाप्या - A B G, 11. चर्मान्वाग्रासनानि - G.

स्वस्तिकं पद्मभद्रं वा वीरं गोमुखमेव वा[1] ।
भूतात्मशुद्धितं प्रोक्तं शोषणादीनि कारयेत् ।। 9

मयूरं कुक्कुटं चापि आसीनस्सुसमाहितः ।
गुरुपादारविन्दाभ्यां प्रणामं दण्डवद्भुवि ।। 10

प्राङ्मुखोदङ्मुखो वापि समाहितमना[2] भवेत् ।
सशरायेति शार्ङ्गाय नाराचाय पदं वदेत् ।। 11

हुं फट् सुदर्शनायेति स्वाहान्तं तदनन्तरम् ।
आत्मानं दक्षिणे सव्ये चक्रशङ्खमनुस्मरेत् ।। 12

[3]ध्यायेन्नारायणं देवं रक्तवर्णं त्रिलोचनम् ।
चक्रमण्डलमध्यस्थं महाकायं महाभुजम् ।। 13

मकुटाग्रे[4] रथाङ्गस्यात्सुरप्रहरणोद्यतम् ।
अभयं दक्षिणे वामे वरदं[5] द्विभुजश्च सः ।। 14

अब्जखड्गं ततो धर्त्तुं[6] चतुर्भुजमिति स्मृतम्[7] ।
पद्मामुशं च मुसलं चक्रं दक्षिणमेव वा[8] ।। 15

शङ्खकौमोदकी पाशं चापस्यादष्टबाहवः ।
प्रदीप्तादित्यकोटीभिः एकोद्योगैरुदीरितम्[9] ।। 16

---

1. B पाठः, च – A, 2. मनो – B G, 3. H पाठः, ध्यायन् – A, 4. मकुटाय – C, 5. E पाठः, वरद – A B, 6. ततोद्धर्तु – E, च तोयत्वं – B, ततो धर्म – H, 7. स्मृतम् – G, 8. च – H, 9. रुदीर्यतां – B G.

ज्वालामालासमावृत्य ज्वालेन ज्वालमुद्रवम् ।
उद्धूतज्वालसप्तार्चिः पूरयन्तं नभस्थले[1] ।। 17

एवं देवं ततो ध्यात्वा गुरुपारम्परं स्मरेत् ।
गुरुमूर्ध्नि पदेन्यस्य जीवात्म[2]परमात्मनोः ।। 18

संहारक्रमशो पश्चात्पार्थिवमम्भसे[3] गतः ।
अप्सुमग्ने लयी[4]भूत्वा अग्निं वायोर्गतं भवेत् ।। 19

वायुर्नभस्थले गत्वा साक्षरेणेह बुद्धिमान् ।
नाभिदेशं ततो स्मृत्वा वायुं मूर्ध्निगतं[5] तथा ।। 20

षट्कोणं बिन्दुसञ्चिन्त्य वायुबीजमनुस्मरेत् ।
वायुबीजस्य[6] किष्किन्धो ऋषिर्बृहतिछन्दसः ।। 21

वायुदेवत्ययं प्रोक्तमस्मद्वामनकाययोः ।
कृतान्तकरणं सर्वत्र पुरुषःशुष्ककल्मषः ।। 22

चक्रसुदर्शनगायत्रीं यथाशक्ति जपेद्बुधः ।
पूरकं दक्षिणे नासापुटे आयाम[7]कुम्भकम् ।। 23

वामेन रेचकं चैव शोषणस्य क्रमेण हि ।
हृदये अग्निबीजं स्यात्त्रिकोणं रक्तवर्णकम् ।। 24

---

1. नगस्थले - B, 2. जीवात्मा - G, 3. G पाठः, महसे - A B, 4. B पाठः, लये - A E, 5. G पाठः, धूम्रनिभं - A B H, 6. बीजं स - B, 7. G पाठः, आयास - A B,

लाञ्छनं स्वस्तिकं त्रिस्यादग्निबीजमनुस्मरेत् ।
अग्निबीजस्य ऋषिःछन्दो गायत्रं[1] काश्यपोच्यते ।। 25

अग्निर्देवत*रं[2] बीजं मनोवाक्कायत्रैविधम् ।
कल्मषस्सकलं दग्धो[3] यथाशक्तिमनुस्मरेत् ।। 26

वामेन पूरकं चैव कुम्भकं रेचकेऽतरे ।
नासिका दक्षिणपुटे चक्रे सौदर्शनं[4] स्मरेत् ।। 27

दहनं कारयेद्देहमन्तर्बाह्ये च शुद्धितम् ।
मूर्ध्नि देशे स्मरेद्बीजममृतं सोममण्डलम् ।। 28

श्वेतवर्णार्धचन्द्रं स्यादत्वतिं(ग्निं?)लाञ्छनमेव च ।
अमृतबीजस्य हंसऋषिः(हंसर्षिः?)परमहंसोऽत्र देवता[5] ।।

मार्गछन्दो वकारस्य[6] मनोवाक्कायकारणम् ।
क्षालितोऽन्तर्बहिस्यातां [7]प्लावनोऽमृतभावयेत् ।। 30

भगवत्पादाम्बुजे वामे अङ्गुष्ठाग्रे विनिःस्मृतः[8] ।
तेनामृतस्य धारेण अन्तर्बाह्यश्शुभं भवेत् ।। 31

दक्षिणे पूरकं चैव इतरे पूर्ववद्भवेत् ।
ब्रह्मादि[9] पूरको ज्ञेयं कुम्भको[10] विष्णुरुच्यते ।। 32

---

1. गायत्रीं – B, 2. देवता – G *पञ्चमाक्षरत्वात् 'देवत' इति प्रयोगः दृश्यते, 3. दण्डा – B, 4. शौदर्शन – C 5. अमृतबीजस्य ऋषिः पद्महंसोऽत्र देवता – in H, 6. पकारस्य – B, 7. प्रावणो – B, 8. B पाठः, विनिसृतः – A, 9. पूर्वादि – G, 10. कुम्भके – H.

रेचकश्शम्भुरित्याहुः सृष्टिस्थितिलयक्रमात् ।
ततो नारायणं देवं शङ्खचक्रगदाधरम् ॥ 33

आकाशाद्वायुः वायोरग्निरग्नेरापस्ततो भुवि ।
पृथिवी रत्नमात्मानमात्मने[1](नः?)परमात्मनः ॥ 34

एवं क्रमेण आवाह्य पश्चाच्चक्रेश्वरं विभुम् ।
आचार्यपादयोः स्मृत्वा परमाचार्यमेव च ॥ 35

नित्यमभ्यासयेद्विद्वान्प्राणायामं च षोडशम् ।
एकोत्तरविवृद्धिः[2]स्यात्प्राणायामं दिने दिने ॥ 36

भूयो वक्ष्यामि राजेन्द्र योगिनां योगमुत्तमम् ।
वेदशास्त्रपुराणानां निर्णीतं च रहस्यकम् ॥ 37

इडा पिङ्गल*सुषुम्ना[3] वामदक्षिणमध्यगाम् ।
नाभिरारभ्य मुख्यान्तमूर्ध्नि[4] त्रिःस्याद्दशत्रयम् ॥ 38

पार्श्वे तिर्यक्चतुर्नाडी[5] दशनाडीह[6] कथ्यते ।
दशनाडीसमारभ्य द्विसप्ततिसहस्रकम् ॥ 39

क्षुद्रनाडीतिसम्बन्धं जीर्णपिप्पलपत्रवत् ।
त्वक्चर्ममांसमेधोऽस्थिशुक्लरक्तेति[7] सप्तधा ॥ 40

---

1. आत्मनो – B G. 2. बुद्धिः – B, 3. C पाठः, *सुषुम्ना च इत्यधिकाक्षरपाठः A, B मातृकयोः दृश्यते । 4. H पाठः, ऊर्ध्वं – A C E F, मूर्धान्तमूर्ध्वं – H, 5. G पाठः, नाडीक – A B, 6. नाडी तु – H, 7. सुक्तेति – B.

एवं संवृतकं देहं षण्णवत्यङ्गुलीयकम्[1] ।
प्राणापानसमानश्च उदानव्यानौ च वायवः ।। 41

नागः कूर्मकृकारश्च[2] देवदत्तो धनञ्जयः* ।
वैराम्भमुख्यकञ्चैव अन्तर्यामिप्रपञ्चनाः ।। 42

एवं वायुचतुर्दश्यां विकारं विविधं भवेत् ।
[3]नाभीमूलोर्ध्वकं पद्मनालं चेति दशाङ्गुलम्[4] ।। 43

अधोमुखं तु हृत्पद्मं प्रणवेनोत्थितं भवेत् ।
व्याहृत्या विकसेत्पद्मं तन्मध्ये कर्णिका भवेत् ।। 44

कर्णिका मध्यतो पीठं नानारत्नमयैश्शुभैः ।
पीठमध्ये स्थितं देवं नारायणमनामयम् ।। 45

श्रीवत्सकौस्तुभोरस्कं पुण्डरीकायतेक्षणम् ।
शङ्खचक्रगदापद्मं मुसलं खड्गमेव च ।। 46

धनुश्च वनमाला च अष्टबाहुं त्रिलोचनम् ।
सवाहनं स शक्तिं च सपरीवारसंवृतः ।। 47

सब्रह्मा सशिवस्सेन्द्रस्सोऽक्षरःपरमस्वराट् ।
शुद्धं सूक्ष्मं निराकारं निर्विकारं निरञ्जनम् ।। 48

---

1. B पाठः, स्वयं - A C H, त्यङ्गुलस्वयं - G, 2. H पाठः, नागः कूर्मश्च कृकारः - A, * V. No. 42 <u>पूर्वार्धानन्तरं विद्यमानो विषयः</u> - ततो नारायणं देवं शङ्खचक्रगदाधरं- H, 3. नाभि-H, 4. मूलोर्ध्वगं पद्म नालं च त्रिदशाङ्गुलं- G.

अप्रमेयमजं देवं तं विद्यात्पुरुषोत्तमम् ।
तस्य रूपं सदा ध्येयं योगिभिर्मुनिभिस्तदा ॥ 49

सुषुम्ना नाडिका यस्य पञ्चवर्णेति पञ्चधा ।
चतुर्दिक्षुचतुर्नाडी मध्यनाडी समावृतः[1](ता?) ॥ 50

वीणा नाडी च[2] संरब्धा[3]ब्रह्मरन्ध्रवासनकम् ।
दक्षिणं श्रवणं नेत्रं पाश्चिमं सन्निधान्तकम्[4] ॥ 51

वामनेत्रध्रुवं[5](भ्रुवं?)चैव पूर्णमस्तकमेव च ।
इडा च वामनासान्तं पिङ्गला दक्षिणे पुटम् ॥ 52

[6]अधोत्तरा च नाडीनां शृफ्लाबद्धसंयुताम्[7] ।
अपानाद्वायुमाकृष्य हृदयेति [8]पुटस्थितम् ॥ 53

[9]सुषुम्नमध्यनाडी तु [10]वेणुसुषिरको भवेत् ।
मूलाधारेऽग्निमुज्वाल्य ब्रह्मरन्ध्रावसानकम् ॥ 54

शतपत्रमथो[11] मुख्यं तन्मध्येऽमृतमण्डलम् ।
मूलाग्निं मण्डलान्तस्थं भावयेच्छंस्कृतो[12]ऽमृतम् ॥ 55

हृत्पुण्डरीकचक्रेशं तस्याधारेण सेचयेत् ।
सदाभ्यास[13]परो नित्यं सर्वबन्धात्प्रमुच्यते ॥ 56

---

1. समापितः - H, 2. वा - H, 3. संरब्ध्वा - H, 4. H पाठः, सन्निपातकं - A, 5. G पाठः, श्रवं - H, 6. अधरो - H, 7. बन्धसंयुतः - H, 8. पुटं - H, 9. सुषुम्ना - H, 10. वेरः - H, 11. तथो - B, 12. B पाठः, स्मृतो - A C F G H, 13. ऽमृतः - H, 14. न्यास - B.

सुषुम्ना नाडिका यस्य षडाधारेति पत्रकम् ।
इडापिङ्गलनाडीभ्यां व्यत्यासेति परस्परम् ।। 57

नाडीत्रयेति सम्बन्धमाधारं पत्रकं भवेत् ।
सोमसूर्याग्निना बुध्वा वामदक्षिणपृष्ठतः ।। 58

अतिभोज्यमती[1]पानमतिनिद्रां च वर्जयेत् ।
अतिस्नानमतीभोगमति भाषां[2] विवर्जयेत् ।। 59

इत्येवमभ्यसेद्विद्वान् योगानां विधिमुत्तमम्[3] ।। 60

इति श्रीपाञ्चरात्रे विहगेन्द्रसंहितायां
तन्त्ररहस्ये अगस्त्यप्रोक्ते श्रीसुदर्शनकल्पे
प्राणायामविधानो[4] नाम
द्वादशःपटलः ।



**1. मति - C G, 2. C पाठः, भाषं - A B, 3. G पाठः, अविमुत्तमं - A विमुत्तमं - B, विमुक्तिदं - C, 4. विधानौ - B, विधानं - C H.**

सायमष्टाक्षरं नित्यं मूलं वा सर्वदा जपेत् ।
उत्थायानु गुरुं[1] स्नात्वा ध्यात्वा देवं प्रपूजयेत् ॥ १०२ ॥
निर्गच्छेत् सव्यपादेन प्रविशेच्चालयं पुनः ।
गुरोरनुज्ञया भैक्षं चरेत् पात्रेण शं वदेत्[2] ॥ १०३ ॥
गुरवे दर्शयित्वा तु विन्यसेत् तदनुज्ञया ।
आचम्य मूलमन्त्रेण हुत्वाग्नौ समिधः शुचिः ॥ १०४ ॥
आसने सुखमासीनः पादौ विन्यस्य भूतले ।
पात्रं च वामहस्तेन स्पृशन् प्राणाहुतीश्चरेत् ॥ १०५ ॥
यद्युं[3]च्चिष्ठदनाचान्तो भुक्तवानासनाद् द्विजः ।
स्नानं सद्यस्तु कर्तव्यं तस्मात् तत्रैव चाचमेत् ॥ १०६ ॥
सन्ध्यामुपास्य भूयोऽपि हुत्वा च समिधस्तथा ।
अर्चयित्वा हरिं भिक्षां चरेत् पूर्ववदेव च ॥ १०७ ॥
एवं प्रातश्च सायं च गुरोर्वचनमास्थितः ।
गुरोरनुज्ञया पश्चाद् गृहस्थाश्रममाश्रितः ॥ १०८ ॥
स्नात्वा तमर्चयेन्नित्यं ततः कर्माणि चाचरेत् ॥ १०८½ ॥

इति विष्णुसंहितायामेकोनत्रिंशः[4] पटलः ॥

---

## अथ त्रिंशः पटलः ।

अथ वक्ष्यामि संक्षेपाद् योगं भागवतं परम् ।
यदन्यैरश्रुतं पूर्वं हितानां परमं हितम् ॥ १ ॥
युक्ताहारविहारस्तु युक्तचेष्टः समाहितः ।
योगं भागवतं नित्यमभ्यसेन्नियतात्मवान् ॥ २ ॥

---

१. 'रु' क. पाठः. २. 'दत् ॥' ख. ग. घ. ङ. पाठः. ३. 'उ' ख. ग. पाठः. ४. 'यां समयाचारलक्षणपटल एकोनत्रिंशः' च. पाठः.

पञ्चकालविभागज्ञो मितभाषी मिताशनः ।
कामक्रोधादिजिद् भक्तः समलोष्टाश्मकाञ्चनः ॥ ३ ॥
समयाचारसंयुक्तो जपध्यानपरायणः ।
एकान्ते विजने स्थाने निवाते शब्दवर्जिते ॥ ४ ॥
बद्ध्वा योगासनं मौनी योगं युञ्जीत योगवित् ।
पूजयित्वा हरिं पूजां तत्रैव प्रतिपादयेत् ॥ ५ ॥
किङ्करत्वेन चात्मानं कृताञ्जलिरधोमुखः ।
न याचेत फलं किञ्चित् प्रसन्नो दास्यति स्वयम् ॥
जानात्येव हि कालं स भक्तिपूजागुणागुणान् ।
प्रसन्नस्त्वनुगृह्णीयात् त्वरया न कदाचन ॥ ७ ॥
नत्वेव नानुगृह्णीयाज्जन्मान्तरशतेष्वपि ।
कर्मणां पच्यमानानामपरेषां परिक्षये ॥ ८ ॥
प्रकाशयति भक्तानां हरिः कुर्वन्ननुग्रहम् ।
ततस्तु संपदेवास्य पुरस्तादुपलक्ष्यते ॥ ९ ॥
क्षीयन्तेऽस्यारयो नित्यं वर्धन्ते संपदः स्वयम् ।[1]
[2]फलं त्वयत्नाद् भूयः स्यान्नश्यन्ति व्याधयः स्वयम् ॥
न कश्चिच्चास्य संक्लेशो वर्धन्ते पशवः प्रजाः ।
दीर्घं चास्य भवेदायुर्जायन्ते सुभगाः प्रजाः ॥ ११ ॥
प्रशंसन्ति जनाश्चैनं चोरयेयुर्न दस्यवः ।
अनुपद्रवमैश्वर्यं चिरं तिष्ठत्ययन्त्रितम् ॥ १२ ॥
धर्माद्यभिमुखी धीः स्यादधर्मादिपराङ्मुखी ।
सुखेनैवापरान्तश्च पुण्यकाले भविष्यति ॥ १३ ॥

---

१. 'चिन्त्यमा', २. 'फलन्ति यत्ना भूयोऽस्य नश्य' क. ख. ग. च., 'फलन्ति यत्ना भूयस्यो नश्य' ङ. पाठः.

जन्मोत्कृष्टकुले भूयो भक्तिश्च पुनरच्युते ।
उत्कृष्टतम एव स्यात् तथा जन्मनि जन्मनि ॥ १४ ॥
अक्लिष्टमष्टधैश्वर्यं तत्प्रसादाद् भविष्यति ।
विहरेदिच्छया दीर्घं निर्वाणं वा तथाप्नुयात् ॥ १५ ॥
भक्तेष्वस्य प्रसादेन भवितव्यं तु सर्वथा ।
भ्रष्टोऽपि विविधान् कामानाप्नुयान्न विमुच्यते ॥ १६ ॥
किन्तु कर्मानुबन्धेन संसारे क्लेशसम्भवः ।
तस्मात् तद्भक्तिरेवास्य संपदां कारणं भवेत् ॥ १७ ॥
तज्ज्ञानेन नृणां भक्तिर्वर्धनीया प्रयत्नतः ।
वर्धिता तु विशेषेण सैनं नयति सत्पथम् ॥ १८ ॥
तस्मात् कार्यो विवेकोऽत्र गुणदोषा यथा स्थिताः ।
चिन्तयेदखिलान् दोषानेकान्ते शुद्धमानसः ॥ १९ ॥
कामकोपादिभिर्मुक्तं[1] मनः शुद्धं भविष्यति ।
अभ्यासेन भवेच्छुद्धिर्मनसो योगवर्त्मनि ॥ २० ॥
शुद्धे मनसि तद्भक्तिर्जायते तस्य निश्चला ।
तस्यां समुपजातायां तत्त्वे चेतोऽवतिष्ठते ॥ २१ ॥
रागद्वेषपरीतस्य विफलं तत्त्वदर्शनम् ।
तस्मात् तौ पूर्वमुत्सार्यौ तत्त्वं[2] सम्यग् दिदृक्षुणा ॥ २२ ॥
पुण्यदेशेषु दृष्टेषु भयेषु मरणेषु च ।
तथा रोगावमानेषु वैराग्यमुपजायते ॥ २३ ॥
मरणादिषु दृष्टेषु स्वयमेव समाहितः ।
बुद्ध्या विवेकमातिष्ठेन्नित्यं वैराग्यकारणम् ॥ २४ ॥

---

१. 'क्रोधादि' ङ. च. पाठः. २. सत्त्वं' च. पाठः.

विवेकाज्जायते भक्तिर्वैराग्यं चास्य सर्वदा ।
ततस्तत्त्वगता बुद्धिर्भविष्यत्यनपायिनी ॥ २५ ॥
न भोगेषु प्रसक्तः स्यान्न कुर्याद् दुर्लभे मतिम् ।
अल्पेन परितुष्टः स्यान्नित्यं भागवतो बुधः ॥ २६ ॥
विपाकं कर्मणामेव पश्येत् पश्यन् प्रियाप्रिये ।
इदं युक्तमिदं नेति नानुशोचेत कदाचन ॥ २७ ॥
प्रभुत्वं नात्मनः किञ्चिदिति पश्येद् विवेकवान् ।
घोषयेन्नैव कृत्यानि न कुर्यात् संभ्रमं क्वचित् ॥ २८ ॥
न चाकाङ्क्षेद् यशः किञ्चिद् देवदेवस्य पूजनात् ।
यथा मनः प्रियेष्वेवं सक्तं देवे च भावयेत् ॥ २९ ॥
नित्यं भक्तौ तु जातायां जायते तत्त्वदर्शनम् ।
तत्त्वविद् यत्र तत्रस्थो मुक्तसङ्गः परिव्रजेत् ॥ ३० ॥
एक एव पुनस्तीर्थं क्षेत्रं चानुव्रजेत् सदा ।
भक्त्या देवमनुध्यायेत् तन्निष्ठस्तत्परायणः ॥ ३१ ॥
अन्तकाले च तं स्मृत्वा तत्सायुज्यमवाप्नुयात् ।
विरक्तोऽखिलतत्त्वानि विलाप्य परमात्मनि ॥ ३२ ॥
कृत्वा निर्विषयं चित्तमुदासीनो विमुच्यते ।
ऐश्वर्येऽपि स्थितो योगी न देवं जातु विस्मरेत् ॥ ३३ ॥
यतः कालक्रमेण स्यादुपघातोऽन्यथा ध्रुवम् ।
सायुज्यं प्रतिपन्नास्तु ये भक्ताः शुद्धचेतसः ॥ ३४ ॥
ते विष्णोः किङ्करा नित्यं भवन्ति निरुपद्रवाः ।
तेषां भक्त्यपराधेन संसारः संभवेत् पुनः ॥ ३५ ॥

---

१. 'पा' क., पाठः.

अन्यथा स्थितिरेव स्याद् वैराग्यान्मुक्तिरेव वा ।
निवृत्तास्तु विशिष्यन्ते सर्वेभ्यस्तत्त्वदर्शिनः ॥ ३६ ॥
नैव तेषां भवो भूयः प्रमादो वेह कश्चन ।
मुक्तिरेव तु विज्ञेया गतीनामुत्तमा गतिः ॥ ३७ ॥
अन्यास्तु गतयः सर्वाः सप्रमादाः स्युरध्रुवाः ।
तथापि मतिवैचित्र्यादुभयं संमतं नृणाम् ॥ ३८ ॥
ऐश्वर्यमपवर्गो वा कस्यांचित् किञ्चिदेव तु ।
तद्गता भक्तिरेवै[1]षामुभयस्यापि साधे[2]नी ॥ ३९ ॥
समाधे[3]र्वर्धमानस्य विभागाद् भेदकारिणः ।
सत्त्वस्थे यत्नतश्चित्ते योगाङ्गानि निषेवते ॥ ४० ॥
तेषु स्थित्वा स्मरेद् विष्णुमेकाग्रेण तु चेतसा ।
तमः क्षरति तेनास्य रजश्च वशिनः क्रमात् ॥ ४१ ॥
ततो जन्मभिरुत्कृष्टै[4]ः सिद्धिमेवाधिगच्छति ।
यदा तु सत्त्वमातिष्ठेदस्पृष्टो रजसा क्वचित् ॥ ४२ ॥
ततोऽस्य मुक्तिरेव स्यात् सायुज्यं वा महात्मनः ।
तस्माद् भक्तिं सदान्विच्छेद् यास्य सर्वस्य कारणम् ॥
भक्त्यावच्यवमानायां भवेच्छ्रेयोऽस्य नान्यथा ।
अन्तरायास्तु ये नित्यं योगाभ्यासस्य दूषकाः ॥ ४४ ॥
तेषु प्रसज्यमानेषु तत्त्वदर्शनमाश्रयेत् ।
नातिवेलं सदाभ्यस्येन्न शरीरं च पीडयेत् ॥ ४५ ॥
विषयेभ्योऽपि यत्नेन निवर्तेत शनैः शनैः ।
अपूर्वदर्शने चैव लोकवादाश्रये तथा ॥ ४६ ॥

---

१. 'व स्यादुभ' ख. ग. पाठः. २. 'धि' च. पाठः. ३. 'धौर्वतमा' ख. ग. पाठः. ४. 'ष्टः' ङ. पाठः.

मोघचिन्ताप्रसङ्गं च योगमिच्छेन्नरो बुधः ।
निवृत्तेष्वेषु सर्वेषु भक्तिः पुंसो विवर्धते ॥ ४७ ॥
विषया दुस्त्यजाः सेव्या धर्मशास्त्राविरोधिनः ।
बह्वपायत्वयोगेन यत्नाद् वेच्छां निवर्तयेत् ॥ ४८ ॥
येभ्यो निवर्तमानस्य मनः शुद्धं भवेत् सदा ।
निवृत्तेरभ्युपायश्च शुद्धिरेव परात्मनः ॥ ४९ ॥
शुद्धावाद्रियमाणायां बीभत्सुर्विषयेष्वयम् ।
जायते नाशुचिष्वेव संसर्गोऽस्य भविष्यति ॥ ५० ॥
अशुचीनामसंसर्गाच्चित्तमस्य प्रसीदति ।
प्रसादे निःस्पृहस्यास्य भक्तिर्मुक्तिस्ततो ध्रुवा ॥ ५१ ॥
शब्दादिविषयाञ् जित्वा रुद्ध्वा द्वाराणि सर्वशः ।
प्रविलाप्येन्द्रियाण्यन्तश्चिन्तयेत् परमं पदम् ॥ ५२ ॥
संयम्य मारुतान् पञ्च योगाभ्यासेन योगवित् ।
स्थिरीकृतमना नित्यं ध्यायेत् तत् परमं पदम् ॥ ५३ ॥
वर्णांश्च पञ्चवायूनामन्तस्थानां विचिन्तयेत् ।
मध्ये मध्ये तु पूर्वेषां क्रमाद् ध्येयाः परे परे ॥ ५४ ॥
काशवर्णो भवेत् प्राणो रक्तोऽपानोऽस्य मध्यगः ।
विद्युत्स्फुरितभा व्यान उदानः कुन्दसन्निभः ॥ ५५ ॥
समानस्तु ततो ध्येयः शुद्धस्फटिकसन्निभः ।
एवं ध्यात्वा निरुध्यान्तः क्रमशः पञ्च मारुतान् ॥ ५६ ॥
षडङ्गानि च विज्ञाय प्रयुञ्जीत यथाविधि ।
प्राणायामोऽत्र पूर्वं तु प्रत्याहारोऽथ धारणा ॥ ५७ ॥

ततस्तर्कः समाधिश्च ध्यानं चाङ्गानि षट् क्रमात् ।
ये प्रोक्ता योगिभिः पूर्वं पूररेचककुम्भकाः ॥ ५८ ॥
प्राणायामास्तु विज्ञेया मात्राभिस्ते पृथक् क्रमात् ।
जानुं प्रदक्षिणीकृत्य न द्रुतं न विलम्बितम् ॥ ५९ ॥
क्रियते योऽङ्गुलिस्फोटः सा मात्रेह प्रकीर्तिता ।
यदा द्वादशमात्राभिः पूरकः क्रियते तदा ॥ ६० ॥
रेचको द्विगुणाभिः[1] स्यात् त्रिगुणाभिश्च कुम्भकः ।
प्राणानां यस्त्विहायामः क्रमादेवं प्रकीर्तितः ॥ ६१ ॥
सर्वशास्त्रेषु शास्त्रज्ञैः प्राणायामः स उच्यते ।
धारणा[2] तु भवेद् या सा प्राणायामैस्त्रिभिः स्मृता ॥ ६२ ॥
श्यामा पीतारुणा शुक्ला क्रमाज्ज्ञेया च धारणा ।
नाभिमध्यगतेनादौ बीजेन पुरुषात्मना ॥ ६३ ॥
वायव्या धारणा कार्या सा श्यामा पूरकात्मिका[3] ।
ततो विश्वात्मबीजेन रक्तेन हृदि या कृता[4] ॥ ६४ ॥
आग्नेयी सा समुद्दिष्टा द्वितीया रेचका[5] मता ।
कण्ठे निवृत्तिबीजेन पीतेन क्रियते तु या ॥ ६५ ॥
माहेन्द्री सा समुद्दिष्टा धारणा कुम्भकात्मिका ।
मूर्ध्नि सर्वात्मबीजेन शुक्लेनैतैस्त्रिभिस्त्रिभिः ॥ ६६ ॥
क्रियते धारणा यान्त्या[6] वारुणी सा प्रकीर्तिता ।
स्थितेषु तेषु बीजेषु चैतन्यं धार्यते यदा ॥ ६७ ॥
तद्गुणान्वितमित्येवं[7] जगत् सर्वं तदा स्मरेत् ।
नाभ्यादिषु यथोद्दिष्टं बीजं भूतगुणात्मकम् ॥ ६८ ॥

१. 'भिस्तु त्रि' च. पाठः. २. 'प्रधारणा भ', ३. 'णा', ४. 'त', ५. 'की स्मृता', ६. 'सा', ७. 'वं' ख. ग. पाठः.

क्रियाभिर्धार्यते याभिस्तत्क्रिया धारणा मता ।
अन्वयव्यतिरेकाभ्यां यस्माद् यदुपलभ्यते ॥ ६९ ॥
धारणादिषु कालेषु स तर्कः सम्प्रकीर्तितः ।
आवर्पर्यासरूपेण यथाकर्म गुणात्मकम् ॥ ७० ॥
समाधिश्चेह विज्ञेयो धारणाभिस्त्रिभिस्त्रिभिः ।
ध्यातृध्येयस्वरूपं यत् तत्र रुन्ध्यात् प्रदर्शनम् ॥ ७१ ॥
समाधि[1]त्रिगुणं यावदेवं ध्यानस्य लक्षणम् ।
एवं सर्वात्मना यस्य[2] ज्ञेयैस्तुल्यः कथञ्चन ॥ ७२ ॥
योगोऽसौ योगिभिः प्रोक्तो विज्ञानक्रमयोगतः ।
गुणानां यः समाहारः सहायस्य च चेतसः ॥ ७३ ॥
सद्भावभावतो बुद्ध्या स योगश्चेह कीर्तितः ।
स च ज्ञानक्रियाभेदाद् ज्ञेयो योगो द्विधा बुधैः ॥ ७४ ॥
अन्तःकरणवृत्त्या या तेषामात्मैकता मता ।
ज्ञानयोगः स उ[3]द्दिष्टः कर्मयोगः क्रियात्मकः ॥ ७५ ॥
इष्ट्वादौ कर्मयोगेन ज्ञानयोगेन तं यजेत् ।
कायिकैर्वाचिकैश्चैव मानसैश्च पुनः क्रमात् ॥ ७६ ॥
स्थूले निवेशितं चित्तं पुनः सूक्ष्मे निवेशयेत् ।
पररूपे यदा युक्तस्तदासौ मुक्त उच्यते ॥ ७७ ॥
परात्परतरं ज्योतिश्चिद्रूपमचलं ध्रुवम् ।
यः प्रपश्यति बुद्ध्यासौ न पुनर्भुवि जायते ॥ ७८ ॥
तस्मात् सर्वप्रयत्नेन भक्तो योगी भवेत् सदा ।
युक्तो[4] देवमुपासीत सिद्धिरेवं भविष्यति ॥ ७९ ॥

---

१. 'त्रि' क. पाठः. २. 'च', ३. 'मु', ४. 'वैतमु' ख. ग. पाठः.

एवं ते सकलाख्याता मयाल्पा विष्णुसंहिता ।
साक्षाद्विष्णुमुखादेषा मया प्राप्ता युगान्तरे ॥ ८० ॥
ज्ञानानां परमं ज्ञानं गुह्यानां गुह्यमुत्तमम् ।
हितानां च हितं नान्यदतो रक्ष्यमिदं त्वया ॥ ८१ ॥
यथाहं श्रुतवान् पूर्वं साक्षाद् भगवतो मुखात् ।
तथेदमखिलं तन्त्रं मया तुभ्यं निवेदितम् ॥ ८२ ॥
नादीक्षिताय दातव्यं नासंवत्सरवासिने ।
नाभक्तायाविनीताय नान्यभक्ताय वा क्वचित् ॥ ८३ ॥
कृतज्ञाय[1] विनीताय शुचये ब्रह्मचारिणे ।
वक्तव्यं सर्वथाचार्यैरित्येवं विष्णुशासनम् ॥ ८४ ॥
गुप्तं हि स्थापयेत् सर्वमगुप्तं नाशयेन्नरः ।
तस्मात् सर्वप्रयत्नेन गोप्यमेतत् सदा बुधैः ॥ ८५ ॥
यः पठेच्छृणुयान्नित्यं श्रावयेद् वा समाहितः ।
सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ॥ ८६ ॥
तस्माद् भक्तैरिदं नित्यमध्येयं श्राव्यमेव च ।
पुस्तके लिखितं नित्यं[2] पूजनीयं प्रयत्नतः ॥ ८७ ॥
यत्रेदं प्रयतैर्नित्यं पूज्यते पुस्तकैः[3] स्थितम् ।
न तत्र व्याधिचोरादिभयं किञ्चित् प्रजायते ॥ ८८ ॥
तस्मात् सर्वप्रयत्नेन गृहे सततमर्चयेत् ।
स्थापयेद् गोपयेच्चात्र वर्धते श्रीरचञ्चला ॥ ८९ ॥

इति विष्णुसंहितायां[4] त्रिंशः पटलः ॥

---

शुभं भूयात् ।

---

१. 'कर्मज्ञा' च. पाठः. २. 'त्यमर्चनीयं प्रयत्नतः', ३. 'के' ख. ग. पाठः. ४. 'यां योगपटलस्त्रिंशः' च. पाठः.

वस्तु यद् गृह्यते सर्वं दीक्षितैस्तन्त्रवित्तमैः ।
प्रतिग्रहं वा क्रीतं वा अयाचितमथापि वा ॥ ७ ॥

गृह्यते [1]फलपुष्पादि विष्ण्वर्थमिति चिन्तया ।
तदुपादानमित्युक्तः[2] कालस्तेन सदा हरिः ॥ ८ ॥

अर्चितो देवदेवेशः कालज्ञेन तु मन्त्रिणा ।
इज्या चेति समाख्याता यागकर्मणि [3]यत् कृतम् ॥ ९ ॥

रजःपातादि यागश्च अर्चनाविधिरेव च ।
यतीनां चैव भक्तानां दीक्षितानां च पूजनम् ॥ १० ॥

दानं चैव हरेर्नित्यमिज्या सेति प्रकीर्तिता ।
तेन कालेन देवेशः पूजितः स्याद्विशेषतः ॥ ११ ॥

[4]स्वाध्याये तु तथा काले चिन्तयेद्वैष्णवान् मनून् ।
इतिहासपुराणानि पठेदर्थावबोधतः ॥ १२ ॥

स्वाध्यायः काल इत्युक्तः पूजितस्तेन वै प्रभुः ।
यो योग इति संप्रोक्तो योगिभिर्योगवित्तमैः ॥ १३ ॥

तेन योगेन देवेशः पूजितः स्यात् स्वयं हरिः ।
षडङ्गयुक्तो योगः स उक्तः पद्मोद्भवे किल ॥ १४ ॥

संक्षेपेणाथ[5] वक्ष्यामि नाडीचक्रमशेषतः ।
कन्दं नाभिर्भवेन्मूलं नाडीनामेव सर्वशः ॥ १५ ॥

[1] फलपुष्पाणि B C [2] उक्तं B C [3] चेत् B
[4] A B omit this verse [5] अत्र C

कुमुदस्य यथा मूलमुत्पलस्य तथैव च ।
नालानामपि सर्वेषामुत्पत्तिस्थानमुत्तमम् ॥ १६ ॥

तथैव नाभिर्नाडीनामुत्पत्तिस्थानमुच्यते ।
द्विसप्ततिसहस्राणि नाड्यः परिकीर्तिताः ॥ १७ ॥

तिर्यगूर्ध्वमधश्चैव देहे ताः स्युर्यत्रस्थिताः ।
आग्नेय्यश्चैव सौम्याश्च सौम्याग्नेय्यस्तथैव च ॥ १८ ॥

सर्वा ऊर्ध्वमुखा नाड्यस्त्वाग्नेय्यः परिकीर्तिताः ।
अधोमुखास्तथा सौम्यास्तिर्यक् चैवोभयात्मिकाः ॥ १९ ॥

शतद्वयं चाष्टषष्टिः प्रतिदिक्कं व्यवस्थिताः ।
शतसाहस्रिकायां तु संहितायां पुरा खलु ॥ २० ॥

नामान्यासां तु सर्वासां कथितानि सविस्तरम् ।
दशानां तु प्रधानानां तन्नामात्र प्रवक्ष्यते ॥ २१ ॥

इडा च पिङ्गला चैव सुषुम्ना च तथा परा ।
गान्धारी हस्तिजिह्वा च पूषा च सुयशास्तथा ॥ २२ ॥

अलम्बुसा कुहूश्चैव कौशिकी दशमी तथा ।
इडा चैव सुषुम्ना च स्थिते पिङ्गलया सह ॥ २३ ॥

नासापुटे चोर्ध्वमुख्यौ शुक्लरक्ते च वर्णतः ।
गान्धारी हस्तिजिह्वा च पूष्णा च सहिते स्थिते ॥ २४ ॥

बस्तिदेशं समाश्रित्य [1]पीतकृष्णे स्थिते समे ।
अलम्बुसासुयशसौ[2] स्थिते दक्षिणपार्श्वतः ॥ २५ ॥

बभ्रुश्यामे च[3] वर्णेन सौम्याग्नेयगुणान्विते ।
कौशिकी च कुहूश्चैव वामपार्श्वे समाश्रिते ॥ २६ ॥

अञ्जनारुणसंकाशे सौम्याग्नेयगुणान्विते ।
दश प्राणवहा ह्येता नाड्यः परिकीर्तिताः ॥ २७ ॥

प्राणास्तु दश संप्रोक्ता यथासंख्यक्रमेण तु ।
प्राणोऽपानः समानश्च उदानो व्यान एव च ॥ २८ ॥

नागश्चैव कुमारश्च कृकरश्च तथा परः ।
धनंजयो देवदत्त इति प्राणा दश स्मृताः ॥ २९ ॥

प्राणस्तु प्रथमो वायुः शेषाणां प्रभुरेव सः ।
इडा वहति तं वायुं नाडी या प्रथमा मता[4] ॥ ३० ॥

प्राणः प्राणयते यस्माद्विसर्गे[5] पूरणं प्रति ।
नित्यमापूरयत्येष [6]प्राणिनामुरसि स्थितः ॥ ३१ ॥

निश्वासोछ्वासकासैश्च प्राणो जीवसमाश्रितः ।
प्राणनं कुरुते यस्मात् तस्मात् प्राण इति स्मृतः ॥ ३२ ॥

उह्यमानस्तु गान्धार्या नाड्यापानः स्ववेगतः ।
शुक्रमूत्रपुरीषादि गुदस्थोऽपनयेत् सदा ॥ ३३ ॥

[1] पीतकृष्णसिते B
[2] सुयशसा B
[3] श्यामेन B
[4] मतः B C
[5] विसर्गा E
[6] प्राणानाम् F

तस्मादपान इत्युक्तो वायुः प्राणादनन्तरः ।
उह्यमानः समानस्तु समोऽलम्बुसया मतः ॥ ३४ ॥

पीतं भक्षितमाघ्रातं रक्तं पित्तकफादिकान् ।
रसान् नानाविधांश्चैव समानयति सर्वतः ॥ ३५ ॥

सर्वदा सर्वगात्रेषु समानस्तेन मारुतः ।
[1]कुहूर्वहति [2]च व्यानं वामपार्श्वे समाश्रितः ॥ ३६ ॥

कुरुते स पुनर्व्यानः कर्माण्येतानि सर्वशः ।
विनामयत्यथाङ्गानि कुर्याद् व्याधिप्रकोपनम् ॥ ३७ ॥

स्मृतिप्रीतिविनाशं च वार्द्धके[3] व्यान उच्यते ।
उदानस्तु सुषुम्नायामुह्यमानस्तथैव च ॥ ३८ ॥

स्पन्दयत्यधरं वक्त्रं नेत्रं गात्रप्रकम्पनम्[4] ।
[5]उद्योजयति कर्माणि उदानस्तेन कीर्तितः ॥ ३९ ॥

पिङ्गलायां तु नागाख्यो [6]वायुरूर्ध्वमुखः स्थितः ।
उद्गारं [7]वमनं हिक्कां तथा वै मेहनं पुनः ॥ ४० ॥

करोति मारुतो नागः प्राणिनां देहमाश्रितः ।
हस्तिजिह्वागतो वायुर्देवदत्त[8] इति स्मृतः ॥ ४१ ॥

[1] तथा A C
[2] चोदानं A; चापानं B
[3] वार्द्धक्ये A B
[4] प्रकोपनम् B C
[5] उद्वेजयति A B
[6] वपुः B
[7] वामनं B C
[8] जयदत्तः E

विजृम्भणं च गात्राणां स्तम्भनं च करोत्यसौ ।
मीलनं कुरुते नित्यं कुमारः पूषणि स्थितः ॥ ४२ ॥

तथा सुयशसि स्थित्वा कृकरः क्षुभितं नयेत् ।
घोषं च कुरुते स्थित्वा कौशिक्यां तु धनंजयः ॥ ४३ ॥

न मुञ्चति सदा चासौ मृतस्यापि कलेबरम् ।
नाडीचक्रं यथावस्थं कथितं चानुपूर्वशः ॥ ४४ ॥

दशारं चक्रमेतत्तु नाडयो यत्र संस्थिताः ।
चक्रं तु भ्रमते देहे दशस्थानेषु सर्वदा ॥ ४५ ॥

कर्मात्मा जीवसंज्ञोऽस्मिंश्चक्रे भ्रमति शाश्वतम् ।
हृत्पुण्डरीकमध्ये तु सदा संकोचयन् प्रभुः ॥ ४६ ॥

सदाविष्णुर्भवत्येष क्षेत्रज्ञ इति संज्ञितः ।
अणोरणीयानत्यन्तं शालिशूकाग्रपिञ्जरः ॥ ४७ ॥

तस्येश्वरस्य चैश्वर्याच्चक्रमेतत् प्रवर्तते ।
चक्रमध्येऽस्य संप्रोक्तो हृत्पद्मस्य यथोद्भवः ॥ ४८ ॥

हृत्पद्मस्याष्टपत्रस्य मध्ये वै कर्णिका मता ।
शक्तयस्तत्र तिष्ठन्ति परमेष्ठ्यादयः क्रमात् ॥ ४९ ॥

परमेष्ठी पद्ममध्ये सदाविष्णुं समाश्रितः ।
चतुर्दिक्षु ततः पश्चाच्छेषा वै शक्तयः स्मृताः ॥ ५० ॥

अर्कवह्निहिरण्याभा वर्णतः परिकीर्तिताः ।
नाम्ना चैव पुमान् विश्वो निवृत्तिः सर्व एव च ॥ ५१ ॥

तेषां मध्ये दशावस्थाः प्रभोर्नारायणस्य ह ।
तास्त्ववस्थासु संलीनः पुरुषस्तु निरामयः ॥ ५२ ॥

एवं स्थिते चक्रपद्मे बहिः प्राणा दश स्थिताः ।
इडायां च सुषुम्नायां प्राणश्चरति वै क्रमात् ॥ ५३ ॥

इडा चान्द्रमसी नाडी सुषुम्ना सूर्यसंभवा ।
इडा नासापुटे वामे सुषुम्ना दक्षिणे स्थिता ॥ ५४ ॥

अयने द्वे च संक्रान्ती विषुवे चेति भेदतः ।
भवन्ति प्राणसंचारक्रमान्नाड्योस्तथोभयोः ॥ ५५ ॥

इडायां वर्तते प्राणो यदा तद् दक्षिणायनम् ।
यदा वसेत् सुषुम्नायां तद् भवेदुत्तरायणम् ॥ ५६ ॥

प्रयाति यस्माद्यं वायुः काले नासापुटात् पुटम् ।
संक्रान्तिरिति [1]स प्रोक्तः क्रमेण प्राणसंक्रमः ॥ ५७ ॥

यदा द्वाभ्यां पुटाभ्यां तु समकालं वहत्यसौ ।
कालं तं [2]विषुवं प्राहुः पुण्यकर्मणि पूजितम् ॥ ५८ ॥

अयने दक्षिणे कुर्यात् स्नानकर्म यथाविधि ।
अयने चोत्तरे कुर्यात् सर्वकर्माणि साधकः ॥ ५९ ॥

संक्रान्त्यां दानकर्माणि ध्यानं तु विषुवे तथा ।
ऊर्ध्वं प्राणस्त्वहः प्रोक्तस्त्वपानो रात्रिरुच्यते ॥ ६० ॥

[1] यत् प्रोक्ता: A B

[2] तद्विषुवत्प्राहुः E

अयुते द्वे सहस्रं च षट् [1]शतान्यधिकानि च ।
अहोरात्रेण वै योगे मात्रासंख्या प्रयुज्यते ॥ ६१ ॥

प्राणायामं समासेन कथयामि यथाविधि ।
उच्चारयेत्तु प्रणवं स्वरेणैकेन योगवित् ॥ ६२ ॥

उदरं पूरयित्वा तु वायुना यावदीप्सितम् ।
प्राणायामो भवत्येष पूरको देहपूरकः ॥ ६३ ॥

विधाय सर्वगात्राणि निश्वासोछ्वासवर्जितम् ।
संपूर्णकुम्भवत् तिष्ठेत् प्राणायामः स कुम्भकः ॥ ६४ ॥

मुञ्चेद्वायुं तथैकेन क्रमान्निश्वस्य चैव हि ।
योगी निश्वासकृद्यस्तु वायुमूर्ध्वं विरेचयेत् ॥ ६५ ॥

रेचकस्त्वेष संप्रोक्तः प्राणायामो न संशयः ।
कुम्भकाले भवेदेव सोमग्रहणमुत्तमम् ॥ ६६ ॥

ततो रेचककाले तु सूर्यग्रहणमिष्यते ।
यद्वै हृदयपद्माख्यमूर्ध्वनालमधोमुखम् ॥ ६७ ॥

तद्वै विकासमायाति पूरणेन तु [2]पूरितम् ।
ऊर्ध्ववक्त्रं भवेत् पद्मं कुम्भकेन निरोधितम् ॥ ६८ ॥

रेचकेन समाक्षिप्तं सद्यः प्राणहरं भवेत् ।
भूत्वा तु हृद्गतं पद्ममूर्ध्वस्रोतोत्र्यवस्थितम् ॥ ६९ ॥

[1] तथा A B C

[2] पूजितम् A B

रेचनेनोर्ध्वमायाति ग्रन्थिं भित्त्वा क्षणेन तु ।
भित्त्वार्गलकपालं तु ऊर्ध्वं दीप इवोत्थितः ॥ ७० ॥

अचिरेण समभ्येति तद्विष्णोः परमं पदम् ।
अतः परतरं नैव स्थूलं वा सूक्ष्ममेव वा ॥ ७१ ॥

तत् पदं परमं प्राहुः सदाविष्णुपदं शुभम् ।
तत्पदस्य प्रभुश्चैको नित्यो नारायणः परः ।
तस्मात् सर्वप्रयत्नेन योगी नारायणं स्मरेत् ॥ ७२ ॥

इति श्रीपाञ्चरात्रे महासंहितायां सनत्कुमारप्रोक्तायाम्
ऋषिरात्रे [1]कालाध्यायः प्रथमः

# ऋषिरात्रे तृतीयोऽध्यायः

सनत्कुमारः—

योगाध्यायं प्रवक्ष्यामि योगिनां कर्मसिद्धये ।
आहारमेव योगस्य साधनं परिचक्षते ॥ १ ॥

वक्ष्यामि च यथायोगं तस्मादाहारमादितः ।
आहारास्त्रिविधाः प्रोक्तास्तन्त्रेऽस्मिन्नृषिभिः पुरा ॥ २ ॥

सात्त्विका राजसाश्चैव तामसाश्चेति वै त्रिधा ।
स्निग्धाश्च मधुरा हृद्या आहाराः सात्त्विका मताः ॥ ३ ॥

स्निग्धाश्चतुर्विधाः प्रोक्ता मधुराः षड्विधास्तथा ।
हृद्याश्चाष्टविधाः प्रोक्ता आहारक्रमयोगतः ॥ ४ ॥

स्निग्धाश्च स्नेहसिद्धाश्च स्नेहाः स्नेहयुता इति ।
[1]स्निग्धाः स्वभावतः स्निग्धा नित्यमेवाप्यकृत्रिमाः ॥ ५ ॥

[2]स्नेहिनः सहजाः सर्वे विशेषेण तिलादयः ।
स्नेहसिद्धाश्च ये चान्ये कृसरापूपपायसाः ॥ ६ ॥

एवमाद्यास्तथा चान्ये स्नेहसिद्धा इति स्मृताः ।
स्नेहास्तु [3]केवलस्नेहाः सर्पिस्तैलादयस्तु ये ॥ ७ ॥

[1] स्निग्धाश्च भावतः B [2] स्नेहानि B [3] केवलाः B

स्नेहयुक्ता इति प्रोक्ताः सह स्नेहेन मिश्रिताः ।
स्निग्धाश्चतुर्विधाः प्रोक्ता मधुरान् षड्विधाञ्छृणु ॥ ८ ॥

स्वभावाः कृत्रिमाश्चापि तथा त्रिमधुरा अपि ।
मिश्रिताश्चापि सिद्धाश्च रसान्तरयुता अपि ॥ ९ ॥

स्वभावमधुरा [1]ये तु शर्करामाक्षिकादयः ।
ते स्वभावा इति ज्ञेया ये चान्येऽप्येवमादयः ॥ १० ॥

कृत्रिमा इति विज्ञेयाः कृत्रिमेण कृतास्तु ये ।
नालिकेररसक्षीरवारिसर्पींषि चैव हि ॥ ११ ॥

[2]तानि त्रिमधुराः स्युर्वै ये चान्येऽप्येवमादयः ।
मिश्रिता मधुरैर्ये तु रसैः सक्त्वादयस्तु ये ॥ १२ ॥

मिश्रिता इति विज्ञेया ये चान्येऽप्येवमादयः ।
ये सिद्धा मधुरद्रव्यैर्गुडान्नाद्यास्तथैव च ॥ १३ ॥

ते सिद्धा इति विज्ञेया ये चान्येऽप्येवमादयः ।
रसेष्वपि च सर्वेषु ये चैव मधुरा रसाः ॥ १४ ॥

कषायाम्लादिसंयुक्ता रसा रसयुतास्तु ये ।
मधुरा इति संप्रोक्ता हृद्यानष्टविधाञ्छृणु ॥ १५ ॥

भक्ष्ये भोज्ये च पेये च लेह्ये चूष्ये तथैव च ।
आमे पक्के रसे चैव हृद्यमष्टविधं स्मृतम् ॥ १६ ॥

[1] एते D; ये ते B

[2] सद्दानमधुरास्याम्भः B

आहाराः सात्त्विकाः प्रोक्ता राजसान् कथयामि वः ।
[1]कट्वम्ललवणास्तीक्ष्णा उष्णरूक्षविदाहिनः ॥ १७ ॥

आहारा राजसास्त्वेते सप्तधा परिकीर्तिताः ।
तथा तिक्तकषायाश्च रसान्तरगता अपि ॥ १८ ॥

क्रिमिदुष्टा गन्धदुष्टा वर्णदुष्टास्तथैव च ।
तथा पर्युषिताश्चापि क्लिन्नाश्चामेध्यमेव च ॥ १९ ॥

उच्छिष्टं विरसं चैव आहारास्तामसा मताः ।
आहारैः सात्त्विकैरेव योगी योगविधिं चरेत् ॥ २० ॥

आमे तु सात्त्विकाहारे नरः शुद्धो भवेत् सदा ।
सत्त्वे तु राजसाहारे नरः शुद्धो भविष्यति ॥ २१ ॥

[2]विस्फारितस्तु देहेन[3] तामसाहारभुङ् नरः ।
शुद्धकायो भवेत् पश्चात् क्रियायोग्यो भविष्यति ॥ २२ ॥

तस्मात् सर्वप्रयत्नेन सात्त्विकाहारभुग्भवेत् ।
तत्राप्यत्यशनो नैव[4] हीनभुग्वा[5] कदाचन ॥ २३ ॥

[6]युक्ताहारो भवेद्योगी तेन योगी भविष्यति ।
आसनानि प्रवक्ष्यामि योगिनस्तु यथातथम् ॥ २४ ॥

स्वस्तिकं पद्मकं चैव [7]विस्तीर्णं भद्रकं तथा ।
तथा योगासनं चैव दण्डासनमथापि वा ॥ २५ ॥

[1] बह्वाम्ल B D [2] निष्फुरिते B [3] देहे तु B
[4] माति B [5] हीनभागः A B
[6] उक्ताहारः B [7] स्वास्तीर्णं E F

जङ्घं चैवार्धजङ्घं च पार्श्वमुत्कुटिकासनम् ।
दशासनानि संप्रोक्तान्यस्मिंस्तन्त्रे मुनीश्वरैः ॥ २६ ॥

जङ्घाव्यतिकरं कृत्वा स्पृशेत् करतलेन तु ।
दक्षिणेन तथा वामां[1] वामेनैव तु दक्षिणाम्[2] ॥ २७ ॥

कृतं सुश्लिष्टमेवं तु स्वस्तिकं चासनं भवेत् ।
तथा व्यतिकरे कृत्वा जङ्घे चैव क्रमेण तु ॥ २८ ॥

तले तु विन्यसेदूर्वोरुपरिष्टाद्यथाक्रमम् ।
कृतन्यस्यासमेतत्तु पद्मासनमिहोच्यते ॥ २९ ॥

अन्योन्याभिमुखौ पादावूरू[3] [4]प्रादेशमात्रकम् ।
जानुनी किंचिदुन्नम्य कण्ठे विस्तीर्णमेव तत् ॥ ३० ॥

सुश्लिष्टौ तावुभौ कुर्यात् तलौ तद्भद्रकं भवेत् ।
उन्नम्य जानुनी जङ्घे व्यत्यस्य च परस्परम् ॥ ३१ ॥

उभौ निवेश्य पादौ च सम्यग्भूमितले क्रमात् ।
संवेष्ट्य देहजङ्घोरू पर्यङ्केन सहैव तु ॥ ३२ ॥

ऋज्वासनं यथायोगं योगासनमिहोच्यते ।
जङ्घे तोरणवत् कृत्वा वस्त्रं पर्यङ्कबन्धने ॥ ३३ ॥

ऋज्वासनं यथापूर्वं दण्डासनमिहोच्यते ।
जङ्घामध्ये कटीचक्रे कृत्वा पर्यङ्कबन्धनम् ॥ ३४ ॥

[1] वामं B
[2] दक्षिणम् B
[3] ऊरौ A
[4] स्यादेश A

विस्तीर्य जानुनी किंचित् तस्मिन् [1]दण्डासनक्रमे ।
आस्यते [2]यत् स्थिराङ्गेन जङ्घासनमिहोच्यते ॥ ३५ ॥

एकजङ्घां स्थिरीकृत्य बन्धनस्थां यथाक्रमम् ।
भूमावेकां निवेश्याथ ऊरू श्लिष्टामरुन्धता[3] ॥ ३६ ॥

आस्यते योगिभिर्यत्तदर्धजङ्घासनं भवेत् ।
संवेष्ट्य चोर्ध्वां जङ्घां तु तथा चान्यां विचक्षणः ॥ ३७ ॥

ऊर्ध्वीकृत्य च बद्धैकां भूमौ चान्यां निवेश्य च ।
आस्यते योगिभिर्यत्तत्[4] पार्श्वासनमिहोच्यते ॥ ३८ ॥

उन्नम्य जानुनी चोभे पादाभ्यामेव भूतले ।
आस्यते योगिभिर्यत्तद् विद्यादुत्कुटिकासनम् ॥ ३९ ॥

आस्यते यत्र देशे तु तान् देशान् कथयामि वः ।
गिरयः सर्वदा श्रेष्ठा गिरीणां तु हिमालयः ॥ ४० ॥

गङ्गाप्रदेशो यस्तत्र तस्माद्बदरिकाश्रमः ।
तदलाभे च शैलाश्च पर्वतान् कथयामि वः ॥ ४१ ॥

विन्ध्यसह्यौ महेन्द्रश्च ततः श्रीकण्ठको गिरिः ।
माल्यवान् मलयश्चैव किष्किन्धो नाम पर्वतः ॥ ४२ ॥

श्रीगिरिश्चित्रकूटश्च [5]नवैते पर्वताः स्मृताः ।
एतेषामप्यलाभे तु शैलाः सर्वे तु पूजिताः ॥ ४३ ॥

[1] दण्डासने A B [2] यः A [3] अरुन्दता B
[4] युक्तं B [5] दशैते A B

नद्यस्तु सर्वदा श्रेष्ठास्तासां गङ्गा प्रशस्यते ।
तत्रापि पुष्करं श्रेष्ठं पुष्करात् पुरुषोत्तमम्[1] ॥ ४४ ॥

प्रयागस्तु ततस्तस्मात् तदलाभेऽन्यसंग्रहः ।
ततस्तु यमुना देवी सिन्धुर्गोदा सरस्वती ॥ ४५ ॥

शरावती विपाशा च शतद्रुर्नर्मदा तथा ।
कावेरी ताम्रपर्णी च दशैताः क्रमशः स्मृताः ॥ ४६ ॥

एतासामप्यलाभे तु शस्ताश्चान्यास्तु सिन्धवः ।
नदीनामपि सर्वासां दक्षिणं तीरमुत्तमम् ॥ ४७ ॥

तीराणामपि सर्वेषामन्तर्द्वीपः प्रशस्यते ।
नदीनामप्यलाभे तु निर्जनं वनमुत्तमम् ॥ ४८ ॥

वनानामपि सर्वेषां नैमिशारण्यमुत्तमम् ।
काम्यकं दण्डकारण्यं जनस्थानं महावनम् ॥ ४९ ॥

वनान्यन्यानि शस्तानि यानि पुण्यानि चैव हि ।
ह्रदानामपि सर्वेषां सदैवं ह्रदमुत्तमम् ॥ ५० ॥

चन्द्रपुष्करिणी चैव सरः पञ्चाप्सरस्तथा ।
पम्पा चैव विशाला च आगस्त्यं ह्रदमेव च ॥ ५१ ॥

ततो ब्रह्मसरश्चैव प्रशस्तान्यपराणि च ।
[2]आश्रमाश्चैव पुण्यानि देवतायतनानि च ॥ ५२ ॥

सर्वाण्यपि च तीर्थानि शुभान्यायतनानि च ।
स्थानानि च प्रशस्तानि योगासनविधिं प्रति ॥ ५३ ॥

[1] पुरुषोत्तमः B E [2] आश्रमाणि B D

तत्राराध्य च देवेशं नारायणमनामयम् ।
क्षेत्रज्ञं तं महाविष्णुमणीयांसमणोरपि ॥ ५४ ॥

विष्णुं जिष्णुं सुरश्रेष्ठं वासुदेवं सनातनम् ।
कर्मयोगी भवेत् पूर्वं कर्मणानेन साधकः ॥ ५५ ॥

तेन तुष्टः सदाविष्णुर्ज्ञानयोगं प्रयच्छति ।
तेन ज्ञानेन पूतात्मा पञ्चरात्रकृतश्रमः ॥ ५६ ॥

पञ्चस्थानार्चनं कृत्वा पञ्चकालविशेषवित् ।
तत्र च प्रत्ययं लब्ध्वा विष्णुनानुग्रहीकृतः[1] ॥ ५७ ॥

आसनं विधिवत् कृत्वा योगं युञ्जीत योगवित् ।
यत्नं वायुजये कुर्यान्नाडीशोधनपूर्वकम् ॥ ५८ ॥

नाडीचक्रप्रकारस्तु कालाध्याये प्रकीर्तितः ।
षडङ्गान्यपि योगस्य तथा पद्मोद्भवे किल ॥ ५९ ॥

कथितानि यथायोगं वायुरोधं ब्रवीमि वः ।
पूरकं कुम्भकं चैव रेचकं चेति वै क्रमात् ॥ ६० ॥

[2]एषां मात्राक्रमश्चैव प्रोक्तः पद्मोद्भवे किल ।
इडया पूर्यते वायुः पिङ्गल्या कुम्भके खलु ॥ ६१ ॥

मात्रायोगक्रमेणैव रेच्यते तु सुषुम्नया ।
[3]पिधाय पूर्यते वायुरङ्गुष्ठेन तु दक्षिणम् ॥ ६२ ॥

[1] कृतम् A B [2] तेषां E [3] विधाय A B

[1]नासापुटं तु वामेन पुटेन क्रमयोगतः ।
कुम्भकं केवलं कुर्यात् कृत्वा नासापुटं पुनः ॥ ६३ ॥

रेचयेद्दक्षिणेनैव [2]पिधाय च तथा पुनः ।
मात्रातृतीयकं न्यूनं विषमं कुरुते मरुत् ॥ ६४ ॥

तथा क्रमविपर्यासे प्रयोगस्य विपर्ययात् ।
पूरणे सर्वनाड्यस्तु पूर्यन्ते क्रमयोगतः ॥ ६५ ॥

कुम्भके चैव रुध्यन्ते मुच्यन्ते रेचके पुनः ।
मात्रया पूर्यते पूर्वमिडा प्रथमया ततः ॥ ६६ ॥

सा द्वितीयतृतीयाभ्यां पिङ्गला पूर्यते तथा ।
चतुर्थ्यैव सुषुम्ना तु मात्रया परिपूर्यते ॥ ६७ ॥

पञ्चम्या मात्रया चैव गान्धारी परिपूर्यते ।
षष्ठ्या चैव तु सप्तम्या पूषा च परिपूर्यते ॥ ६८ ॥

अष्टम्या हस्तिजिह्वा च नवम्या चाप्यलम्बुसा ।
दशम्या [3]सुयशाश्चैव एकादश्या तु कौशिकी[4] ॥ ६९ ॥

द्वादश्या तु कुहूश्चैव पूर्यते क्रमयोगतः ।
भ्रमन्ति चक्रवत् सर्वा [5]नाड्यो वायुपूरिताः ॥ ७० ॥

नाडीभ्रमणवेगेन नाभिदेशाद्धुताशनः ।
उत्थितो निर्दहेद्दोषान् सर्वानेव शरीरगान् ॥ ७१ ॥

[1] नासापुटे A [2] विधाय A B [3] सुयशा चैव B
[4] कौशिनी B F [5] A B omit this and the next *pāda-s*.

नाड्यः शुद्धिमायान्ति शोधिता वह्निमारुतैः ।
रेचकं तु ततः कुर्यान्मात्राकालमवेत्य च ॥ ७२ ॥

द्वाभ्यामेव तु मात्राभ्यां कुहूर्मुच्येत वायुना ।
तृतीयया चतुर्थ्या च कौशिकी[1] परिमुच्यते ॥ ७३ ॥

पञ्चम्या चाथ षष्ठ्या च [2]सुयशाः परिमुच्यते ।
सप्तम्या च तथाष्टम्या मुच्यतेऽलम्बुसा ततः ॥ ७४ ॥

नवम्या च दशम्या च हस्तिजिह्वा तु मुच्यते ।
एकादश्या तु द्वादश्या त्रयोदश्या तथैव च ॥ ७५ ॥

चतुर्दश्या च मात्राभिः पूषा हि परिमुच्यते ।
पञ्चदश्याथ षोडश्या गान्धारी परिमुच्यते ॥ ७६ ॥

सप्तदश्याष्टदश्या च इडैव परिमुच्यते ।
ततश्चैकोनविंशत्या विंशत्या च तथैव च ॥ ७७ ॥

मात्राभिर्मुच्यते चापि पिङ्गला च त्रिकेण च ।
मात्राभ्यामथ शेषाभ्यां सुषुम्ना परिमुच्यते ॥ ७८ ॥

प्राणादयः स्थितास्तासु क्रमान्नाडीषु वायवः ।
क्षोभमायान्ति पूरे तु भ्रमन्त्येव तु कुम्भके ॥ ७९ ॥

रेचके तु क्रमादेते उन्मूल्यन्ते न संशयः ।
उन्मूलनक्रमस्तेषां जयायैव तु जायते ॥ ८० ॥

[1] कौशिनी B F

[2] सुयशा B

नागः कुमारः कृकरो देवदत्तो धनंजयः ।
जितास्तु पूरके चैव पञ्च चैते न संशयः ॥ ८१ ॥

प्राणादिषु लयं यान्ति यथासंख्यक्रमेण तु ।
कुम्भके च जिता एव चत्वारोऽपानपूर्वकाः ॥ ८२ ॥

प्राण एव लयं यान्ति प्राणो जपसमाश्रयः ।
मनो बुद्धिरहंकार इन्द्रियाण्यपि सर्वशः ॥ ८३ ॥

प्राणमेव समायान्ति सहैव मरुदीरिताः ।
तावदेव प्रवृत्तिः स्यान्निवृत्तिस्तावदेव तु ॥ ८४ ॥

योगाभ्यासेन योगी तु जीवोन्मीलनमाचरेत् ।
उन्मीलितस्तथा जीवः कर्म चैति च तत्र च ॥ ८५ ॥

हृत्पद्मं रेचके फुल्लं वायुना निश्चलीकृतम् ।
अन्तस्तत् प्रविशेत् काले क्षेत्रज्ञो यत्र वै स्थितः ॥ ८६ ॥

कुम्भकेन निरुद्धं तत् पद्ममूर्ध्वमुखं भवेत् ।
सुषुम्ना इति सूर्यांशुरन्तः सुषिरसंयुतः ॥ ८७ ॥

तन्मध्ये चामृता नाम धारा चन्द्रामृतस्य तु ।
स्थिता रक्तस्य शुक्ला तु भित्त्वा सूर्यस्य मण्डलम् ॥ ८८ ॥

सुषुम्ना च शिरोमध्यं भित्त्वा हृत्पद्ममाश्रिता ।
सर्वतः परिगृह्यैतत् तन्निध्यानपरो भवेत् ॥ ८९ ॥

स्थितः सर्वेषु देहेषु एक एव रवेः करः ।
तस्मिन् करे संनिवेश्य जीवं[1] योगी समाधिना ॥ ९० ॥

[1] जीवः A

विन्यस्य तं भ्रुवोर्मध्ये ध्यायेन्नारायणं प्रभुम् ।
ध्यात्वा चामृतधारायां तन्मध्ये विनिवेश्य च ॥ ९१ ॥

सुषुम्नान्तमतिक्रम्य ऊर्ध्वं वै सूर्यमण्डलम् ।
ततश्चन्द्रमसं गत्वा तन्मध्ये च स्थितः प्रभुः ॥ ९२ ॥

ततः परतरं देवं सदाविष्णुं समाश्रयेत् ।
स एव निष्कलो देवः स च नारायणः प्रभुः ॥ ९३ ॥

वासुदेवं जगद्बीजं कूटस्थमचलं विदुः ।
परात् परतरः सोऽयं स एव तमसः परः[1] ॥ ९४ ॥

तस्मात् परतरं नास्ति स्थूलं वा सूक्ष्ममेव वा ।
तमाहुः पुरुषं नित्यं तद्विष्णोः परमं पदम् ॥ ९५ ॥

तद्विष्णुपदमासाद्य न भूय इह जायते ।
एवं वायुजयं कृत्वा योगी योगविचक्षणः ॥ ९६ ॥

अभ्यासाद्विष्णुसायुज्ये यत्नं परममास्थितः ।
अभ्यासात् प्रत्ययाः सर्वे जायन्ते मुक्तिहेतवः ॥ ९७ ॥

स्वप्ने चैव स्वदेहे च देवे चैवं मनस्यपि ।
इन्द्रियेषु च सर्वेषु जायन्ते प्रत्ययाः पृथक् ॥ ९८ ॥

दर्शनं चैव संयोगः संभाषणमतः परम् ।
अतीतानागतोक्तिश्च तथा तत्त्वनिवेदनम् ॥ ९९ ॥

स्वप्नप्रत्ययकाले तु पञ्चावस्थाः प्रकीर्तिताः ।
केवलं दर्शनं विष्णोः प्रथमा सा दशा स्मृता ॥ १०० ॥

[1] परम् B

द्वितीया तेन संयोगस्तृतीया[1] भाषणं भवेत् ।
[2]अतीतानागतोक्तिश्च तुरीया तत्त्वपङ्क्तयः ॥ १०१ ॥

अकाले खे प्रदृश्यन्ते पञ्चमी सा दशा स्मृता ।
प्रथमायां दशायां तु मरणं यदि जायते ॥ १०२ ॥

भयंकरस्तु दैत्यानां भवेद्गरुडवाहनः ।
द्वितीयायां दशायां तु मरणं यदि जायते ॥ १०३ ॥

शङ्खचक्रधरो भूत्वा विष्णुलोके महीयते ।
तृतीयायां दशायां तु मरणं यदि जायते ॥ १०४ ॥

समानैश्वर्ययुक्तस्तु विष्णोर्विष्णुपदं व्रजेत् ।
चतुर्थ्यां च दशायां तु मरणं यदि जायते ॥ १०५ ॥

सर्वलोकाधिपः श्रीमान् सुरैश्वर्यपदं व्रजेत् ।
पञ्चम्यां च दशायां तु मरणं यदि जायते ॥ १०६ ॥

महाविष्णुपुरं प्राप्य द्वारपालो भविष्यति ।
[3]
. . . . . . . .
मनःप्रत्ययकालेऽपि पञ्च चैव दशाः स्मृताः ॥ १०७ ॥

परोक्षदर्शनं चैव भविष्यच्चिन्तनं तथा ।
अतीन्द्रियेषु च ज्ञानं सर्वशास्त्रार्थदर्शनम् ॥ १०८ ॥

ऐकाग्र्यं च तथा विष्णौ दशाः पञ्च प्रकीर्तिताः ।
परोक्षे यस्य यत् कर्म शुभं वा यदि वाशुभम् ॥ १०९ ॥

[1] क्रीडानामयुतानि च A B

[2] A B lack this line.

[3] Gap in all MSS.

## ऋषिरात्रे चतुर्थोऽध्यायः

सनत्कुमारः—

अथातः संप्रवक्ष्यामि तप्यते तु यथा तपः ।
पूर्वं देशं प्रवक्ष्यामि तपोवृद्धिश्च यत्र तु ॥ १ ॥

प्रयागो ब्रह्मदुर्गं च कुरुक्षेत्रं गया तथा ।
ब्रह्मावर्तं भृगुपथं पुरुषोत्तमसंज्ञितम् ॥ २ ॥

देवतीर्थं महातीर्थं चन्द्रपुष्करिणी तथा ।
देवह्रदः पञ्चनदं तथा पञ्चाप्सरःसरः ॥ ३ ॥

तथा [1]श्रीकण्ठकं चैव चन्द्रतीर्थं महाबलम् ।
अगस्त्यतीर्थं श्रीसानुर्ब्रह्मकुण्डं [2]तथैश्वरम् ॥ ४ ॥

गोकर्णं कन्यकातीर्थं ततः सेतुमुखं तथा ।
सालग्रामं सरिद्वीपमग्नितीर्थं तथैव च ॥ ५ ॥

सर्वे पुण्याश्रमाश्चापि पुण्यनद्यस्तथैव च ।
पुण्यारण्यानि सर्वाणि पुण्यतीर्थानि चैव ह ॥ ६ ॥

पुण्याश्चैव तथा शैलाः पुण्यान्यायतनानि च ।
आश्रमाणां तु सर्वेषामुत्तमं बदराश्रमम् ॥ ७ ॥

[1] श्रीकल्कं B        [2] तथेश्वरः B



पञ्चप्रत्ययकाले तु एकविंशतिका दशाः ।
नित्यमेव दशाश्चेमाः प्रत्ययेषु पृथक् पृथक् ॥ ११८ ॥

योगिनो यस्य जायन्ते स जीवन्मुक्त उच्यते ।
एत एव भविष्यन्ति सदा वै कर्मयोगिनः ॥ ११९ ॥

तस्माद्योगी भवेन्नित्यं नारायणमनामयम् ।
योगाभ्यासेन यास्यन्ति तद्विष्णोः परमं पदम् ॥ १२० ॥

इति श्रीपाञ्चरात्रे महासंहितायां सनत्कुमारप्रोक्तायाम्
ऋषिरात्रे योगविधिर्नाम तृतीयोऽध्यायः

## अथ योगपादे-नाडी चक्रविधिपटलः

p. 291) अथातः संप्रवक्ष्यामि योगपादं समासतः।

तस्यपादस्य पूर्वे तु नाडीचक्रक्रमं शृणु॥ १-१॥

द्विसप्तति सहस्राणि नाडयस्तु प्रकीर्तिताः।

नाडीभिर्व्यावृते देहे जीर्णाश्वत्थस्य पत्रवत्॥ १-२॥

अशीतिश्च चतुश्चैव शतसाहस्रभेदकैः।

शरीरे क्रीडते देवाः स्वेच्छया परमेश्वरम्॥ १-३॥

भूतग्रामैश्चतुर्भिश्च सर्वयोनि समुद्भवम्।

अण्डजं स्वेदजञ्चैव उत्बीजञ्च जरायुजम्॥ १-४॥

अण्डजाताश्चये भावास्त्वण्डजास्ते प्रकीर्तिताः।

स्वेदजाताश्चये भावास्वेदजास्तु प्रकीर्तिताः॥ १-५॥

भूमौ तु तोयबीजाभ्यां मुत्भिदाश्चेति कीर्तिताः।

इल्वयुक्ताश्चये जाताः कीर्तितास्ते जरायुजाः॥ १-६॥

भूतग्रामैश्चतुर्भिश्च नराद्याषड्विधो भवेत्।

नरश्चैव मृगश्चैव पशुः पक्षीतथैव च॥ १-७॥

सरीसृपः स्थावरश्च षड्विधं योनिसंभवम्।

वाचा वदन्ति यद्वाण्या ते नरास्त्विति कीर्तिताः॥ १-८॥

ऊर्ध्वपुच्छन्तु तद्वृद्धिं मृगं विद्याद्विनायक।

अधोदीर्घाश्च ये पुच्छाः पशुजातिरुदीरिता॥ १-९॥

द्विपक्षाः पक्षिरित्याहु सरतीतिसरीसृपः।

स्थापितं स्थावरं प्रोक्तं षड्विधं भूतमेव च॥ १-१०॥

अध्यन्ते योनि भेदानि क्षेत्रं स्यात् भूमिकं शृणु।

पृथिव्यादीनि तत्वानि यत्र तिष्ठन्ति तल्लये॥ १-११॥

लयस्थानं तदाख्यातं तत्वातीतं परात्परम्।

तस्माच्छिन्नं समुत्पन्न तस्माच्छक्तिरजायत॥ १-१२॥

p. 292) तस्मान्नादिं समुत्पन्नं तस्मात् बिन्दुसमुद्भवम्।

तस्मात् सदाशिवं प्रोक्तं सृष्ट्यर्थं पञ्चधा भवेत्॥ १-१३

॥

तस्मादात्मा समुत्पन्नं सहजं मलसंयुतम्।

क्षेत्रज्ञन्तं विजानीयाच्छक्तिस्थन्तु तथोच्यते॥ १-१४॥

तस्मादुपरिवेशस्य शुद्धावस्थोनुकीर्तिताः।

शुभाशुभ वरप्राप्तौ तत्र गच्छन्ति जायते॥ १-१५॥

मायाद्यवनि पर्यन्तं देहबद्धोत्र दृश्यते।

कर्मोदये तु जननं कर्मान्ते मरणं स्मृतम्॥ १-१६॥

सुखदुःखनिमित्ताय शरीरग्रहणं कृतम्।

शरीरं द्विविधं प्रोक्तं पुंसत्व स्त्रीत्वमेव च॥ १-१७॥

लिङ्गेन लांच्छितं पुंस्त्वं स्त्रीत्वं योन्याभिलांच्छितम्।

लिङ्गमीशमयं प्रोक्तं योनिः शक्तिमयं स्मृतम्॥ १-१८॥

तस्माद्वै शिवशक्तिस्तु सर्वमेतत् चराचरम्।

तच्छरीरं द्विधाप्रोक्तं स्थूलं वै सूक्ष्ममेव च॥ १-१९॥

पृथिव्यापस्तथा तेजोवायुराकाशमेव च।

शुक्रं बीजां शमित्युक्तं क्षेत्रांशं श्रोणितं स्मृतम्॥

१-२०॥

अस्थि स्नायुश्चमज्जा च पित्रजंस्त्रयमेव तु।

त्वङ्मांसशोणितञ्चैव मातृजं त्रिकमेव च॥ १-२१॥

इत्थं षट्कौशिकं प्रोक्तं शरीरान्तैस्तु जायते।

नखदन्तश्च रोमाणि केशाश्च नाडयस्तथा॥ १-२२॥

शब्दस्पर्शश्च रूपश्च रसोगन्धश्च पञ्चधा।

एतैर्भूतगणैर्युक्तं स्थूलं शरीरकं भवेत्॥ १-२३॥

शूक्ष्मस्य गोलकां विद्धि तच्छुभाशुभसाधनम्।

जननमरणञ्चैव कर्मणा जायते ततः॥ १-२४॥

एवं स्थूलशरीरञ्च संक्षेपाद्वर्णितं मया।

श्रोत्रं त्वक्चक्षुजिह्वा च घ्राणं बुद्धीन्द्रियं विदुः॥ १-२५

॥

वाक्पादपाणि पायुश्चोपस्थं कर्मेन्द्रियं स्मृतम्।

प्राणः समानोदानश्च अपानोव्यान एव च॥ १-२६॥

नागः कूर्मश्चकृकरो देवदत्तोधनञ्जयः।

मनोबुद्धिरहंकारश्चित्तोन्तः करणं स्मृतम्॥ १-२७॥

p. 293) मदमात्सर्यमानादि सूक्ष्मशारीरकं भवेत्।

इदं शरीरं लिङ्गं हि तयोर्जन्म ततः श्रृणु॥ १-२८॥

शुक्लं रक्तेन संभाव्य जनन्याश्चोदरे स्थितम्।

कर्मादौ सकलं ग्राह्यं प्राप्यते सुषिराशयम्॥ १-२९॥

क्षेत्रांशैश्चैव बीजांशैः शरीरव्याव्रतोगतः।

रक्ताधिक्यात् स्त्रीप्रजा च शुक्लाधिक्यात् पुमान् भवेत्॥ १-३०॥

यदिशुक्लसमंरक्तं जायते तु नपुंसकम्।

भजने तु यथा बिदुर्वर्द्धते तु शनैः शनैः॥ १-३१॥

पुन्नागमुकुलाकारं गर्भाशयगतं तथा।

मरणादीनि कर्माणि निमित्तानि वरेण तु॥ १-३२॥

आयुष्यं विभवं कर्मविद्या च निधनं सुखम्।

षड्कं संप्राप्य तत्रैव ततो गर्भाशयं विशन्॥ १-३३॥

गुणाश्चैव त्रिदोषाश्च जन्तूनान्तत्र संभवाः।

सत्वं रजस्तमश्चैव गुणत्रयमिहोच्यते॥ १-३४॥

सत्यं ज्ञानं तपोमौनं स्मृतिर्मेधाधृतिः क्षमा।

उत्साहो निश्चयन्धैर्यमेवं वै सात्विकं गुणम्॥ १-३५॥

दर्पं महदहंकारं विषादं प्रियवाचकम्।

उद्योगंमात्सरं प्रोक्तं रजसंगुणमुच्यते॥ १-३६॥

आलस्यं मोहनिद्राश्च चापलं ही नवृत्तिकम्।

पापिष्ठं परनिन्दा च तामसं गुणलक्षणम्॥ १-३७॥

गुणानान्तु समावस्था मूलप्रकृतिरुच्यते।

संक्षेपात् त्रिगुणं प्रोक्तं त्रिदोषांश्च शृणुष्वमत्॥ १-३८॥

वातं पित्तंकफञ्चैव रोगाणामधिपा स्मृताः।

सर्वजन्तुषु सामान्यं समंवाधिकमेव च॥ १-३९॥

एवमादीनि चान्यानि संविशेत् सुषिराशयम्।

गर्भाशयगते काले वायुनाभिद्यते यथा॥ १-४०॥

तदा रूपद्वयङ्गत्वा वर्धते तु शनैः शनैः।

पञ्चाहे तु दशाहे तु पत्मपत्रस्थतोयवत्॥ १-४१॥

मासान्ते चाक्षफलवद् विमासां मृफलाकृतिः।

त्रिमासेऽष्टाङ्गुलं दीर्घञ्चतुर्मासे शिरोभवेत्॥ १-४२॥

p. 294) हस्तौ चैव तु पादौ च पञ्चमासे प्रकीर्तितम्।

नखाङ्गुल सपादौ च गुल्भौ च नलकौ तथा॥ १-४३॥

जंघेजानु तथा चोरुकटिस्फिक् जघनं तथा।

स्तनपार्श्वोदरारभ्य कक्षौ वक्षाभुजावुभौ॥ १-४४॥

पादयोर्हस्तयोरेखा ह्यंगुष्ठे नखपर्वगाः।

गलः कर्णौ च जिह्वा च ओष्ठौ दन्ताश्च नासिका॥ १-४५॥

नयनं भ्रूललाटश्च शिरः केशादयस्तथा।

एतान्यङ्गानि सर्वाणि जायते षष्ठमासिके॥ १-४६॥

सप्तमासेन्न पानौ च नाभिनालेन भुज्यते।

प्रसूयते वा तन्मासे वायुना न प्रसूयते॥ १-४७॥

अष्टमासे समुत्थाय वीणादण्डं समाश्रितम्।

संप्राप्याष्टगुणैश्वर्य मणिमादिकमत्र वै॥ १-४८॥

त्रिकालन्तु विजानाति ज्ञानात् सर्वं प्रकाशते।

जायते चाष्टमे मासे जातश्चोत्तमजीवती॥ १-४९॥

जायते नवमे मासे दशमासे तु वा पुनः।

ततस्त्वेकादशे मासे मायया प्रेरितो जनः॥ १-५०॥

बोद्धव्यं शक्तिना काचित् श्रमदाहक्षुधादिकान्।

एवमादीनि वर्द्धन्ते क्रमेणैव शनैः शनैः॥ १-५१॥

तत्र भूत्वान्न वीर्येण वर्धन्ते सप्तधातवः।
अन्नद्रवसमुत्पन्न रसाद्वै श्रोणितं स्मृतम्॥ १-५२॥

श्रोणितान्मांसमुत्पन्नं मांसान्मेदः समुत्भवम्।
मेदसोस्थि समुत्पन्नं तस्मात् मज्जातु संभवम्॥ १-५३॥

मज्जाशुक्लं समुत्पन्न मित्येते सप्तधातवः।
शरीरन्धातुभिः प्राप्तं धातुभिः शब्दराशयः॥ १-५४॥

शब्दादिविषयं ज्ञानं द्विमासोपरिपूर्णके।
पञ्चविंशति तत्त्वानि वक्ष्यते तु समासतः॥ १-५५॥

भूतानि भूतमात्राणि ततो बुद्धिन्द्रियाणि च।
कर्मेन्द्रियाणि विघ्नेश तथान्तः करणानि च॥ १-५६॥

अव्यक्तेन समायुक्तं पञ्चविंशदुदाहृतम्।
पृथिव्यादीनि तत्वानि प्राप्यते त्वखिलान्तनुम्॥ १-५७॥

p. 295) पृथिव्यापस्तथा तेजोवायुराकाश एव च।
महाभूतानि चोक्तानि तेषां भेदं श्रृणुष्वहि॥ १-५८॥

यत् कठिनं तत्पृथिवी यद्रव्यं ह्याप उच्यते।

यदुष्णश्चेत्ततो वह्निर्वायुः सञ्चरति त्विह॥ १-५९॥

अवकाशं यदा काशं महाभूतगणास्त्विमे।

अस्थित्वक्मांसकेशाश्च नाडयस्त्विह कीर्तिताः॥ १-६०॥

पृथिव्यं शास्तथा ज्ञेयास्त्वाप्यंशाश्च ततः शृणु।

कफः शोणितमूत्राणि मज्जाशुक्लन्तथैव च॥ १-६१॥

द्रव्यांशकमिति ज्ञेयं सर्वप्राणि च संस्थितम्।

क्षुधानिद्रा च कृष्णा च आलस्यं मैथुनं तथा॥ १-६२॥

एते पञ्चगुणा प्रोक्ता तेजोंशा इति संस्थिताः।

आस्ते शेते च गमनं प्रसाराणि निरोधनम्॥ १-६३॥

एते पञ्चगुणा प्रोक्ता वाय्वंशा सुप्रकीर्तिताः।

कामक्रोधश्च लोभश्च भयोमोहसथैव च॥ १-६४॥

पञ्चैतेनुगुणा प्रोक्ता व्योमांशास्तु प्रकीर्तिताः।

प्रोक्तं भूतगुणञ्चैवं गुणन्तेषान्तु वक्ष्यते॥ १-६५॥

शब्दस्पर्शञ्चरुपञ्च रसंगन्धञ्च पञ्चधा।

आकाशस्य गुणं शब्दं वायोस्तु स्पर्शनं गुणम्॥ १-६६॥

तेजसस्तु गुणं रूपं रसमापगुणं स्मृतम्।

पृथिव्यास्तु गुणं गन्धं भूमिकादीनि विन्यसेत्॥ १-६७॥

विषयं त्विति विख्यातं भूतानाङ्गुणमुच्यते।

शब्दादिविषयं पुण्यं भूमौ तु विनिवर्द्धते॥ १-६८॥

चतुर्गुणाः प्रवर्धन्ते त्रिगुणस्त्वथ वह्निके।

वायोश्च द्विगुणं प्रोक्तमाकाशस्यैकमेव तु॥ १-६९॥

विषयाणि तथोक्तानि बुद्धिन्द्रियाणि ततः श्रृणु।

श्रोत्रत्वक्चक्षुजिह्वा च घ्राणं बुद्धिन्द्रियाणि च॥ १-७०॥

शब्दादिविषयाणाञ्च साधनन्ते प्रकीर्तितम्।

बुद्धीन्द्रियाणामेतेषां देवभूतात्मकं श्रृणु॥ १-७१॥

p. 296) श्रोत्रमध्यात्ममित्युक्तं श्रोतव्यमधि भूतता।

शिवहस्ताधि दैवन्तु त्वगेवाध्यात्मकं विदुः॥ १-७२॥

स्पर्शनञ्चाधिभूतः स्याद् वायुस्तत्राधिदैवतम्।

चक्षुरध्यात्ममित्युक्तं द्रष्टव्यमधिभूतता॥ १-७३॥

सूर्यस्तत्राधिदैवत्य जिह्वाचाध्यात्मकं विदुः।

रसज्ञात्वधिभूतन्तु वरुणश्चाधिदेवता॥ १-७४॥

घ्राणमध्यात्ममित्युक्तं घ्रातव्यमधि भूतता।

बृहस्पत्यधिदैवञ्च प्रातः शक्तिरिति स्मृतम्॥ १-७५॥

बुद्धीन्द्रियाणि चोक्तानि शृणु कर्मेन्द्रियाणि च।

वागध्यात्मकमित्युक्तं वक्तव्यमधि भूतता॥ १-७६॥

सरस्वत्यधिदैवत्यं वाणिरध्यात्मकं ततः।

दातव्यमधिभूतश्च शक्रस्तत्राधिदेवता॥ १-७७॥

पादमध्यात्मकं प्रोक्तं गमनञ्चाधि भूतता।

शक्राधिदैवतं प्रोक्तं वायुरध्यात्मकं विदुः॥ १-७८॥

* * * मधिभूतः स्यात् मित्रस्तत्राधि दैवतम्।

उपस्थोध्यात्ममित्युक्तमानन्दमधिभूतता॥ १-७९॥

प्राजापत्याधिदैवत्यं क्रियाशक्तिरिति स्मृता।

कर्मेन्द्रियाणि चोक्तानि ततोन्त करणं श्रृणु॥ १-८०॥

मनोहङ्कारबुद्धि च चित्तोन्तः करणं विदुः।

मनोध्यात्ममिति प्रोक्तमन्तव्यमधिभूतता॥ १-८१॥

सोमाधि दैवमित्युक्तो हङ्कारोध्यात्मकं विदुः।

अधिभूतमहंकारं रुद्रमूर्त्यधिदैवतम्॥ १-८२॥

बुद्धिरध्यात्ममित्युक्तं बोद्धव्यमधिभूतता।

क्षेत्रज्ञस्याधिदैवं स्याच्चित्तमध्यात्मकं स्मृतम्॥ १-८३॥

चैतन्यमधिभूतं हि ईश्वरश्चाधिदैवतम्।

मन्यते तंमनो ज्ञात्वा अहङ्कारमहंकृतम्॥ १-८४॥

बोध्यत्वात् बुद्धिरेवं हि चिन्तत्वाच्चित्तमुच्यते।

मनश्च द्विविधं प्रोक्तं चलाचलमिति स्मृतम्॥ १-८५॥

p. 297) अहङ्कारं त्रिधाज्ञेयं भूतवैकारि तेजसम्।

वक्ष्यते तु समासेन भूतसारसमुद्भवम्॥ १-८६॥

शब्दतन्मात्रमादौ तु गन्धतनात्रमर्थके।

एतानि पञ्चमात्राणि भूतानां सृष्टिरुच्यते॥ १-८७॥

स्यात्तैजस अहंकारे इन्द्रियाणि समुद्भवम्।

वैकारिकमहङ्कारे इन्द्रियाणि समुद्भवम्॥ १-८८॥

वैकारिकमहंकारे अधिदेवाः समुद्भवम्।

बुद्धिरष्टविधा ज्ञेया धर्माधर्मादिरष्टधा॥ १-८९॥

चित्तमेक विधं ज्ञेयं तच्चान्तः करणं विदुः।

चतुर्भिरन्तः करणैश्चतुर्विंशतिरुच्यते॥ १-९०॥

उपादानन्तु तेषां वै चाव्यक्तमिति निन्दितम्।

अव्यक्तस्य तु धर्मः स्यात् त्रिगुणं संप्रकीर्तितम्॥ १-९१॥

तामसं राजसञ्चैव सात्विकञ्च तृतीयकम्।
तामसेयान्ति नरकं राजसे स्वर्गमुच्यते॥ १-९२॥

सात्विके मोक्षमित्युक्तं तस्मात् सात्विकमुच्यते।
सात्विके सर्वकर्माणि एक चित्तस्तु सात्विकम्॥ १-९३॥

तस्मात् सर्वप्रयत्नेन सात्विकङ्गुणमाश्रये।
पञ्चविंशति तत्वानि समासात् कीर्तितानि तु॥ १-९४॥

तेभ्य एकादशं तत्वं समासात् च्छृणु सांप्रतम्।
पुंरागोनियती विद्याकलाकलस्तथैव च॥ १-९५॥

शुद्धविद्याशुद्धकला शुद्धमायान्तथैव च।
आत्मतत्वञ्च विद्याञ्च शिवतत्वमतः परम्॥ १-९६॥

एकादशानि तत्वानि शरीरे संस्थितानि तु।
कञ्चुकत्रयमाविश्य शनैः कालेन वित्तमः॥ १-९७॥

आलिंग्यते नियतिना आत्मवद्भावववर्तकः।
प्रकृतिः पौरुषं यस्मान् तस्मात् पुरुष उच्यते॥ १-९८॥

बालार्कशतसाहस्त्र भागैकं तत्र चिद्विदुः।

सञ्जिव इति विख्यातः संसारी चेति चोच्यते॥ १-९९॥

प्रधानादि विशेषान्तं व्यापं वै परिशक्तिना।

कलाशक्तिरितिख्याता चानमु?क्तैस्तु कारणा॥ १-१००॥

p. 298) धर्माधर्माधिसंबन्धा दाणवं सहजं स्मृतम्।

इत्येवमादि संबन्धाच्छरिरेषु व्यवस्थिताः॥ १-१०१॥

संबन्धास्तस्य जीवस्य दुःखत्रयमिहोच्यते।

आध्यात्ममधिभूतञ्च अधिदैविकमेव च॥ १-१०२॥

त्रिविधं दुःखमाप्नोति तेषामाध्यात्मकं शृणु।

आध्यात्मकं द्विधाप्रोक्ता शरीरं मानसं तथा॥ १-१०३॥

गुल्मारशोति सारञ्च ज्वरशूलाद्यनेकधा।

नरमृगपिशाचैश्च गोपक्षीचोरराक्षसैः॥ १-१०४॥

प्रोक्तं शरीरकं दुःखं मानसं शृणु सुव्रत।

शोकासूयावमानेर्ष्या मासाध्यादिभिरेव च॥ १-१०५॥

एवं मानसमाख्यातमाधिभौतिकमुच्यते।
शीतोष्णवातवर्षैश्च विद्युदाशनिमारुते॥ १-१०६॥

एतैर्भूतैस्तु जन्दुःखमाधिदैविकमुच्यते।
गर्भजन्मजरा ज्ञानमृत्युर्नरकजं तथा॥ १-१०७॥

प्रोक्तं दुःखत्रयं ह्येवमेषु स्थानेषु भूज्यते।
ततोदराग्निना गर्भे मातृशीलेन बाध्यते॥ १-१०८॥

गर्भात् कोटिगुणं दुःखं योनि यंत्रे प्रपिडनम्।
एवमादीनिदुःखानि शरीरीभुज्यते क्रमात्॥ १-१०९॥

जाग्रत् स्वप्नं सुषुप्तिश्च तुर्यावस्था ततः श्रृणु।
इन्द्रियाणि गताबुद्धिः कृत्वा कर्माण्य शेषतः॥ १-११०॥

करणी यानि सर्वाणि दृश्यन्ते जाग्रदेव तु।
करणानि चेंद्रियाणि बध्वावै वाश्रयं भवेत्॥ १-१११॥

निद्रामाश्रयते बुद्धिर्मन्यते पूर्वकर्मकम्।

एवं स्वप्नं विजानीयात् सुषिप्तिञ्च ततः श्रृणु॥ १-११२॥

करणानि गृहीत्वा तु बुद्धिश्चैतन्यमागता।

तदाश्रये तु काले तु कर्माण्य प्रतिबुध्यति॥ १-११३॥

सुषिप्तिरिति विख्याता तुरीयं करणं विना।

जाग्रोमुखगतो जीवस्वप्ने कर्णं समाश्रितः॥ १-११४॥

p. 299) सुषुप्तौ हृदमाश्रित्य तुर्ये सर्वगत स्मृतः।

एवं व्यवस्थितो देहे नाडयश्च तत श्रृणु॥ १-११५॥

नाभिमूलन्तु हृन्नाल नाडयश्चक्रवत् तथा।

तिर्यगूर्ध्वमधश्चैव व्याप्तितातैस्तु सर्वतः॥ १-११६॥

चक्रवत्संस्थिता ह्येताः प्रधानश्चाष्टविंशतिः।

तेषु प्रधानभूतास्तु इडादिदशनाडयः॥ १-११७॥

इडयाविमाशोषा पृथिवी आपनी तथा।

तेजोवती वायुवी च गमनीमर्दनी तथा॥ १-११८॥

रोदनीरक्तवागि च मृद्वंगी श्रिंगिणी तथा।

शब्दा स्पर्शा च पूर्णा च सद्रूपारसधारिणी॥ १-११९॥

सर्वाङ्गेषु स्थिता ह्येता प्रधानाश्चाष्ट विंशतिः।

तासुनाडीषु चान्तस्थाः प्राणादि दशवायवः॥ १-१२०॥

प्राणापानस्तथाव्यान उदानश्च समानकः।

नागकूर्माश्चक्रकरो देवदत्तोधनञ्जयः॥ १-१२१॥

दशप्राणा इति प्रोक्ता वायवः समुदहृताः।

वायूनान्तु नवानाञ्च प्रभुः प्राणप्रकीर्तिताः॥ १-१२२॥

निश्वासोछ्वासकासैश्च प्राणीनामुदरे स्थिताः।

इन्द्र निलप्रतिकाशप्राणरूपसुकीर्तिताः॥ १-१२३॥

नादसंयुक्त जीवान्त जीवमाश्रित्य नित्यशः।

स्थान हृन्नाभिनासाग्रं पादाङ्गुष्ठान्तमाश्रितः॥ १-१२४

॥

अपान पृष्ठमाश्रित्य वामदक्षिणनिर्गमम्।

प्राणस्य लक्षणं प्रोक्तमपानञ्च ततः शृणु॥ १-१२५॥

अपानो जीवमाश्रित्य तद्वर्णश्चैंद्रकोपवत्।

स्थानन्तु मेढ्रमुले तु गुदमूलन्तु निर्गमम्॥ १-१२६॥

नाभेरधस्तात् स्थानन्तु मेढ्रमूले तु निर्गमम्।

पुरीषोत् सर्गमात्रादि प्राणापानाश्च निर्गमम्॥ १-१२७॥

प्राणापानोपहे नित्यं शरीराख्यं महारथम्।

दीपान्तस्थ प्रभु प्राणोरक्षाङ्कृत्वा महामनुम्॥ १-१२८॥

p. 300) व्यानं सकलमाश्रित्य स्पर्शादीनी प्रबोधकः।

गोक्षीरसमवर्णं स्यात् स्थानं सर्वाङ्गसन्धिषु॥ १-१२९॥

उदानच्छक्तिरोगाणामुद्भवन्तत्र कारयेत्।

विद्युत्पावक सङ्काशान्तस्य वर्णं प्रकीर्तितम्॥ १-१३०॥

स्थानं पार्श्वौ च कर्णौ च चक्षुषोर्घ्राणयोस्तथा।

समान वायोर्वर्णन्तु अतसी कुसुमप्रभम्॥ १-१३१॥

स्कन्धे मूर्धनि जिह्वाश्च जंघयोर्गुल्भयोस्तथा।

अन्नपानरसन्नित्वा चा पादतलमस्तकम्॥ १-१३२॥

अशेषानन्नपानादीन्वैश्विनराग्नि संयुतम्।

तत्रा शयाख्य कुण्डे तु हुतं तत्रैव कारयेत्॥ १-१३३॥

तत्र नागसुवर्णन्तु मार्ताण्डोदय सन्निभम्।

हित्काञ्चरोमहर्षादिन् गेयभक्तिञ्च कारयेत्॥ १-१३४॥

उदयञ्च ललाटञ्च स्थानन्नासादि चासनम्।

कुन्दपुष्पसमाकारं कूर्मवायोः प्रकीर्तितम्॥ १-१३५॥

नेत्रपक्षौ तु संप्राप्य निमीलोन्मीलनङ्कुरु।

कृकरस्य तु वर्णं स्यात् भिन्नाञ्जनसमप्रभम्॥ १-१३६॥

क्षुधादिकुरुते नित्यं नासाग्रे तु व्यवस्थितम्।

देवदत्तस्य वर्णं स्यात् शुद्धस्फटिक सप्रभम्॥ १-१३७॥

मुखं पृष्ठञ्च पादञ्च पार्श्वञ्चैव विशेषतः।

उत्थाप्यशयनासीनं विज्रंभणमतः परम्॥ १-१३८॥

धनञ्जयस्य वर्णस्यां नीलाञ्जनसमप्रभम्।

धनञ्जयस्थितो देहममृतस्यापिमुञ्चति॥ १-१३९॥

पश्चात् तु ब्राह्मणं कृत्वा शरीरं भिद्यते गतः।

इत्येते दशवायूनां प्राणादीनां प्रचक्षते॥ १-१४०॥

इडादिनाडयस्तत्र शरीरेव्या प्रतस्तथा।

नाडीमध्ये ततो वायुः सञ्चरेत् क्रमशस्तथा॥ १-१४१॥

कुण्डल्याख्या महानाडी नाभिमध्ये प्रकीर्तिताः।

अष्टवर्तुलमेवन्तु कुण्डलीनाडिसुप्तवत्॥ १-१४२॥

नाभेरूर्ध्वं भवेत् पद्मं तटाकाब्जं तु पुष्पवत्।

तस्य मध्ये स्थितो जीवः सूर्यकोटिसमप्रभः॥ १-१४३॥

p. 301) तस्यान्तस्थं समाख्यातं सूर्यसोमाग्निकुण्डलम्।

तेषां मध्ये स्थितो देवः सूर्यायुतसमप्रभम्॥ १-१४४॥

वामपार्श्वे इडानाडी पिंगलादक्षनाडिका।

सुषुम्ना मध्यमे चैव यावदङ्गुष्ठकान्तका॥ १-१४५॥

गान्धारी दक्षिणे नेत्रे हस्ति जिह्वा च वामके।

पूषा वै दक्षिणे कर्णे वामकर्णे यशस्विनी॥ १-१४६॥

अलंपुष्पन्तु मेढ्रन्तु कुहूश्चैव गुदे स्थिता।

शखिनी नासिमध्ये तु दशनाडी ह्यवस्थिता॥ १-१४७॥

अशेषानाडयः सर्वाश्चक्रवद् व्यावृतस्तनुम्।

चक्रवद् वा वृतोयस्मान् नाडीचक्रमिहोच्यते॥ १-१४८॥

नाडीचक्रमिदं प्रोक्तं कालचक्रमथ श‍ृणु॥

इति नाडीचक्रविधिपटलः प्रथमः॥ १॥

अथ कालचक्रविधिपटलः

अथातः संप्रवक्ष्यामि कालचक्रस्यलक्षणम्।

कालञ्च कुरुते यस्मात् कालमेवमुदाहृतम्॥ २-१॥

प्राणीनाञ्चैव देवानां विनाशोत्पत्तिकारणम्।
अमूर्तिं कालमाख्याता दृष्वादष्टन्तु लक्षणम्॥ २-२॥

त्रिविधं कालमाख्यातं शिवेन परिभाषितम्।
सृष्टिकालं स्थितिकालं संहारञ्चेति कीर्तितम्॥ २-३॥

शिवाद्यवनि पर्यन्तं सृष्टिरेवमुदाहृतम्।
या स्थितिः सर्वभूतानां शिवाद्यानन्तक स्थितम्॥ २-४॥

पृथिव्यादि शिवान्ताये लयङ्गच्छेत् परापरम्।
तदा संहारमेवोक्तं त्रिविधं कालनिर्णयम्॥ २-५॥

त्रिषुकालेषु वर्तन्तेतीतानां गमं ततः।
वर्तमानाख्यकं कालमुच्यते वै पृथक् पृथक्॥ २-६॥

p. 302) यदा शेषं समाप्तन्तु तदा तीतमिति स्मृतम्।
सापेक्षकञ्च यत्काले तदा नागतमुच्यते॥ २-७॥

असमाप्तं यदारब्धं वर्तमानमुदाहृतम्।

तत्कालमव बोद्धव्यं देवादीनामुदाहृतम्॥ २-८॥

युगपत् सृष्टि संहारौ स्थितिकाले निवर्तते।

केचित् कालात् सृजन्त्येव केचित् कालात् भ्रमन्ति च॥ २-९॥

मनुष्य पितृदेवानां कालसंख्यान्ततः श्रृणु।

कालञ्च द्विविधं प्रोक्तं स्थूलं सूक्ष्मन्तथैव च॥ २-१०॥

मौक्तिकं (मौकिकं) स्थूलमाख्यातं योगिनां

सूक्ष्ममेव च।

स्थूलञ्च द्विविधंवत्स चंद्रादित्यस्य चारणम्॥ २-११॥

चंद्रस्य वर्तनाकालोमनुष्याणां प्रकीर्तितम्।

सूर्यस्य वर्तनाकालो देवानान्तु प्रकीर्तितम्॥ २-१२॥

कालचक्रे तु वर्तन्ते भास्करादि ग्रहास्थथा।

द्वादशारयुते चक्रे मेषाद्याराशयोरवेः॥ २-१३॥

पट्टिकायाञ्च नाभौ च मध्ये वायुः प्रकीर्तिताः।

मेरुमूर्ध्निगतश्चक्रं ब्रह्माण्डे संव्यवस्थितम्॥ २-१४॥

कुलालचक्रवन्नित्यं भ्रामस्तत्रैव देवताः।

मेरुं प्रदक्षिणं कृत्वा नक्षत्राणि ग्रहाणि च॥ २-१५॥

सूर्योदयास्तमायान्तमहरेवंविदुर्बुधाः।

अस्तमयादुदयान्तं निशा चैवमुदाहृतम्॥ २-१६॥

अहर्निशिद्वयोपेतमहोरात्रमिति स्मृतम्।

दिवाप्रातरहश्चैव प्रोक्तः पर्यायवाचकाः॥ २-१७॥

शर्वरीरजनीसायं निशिनक्तन्तु रात्रिकम्।

हायादि देवतानान्तु पितृणां प्रातरादिकम्॥ २-१८॥

मनुष्याणामहोरात्रमितिशास्त्रेसु निश्चितम्।

मनुष्याणां हितार्थाय सर्वसंपत्कराय च॥ २-१९॥

पूर्वाह्णे चैव मध्याह्ने चापराह्णेर्धयामके।

तस्मात् सर्वप्रयत्नेन चतुःसन्धिषु पूजयेत्॥ २-२०॥

यामं प्रतिविशेषेण पूजयेदष्टसन्धिषु।

यामार्धं सन्धिरित्युक्तमहोरात्रन्तु पूजयेत्॥ २-२१॥

p. 303) मनुष्याणां दिनं प्रोक्तं पञ्चपञ्चदशाहकः।

पक्षद्वयिशुक्लपक्षः कृष्णपक्षस्तथैव च॥ २-२२॥

एकराशिगतौ यत्र चन्द्रादित्यौ सहैव तु।

तत्रामावास्याचेत्युक्तं तत्पक्षं शुक्लमुच्यते॥ २-२३॥

सप्तराशिगतश्चंद्रं तत्र पूर्णकलामतः।

पौर्णमासी ततः प्रोक्तः कृष्णः पञ्चदशाहकः॥ २-२४॥

पक्षद्वयं तथा मासोमासाद्वादशवत्सरम्।

वर्षश्चैवाब्द पर्याय वाचकाः परिकीर्तिताः॥ २-२५॥

शताब्दन्तु मनुष्याणामायुष्यं समुदीरितम्।

मृगाणां सर्वजातीनां शताब्दायुः प्रकीर्तितम्॥ २-२६॥

नराणाञ्चैव चायुष्यं शतञ्चैव प्रकीर्तितम्।

एवमुक्तं मनुष्याणां पितृकालं ततः श्रृणु॥ २-२७॥

मनुष्याणामहोरात्रं पितृणां घटिका भवेत्।

त्रिंशत्घटिमहोरात्रं शुक्लपक्षन्तु वासरम्॥ २-२८॥

निशिकृष्णं विजानीयात् पितृणां तदहर्न्निशम्।

पूर्वसन्धिरमावास्या मध्याह्नश्चाष्टमी भवेत्॥ २-२९॥

पौर्णमास्यपराह्नन्तु अष्टमीचार्धयामकम्।

दिवसैर्द्वादशैर्मासं मासैर्द्वादशवत्सरम्॥ २-३०॥

अमावास्यान्तु या पूजा पितृणान्तु प्रसादद।

पितृकालमिदं प्रोक्तं मनुष्याणां हिताय वै॥ २-३१॥

देवानां वक्ष्यते कालस्तुट्यादि प्रलयान्तकम्।

तुटिलवनिमेषाश्च काष्ठा चैव कला तथा॥ २-३२॥

क्षणं मुहूर्तं घटिका सन्धिर्यामस्त्वहर्निशि।

दिवसः पक्षमासौ च ऋतुस्त्वयनवत्सराः॥ २-३३॥

युगमन्वन्तरौ कल्पं महाकल्पप्रलयस्तथा।

तुट्यादिप्रलयान्तञ्च लक्षणं श्रृणु सांप्रतम्॥ २-३४॥

स्वस्थान राक्षिकोन्मील उन्मीलन्तु निमेषकम्।
निमेषस्य चतुर्भागन्तुटीरेवमुदाहृतम्॥ २-३५॥

तुटिद्वयलवं विद्धि लवद्वयनिमेषकम्।
निमिषोदश पञ्चैव काष्ठाः सा त्रिंशतिः कला॥ २-३६॥

p. 304) कलार्धस्तु क्षणं प्रोक्तं क्षणद्वयं मुहूर्तकम्।
तदर्द्धं घटिका प्रोक्ता सर्वकार्यन्तया कृतम्॥ २-३७॥

सत्रिपादत्रिघटिका सन्धिरित्युच्यते बुधैः।
सन्धिद्वयन्तथायाम चतुर्यामन्दिवा स्मृतम्॥ २-३८॥

तदहर्मात्र विज्ञेय महोरात्रं दिनं स्मृतम्।
दिनपञ्चदशः पक्षो मासः पक्षद्वयं तथा॥ २-३९॥

पूर्वपक्षोपरश्चैव तौपक्षद्वयमुच्यते।
मासद्वयं ऋतुः प्रोक्तमयनं वै ऋतुस्त्रयम्॥ २-४०॥

अयनद्वयमब्दं हि अहोरात्रन्तु दैविकम्।
देवानान्तु दिवाप्रोक्तं मकरादि ऋतुस्त्रयम्॥ २-४१॥

ऋतुस्त्रयं कुलीरादि निशि चैवमुदाहृतम्।
संक्रान्ति विषुवे चैव अयने च प्रकीर्तिताः॥ २-४२॥

अन्यराशि गते भानौ राशिमध्ये तु संक्रमः।
तुलामेषगते सूर्ये विषुवे तत्प्रकीर्तितौ॥ २-४३॥

कुलीरेमकरे प्राप्ते दक्षिणश्चोत्तरायणम्।
उत्तरायण संक्रान्तिः पूर्वाह्णमिति कीर्तितम्॥ २-४४॥

चैत्रे विषु च मध्याह्ने अपराह्णे तु दक्षिणे।
अश्वयुक् विषुवं प्रोक्तं देवानामर्धरात्रिकम्॥ २-४५॥

चतुः सन्धिषु तस्माद्वै देवेशेषं प्रपूजयेत्।
नित्यसन्धिर्मनुष्याणां पितृणामाससन्धिकम्॥ २-४६॥

अब्दसन्धिषु देवाश्च पूजयेत् तु यथा विधि।
इत्थं भूतमहोरात्रं देवानां तु प्रकीर्तितम्॥ २-४७॥

प्रोक्तमब्द् क्रमं ह्येवं युगमानन्तु वक्ष्यते।

अण्डजाति युगाद्यैव केचित् शास्त्रे प्रकीर्तिताः॥ २-४८॥

चतुर्युगन्तु शास्त्रे तु शिवेन परिभाषितम्।

तृतयुगन्तु त्रेता च द्वापरन्तु कलिस्तथा॥ २-४९॥

कृतश्चतुः सहस्राब्दं सन्धिरष्टशतं भवेत्।

सन्ध्याशतं तथा ज्ञेयस्त्रेतार्ध पादहीनका॥ २-५०॥

p. 305) चतुःशतः सहस्रो वा द्वापरश्चेति कीर्तिताः।

कलियुगञ्च ऊर्धस्थो वर्धते तु पुनः पुनः॥ २-५१॥

एतैर्द्वादशसाहस्रैरब्दैरेव चतुर्युगाः।

सप्तत्येक समावर्त्यामन्वन्तरमिहोच्यते॥ २-५२॥

अशीति सहस्रैर्वर्षैः पञ्चाशद्विसहस्रकैः।

दिव्यसंवत्सरेणैव ज्ञेयमन्वन्तरं तथा॥ २-५३॥

स्वायंभुवमनुः पूर्वं स्वारोचिषमतः परम्।

उत्तमंरैव तञ्चैव तापसञ्चक्षुषं तथा॥ २-५४॥

वै वस्वतञ्च सा वर्णमेरु सा वर्णमेव च।
दक्ष सा वर्णमेवं हि ब्रह्म सा वर्णमेव च॥ २-५५॥

रुद्र सा वर्णमित्युक्तं रौल्यंभौत्यञ्चतुर्दश।
इत्येवन्तवसं क्षेपात् मनवः परिकीर्तिताः॥ २-५६॥

नाभिकल्पन्तु तत्कालं ब्रह्मणोयदि भावयेत्।
पञ्चैव कालमेवञ्च कल्पं ब्रह्मादि वा भवेत्॥ २-५७॥

कल्पमेवं समाख्यातं महाकल्पं ततः शृणु।
त्रयस्त्रिंशच्च देवाद्यास्त्रिशतं त्रिसहस्रकम्॥ २-५८॥

देवानां लयमित्युक्तं तद्रात्रौ तु प्रकल्पयेत्।
ब्रह्मणस्तदहोरात्रं तदा चेन्द्रालयं भवेत्॥ २-५९॥

शतत्रयं षष्टिदिनं ब्रह्मवर्षमुदाहृतम्।
षष्टित्रिंशच्च चक्राणां लयं तत्र पुनः पुनः॥ २-६०॥

तेन वत्सरमानेन शताब्दं ब्रह्मणोलयम्।

यावत्ब्रह्मलयं तावद् विष्णोस्तु तदहर्न्निशि॥ २-६१॥

ब्रह्मणात्रिशतं षष्टि लयंतत्र पुनः पुनः।

तेनमानेन बोद्धव्या शताब्दमीश्वरस्य तु॥ २-६२॥

ईश्वरस्तु लयं यत्तु निमेषं हि सदाशिवे।

ततो वृघ्याशतं वर्षात् सदाशिवलयं स्मृतम्॥ २-६३॥

बिन्दोर्नादस्य तद्वंशात् लयं तत्रैव चोच्यते।

नादमूर्तिलयं यावच्छक्ताच्छक्तेर्दिनं तथा॥ २-६४॥

p. 306) दिनवृघ्याशतं कान्त तावच्छक्ति स्थितः सदा।

यदा शक्तेर्लयं विद्धि यावत् परदिनं तु यत्॥ २-६५॥

तत्सङ्ख्यानिशताब्दन्तु परस्यैवलयं भवेत्।

प्रथमं शक्तिकं शान्तं शिवः पर्यायवाचकः॥ २-६६॥

परापरस्य तं ज्ञातं विनाशोत्पत्तिकारणम्।

देवानां कालमित्युक्तं तत्वानां कालमुच्यते॥ २-६७॥

पृथिव्यादि शिवान्तञ्च सत्वकालं प्रकीर्तितम्।
ईश्वरस्य लयं यावदात्मनस्तुलयं भवेत्॥ २-६८॥

सदाशिवलयं यावत् नादान्तं लयमेव च।
ततः शक्तेर्लयं यावल्लयङ्गच्छेच्छिवान्तकम्॥ २-६९॥

तत्वानां लयमेवोक्तं सूक्ष्मकालं ततः श्रृणु।
श्वासैस्तु त्रुटिभिः प्राणो घटिका प्राणषङ्कके॥ २-७०॥

अहोरात्रं ततः षष्टि घटिकादिर्विशेषतः।
पूर्ववद्दिनवृध्या तु पक्षादीनि विवर्धयेत्॥ २-७१॥

सूक्ष्मकालेन योगेन देव ब्रह्मादिकालयः।
ज्ञानिनां योगिनाञ्चैव सूक्ष्मकालं प्रकीर्तितम्॥ २-७२॥

कालचक्रमिदं प्रोक्तमाधाराधेयकं श्रृणु।

इति कालचक्रविधिपटललो द्वितीयः॥ २॥

अथ आधाराधेयविधिपटलः

अथातः संप्रवक्ष्यामि आधाराधेयलक्षणम्।

आधारं स्थानमित्युक्तमाधेयमधि दैवतम्॥ ३-१॥

आधाराधेय संबन्धाद्योगमित्यभिधीयते।

योगं बहुविधं वत्स आधाराणां बहुत्वतः॥ ३-२॥

योगिनां योगमित्युक्तं ज्ञानिनां ज्ञानमेव च।

वक्ष्येहमधुनायोगं संक्षेपान्नतु विस्तरात्॥ ३-३॥

p. 307) योगिनां साधकं पूर्वं मच्छृणुष्व हि साधके।

प्रथमञ्चासनञ्चैव द्वितीयं योगपट्टिका॥ ३-४॥

तृतीयमक्षमाला च वेणुदण्डश्चतुर्थकम्।

कमण्डद्द विजानीयात् पञ्चमन्तु विशेषतः॥ ३-५॥

तेषान्तु लक्षणं वक्ष्ये चासनं कूर्मवत् कृतम्।

खादिरोदेवदारू च मधुको बिल्व एव च॥ ३-६॥

अथवा याज्ञिकै वृक्षैः कृत्वा कूर्मासनं तथा।

पादोनं वा तदर्द्धं वा त्रिविधं त्वासनं तथा॥ ३-७॥

दर्पणोदरसङ्काशमधस्तादवदं तथा।

आसनं त्वेवमाख्यातं योगाभ्यासे विनायक॥ ३-८॥

व्याघ्राजीनं तु प्रधमा कृष्णाजिनं द्वितीयकाः।

अथवा तन्तुना कार्या त्रिविधायोगपट्टिका॥ ३-९॥

विस्तारन्त्र्यङ्गुलं प्रोक्तं नमानमुपवीतवत्।

जपमालाशिरोमाला हृंमाला बाहुमालका॥ ३-१०॥

कर्णपृष्ठात् तु नाभ्यन्ता उरोमाला इति स्मृताः।

शिरोमाला तु तन्नाहा भुजमालाभुजासमा॥ ३-११॥

जपमालां समानेन संख्यामात्रं श्रृणुष्व हि।

पञ्चविंशति रुद्राक्षैर्मोक्षार्थिनाञ्जपं स्मृतम्॥ ३-१२॥

षड्विंशति शिवार्थञ्च ज्ञानार्थं शत्रुनाशनम्।

सप्तविंशति इत्यर्थं पुष्ट्यर्थमष्टविंशतिः॥ ३-१३॥

त्रिंशज्जयार्थिनां कार्यं दशपञ्चाभिचारकः।

जपमालासमाख्याता जपमालाविधिं श‍ृणु॥ ३-१४॥

प्रणवं सर्वमन्त्रेषु सर्वमुच्चार्यते यतः।

प्रणवं संप्रवक्ष्यामि संक्षेपान्न तु विस्तरात्॥ ३-१५॥

अकारञ्च उकारञ्च मकारं बिन्दुरूपकम्।

अकारं ब्रह्मदैवत्यमुकारं विष्णु दैवतम्॥ ३-१६॥

मकारं रुद्र दैवत्यं बिन्दोरीश्वर एव हि।

नादं सदाशिवं प्रोक्तमित्येते अधिदेवताः॥ ३-१७॥

p. 308) अकारं तु हृदिस्थानं उकारं कर्णदेशकम्।

ताद्द मध्यं मकारं स्यात् बिन्दोश्चैव ललाटकम्॥ ३-१८॥

तस्योपरि च नादस्य स्थानं ह्येवं प्रकीर्तितम्।

अकारादि त्रयोवर्णास्त्वनुस्वार विसर्गकौ॥ ३-१९॥

पञ्चवर्णाः प्रशस्यन्ते अकाराक्षर संभवाः।

* * * * * * * * उकाराद्यापि संभवा॥ ३- २०॥

कादिभामक्षिकारेता यकारान्यस्तु बिन्दुके।

जाताना देशकारान्यास्त्वेते पञ्चाशति स्मृताः॥ ३-२१॥

प्रणवं सर्ववर्णाख्यं सर्वदेवमयं विदुः।

ऋषिः सनत्कुमारस्तु ओंकारः शुक्लवर्णकः॥ ३-२२॥

गायत्रीच्छन्द इत्युक्तं तस्य वै शिवतत्वकः।

ओमित्येकाक्षरं * * * * * * * * वा हिनाम्॥ ३-२३॥

प्रणवन्तु समास्योक्ता स्मृतपञ्चाक्षरं शृणु।

नमःशिवाय पञ्चार्णमेतत् पञ्चाक्षरं स्मृतम्॥ ३-२४॥

वाचिकायस्तु विज्ञेयस्तद्वाच्यस्य शिवः स्मृतः।

जपं शक्तिप्रदंशस्तं मल्लयोमुक्तिरिष्यते॥ ३-२५॥

ऋषिच्छन्दोवर्णतत्वा देवतास्तु शृणु क्रमात्।

काश्यपः कौशिकश्चैव भारद्वाजस्तु गौतमः॥ ३-२६॥

आत्रेयस्तु न कारादि मुनयः क्रमशस्तथा।

अनुष्टुप् त्रिष्टुप् ब्रहति जगत्यति जगत्यपि॥ ३-२७॥

च्छन्दांसिहि समाख्याता वर्णाद्यैश्चक्रमाच्छृणु।

रक्तं कृष्णन्तथा श्यामं पीतं स्फटिकसन्निभम्॥ ३-२८॥

पृथिव्यादीनि तत्वानि तेषां तत्वं प्रकीर्तितम्।

सद्यादि पञ्चवक्त्राणि तेषां देवाः प्रकीर्तिताः॥ ३-२९॥

प्रणवेन समायुक्तं जपकाले तथोच्यते।

तदा षडक्षरं प्रोक्तं स्त्रीशूद्रादैस्तु वर्जितम्॥ ३-३०॥

जपश्चतुर्विधं प्रोक्तं सर्वेषां जपकांक्षिणाम्।

मानसश्चैव कण्ठेष्यमुपांशु व्यक्तमेव च॥ ३-३१॥

p. 309) व्यक्तंदशगुणोपांशु स्तस्मात् कण्ठेष्यकं शतम्।

सहस्रं मानसं तस्मादङ्गुल्यादि जपं शृणु॥ ३-३२॥

अङ्गुल्या जपसंख्यातु तुल्या एकफलं तथा।

पर्वणाष्टगुणं प्रोक्तं दीपेशतगुणाधिकम्॥ ३-३३॥

शतसङ्ख्याकुशग्रन्थी प्रवालैस्तु सहस्रकम्।
मणिभिर्दशसाहस्रं मौक्तिकैर्ल्लक्षमुच्यते॥ ३-३४॥

पद्माक्षैः कोटिगुणितं रुद्राक्षैस्तु न विद्यते।
रुद्राक्षैस्तु ततोत्पत्तिं श्रृणुत्वं वक्ष्यतेऽधुना॥ ३-३५॥

दिव्यवर्षसहस्रन्तु चक्षुरुन्मीलितं मया।
मुञ्चन्ति मम नेत्राणि श्रितरुद्राक्षमुच्यते॥ ३-३६॥

एकवक्रं शिवः साक्षादनन्तन्धारणे फलम्।
सन्धार्यमृयते यस्तु सयाति परमाङ्गतिम्॥ ३-३७॥

द्विवक्रं शक्तिरित्युक्तं त्रिवक्रं नादमेव च।
चतुर्वक्रन्तु बिन्दु स्यात् पञ्चवक्रं सदाशिवम्॥ ३-३८॥

षड्वक्रमीश्वरं प्रोक्तं रुद्रः सप्तमुखं स्मृतम्।
अष्टवक्रं स्मृतो विष्णुर्नववक्रश्चतुर्मुखम्॥ ३-३९॥

नववक्त्रैकवक्त्रान्तं फलं शतगुणोत्तरम्।
हस्ते कर्णेशिखेकण्ठे सन्धार्यं सहभस्मना॥ ३-४०॥

सर्वपापात् प्रमुच्यन्ते शिवसायुज्यमाप्नुयात्।
दर्शनं पापनाशन्तु स्पर्शनं सर्वसिद्धिदम्॥ ३-४१॥

सर्वाङ्गधारणात् पुण्यं रुद्राक्षं धारयेत् सदा।
प्रयाणकाले रुद्राक्षं भक्षयित्वा मृयन्ति ये॥ ३-४२॥

ते रुद्र पदमाप्नोति पुनर्जन्म न विद्यते।
तस्मात् सर्वप्रयत्नेन जप्यं रुद्राक्षकैः सदा॥ ३-४३॥

जपकालञ्च देशञ्च वक्ष्यते तु समासतः।
पूर्वाह्ने चैव मध्याह्ने चापराह्नेर्धरात्रिके॥ ३-४४॥

p. 310) चतुष्कालं त्रिकालं वा तद्देशन्तु ततः श्रृणु।
नदीतटाकतीरे वा गोष्ठे देवालयेपि वा॥ ३-४५॥

वने वाथ गिरौ देशे पुण्यस्थाने ग्रहे जपेत्।
देशमेवं समाख्यातं जपसंख्यां ततः श्रृणु॥ ३-४६॥

सहस्त्रं वा तदर्धं वा तदर्धं वा शताष्टकम्।

जपेन् नित्यं सदायोगी सर्वपापविनाशकृत्॥ ३-४७॥

सयाति जपमात्रेण शिवलोकमथाक्षयम्।

जपसंख्या विधिप्रोक्तो वेणुदण्डविधिं श्रृणु॥ ३-४८॥

विप्राणान्तु शिरोत्सेधं क्षत्रियाणां ललाटके।

वैश्यानां नासिकोत्सेधं शूद्रादीनान्तु वर्जयेत्॥ ३-४९॥

वेणुदण्डमृजुं स्निग्धं वक्रकोटरवर्जितम्।

दण्डस्यैव विधिः प्रोक्ता कमण्डलु विधिं श्रृणु॥ ३-५०॥

पूरितश्चाढकैः श्रेष्ठं मध्यं त्रिप्रस्थपूरितम्।

द्विप्रस्थपूर्णमधमं मानमेवं कमण्डलोः॥ ३-५१॥

सौवर्णं रजतं वापि ताम्रं वा मृण्मयं तु वा।

यदुक्तं शिल्पशास्त्रेषु तत्तदुक्ता तु कारयेत्॥ ३-५२॥

शैवाना साधनं प्रोक्तं पञ्चधा समुदाहृतम्।

योगाष्टकांगौ वक्ष्यामि श्रृणुष्वेकाग्र मानसः॥ ३-५३॥

यमनियमासनञ्च प्राणायामं ततः परम्।

प्रत्याहारञ्च ध्यानञ्च धारणा च समाधिकम्॥ ३-५४॥

अष्टाङ्गमिति विज्ञेयं योगिनां योगसाधनम्।

अहिंसा सत्यमस्तेयं ब्रह्मचर्यपरिग्रहम्॥ ३-५५॥

यमन्तु पञ्चधा प्रोक्तं नियञ्च ततः श्रृणु।

शौच सन्तोषकात्तच्च तपःस्वध्यायमेव च॥ ३-५६॥

ईश्वर प्रणिधानञ्च नियमं पञ्चधा स्मृतम्।

गोमुखं स्वस्तिकञ्चैव पद्मञ्चैवार्धचन्द्रकम्॥ ३-५७॥

वीरयोगासनञ्चैव षड्विधश्चासनं स्मृतम्।

वामजानूपनिन्यस्य दक्षिणज्ञानुमण्डलम्॥ ३-५८॥

p. 311) द्वयोः पादतले चैव न्यसेत् द्वौपृष्ठ पार्श्वयोः।

एवं कृत्वा तु सुस्निग्धं गोमुखीलक्षणान्वितम्॥ ३-५९॥

ऊरूपार्श्वे तलौ न्यस्त्वा जंघामघ्नन्तु स्वस्तिकम्।

ऊरूपरितले न्यस्त्वा पद्मासनमिहोच्यते॥ ३-६०॥

गुल्फत्रयं समं कृत्वा तलेगुह्ये च विन्यसेत्।

अर्द्धचन्द्रं समाख्यातं वीरासनं ततः श्रृणु॥ ३-६१॥

द्विभुजं पतितं वामपादं दक्षिणतोपरि।

स्थिरं वीरासनं प्रोक्तं योगासनं ततः श्रृणु॥ ३-६२॥

शरीरज्ञानु संबन्धं योगपट्टिकया वृतम्।

कूर्परौ चैव विन्यस्तं योगासनमिहोच्यते॥ ३-६३॥

कृत्वा चैवैकमेतेषां ततो योगं समाचरेत्।

योगाभ्यासस्य पूर्वं तु प्राणायामत्रयं कुरु॥ ३-६४॥

रेचकं पूरकञ्चैव कुंभकं योगमभ्यसेत्।

योगाभ्यासस्य पूर्वं तु प्राणायामत्रयं कुरु॥ ३-६५॥

रेचकं पूरकञ्चैव कुंभकञ्च द्वितीयकम्।

रेचकं रविबिंबं स्यात् पूरकं चन्द्रमण्डलम्॥ ३-६६॥

आग्नेयं कुंभकं ज्ञेयं सकायोध्यान पूजयेत्।
रेचनाद्रेचकं प्रोक्तं पूरणात्पूरकं ततः॥ ३-६७॥

कुंभकन्तु निरोधेन प्रणवेनाभ्यसेत्त्रयम्।
रेचकात् द्वादशं मात्रं तन्मात्रं पूरकं स्मृतम्॥ ३-६८
॥

कुंभकं द्वादशं मात्रमिहशास्त्रे तु निश्चितम्।
रेचकं ब्रह्मदैवत्यं पूरकं विष्णुदैवतम्॥ ३-६९॥

कुंभकं रुद्रदैवद्यमधि देवास्त्रयं स्मृतम्।
रेचकं पूरकश्चैव योगिनान्तु अहर्निशि॥ ३-७०॥

सूतकं प्रोतकं मुक्त्वा कुंभकेन तु पूरयेत्।
प्राणायामक्रमं प्रोक्तं प्रत्याहारं ततः श्रृणु॥ ३-७१॥

p. 312) इन्द्रियाणीन्द्रियार्थेषु प्रतिस्थाने व्यवस्थितः।
यावत् तावत् स्थितीभूतः प्रत्याहारः स उच्यते॥ ३-७२॥

आधारेषु च संकल्प्य यथासनं स्वरूपकम्।

ध्यानमेवं विजानीयात् सर्वदुःखनिवारणम्॥ ३-७३॥

आधारलक्षणं वक्ष्ये संक्षेपान्नतु विस्तरात्।

नाभेस्तु चतुरंगुल्य मधस्तादग्निमण्डलम्॥ ३-७४॥

कदंबपुष्पवज्जुष्टं पत्रं जुष्टं त्रिकोणकम्।

मूलाधारमधः प्रोक्तं द्वितीयं नाभिमूलके॥ ३-७५॥

भुजङ्गवलयाकारमष्टवर्तुलमेव च।

कुण्डलाख्या महानाडी भानुमण्डलमुच्यते॥ ३-७६॥

नाभेरूर्ध्वन्तु यत्पद्मं चंद्रमण्डलमुच्यते।

हृदये कर्णमूले तु तादृ मूले ललाटके॥ ३-७७॥

मूर्ध्निस्थाने तु संकल्प्य ध्यायेत् पद्मकपुष्पवत्।

हृत् पद्मलक्षणं वक्ष्ये यथा वदनुपूर्वशः॥ ३-७८॥

नाभौ तन्नालमूलन्तु ऊर्ध्वनालमधोमुखम्।

कदलीपुष्पवत् पद्ममष्टपत्रं सकर्णिकम्॥ ३-७९॥

इहशास्त्रेन वा धारं हृत्पद्मेन समायुतम्।

आधारलक्षणं प्रोक्तमाधेयञ्च ततः श्रृणु॥ ३-८०॥

आधेयं यत्प्रयुक्तञ्च समाधीत्येवमिश्रितम्।

इडा च पिङ्गला चैव वीणादण्डस्य पार्श्वयोः॥ ३-८१॥

सुषुम्ना मध्यगा तत्र मध्ये तु सुषिरं तथा।

जीवप्राणसमायुक्तास्तेषु मध्येषु सञ्चरेत्॥ ३-८२॥

सञ्चरन्निह तत्काले आधारेषु व्यवस्थितम्।

संयुक्ते योगमाख्यातं योगी खगं समाश्रयेत्॥ ३-८३॥

मूलाधारे ततस्त्वग्नि संयुक्ते योगमभ्यसेत्।

योगाभ्यासेन तद्योगी अग्निलोकन्तु संस्पृशेत्॥ ३-८४॥

तदूर्ध्वे भास्करन्ध्यात्वा रविलोकमवाप्नुयात्।

एवं ध्यात्वा तदूर्ध्वे तु चंद्रलोकं स गच्छति॥ ३-८५॥

p. 313) ब्रह्माणं हृदये स्मृत्वा ब्रह्मलोकमवाप्नुयात्।

विष्णुं ध्यात्वा तदूर्ध्वे तु कण्ठमूले व्यवस्थितम्॥ ३-८६॥

पुरुषं व्यापयेद्योगी योगाभ्यासेन तत्गुणैः।

तालु मूले स्मरेद्रुद्रं रुद्रलोकपदेच्छया॥ ३-८७॥

पुरुषोपरिवेशान्तं व्यापकं स्वेन तेजसा।

ललाटे ईश्वरं ध्यात्वा तल्लोकं तदवाप्नुयात्॥ ३-८८॥

सदाशिवन्तु शिरसि ध्यात्वा तत्रैव भूज्यते।

हृत्पद्ममध्यं गत्वा तु बिन्दुनादञ्च शक्ति च॥ ३-८९॥

चतुरङ्गुलमात्रेण दीपाकारं विचिन्तयेत्।

चतुस्थानेषु संपूज्य तत्तत्स्थान स्वरूपकैः॥ ३-९०॥

शिरोपरिन्यसेत् ब्रह्ममव्ययं निष्कलान्वितम्।

तस्माद्योग समायुक्तो योगीयोगफलं लभेत्॥ ३-९१॥

अणुमात्रं लभेद्यस्मादणिमेत्यभिधीयते।

सहस्रैर्वा यथा गत्वा मूलवर्णप्रदेशकम्॥ ३-९२॥

स्वेच्छया लभते यस्मात् तस्मात् सा लघिमा स्मृता।

भूमौ मनो जपं कृत्वा पूज्यते शास्त्रवादिभिः॥ ३-९३॥

सर्वत्र पूजितो यस्मात् तस्मात् सा महिमा भवेत्।

सर्वद्रव्याणि संप्राप्तिः प्राप्तिरेषामुदाहृता॥ ३-९४॥

प्रकाम्येषु शरीरेषु प्रकाशन्तु प्रवेशिता।

सूर्यादिष्वनवाप्तत्वादीशत्वं समुदाहृतम्॥ ३-९५॥

यदीशत्वन्तु तत्रैव तदीशित्वं विधीयते।

शिवसायुज्य सामर्थ्यात्तच्छिवत्वमिति स्मृतम्॥ ३-९६॥

अणिमाद्यष्ट सिद्धिञ्च लभेद्योगी विशेषतः।

सालोक्यादि चतुर्थश्च प्राप्यते योगी लक्षणम्॥ ३-९७॥

p. 314) सालोक्यञ्चैव सामीप्यं सा रूप्यं सा युज्यकं

तथा।

ध्यानलोकन्तु संप्राप्य सा लोक्यन्तद्विधीयते॥ ३-९८॥

तद्देवस्यं समीपत्वात् सामीप्यमिति चोच्यते।

तत्तद्रूपन्तु लब्ध्वा तत् सारूप्यमिति च स्मृतम्॥ ३-९९॥

शिवे संयोजितं रूपं सा युज्यमिति कत्थ्यते।

योगं समासात् संप्रोक्तं ज्ञानपादं ततः शृणु॥ ३-१००॥

तद्योगपादं क्रमशः प्रमाणैर्यत्प्रोक्तमत्रैव

समासतस्तत्। नाडी तु चक्रन्त्वथ कालचक्रमाधारयुक्तं

पटलत्रयेण॥ ३-१०१॥

इति आधाराधेय विधिपटलस्तृतीयः॥ ३॥

इति सुप्रभेदेयोगपादः समाप्तः

ॐ

शिवमयम्

सुप्रभेदम्

# Introduction

The Sravjnanottara Agama is an exclusively unique Agama, holding a position of being an ultimate source of yoga and knowledge. It is not one among the 28 Primary Agamas from the Kamika to Vatula. ***Sarva*** means all. ***Jnana*** means the Agamas. ***Uttara*** means beyond, superior . The Agama which is beyond the list of 28 Agamas and which is superior to all other Agams is significantly called Sravajnanottara Agama. Whereas all other Agamas have been revealed to the Supreme Souls of the Pure Realm, Sarvajnanottara Agama has been directly revealed by Lord Siva to Lord Skanda from whom the transmissiom of this Agama has been coming down from time immemorial. Traditionally it is held in the lineage of Gurus that all the concepts of the Agamas are to be understood from the standpoint of Sarvajnanottara Agama. This is the methodology of the Saivagamic studies.

The jnana pada of the Savajnanottara Agama is the treasure trove of the philosophical doctrines of Saivism. In this section, Saiva Siddhanta has been presented in its entirety in terms of bhutatma, antaratma, tattvatma, jivatma mantratma and paramatma. Perfectly tuned to the higher principles of the jnana section of this Agama, its yoga section has been formulated.

The efficacy of sagarbha pranayama, agarbha pranayama, employment of siva-astra mantra and kshurika-astra mantra in pranayama, the technique of perceiving all the tattvas from pruthivi tattva to sadasiva tattva and that of cutting asunder the limiting bonds born of these tattvas, installing one`s own self eternally in the highest plane of siva tattva and attainment of oneness with Lord Siva – these are the important matters dealt with in this chapter on yoga.

The Matanga Paramesvara, Mrugendra, Sivadharmottara and many other texts evidently reflect the yoga principles enshrined in this chapter. Highlighting such reflections, Aghora Sivacharya has written a brief commentary on this chapter.

I am thankful to H.H.Bodhinatha Veylan Swamy for providing me with the divine opportunity for translating this important chapter on Sivayoga.

Sabharathnam Sivacharyar

ॐ

# श्रीमत् सर्वज्ञानोत्तरागमः

## योगप्रकरणम्

# SRI’MAT SARVAJN”A’NOTTRA A’GAMA

## Treatise on Yoga

एकाकिनस्तु शान्तस्य यतचित्त विरागिणः ।
युक्ताहार विहारस्य युक्तचेष्टस्य कर्मसु ।। १
युक्तस्वप्नावबोधस्य तत्त्वतः श्रुणु षण्मुख ।

*eka’kinastu s’a’ntasya yatacitta vira’gin.ah* ।
*yukta’ha’ra viha’rasya yukta ces”t’asya karmasu* ।। 1
*yukta svapna’va bodhasya tattvatah s’r’n.u s”an.mukha* ।

O, S”an.mukha!, I will explain the disciplines of yoga as applicable to the one who is alone keeping himself dissociated from the company of worldly-minded persons, who is with settled mind , who is with deep sense of detachment by keeping his mind under control, who takes moderate food, who limits himself in his routine worldly activities and who sleeps moderately and keeps himself awake sufficiently. Listen to my instructions on yoga.

The term ***eka’kinah*** denotes an ascetic who has his mind completely detached from the worldly activities. ***S’a’ntah*** means one who is not harmful , who is with composed and calm mind. ***Vira’gin.ah*** denotes a person who has controlled his mind and senses , on whom Siva`s Grace has descended and as a result who is deeply intent in the attainment 0f s’ivatva. ***Yatacitta*** means the mind which remains effortlessly settled through breath control and withdrawal of senses.

Two basic disciplines of perfect yoga, ***yama and niyama***, have been indicated in this verse; **The foundation of Yoga** as Gurudeva identifies them.

यो ध्याता यच्च तद् ध्यानं तद्वै ध्यानप्रयोजनम् ।। २
आत्मा ध्याता मनो ध्यानं ध्येय: सूक्ष्मो महेश्वर: ।। ३
यत् परं परमैश्वर्यं एतद् ध्यानप्रयोजनम् ।

*yo dhya'ta' yacca tad dhya'nam tadvai dhya'na prayojanam* // 2
*a'tma' dhya'ta mano dhya'nam dhyeyah su'ks"mo mahes'varah* // 3
*yatparam paramais'varyam etad dhya'na prayojanam* /

Only that person who has known well the nature of meditator, meditation and the fruit of meditation is fit enough to undertake the disciplines of yoga. The individual self is the meditator. Mind is meditation. The Great Lord S'iva is the One to be meditated. The attainment of the supreme qualities of S'iva, superior to which there is nothing, is the fruit of meditation.

By nature, mind is very powerful in deeply and repeatedly contemplating the one and the same thing. So it is identified with meditation itself – ***mano dhya'nam.***

This verse suggests that the disciplines of yoga set forth in this chapter are meant only for those who have already attained sufficient knowledge of the constituent disciplines of yoga such as yama, niyama, pran.a'ya'ma and so forth. The yoga disciplines explained in this chapter are highly advanced and hence the beginners will find it very difficult to understand and to practice them.

The term ***parama ais'varyam*** denotes the essential attributes of S'iva, which are eight in number, as told in ***the jn"a'na pa'da*** of the Savajn"a'nottara Agama.

1. sarvjn"ata' 2. nitya tr'pti 3.ana'di bodha 4.svatantrata'
5. alupta s'akti 6. ananta s'akti 7. nira'mayata' 8. vis'uddha deha

By dhya'ta and dhya'na, the third one dhyeya, the one to be meditated, is also suggested.

मानामानौ समौ कृत्वा सुखदु:खे समे तथा ।। ४
हर्षं भयं विषादं च संत्यज्य योगमभ्यसेत् ।

*ma'na'ma'nau samau kr'tva' sukha duhkhe same tatha'* ।। 4
*hars"am bhayam vis"a'dam ca samtyajya yogamabhyaset* ।

Keeping the mind balanced well when honored or abused, and in the same way when delighted or distressed and having completely freed himself from being subject to excessive delight, fearfulness and despondency, the sa'dhaka should repeatedly practice the disciplines of yoga.

शून्यागारे मठे रम्ये देवतायतने शुभे ।। ५
नदीतीरे विविक्ते वा गृहे घोरवनेऽपि वा ।
प्रच्छन्ने च विविक्ते च निःशब्दे जनवर्जिते ।। ६
योगदोष विनिर्मुक्ते निर्विकल्पे निरातपे ।

*s'u'nya'ga're mat'he ramye devata'yane s'ubhe* ।। 5
*nadi'ti're vivikte va' gr'he ghora vane pi va'* ।
*pracchanne ca vivikte ca nihs'abde janavarjite* ।। 6
*yogados"a vinirmukte nirvikalpe nir'tape* ।

In the places such as a solitary house, charming monastery, auspicious temple charged with divinity, bank of river not frequented by the people, one`s own house, unapproachable dense forest, sequestered place hidden by the trees, places free from the disturbing sounds and the quite place free from the presence of humans, animals, insects and so forth, in the places free from those which cause hindrances and disturbances to yoga-practice, in the places which are not owned by others and in the places well protected from the scorching heat of the sun, the sadhaka should commence the yoga-practice.

स्नात्वा शुचिरुपस्पृश्य प्रणम्य शिरसा शिवम् ।। ७
योगाचर्यं नमस्कृत्य योगं युञ्जीत मानव: ।

*sna'tva' s'uciruspr's'ya pran.amya s'irasa' s'ivam //* 7
*yoga'ca'ryam namaskr'tya yogam yun"jita ma'navah /*

Having taken the usual ceremonial bath, maintaining purity in body and mind, having performed the succeeding rites such as getting besmeared with vibhu'ti and sprinkled with consecrated water, having prostrated before Siva and his A'ca'rya(Guru) who has initiated him into the discipline of yoga, the sa'dhaka should attentively involve himself in the disciplines of yoga.

पद्मकं स्वस्तिकं वाऽपि उपस्थायाञ्जलिं तथा ।। ८
पीठार्धं अर्धचन्द्रं च सर्वतोभद्रमेव वा ।
आसनं रुचिरं बद्ध्वा ऊर्ध्वकाय: समं शिर: ।। ९
सर्वसङ्गान् परित्यज्य आत्मसंस्थं मनो गुह ।

*padmakam svastikam va'pi upastha'ya'n"jalim tatha' //* 8
*pi't'ha'rdham ardhacandram ca sarvatobhadram eva va' /*
*a'sanam ruciram badhva' u'rdhvaka'yah samam s'irah //* 9
*sarva sanga'n parityajya a'tma samstham mano guha /*

There are many postures suitable to yoga-practice such as padmaka, svastika, ardha pi't'ha, ardha candra, sarvatobhadra and so forth. Having assumed a posture compatible to him and folding the hands together to express supplication, and keeping his body upright, having well aligned his head and having abandoned all the negative thoughts from his mind, O, Guha!, the sa'dhaka should practice yoga ,with his mind well established within his own self.

न दन्तैः संस्पृशेद्दन्तान् सृक्किण्यौ च न जिह्वया ।।          १०
किञ्चित् कुञ्चित नेत्रस्तु शिवं संयक् तदोच्चरेत् ।

*na dantaih samspr’s’ed danta’n sr’kvin.yau ca na jihvaya’ ।।*     *10*
*kin”cit kun”cita netrastu s’ivam samyak tadoccaret ।*

Without allowing the upper row of teeth to touch the lower teeth and without allowing the tongue to touch the corners of the mouth, and keeping his eyes half-closed and raised, the sa’dhaka should repeat the mu’lamantra of S’iva in a perfect way as instructed by his Guru.

Even for pra’n.a’ya’ma ans pratya’ha’ra, the repetition of mu’la mantra as instructed by the Guru, is essential. The mantra suggested here is **Om ha’m haum siva’ya namah** or simply **Om ham.**

Pra’n.aya’ma is of two kinds – sagarbha pra’n.a’ya’ma and agarbha pra’n.a’ya’ma. The first one is to be done with the accompaniment of bi’ja mantra or mu’la mantra and dhya’na. The second one is done without such accompaniment. These have been explained in the Matan’ga Pa’rames’vara Agama and the Mr’gendra Agama.

सोद्भासयति तत्त्वानि तन्मात्राद्यानि देहिनाम् ।।          ११
पुनर्विनाशकश्चैव अस्त्रयुक्तः षडानन ।

*sodbhasayati tattva’ni tanma’tra’dya’ni dehina’m ।।*          *11*
*punar vina’s’akas’caiva astrayuktah s”ad’a’nana ।*

The systematic repetition of mu'lamantra illuminates and makes known all the tattvas such as the subtle elements(tanma'tras) and others to the embodied self. O, S''an.mukha!, the sa'dhaka then becomes capable of severing his bonds born of these tattvas through the particular repetition of astra mantra instructed to him by his Guru.

*astra mantra - om hah astra'ya hum phat'*

न पृथक् हृदयं तस्य न शिरो न शिखा गुह ।। १२
वर्मास्त्रनेत्रसहितं तस्मादेव प्रवर्तते ।

*na pr'thak hr'dayam tasya na s'iro na s'ika' guha* // 12
*varma'stra netra sahitam tasma'deva pravartate* /

The sa'dhaka who practises in this way need not repeat the hr'daya mantra, s'iro mantra, s'ikha' mantra, kavaca mantra and netra mantra separately at the completion of mu'la mantra japa, since all the six an'ga mantras originate from that mu'la mantra.

Normally, when one involves himself in his daily worship of S'iva(a'nma'rtha pu'ja), it has been prescribed that if the sa'dhaka repeats the mu'la mantra for 100 times, he has to repeat 5 brahma mantras and 6 an'ga mantras 10 times. But, here it is directed that he need not repeat the brahma mantras and an'ga mantras separately as far as this particular yoga discipline is concerned. This direction is exclusively for this kind of S'iva yoga.

प्राणापानौ समौ कृत्वा सुषुम्नान्तरचारिणौ ।। १३
तयोर्वृत्तिं निरुद्ध्यात्मा शिवं ध्यायेत् विचक्षणः ।

*pra'n.a'pa'nau samau kr'tva' sus''umna'ntara ca'rin.au* // 13
*tayorvr'ttim niruddhya'tma' s'ivam dhya'yet vicaks''an.ah* /

Having equalized the outbreath and inbreath(pra'n.a and apa'na) and having enabled the breath to flow through within the central channel(sus''umna) and having arrested the workings of inbreath and outbreath, the well-skilled sadhaka should deeply meditate on Lord S'iva.

अविनाभाव संयुक्तो ज्योतीरूपं सुनिर्मलम् ।। १४
सुसूक्ष्मं व्यापकं नित्यं निर्विकल्पं सदा बुधः ।

*avina'bha'va samyukto jyoti'ru'pam sunirmalam* // 14
*susu'ks''mam vya'pakam nityam nirvikalpam sada'budhah* /

Through the continued practice of such discipline, the sa'dhaka becomes capable of establishing himself in unfailing and inseparable union with the luminous form which is extremely subtle, pervasive, eternal and immutable.

The ultimate benefit of sagarbha pra'n.a'ya'ma is told in this verse.

उत्तमा मध्यमा मन्दास्सगर्भाः त्रिविधाः स्मृताः ।। १५
प्राणायामांश्च तान् कुर्यात् पूरकुम्भकरेचकान् ।

*uttama' madhyama' manda's sagarbha'h trividhah smr'ta'h* // 15
*pran.a'ya'ma'ms'ca ta'n kurya't pu'ra kumbhaka recaka'n* /

The specific kind of pra'n.a'ya'ma known as sagarbha pra'n.a'ya'ma is of three kinds – the superior, intermediary and slow. The sa'dhaka should practice the control of breath through pu'raka(inbreath), kumbhaka(retention of breath) and recaka(outbreath).

It is suggested in this verse that even agarbha pra'n.a'ya'ma is of the same three kinds. As explained by Aghora Sivacharya, there is the third one also which is performed in three modes – pu'raka, kumbhaka and recaka.

प्रणायामैर्दहेद्दोषान्धारणाभिस्तु किल्बिषम् ।। १६
प्रत्याहारेण संसर्गान्ध्यानेनानश्वरान् गुणान् ।

*pra'n.a'ya'mair dahed dos"a'n dharan.a'bhistu kilbis"am* // 16
*pratya'ha'ren.a samsarga'n dhya'nena'nas'vara'n gun.a'n* /

By the practice of pra'n.a'ya'ma, the sa'dhaka incinerates all the defilements. By dha'ran.a, he annihilates all of his sinful effects. By pratya'ha'ra, he maintains himself completely free from the negative thoughts and vices. And by dhya'na, he becomes capable of nullifying the effects of even those qualities which do not decay .

The benefits of agarbha pra'n,aya'ma have been mentioned here.

***anas'vara'n gu.a'n*** – The much celebrated eight accomplishments(siddhis) an.ima, garima and others. What is insisted here is that a perfect S'ivayogi should overcome even these great benefits since these would thwart his advancement towards the attainment of S'iva Ais'varyas mentioned earlier.

उदरं पूरयित्वा तु वायुना यावदीप्सितम् ।। १७
प्रणायामो भवेदेवं पूरको देहपूरक: ।
पिधाय सर्वद्वाराणि निश्वासोच्छ्वासवर्जित: ।। १८
सम्पूर्ण कुम्भवतृ तिष्ठेत् प्राणायाम: स कुम्भक: ।
ततोर्ध्वं रेचयेत् वायुं मृदुनिश्वास संयुतम् ।। १९
रेचकस्त्वेष विख्यात: प्राणसंशयकारक: ।

*udaram pu'rayitva'tu va'yuna' ya'vadi'psitam* ।। 17
*pra'n.a'ya'mo bhavedevam pu'rako deha pu'rakah* ।
*pidha'ya srva dva'ra'n.i nis'vasocchvasa varjitah* ।। 18
*sampu'rna kumbhavat tis"t'het pra'n.a'ya'mah sa kumbhakah* ।
*tatordhvam recayet va'yum mr'du nis'vasa samyutam* ।। 19
*recakastves"a vikhya'tah pra'n.a sams'aya ka'rakah* ।

Inhaling the breath deeply to the extent possible and filling up the stomach with the breath taken inside is the mode of pra'n.a'ya'ma known as pu'raka. Closing all the passages meant for the flow of pra'n.a and keeping free from inhalation and exhalation, the sa'dhaka should remain seated like a vessel (kumbha) completely filled up to its mouth.This mode of pra'n.a'ya'ma is known as kumbhaka. The sa'dhaka should empty the stomach by slowly exhaling the pra'n.a. This mode of pra'n.aya'ma is known as recaka which is instrumental in driving the pra'n.a out.

प्रसार्य चाग्रहस्तं तु जानुं कृत्वा प्रदक्षिणम् ।। २०
छोटिकां तु ततो दद्यान् मात्रैषात्वभिधीयते ।
मात्रा द्वादश विज्ञेया: प्रमाणं तालसंज्ञकम् ।। २१

*prasa'rya ca'gra hastam tu ja'num kr'tva' pradaks"in.am* ।। 20
*chot'ika'm tu tato dadya'n matrais"a'tvabhidhi'yate* ।
*ma'tra' dva'das'a vijn"eaya'h prama'n.am ta'la samjn"akam* ।। 21

Stretching the fore arm , if one encircles his knee once from left to right simultaneously snapping his fingers, the time taken for doing such encircling once is called ma'tra. Twelve ma'tras make one measure known as ta'la.

तालद्वादशकं ज्ञेयं प्राणायामस्तु कन्यस: ।
मध्यमश्च चतुर्विंशज् ज्येष्ठस्तद्विगुणो भवेत् ।। २२

*ta’la dva’das’akam jn”eyam pra’n.a’ya’mastu kanyasah।*
*madyamas’ca caturvis’aj jyes”t’has taddvigun.o bhavet॥* 22

The pra’n.a’ya’ma done with the duration of 12 ta’las is of lower kind. That which is done with the duration of 24 ta’las is of intermediary type. The supreme kind of pra’n.aya’ma is that which is done with the duration of 48 ta’las.

एकैकां वर्धयेन्मात्रां प्रत्यहं योगवित्तमः।
न त्वरेण विलम्बेन क्रमेणैव विवर्धयेत्॥ २३

*ekaika’m vardhayen ma’tra’m pratyaham yogavittamah।*
*na tvren.a vilambena kramen.aiva vivardhayet॥* 23

The sa’dhaka who has known well the system of yoga should increase the duration of pra’n.a’ya’ma by one ta’la day by day . Increasing the duration of pra’n.a’ya’ma should not be done very swiftly or very slowly. He should increase the duration gradually and in due order.

प्राणायामोत्तमो यत्तद्द्विगुणा धारणा मता।
धारणाद्द्विगुणो योगो योगोऽपि द्विगुणीकृतः॥ २४
योगसिद्धिरिति ज्ञेया शिवेन परमात्मना।

*pra’n.a’ya’mottamo yattad dvigun.a’ dharan.a’ mata’।*
*dha’ran.a’d dvigun.o yogo yogopi dvigun.i’kr’tah॥* 24
*yogasiddhiriti jn”eya’ s’ivena parama’tmana’।*

Twice the supreme kind of pra'n.a'ya'ma is considered as dha'ran.a. Twice the duration of dha'ran.a is considered as yoga. Twice the duration of yoga is significantly known as yogasiddhi exclusively related to Lord S'iva, the Supreme Self.

तदानुपश्यते सूक्ष्मं गन्धतन्मात्रमात्मनि ।। २५
रसं तेजश्च स्पर्शं च शब्दतन्मात्रमेव च ।
पश्यते क्रमयोगेन वर्णभावैः पृथग्विधैः ।। २६

*tad'a'nupas'yate su'ks"mam gandha tanma'tram a'tmani* // 25
*rasam tejas"ca spars'am ca s'abda tanma'trameva ca* /
*pas'yate krama yogena varn.a bha'vaih pr'thagvidhaih* // 26

Then the sa'dhaka becomes capable of perceiving directly the five subtle elements- smell, taste, form, touch and sound(gandha, rasa, ru'pa, spars'a and s'abda). He is able to see each element separately as associated with its associated seed letter and form by means of krama yoga, the yoga practiced step by step in due order.

अहंकारं मनो बुद्धिं गुणमव्यक्तपूरुषम् ।
अभिव्यक्तानि जानीयात् स्वधर्मगुणलक्षणम् ।। २७

*ahan'ka'ram mano buddhim gun.am avyakta pu'rus"am* /
*abhivyakta'ni ja'ni'ya't svadharma gun.a laks"an.am* // 27

Then he sees all those tattvas which are above the subtle elements. Ahan'ka'ra manas, buddhi, gun.a, prakr'ti and purus"a – all these tattvas as associated with their respective forms and qualities become evidently manifest to him.

***svadharma gun.a laks"an.am*** also means his own qualities effected in his embodied state by the association of these tattvas. To see one`s own qualities as related to the tattvas is ***a'tma dars'ana***.

विद्यां कलां ततः कालं  मायां विद्यां ततः परम् ।
दृष्ट्वानुक्रमशः सर्वान् पुनरस्त्रेण भेदयेत् ।।                    २८

*vidya'm kala'm tatah ka'lam ma'ya'm vidya'm tatah param* ।
*dr's"t'va'nukamas'ah sarva'n punarastren.a bhedayet* ।।         *28*

Then , having seen the tattvas, vidya', kala', ka'la, ma'ya'  and suddha vidya' one by one in their due order, the sa'dhaka should dissociate himself from these tattvas by severing them with the mantra of  s'iva'astra.

विद्येश्वरं ततस्तत्त्वं ततः सदाशिवं परम् ।
भित्वा तु  क्षुरिकास्त्रेण ततः सूक्ष्मं शिवं विशेत् ।।                २९

*vidyes'varam tatas tattvam tatah sada's'ivam param* ।
*bhitva'tu ks"urika'stren.a tatah suks"mam s'ivam vis'et* ।।      *29*

Then the sa'dhaka is able to see i's'vara tattva , the location of eight Vidyes'varas, and then the supreme sada's'iva tattva. Having severed his bonds connected with these tattvas with the mantra of ks"urika'stra, he should enter the foremost tattva known as s'iva tattva which is subtle and unreachable even to the sages.

**Om  S'im Chim ks'urika'stra'ya  hum phat'** -  this  is ks"urika'stra mantra.

Verses 25 to 29  suggest  the advanced system of s'iva yoga known as das'a ka'rya . Ten advanced disciplines **-**  tattva ru'pa, tattva dars'ana, tattva s'uddhi, a'tma ru'pa, a'tma dars'ana, a'tama s'uddhi, s'iva ru'pa, s'iva dars'ana, s'iva yoga  and s'iva bhoga -  go by the name das'a ka'rya.

अमृतात्मा शिवं साक्षात् तस्मिन् विष्टस्तु योगवित् ।
सर्वज्ञः सर्वगः सूक्ष्मः सर्वेशः सर्वकृद्भवेत् ।। ३०

*amr'ta'tma' s'ivam sa'ks"a't tasmin vis"t'astu yogavit* ।
*sarvajn"h savagah su'ks"mah sarves'ah sarvakr'dbhavet* ।। *30*

The knower of this supreme yoga system , having entered into the highest and subtle s'iva tattva becomes immortalized, evolves into the knower of all, doer of all, indweller of all, seer of all and the lord of all, comparable to S'iva.

सर्वेष्वेव च शास्त्रेषु ज्ञेयं वस्तु चतुष्टयम् ।
पशुः पाशः पतिश्चैव शिवश्चेति यथाक्रमम् ।। ३१

*sarves"veva ca s'a'stres"u jn"eyam vastu catus"t'ayam* ।
*pas'uh pa's'ah patis'caiva s'ivas'ceti yatha' kramam* ।। *31*

In all the Agamic Scritures, the four eternal existents whish are to be essentially known, have been explained. They are – pas'u, pa's'a. pati and S'iva. These are to be known systematically as set forth in the Agamas.

pas'u – the embodied soul; pa's'a – three bonds, a'na.va, karma and ma'ya'; pati – S'iva associated with form(Sada's'iva); S'iva – The formless and transcendental Lord.

ज्ञात्वा तु तत्त्वसद्भावं तन्त्रसारं तु दुर्लभम् ।
सर्वथा वर्तमानोऽपि गृह्णाति न पुनस्तनुम् ।। ३२

*jn"a'tva' tu tattva sadbha'vam tantrasa'ram tu durlabham* ।
*sarvatha' vartama'nopi gr'hn.a'ti na punas tanum* ।। *32*

## एकोनविंशः पटलः ।

अथ प्रणवसंज्ञकं प्रतिवदामि मन्त्रं परं
सजापमपि सार्चनं सहुतकृम्भि सोपासनम् ।
अशेषदुरितापहं विविधकामकल्पद्रुमं
विमुक्तिफलसिद्धिदं विमलयोगिसंसेवितम् ॥ १

आद्यः स्वरः समेतोऽमरेण सधसप्तमार्णबिन्दुयुतः ।
प्रोक्तः स्यात्प्रणवमनुस्त्रिमात्रकः सर्वमन्त्रसमवायी ॥ २

मन्त्रस्याऽस्य मुनिः प्रजापतिरथ छन्दश्च देव्यादिका
गायत्री गदिता जगत्सु परमात्माख्यस्तथा देवता ।

कामप्रधानं मन्त्रमभिधाय मोक्षप्रधानं मन्त्रमाह—अथ प्रणवेति । परत्वमुपपादयन् विनियोगमाह--अशेषेति । ह्रस्वस्य पापक्षये विनियोगः । स च मकारान्तः । तत्र च केवलाग्निशिखावत् ध्यानम् । स एव ह्रस्वः । कामप्रदो भवति । दीपशिखामध्ये तं तं काममम्रुतेनाभिषिञ्चतः स एव त्र्यक्षरात्मको ह्रस्वो मोक्षप्रदोऽपि भवति । समन्युन्मनीपरलक्षणसाक्ष्यसाक्षिब्रह्मार्थत्वे दीर्घप्लुतयोरेवमेव सर्वार्थत्वमगन्तव्यम् । अकारोकारमकारबिन्दुनादान्तो दीर्घः पूर्ववत् पापक्षयकाममोक्षार्थत्वे ध्यानभेदोऽवगन्तव्यः । मकारान्तः समनीवाचकः बिन्दुः साक्षिवाचकः नादो ब्रह्मवाचक इति मोक्षहेतुत्वे स्थितिः । शक्तिशान्तौ प्लुतिः । मकारान्तः समनीवाचकः । बिन्दुनादौ साक्षिवाचकौ शक्तिशान्तौ ब्रह्मण इति मोक्षार्थत्वे प्रतिपत्तिः । अस्य मन्त्रस्य मोक्षप्रधानत्वेन तद्धेतुत्वमुपपादयति – विमलेति ॥ १ ॥

बिन्दुयुत इति । नादादेरपि उपलक्षणार्थः । त्रयीमात्रसिद्धः प्रणवः त्रिमात्रक इत्युक्तः । तस्मिन् पक्षे तिसृष्वेवाऽवशिष्टमात्रान्तर्भावो ज्ञातव्यः । सर्वमन्त्रसमवायीति । सर्वमन्त्राधारत्वं वदन् मन्त्रन्यासमाह । अं अं नमो ब्रह्मणे नमः । आं उं नमो विष्णवे नमः । इं मं नमः शिवाय नमः । ईं अं नमो ब्रह्मणे नमः इत्यादि क्षकारान्तमेवं द्रष्टव्यम् । पुनरेवमेवाऽष्टाक्षरैः द्वादशाक्षरैरन्यैश्च मन्त्रैः संयोज्य मातृकास्थान एव मन्त्रन्यासः कार्यः । अं बीजम् । उं शक्तिः ॥ २ ॥

अक्लीबैर्युगमध्यगध्रुवयुतैरङ्गानि कुर्यात् स्वरै-
र्मन्त्री जातियुतैश्च सत्यरहितैर्वा व्याहृतीभिः क्रमात् ॥ ३
विष्णुं भास्वत्किरीटाङ्गदवलययुगाकल्पहारोदराङ्घ्रि-
श्रोणीभूषं सवक्षोमणिमकरमहाकुण्डलामण्डितांसम् ।
हस्तोद्यच्चक्रशङ्खाम्बुजगदममलं पीतकौशेयमाशा-
विद्योतद्भासमुद्यद्दिनकरसदृशं पद्मसंस्थं नमामि ॥ ४
दीक्षितो मनुमिमं शतलक्षं प्रजपेत्प्रतिहुनेच्च दशांशम् ।
पायसैर्घृतयुतैश्च तदन्ते विप्रभूरुहभवाः समिधो वा ॥ ५
सर्पिःपायसशालीतिलसमिदाज्यैरनेन यो जुहुयात् ।
ऐहिकपारत्रिकमपि स तु लभते वाञ्छितं फलं न चिरात् ॥ ६

अभ्यर्च्य वैष्णवमथो विधिनैव पीठ-
मावाह्य तत्र सकलार्थकरं मुकुन्दम् ।
अङ्गैः समूर्तियुगशक्तियुगैः सुरेन्द्र-
वज्रादिकैर्यजतु मन्त्रितमः क्रमेण ॥ ७
वासुदेवः सङ्कर्षणः प्रद्युम्नश्चाऽनिरुद्धकः ।
स्फटिकस्वर्णदूर्वेन्द्रनीलाकाराश्च वर्णतः ॥ ८
चतुर्भुजाश्चक्रशङ्खगदापङ्कजधारिणः ।
किरीटकेयूरिणश्च पीताम्बरधरा अपि ॥ ९

सशान्ती श्रीसरस्वत्यौ रतिश्चासितदलाश्रिताः ।
अच्छपद्मरजोदुग्धदूर्वावर्णाः स्वलङ्कृताः ॥ १०
आत्मान्तरात्मपरमज्ञानात्मानस्तु मूर्तयः ।
निवृत्तिश्च प्रतिष्ठाह्वा विद्या शान्तिश्च शक्तयः ॥ ११
ज्वलज्ज्वालारुचः प्रोक्ता आत्माद्या मूर्तिशक्तयः ।
इति पञ्चावरणकं विधानं प्रणवोद्भवम् ॥ १२

स्वरैर्मन्त्रीति न्यासविशेषैः मन्त्रात्मा सन्नित्यर्थः । सत्यरहितैर्वा व्याहृतिभिरिति । वाशब्देन सत्यसहितैर्वा व्याहृतिभिरिति पञ्चाङ्गपक्षः सूचितः ॥३॥४॥५॥६॥
मन्त्रितमः क्रमेणेत्यावाहनादिमन्त्रैश्च इत्यर्थः ॥ ७॥८॥९॥१०॥११॥१२ ॥

इत्थं मन्त्री तारमनुं जापहुतार्चा-
भेदैरङ्गीकृत्य च युञ्ज्यादपि योगान् ।
यैः संलब्ध्वा चेह समग्रां श्रियमन्ते
शुद्धं विष्णोर्धाम परं प्राप्स्यति योगी ॥ १३

करपादमुखादिविहीनमनारतदृश्यमनन्यगमात्मपदम् ।
यमिहात्मनि पश्यति तत्त्वविदस्तमिमं किल योगमिति ब्रुवते ॥ १४
योगाग्निदूषणपरं त्वथ कामकोपलोभप्रमोहमदमत्सरतेति षट्कम् ।
वैरं जयेत्सपदि योगविदेनमङ्गैर्योगस्य धीरमतिरष्टभिरिष्टदैश्च ॥ १५

यमनियमासनपवनायामाः प्रत्याहृतिश्च धारणया ।
ध्यानञ्चापि समाधिः प्रोक्तान्यङ्गानि योगयोग्यानि ॥ १६
सत्यमहिंसा समता धृतिरस्तेयं क्षमाऽऽर्जवञ्च तथा ।
वैराग्यमिति यमः स्यात् स्वाध्यायतपोऽर्चनाव्रतानि तथा ॥ १७
सन्तोषश्च सशौचो नियमः स्यादासनञ्च पञ्चविधम् ।
पद्मस्वस्तिकभद्रकवज्रकवीराह्वयाः क्रमात्तदपि ॥ १८
रेचकपूरककुम्भकभेदात्त्रिविधः प्रभञ्जनायामः ।
मुञ्चेद्दक्षिणयाऽनिलमथानयेद्वामया च मध्यगया ॥ १९

इत्थं मन्त्रीति। वासुदेवादिद्वादशाक्षराण्युक्तानि। अथवा बिन्दुनादशक्त्यादियुतस्य प्रणवस्य योगशेषत्वमुक्तम्। जपभेदा वाचिकादयः। बाह्याध्यात्मिकभेदात् हुतार्चनयोर्भेदः। योगप्रयोजनमाह—यैरिति ॥ १३॥१४ ॥

स्वशाखाजपः स्वाध्यायः। पद्मस्वस्तिकेति।

ऊर्वोरुपरि विन्यस्य सम्यक् पादतले उभे।
अङ्गुष्ठौ च निबध्नीयाद्धस्ताभ्यां व्यत्क्रमेण तु ॥ इदं पद्मासनम्।
जान्वोरन्तरा सम्यक् कृत्वा पादतले उभे।
ऋजुकायो विशेदेतदासनं स्वस्तिकं विदुः ॥
सीवन्याः पार्श्वयोर्न्यस्येत् गुल्फयुग्मं सुनिश्चलम्।
वृषणाधः पार्श्वपादौ पाणिभ्यां परिबन्धयेत् ॥ इदं भद्रासनम्।
ऊर्वोः पादौ क्रमान्न्यसेत् जान्वोः प्रत्यङ्मुखाङ्गुलिः।
करौ निदध्यादाख्यातं वज्रासनमनुत्तमम् ॥

संस्थापयेच्च नाड्येत्येवं प्रोक्तानि रेचकादीनि ।
षोड़शतद्द्विगुणचतुःषष्टिमात्रकाणि तानि च क्रमशः ॥ २०
चित्तात्मैक्यधृतस्य प्राणस्य स्यात् संहृतिः स्थानात् ।
प्रत्याहारो ज्ञेयश्चैतन्ययुतस्य सम्यगनिलस्य ॥ २१
स्थानस्थापनकर्म प्रोक्ता स्याद्धारणेति तत्त्वज्ञैः ।
यो मनसि देवताया भावः स्यादस्य मन्त्रिणः सम्यक् ॥ २२
संस्थापयेच्च तत्रेत्येवं ध्यानं विदन्ति तत्त्वविदः ।
सत्तामात्रं शुद्धं नित्यमपि निरञ्जनञ्च यत्प्रोक्तम् ॥ २३
तत्प्रविचिन्त्य च तस्मिंश्चित्तलयः स्यात् समाधिरुद्दिष्टः ।
अष्टाङ्गैरिति कथितैः पुनराशु निगृह्यतेऽरिरात्मविदा ॥ २४
अथवा शोषणदाहनप्लावनभेदेन शोधिते देहे ।
पञ्चाशद्भिर्मात्राभेदैर्विधिवत् समायमेत्प्राणान् ॥ २५
पञ्चाशदात्मकोऽपि च कलाप्रभेदेन तार उद्दिष्टः ।
तावन्मात्रायमनात्कलाश्च विधृता भवन्ति तत्त्वविदा ॥ २६

एकं पादमधः कृत्वा विन्यस्योरौ तथेतरम् ।
ऋजुकायो विशेद्योगी वीरासनमुदाहृतम् ॥ १५—२० ॥

चैतन्ययुतस्येति । चैतन्यशब्देन पूर्वोक्तौ चित्तात्मानावुच्येते ॥ २१ ॥

अस्य मन्त्रिण इति । समन्त्रकं ध्यानमुक्तम् ॥ २२ ॥

संस्थापयेदिति । निर्मन्त्रकं ध्यानमुक्तम् ॥ २३ ॥

तत् प्रविचिन्त्येति । संप्रज्ञातसमाधिरनायासेन वृत्तिसातत्यलक्षण उक्तः । सायाससातत्यं तु ध्यानमाहुः । तस्मिंश्चित्तलय इत्यसंप्रज्ञातसमाधिरुक्तः ॥ २४ ॥

भूतशुद्ध्यर्थे प्राणायामे पक्षान्तरं दर्शयति—अथवेति । पूर्वोक्तप्राणायामेनापि भूतशुद्धिर्भवति । तत्स्थरेचकादीनां सृष्टिसंहारस्वात्मस्थितिरूपत्वात् । भूतशुद्ध्यनन्तरं संग्रहेण सकलीकरणप्रकारमाह—पञ्चाशद्भिरिति । विधिवदिति । अकारादित्रयं प्रत्येकं दशमात्रं धारयेत् । बिन्दुं चतुर्मात्रम् । नादं षोड़शमात्रमित्यर्थः । तत्र बिन्दुनादावर्तनार्थं तदक्षं प्रणवमावर्तयेत् ॥ २५ ॥

पञ्चाशन्मात्राधारणे प्रतिपत्तिमाह—पञ्चाशदात्मक इति । तत्त्वविदा तत्त्वसंख्यायमनात् तत्त्वानि च विधृतानि भवन्तीति सूचितम् । तत्त्वधारणायां

पूर्वमिड़ाया वदने विचिन्तयेद्धूम्रमानिलं बीजम् ।
तेनागतेन देहं प्रशोषयेत् सान्तराधिकारचरणाम् ॥ २७

पिङ्गलया प्रतिमुञ्चेत्तथैव कार्शानवेन रक्तरुचा ।
प्रतिदह्य पूर्वविधिना मुञ्चेन्नैशाकरेण सुसितेन ॥ २८

संपूरयेत् सुधामयजलशीकरवर्षिणा तनुं सकलाम् ।
निर्माय मानसेन च परिपूर्णमनाश्चिरं भूयात् ॥ २९

सुजीर्णमितभोजनः सुखसमाप्तनिद्रादिकः
सुशुद्धतलसद्गृहे विरहिते च शीतादिभिः ।
पटाजिनकुशोत्तरे सुविशदे च मृद्वासने
निमीलितविलोचनः प्रतिविशेत्सुखं प्राङ्मुखः ॥ ३०

प्रसारितं वामकरं निजाङ्के निधाय तस्योपरि दक्षिणञ्च ।
ऋजुः प्रसन्नोऽवहितेन्द्रियः सन्नाधारमत्यन्तसमं स्मरेत् स्वम् ॥ ३१

तन्मध्यगतं प्रणवं प्रणवस्थं बिन्दुमपि च बिन्दुगतम् ।
नादं विचिन्त्य तारं यथावदुच्चार्य तन्नयेत् सुषुम्नान्तम् ॥ ३२

तन्मध्यगतं शुद्धं शब्दब्रह्माऽतिसूक्ष्मतन्तुनिभम् ।
तेजः स्मरेच्च तारात्मकमपि मूलं चराचरस्य सदा ॥ ३३

पृथिव्यादिसंबन्धतत्त्वसंख्यानुसारेण अकारादिक्रमावर्तनीयम् ॥ २६ ॥

शोषणादिप्रकारमाह—पूर्वमिति । तेनागतेनेति । नाभिगतवायुमण्डलं प्राप्तेनेत्यर्थः ॥ २७ ॥

तथैव कार्शानवेनेति । पिङ्गलाद्वारेण हृदयदेशस्याग्निमण्डलं प्राप्तेनेत्यर्थः ।

एवं कुक्षिमध्यगतं महापातकपञ्चाङ्गं पातकोपाङ्गसंयुतम् उपपातकरोमाणं कृष्णवर्णं पापपुरुषं स्वतनुं वा संशोष्य संदह्य वंकारेण प्लावनं कार्यमित्याह—नैशाकरेणेति । इडामार्गेण द्वादशान्तस्यामृतमण्डलेन पूरककाले बीजस्य मण्डलस्य वं बीजस्यैक्यं सञ्चिन्त्य कुम्भककाले प्लावयेदित्यर्थः ॥ २८ ॥ २९ ॥

योगप्रयोगेऽवस्थादेशादिनियममाह—सुजीर्णेति ॥ ३० ॥ ३१ ॥

प्रणवस्थं बिन्दुमिति । दीपशिखाकारं बिन्दुं नादं च तत्प्रभाकारं संचिन्त्ये-त्यर्थः । यथावदुच्चार्येति । अलिविरुतिवत् उन्मन्यन्तमुच्चार्य इत्यर्थः । सुषुम्नान्तं सुषुम्नाग्रं मध्यं वा सर्वथाप्युत्तरश्लोकः ॥ ३२ ॥

ॐकारो गुणबीजं प्रणवस्तारो ध्रुवश्च वेदादिः ।
आदिरुमध्यो मपरो नामान्यश्च विमालकश्च तथा ॥ ३४
अस्य तु वेदादित्वात् सर्वमनूनां प्रयुज्यतेऽथादौ ।
योनिश्च सर्वदेहे भवति च स च ब्रह्म सर्वसंवादः ॥ ३५
ऋक् च तदाद्यादिः स्यात्तन्मध्यान्तं यजुश्च मान्तादिः ।
सामापि तस्य भेदा बहवः प्रोक्ता हि वेदलोकेषु ॥ ३६

सुषुम्नामध्यगतस्य प्रणवस्य ध्यानमाह—तन्मध्येति ॥ ३३ ॥

इदानीं प्रणवविभूतिं वदन्नामन्यासं प्रणवपुटितविन्यासानन्तरं प्रणवपुटित-लिपिन्यासस्थान एव विधेयमाह—ओंकार इति । ॐकारादीनि दश नामानि । तत्र वेदादिरिति नामोपपादयन्न्यासमन्त्रान् सूचयति ॥ ३४ ॥

अस्य त्विति । न्यासमन्त्राणामादावन्ते च प्रणवः प्रयोक्तव्य इत्यर्थः । योनिश्चेति । नामचतुष्टयमुक्तम् । सर्वयोनये सर्वदेहाश्रयाय ब्रह्मणे सर्व-संवा[पा]दकायेति नामचतुष्टयमवगन्तव्यम् ॥ ३५ ॥

पूर्वोक्तं वेदादित्वमुपपादयति—ऋक् चेति । अग्निमील इत्यकारः ऋग्वेदादिः । समुद्रो बन्धुरित्युकारो यजुरन्तरः । मान्तादिः सामापीति । मान्तः मकारान्तः आदिः अकारादिश्च सामवेद इत्यर्थः । ज्योतिरुत्तममिति हि साममसमाप्तिः । अग्न आयाहीति च तस्यादिः । अवशिष्टानि नामान्तराणि न्यासाय सूचयति । तस्य भेदा इति । अव रक्षण गति प्रीति तृप्त्यवगम कान्ति प्रवेश श्रवण स्वाम्य सामर्थ्य याचन क्रियेच्छा दीप्त्यवाप्त्यालिङ्गन हिंसा दहन भाव वृ-द्धिष्विति धातुनिष्पन्नानि लौकिकनामानि य उत्तरतः स ओंकार इत्यादि श्रुतिसिद्धानि वैदिकनामानीति विभागः ।

अयमत्र न्यासक्रमः । ओं अं ब्रह्मणे नमः । ओं आं विष्णवे नमः । ओं इं रुद्राय नमः । ओं ईं ओंकाराय नमः । ओं उं प्रणवाय नमः । इत्यादि क्षकारान्ता ऊह्याः । नाममात्रं तूच्यते । प्रणवः । सर्वव्यापी । अनन्तः । तारम् । सूक्ष्मः । शुक्लः । वैद्युतः । परं ब्रह्म । एकः । एकरुद्रः । ईशानः । भगवान् । महेश्वरः । महादेवः । सदाशिवः । सर्वरक्षिता । सर्वगतः । सर्वप्रियतमः । नित्यतृप्तः । सर्वावगमः । सर्वकान्तः । सर्वप्रविष्टः । सर्वश्रोता । सर्वस्वामी । सर्वसमर्थः । सर्वयाचकः । सर्वक्रियः । सर्वेच्छः । सर्वदीप्तः । सर्वावाप्तः । सर्वालिङ्गितः । सर्वहिंसकः ।

उच्चार्योच्चार्य च तं क्रमान्नयेदुपरि षड्द्वयान्तान्तम् ।
मनसा स्मृते यदाऽस्मिन्मनो लयं याति तावदभ्यस्येत् ॥ ३७
अथवा बिन्दुं वर्तुलमावर्त्तैस्त्रिभिरुपेतमेवमिव ।
प्रोतं रविबिम्बेन च समभ्यसेत् स्रुतसुधामयं तेजः ॥ ३८
अपमृत्युरोगपाप्मजिदचिरेण नृणां सिद्धिदो योगः ।
अथवा मूलाधारोत्थिता प्रभा बिसविभेदतन्तुनिभा ॥ ३९
वदनामृतकरबिम्बस्यूता ध्याताऽमृताम्बुलवलुलिता ।
स्थावरजङ्गमविषहृद्योगोऽयं नात्रसन्देहः ॥ ४०
अथवा त्रिवलयबिन्दुगधाम प्रणवेन समुन्नयेदूर्ध्वम् ।
पीतोर्णातन्तुनिभं सौषुम्नेनैव वर्त्मना योगी ॥ ४१
तस्मिन्निधाय चित्तं विलयं गमयेद्दिनेशसंख्याते ।
पुनरावृत्तिविहीनं निर्वाणपदं व्रजेत् समभ्यासात् ॥ ४२
अथवादिबीजमौ पुनरुमपि विषि तमपि संहरेद्बिन्दौ ।
बिन्दुं नादे तमपि शक्तौ शक्तिं तथैव शान्ताख्ये ॥ ४३

सर्वदाहकः । सर्वभावः । सर्वव्रजः । गुणबीजम् । ध्रुवः । वेदादिः । उमध्यः । मपरः । त्रिमात्रकः । योनिः । सर्वदेहाश्रयः । सर्वसंवाहकः । सर्वात्मेति नामानीति ॥ ३६ ॥

एवं नामविभेदैः प्रणवविभूतिं स्मृत्वोन्मन्यन्तं क्रमेण तं प्रणवं नयेदित्याह— उच्चार्येति ॥ ३७ ॥

बिन्दोः सूक्ष्मतन्तुनयनात्मकं योगमभिधाय बिन्दुस्वरूपनयनात्मकमप्याह— अथवा बिन्दुं वर्तुलमिति । प्रोतं रविबिम्बेनेति । द्वादशान्तस्थचिदर्कबिम्बेनेत्यर्थः ॥ ३८ ॥

पाप्मादिजयार्थं सौरं योगमभिधाय विषनिर्हरणाद्यर्थं सौम्यं योगतन्तुनयनात्मकमाह—अथवा मूलाधारेति । वदनशब्देन कारणमुच्यते । तद्गतेनामन्दलक्षणेनाऽमृतबिम्बेन स्यूतेत्यर्थः ॥ ३९ ॥ ४० ॥

रक्तसूत्रोन्नयनात्मकमावृत्तिहीनं मोक्षप्रधानं योगमाह—अथवा त्रिवलयेति । ॥ ४१ ॥ ४२ ॥

स्थूल सूक्ष्म कारण सामान्य बीज संविदभाव तद्वाचिकाकारादिमात्राणां च क्रमसंहारलक्षणं मोक्षसाधनयोगमाह—अथवादिबीजमिति ॥ ४३ ॥

तैजस्यनन्यगे चिति निर्द्वन्द्वे निष्कले सदानन्दे ।
सूक्ष्मे च सर्वतो मुखकरपदनयनादिलक्षणेऽलक्ष्ये ॥ ४४

स्वामिनि संहृत्यैवं करणेन्द्रियवर्गनिर्गमापितः ।
विलीनपुण्यपापो निरुच्छ्वसन् ब्रह्मभूत एव स्यात् ॥ ४५

अथवा योगोपेताः पञ्चावस्थाः क्रमेण विज्ञाय ।
ताभिर्युञ्जीत सदा योगी सद्यः प्रसिद्धये मुक्तेः ॥ ४६

जाग्रत् स्वप्नसुषुप्ती तुरीयतदतीतके च तास्तासु ।
स्वैरिन्द्रियैर्यदात्मा भुङ्क्ते भोगान् स जागरो भवति ॥ ४७

संज्ञारहितैरपि तैरस्याऽनुभवो भवेत् पुनः स्वप्नः ।
आत्मनिरुद्धयुक्ततया नैराकुल्यं भवेत् सुषुप्तिरपि ॥ ४८

इतरतैजसो वैलक्षण्यमाह—अनन्यग इति। अनन्यगत्वे हेतुश्चितीति। ज्ञानत्वेन प्राप्तं विषयजन्मादियोगं निराचष्टे—निर्द्वन्द्व इति। तत्र हेतुर्निष्कल इति। ततः सदानन्दत्वमस्ति चेत् एवंविधमानन्दं कुतो नोपलभ्यते सर्वैरिति। तत्राह—सूक्ष्म इति। कथं तर्हि अस्तित्वसिद्धिरिति। तत्राह—सर्वत इति। एवमप्यविषयत्वमाह—अलक्ष्य इति। करणेन्द्रियवर्गो यस्मादबोधान्निर्गच्छति उत्पद्यते स अपितः अपगतो यस्य स तथोक्तः। अत एव विलीनपुण्य-पापादित्वमपि संभवति ॥ ४४ ॥ ४५ ॥

सर्वव्यवहारेष्वपि कर्तुं बीज बिन्दु नाद शक्ति शान्तात्मक प्रणवसाधनम् उच्चारणादिरहितं स्वाभाविकं योगमाह—अथवा योगेति। योगोपेता समाधानविशेषोपेता इत्यर्थः ॥ ४६ ॥

अवस्था दर्शयति—जाग्रदिति। तासां विविच्य स्वरूपमाह—तास्वित्या-दिना। बुद्ध्यादि विषयव्याप्ति बीजरूपा जाग्रदवस्था विषयप्राधान्यपरित्यागेन बुद्धिप्राधान्यावस्था बिन्दुस्वप्नात्मिका सविषयाया बुद्धेः कारणात्मत्वावस्था नादसुषुप्त्यात्मिका कारणात्मिकाया बुद्धेः साक्ष्याकारावस्था शक्तितुरीयात्मिका ततस्तस्याः साक्षिणि लयावस्था शान्ततुरीयातीतेत्यर्थः ॥ ४७ ॥

संज्ञारहितैरिति। संज्ञाशब्देनेन्द्रियाणि उच्यन्ते। संज्ञायन्ते एभिरिति। जाग्रद्विवेकसामर्थ्यरहितैः इन्द्रियैः वासनात्मकैरित्यर्थः। मनोरूपैरिति भावः। आत्मनिरुद्धयुक्ततयेति। आत्मनो मनसो निःसंकल्पतया आत्मनो यन्नैराकुल्यं

पश्यति परं यदात्मा निस्तमसा चेतसा तुरीयं तत् ।
आत्मपरमात्मपदयोरभेदतो व्याप्नुयाद्द्यदा योगी ॥ ४६
तच्च तुरीयातीतं तस्यापि भवेन्न दूरतो मुक्तिः ।
अथवा सूक्ष्माख्यायां पश्यन्त्यां मध्यमाख्यवैखर्यौः ॥ ५०
समसुषुम्नाग्रगयोरपि युञ्ज्याज्जाग्रदादिभिः पवनम् ।
बीजोच्चारो जाग्रद्विन्दुः स्वप्नः सुषुप्तिरपि नादः ॥ ५१
शक्त्यात्मकं तुरीयं शान्ते लय आत्मनस्तुरीयान्तम् ।
अङ्गुष्ठगुल्फजानुद्वितयं च गुदश्च सीवनी मेढ्रम् ॥ ५२
नाभिर्हृदयं ग्रीवा सलम्बिकाग्रं तथैव नासा च ।
भ्रूमध्यललाटाग्रं सुषुम्नाग्रं द्वादशान्तमित्येवम् ॥ ५३
उत्क्रान्तौ परकायप्रवेशने चाऽऽगतौ च पुनः स्वतनौ ।
स्थानानि धारणायाः प्रोक्तानि मरुत्प्रयोगविधिनिपुणैः ॥ ५४
स्थानेष्वेष्वात्ममनःसंयोगसमीकरकर्मणोऽभ्यासात् ।
अचिरेणोत्क्रान्त्याद्या भवन्ति संसिद्धयः प्रसिद्धतराः ॥ ५५
कण्ठे भ्रूमध्ये हृदि नाभौ सर्वाङ्गके स्मरेत् क्रमशः ।
लवरसमीरहवर्णैरनिलसमा कालवञ्चनेयं स्यात् ॥ ५६
अवनिजलानलमारुतविहायसां शक्तिभिश्च तद्बीजैः ।
सारूप्यमात्मनश्च प्रतिनीत्वा तत्तदाशु जयति सुधीः ॥ ५७

तत्सुषुप्तिरित्यर्थः ॥ ४८ ॥ ४९ ॥ ५० ॥

जपकाले प्रतिपत्तव्यं योगमाह— अथवा सूक्ष्माख्यायामिति । तत्र सूक्ष्मशब्देन सूक्ष्मा वागुक्ता । स्वमहिमस्था निश्चला । आख्याशब्देन परा किंचिच्चलिता मूलाधारस्था । पश्यन्ती सामान्यज्ञानरूपिणी नाभिस्था । मध्यमा विशेषज्ञानरूपा हृदि स्थिता । वैखरीशब्दरूपिणी मुखस्था । इति मन्त्रोत्पत्तिक्रमयोगमभिधाय लयक्रमयोगमभिदधाति—समसुषुम्नाग्रगयोरिति । सुषुम्नाया अग्रं सुषुम्नाग्रं तं गच्छन्तीति सुषुम्नाग्रगाः । वैखरीमध्यमापश्यन्तीपरा-सूक्ष्माख्याः । आस्यभ्रूमध्यमूर्ध्वद्वादशान्तषोडशान्तस्थाः वाग्भेदाः । तैः सहितयोः मध्यमाख्यवैखर्योरित्यर्थः । योगक्रममाह—बीजोच्चार इति । सृष्टिसंहारयोः जाग्रदवस्था एकैव अवगन्तव्या । बिन्दुः स्वप्न इति । भ्रूमध्यहृदयस्थमध्यमा-

एवं प्रोक्तैर्योगैरायोजयतोऽन्वहं तथाऽऽत्मानम् ।
अचिरेण भवति सिद्धिः समस्तसंसारमोचनी नित्या ॥ ५८

इति योगमार्गभेदैः प्रतिदिनमारूढयोगयुक्तधिया ।
सिद्धय उपलभ्यन्ते मुक्तिपुरीसंप्रवेशनद्वाराः ॥ ५९

कम्पः पुलकानन्दौ वैमल्यस्थैर्यलाघवानि तथा ।
सकलप्रकाशवित्ते इत्यष्टावस्थाः प्रसूचिकाः सिद्धेः ॥ ६०

त्रैकाल्यज्ञानोद्यौ मनोज्ञता च्छन्दतो मरुद्रोधः ।
नाड़ीसंक्रमणविधिर्वाक्सिद्धिर्देहतश्च देहाप्तिः ।
ज्योतिःप्रकाशनं चेत्यष्टौ स्युः प्रत्यया युजः सिद्धेः ॥ ६१

अणिमा महिमा च तथा गरिमा लघिमेशिता वशित्वञ्च ।
प्राप्तिः प्राकाम्यञ्चेत्यष्टैश्वर्याणि योगयुक्तस्य ॥ ६२

अष्टैश्वर्यसमेतो जीवन्मुक्तः प्रवच्यते योगी ।
योगानुभवमहामृतरसपानानन्दनिर्भरः सततम् ॥ ६३

इत्येवं प्रणवविधिः समीरितोऽयं
भक्त्या तं प्रभजति यो जपादिभेदैः ।
स प्राप्नोत्यनुततनित्यशुद्धबुद्धं
तद्विष्णोः परमतरं पदं नराग्रः ॥ ६४

इति श्रीप्रपञ्चसारे एकोनविंशः पटलः ।

द्वयात्मकबिन्दुद्वयात्मकं स्वप्नद्वयमित्यर्थः । एवमुत्तरत्रापि योज्यम् ॥ ५०—५८ ॥

सकलप्रकाशः सर्वस्य तेजोमयत्वेन प्रकाशः वित्ता वेत्तृता याथात्म्येनेत्यर्थः ॥ ॥ ५९ ॥ ६० ॥

ज्योतिःप्रकाशनमिति । परं प्रत्यपि सर्वस्य ज्योतिर्मयत्वप्रकाशनमित्यर्थः ॥ ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥

इति श्रीपद्मपादाचार्यकृते प्रपञ्चसारविवरणे
एकोनविंशः पटलः ।

---

अस्त्रन्यासेन भूविघ्नान् दिग्बन्धात् खेचरानपि ।
वह्निप्राकारमभितो विभाव्याथात्मशोधनम् ।।३५।।
हंसेन कुम्भकं कुर्वन् मूलाधारस्थितां पराम् ।
कुण्डलीं धातुनाथाभिर्गणनाथादिभिस्तथा ।।३६।।
देहस्थाखिलदेवाद्यैर्ब्रह्मरन्ध्रोपरि स्थिते ।
संयोज्य परतत्त्वे तु स्वदेहं तु विचिन्तयेत् ।।३७।।
तत्त्वाधिष्ठातृदेवानां लयादात्मनि तज्जडम् ।
विभाव्य वामकुक्षौ तु चिन्तयेत् पापपूरुषम् ।।३८।।
अधोमुखं कृष्णवर्णं रक्तश्मश्रुशिरोरुहम् ।
खड्गचर्मधरं क्रूरं महापापोपपातकैः ।।३९।।
उत्पन्नाङ्गं तेन सह स्थूलदेहं तु साधकः ।
शब्दस्पर्शरसैर्बीजैः पूरकुम्भकरेचकम् ।।४०।।

---

फट् इत्यासनाधो वामपार्ष्णिघातत्रयेण सुदर्शनास्त्रमन्त्रेणास्त्रन्यासेन दिग्बन्धेन क्रमेण तल-भूमि-आकाशस्थविघ्नान् विघ्नकरान् भूतान्निवारयेत् । अथ भूशुद्धचनन्तरम् । आत्मशोधनम्, भूतशुद्धिं कुर्यादिति शेषः ॥ ३५ ॥

हंसेन हंसः इति । धातुनाथा डाकिन्याद्याः । गणनाथो गणेशः । आदिना जीवात्मनः संग्रहः ॥ ३६ ॥

देवाद्यैः, देवा भैरवाः, आद्येन ग्रहादि, तैः संयुतां कुण्डलीं परतत्त्वे परशिवे । जडं चिन्तयेदिति सम्बन्धः ॥ ३७ ॥

तत्त्वं पृथिव्यादि । देवानां गणेशादीनाम् आधारादिचक्रेषु पृथिव्याद्यात्मकेष्वधिष्ठातारो गणेशाद्याः । आत्मनि परशिवे लयात् तत् शरीर एवं विभाव्य पापपूरुषं चिन्तयेत् ॥ ३८ ॥

पापपुरुषध्यानमाह — अधोमुखमित्यादि ॥ ३९ ॥

पातकैरुत्पन्नाङ्गमिति सम्बन्धः । तेन पापपुरुषेण । शब्दो य । स्पर्शो र । रसो व । बीजैः बिन्दुयुतैः । यं रं वं इति क्रमेण जपन् पूरकं कुम्भकं रेचकं कुरोतीति सम्बन्धः । अत्र पूरकादिकं यावत् कर्तुं शक्यं तावत् कर्तव्यम् । तदुक्तं त्रिपुरार्णवे--"पूरकुम्भरेचकेषु यावत् स्वाद्वेगरोधनम्" इति ॥ ४० ॥

कुर्वन् वाय्वग्निसलिलैः शोष्य दग्ध्वा निषिच्य च ।
पुना रूपाग्नि सोऽहं च पूरकुम्भकरेचकम् ।।४१।।

घनीकृत्य तु संचेत्य चानये हृदि पूरुषम् ।
उत्पाद्य तस्मादखिलां तत्त्वदेवमयीं तनुम् ।।४२।।

कुण्डल्याद्या देवताश्च स्वस्वस्थाने विचिन्तिताः ।
देवताप्रचुरं देहं गतदोषं विचिन्तयेत् ।।४३।।

भूतशुद्धिं विधायैवं प्राणस्थापनमाचरेत् ।
पाशं मायामङ्कुशञ्च शब्दाद् वाय्वन्तसप्तकम् ।।४४।।

अग्निः प्रीतिगतः प्रीतिः पृथ्वी वायुस्तथा जपाः ।
माया प्रीतिः सप्तदश सर्वे बिन्दुयुताः प्रिये ।।४५।।

तत्तन्नाम विलिख्याथ प्राणा इह तथा पुनः ।
प्राणास्ततः सप्तदश नाम जीव इह स्थितः ।।४६।।

---

तत्तद्बीजोद्भूतैर्वाय्वग्निसलिलैः पुनः । रूप ल । अग्नि ह् । सोऽहं स्वरूपम् इति बीजं पठन् इति शेषः । क्रमेण पूरकादि कुर्वन् ॥ ४१ ॥

भस्मीभूतदेहं जलेनाप्लावितं घनीकृत्य संचेत्य । जडात्मकं चेतनीकृत्य अखिलान् पुरुषं जीवं तस्मात्पुरुषात् तत्त्वदेवानुत्पाद्य तन्मयं तत्प्रचुरम् । तनुं शरीरम् । आदौ परशिवे लयं सर्वदेवानामुक्त्वा तस्मात्पृथक्कृत्य हृद्यानीताज्जीवाद्देवतोत्पादनकथनं जीवात्मनः परमात्माभेदद्योतनायेति ज्ञेयम् ॥ ४२ ॥

स्वस्वस्थाने स्थिताः विचिन्तिताः ॥ ४३ ॥

एवमुक्तप्रकारेण । प्राणप्रतिष्ठामन्त्रमाह—पाशेति । पाशः आं । माया ह्रीं । अङ्कुशः क्रों । शब्दात् यकारात् । वाय्वन्तं सकारान्तम् ॥ ४४ ॥

अग्निः ह् । प्रीतिः ओ । तेन हो इति जातम् । प्रीतिः ओ । पृथ्वी क्ष । वायुः स । अजपा हंसः । सप्तदश पाशादिप्रीत्यन्तम् । अजपाया एकत्वेन गणनात् सप्तदश । सर्वे पाशादित्रयं अजपां च त्यक्त्वा ॥ ४५ ॥

तत्तन्नाम त्रिपुरसुन्दरीत्यादि । प्राणा इह । प्राणाः स्वरूपम् । सप्तदश । पाशादिप्रीयन्तम् । नाम त्रिपुरसुन्दरीत्यादि । जीव इह स्थितः । स्वरूपम् ॥ ४६ ॥

पुनः सप्तदशाख्या च सर्वं लिख्येन्द्रियाणि च ।
इह स्थितानि तान्येव नाम वाङ्मन आलिखेत् ।।४७।।
श्रोत्रत्वक्चक्षुरथ वै जिह्वा घ्राणं च पाद वै ।
प्राणा इहागत्य सुखं चिरं तिष्ठन्तु वै शिरः ।।४८।।
षट्कं चान्त्यगतं चेति प्राणस्य स्थापने मनुः ।
एकोनत्रिंशदधिकशतवर्णो भवेत् प्रिये ।।४९।।
पाशबीजं बिन्दुयुता प्रतिष्ठा संप्रकीर्तितम् ।
वह्निस्पर्शौ तुष्टिगतौ माया बिन्दुयुता भवेत् ।।५०।।
शक्तिस्पर्शौ प्रीतिगतौ चाङ्कुशं बिन्दुयोगतः ।
अग्निः सबिन्दुः सर्गेण युतो वायुरथो जया ।।५१।।
ब्रह्मादयो वै ऋषयश्छन्दो वेदत्रयं भवेत् ।
प्राणशक्तिः परा देवी देवता संप्रकीर्तिता ।।५२।।
तेजस्पर्शयुतैर्दीर्घबीजैरङ्गानि विन्यसेत् ।
षण्ढस्वरविहीनैस्तु जातयस्ते प्रकीर्तिताः ।।५३।।

---

आख्या नाम । सर्व इन्द्रियाणि । इह स्थितानि । स्वरूपम् । तानि । सप्तदश । वाङ्मनः स्वरूपम् ।। ४७ ।।

श्रोत्रत्वक्चक्षुजिह्वाघ्राणपादप्राणा इहागत्य सुखं चिरं तिष्ठन्तु । स्वरूपम् । शिरः स्वाहा ।। ४८ ।।

अन्त्यगतं षट्कं पृथ्व्यादि षडक्षराणि । अत्राजपाया अक्षरद्वयगणना । इन्द्रियाणि इह इत्यसन्धिः । एकोनत्रिंशदिति । सर्वत्राजपायाः वर्णद्वयगणनम् । आद्ये द्वितीये च कूटे चतुर्विंशतिः, तृतीये अष्टाविंशतिः, चतुर्थे त्रिपञ्चाशत् । सर्वत्र नाम्नो गणनाभावः ।।४९।।

प्रतिष्ठा आ । बह्नि ह । स्पर्श र । तुष्टिः ई ।। ५० ।।

शक्तिः क । स्पर्शः र । प्रीतिः ओ । अग्निः ह । सर्गः विसर्गः । वायुः स ।। ५१ ।।

ऋष्यादिन्यासमाह--ब्रह्मादय इति । ब्रह्मविष्णुरुद्रा इत्यर्थः । वेदत्रयम् ऋग्यजुः-सामानि ।। ५२ ।।

तेजः ह । स्पर्श र । दीर्घबीजैः बिन्दुयुतैर्दीर्घस्वरैः ह्रां ह्रीं इत्यादि ह्रः इत्यन्तैः । षण्ड स्वरः ऋ लृ इति । एतद्द्वयरहितैः षट्दीर्घबीजैरित्यन्वयः । ते षण्डस्वरहीनाः षट्स्वरा जातय इत्यर्थः । जातिसंज्ञाकरणस्याग्रे उपयोगः ।। ५३ ।।

शोणसागरमध्यस्थरत्नमाणिक्यपोतके ।
मणिमण्डपसंराजद्रक्तपद्मोपरि स्थिताम् ।।५४।।
जपाकुसुमसच्छायां रक्तस्रग्वस्त्रभूषणाम् ।
सृणिं पाशं तथा चापं पौण्ड्रं तद्वत् त्रिशूलकम् ।।५५।।
असृक्पूर्णकरोटं च पञ्च बाणांश्च बिभ्रतीम् ।
स्मरेत् त्रिनेत्रां स्वसमशक्त्यष्टकसुसेविताम् ।।५६।।
एवं ध्यात्वा स्वहृदये तलं न्यस्य त्रिधा जपेत् ।
ममेति नाम्नि संयोज्य चैवं प्राणस्थितिर्भवेत् ।।५७।।
मातृकाभिस्ततः प्राणायामत्रितयमाचरेत् ।
नृपेण भूतपक्षाभ्यां दिशा स्यात् पूरकादिकम् ।।५८।।
ब्रह्मा ऋषिः स्याच्छन्दस्तु गायत्री कीर्तिता भवेत् ।
जातिह्रस्वगुरुभ्यां तु षड्वर्गैः पुटितैर्न्यसेत् ।।५९।।

---

ध्यानमाह—शोणेति । शोणसागरः रक्तजलार्णवः । पोतके नौकायाम् ॥ ५४ ॥

सृणिः अङ्कुशः । पौण्ड्रम् पुण्ड्रेक्षुनिर्मितं चापम् ॥ ५५ ॥

करोटं नृकपालम् । दक्षोर्ध्वादिदक्षमध्यान्तं षडायुधानि ॥ ५६ ॥

आं ह्रीं क्रों इति बीजादिन्यासः, "आद्यैस्त्रिभिर्बीजशक्तिकीलकानि प्रविन्यसेत्" इति त्रिपुरार्णववचनात् । देवताप्रीतये प्राणस्थाने विनियोग इति ज्ञेयम् । न्यासस्थान-मुद्राबीजयोगपञ्चपूजाः सर्वत्र पूर्ववज्ज्ञेयाः । तलं करतलम् । नाम्नि नामस्थाने मम प्राणा इत्यादि । अत्र पद्धतौ लाघवानुरोधेन ज्ञानार्णवप्रोक्तमनुमुक्त्वा समर्थानां मूलतन्त्रत्यागा-नौचित्यादथवेति पक्षान्तरमुक्तम् ॥ ५७ ॥

मातृकान्यासाङ्गं प्राणायाममाह—मातृकाभिरिति । ततः प्राणप्रतिष्ठानन्तरम् । तत्प्रकारमाह—नृपेति । नृपेन षोडशभिः स्वरैः । भूतपक्षाभ्यां कादिमान्तैः पञ्चविंशति-संख्यैः । दिशा यादिक्षान्तैर्दशभिः । क्रमेण पूरकं कुम्भकं रेचकं कुर्यादित्यर्थः ॥ ५८ ॥

मातृकान्यासस्य ऋष्यादिन्यासमाह—ब्रह्मेत्यादि । न्यासस्यापि मन्त्रमयत्वा-दृष्यादिन्यासो युक्त एव । ऋष्यादितत्त्वमुक्तं त्रिपुरारहस्ये—"आद्यद्रष्टा तु मन्त्राणां ऋषिस्तत्र पृथक् पृथक् । गुरुत्वान्मूर्ध्नि तत्स्थानं मन्त्रवर्णाधिदेवता । छन्दःस्थानं मुखं योग्याद्देवता हृदि संस्थिता । मन्त्रवाच्यात्मिका तेन देवतां हृदि विन्यसेत् ॥ बीज-वर्णात्मना दृष्टाः पूर्वं मन्त्रा महर्षिभिः । तेन कारणभूतेन मन्त्रा दृष्टा अनन्तरम् ॥ तस्मात्

ब्रह्मरन्ध्रे स्मरेत् पद्ममष्टपत्रं सुकर्णिकम् ।
भूपुरं तद्बहिर्देवि सर्गयुक्प्रकृतिं स्मरेत् ।।६०।।
कोणेषु रसबीजं वै दिक्षु पत्रेष्टवर्गकम् ।
पञ्च पञ्च चतुर्युग्मद्वितयं चेति कादितः ।।६१।।
स्वरयुग्मं केशरेषु प्रासादपरकर्णिकम् ।
अग्निवाय्वङ्गदासर्गः प्रासादपरसंज्ञितम् ।।६२।।

---

तन्मन्त्रबीजं वै मन्त्रकारणभावतः । मन्त्रसामर्थ्यरूपेण फलदाने सशक्तिकः ।। तद्वर्णे मन्त्रशक्तिस्तु तेन शक्तिरितीरितः । न गच्छेच्छक्तिरन्यत्र चेति शक्तिस्तु कीलिता ।। यस्मिन् वर्णे स वर्णस्तु कीलकं समुदाहृतम् । बीजस्थानं गुह्यमिति तत्र बीजं प्रविन्यसेत् ।। शक्तिस्तु गमने दृष्टा तेन शक्तिस्तु पादयोः । नाभौ प्राणः कीलितो वै तस्मात्तत्र तु कीलकम् ।। ऋष्यादिन्यासहीनस्तु गुर्वादिद्रोहहेतुतः । बीजादिहीनस्तद्वच्च न फलं विन्दते क्वचित् ।।" इति । जातयः षण्ढस्वरहीनाः षट्दीर्घस्वराः । तेषां ह्रस्वगुरुभ्यां पुटितैर्वर्गैः अं कं. ङं आं इत्यादि । बिन्दुयोगः सम्प्रदायात् । षड्वर्गाः क च ट त प इति पञ्चवर्णात्मकाः पञ्च-वर्गाः । यवर्गो दशवर्णः षष्ठः, "अनुस्वारविसर्गाभ्यां यशवर्गौ ह् ल कौ" इति ज्ञानार्णवोक्तेः । बीजादिन्यासस्तु—"ऋषिर्ब्रह्मा च गायत्री छन्दो देवी सरस्वती । मातृका देवता देवि हलो बीजानि शक्तयः ।। स्वरास्तु परमेशानि तथा व्यक्तिस्तु कीलकम् ।।" इति दक्षिणा-मूर्तिसंहितायामुक्तः । त्रिपुरार्णवेऽपि—"हलो बीजानि तद्वत्तु स्वराः शक्तय ईरिताः । व्यक्तिश्च कीलकम्" इत्यादि । करादिन्यासे विशेषस्त्रिपुरारहस्ये—"करस्तु न्यासयोगेन मन्त्रात्मत्वाद्विशुद्धयति । ततः पूजाजपादौ तु विनियुक्तः फलप्रदः ।। अङ्गन्यासमृते विघ्नैर्मूर्तैर्भूयोऽभिभूयते । तस्मादङ्गन्यासयोगाद्रक्षणं सर्वतो भवेत् ।। युद्धे तु हृदयं चादौ रक्षणीयं प्रयत्नतः । एवं मूर्धापि तु शिखाशेखरस्थानभावतः ।। तद्भङ्गे मानभङ्गः स्यादत-स्तद्रक्ष्यमेव हि । कवचं चाङ्गसन्त्राणं नेत्रं स्यात् करणोत्तमम् ।। अस्त्रं च बाह्यकरण-मित्येतन्न्यासयोगतः । संरक्ष्य पश्चाद्दिग्बन्धाद्देशदिग्रक्षणं भवेत् ।।" इति ।। ५९ ।।

ध्यानमाह—ब्रह्मरन्ध्रेति । भूपुरम् चतुरस्रम् । तच्च तद्बहिः पद्मबहिः । सर्ग-युक्प्रकृतिः ठः । कोणेष्वित्यन्वयः ।। ६० ।।

रसबीजं वं । दिक्षु चतुरस्रस्य आग्नेयादिकोणेषु ठः । प्रागादिदिक्षु वम् । प्रागाद्यष्टपत्रेष्वष्टवर्गान् । वर्गानाह—पञ्चेति । कादितः ककारादितः । पञ्च पञ्च । पञ्चवर्णात्मकाः पञ्चवर्गाः । चतुर्युग्म चतुर्वर्णात्मकं वर्गद्वयम् । द्वितयं वर्णद्वयात्मक एकः । क च ट त प य श ला वर्गाद्याः ।। ६१ ।।

केसरेषु कर्णिकासमीपदलप्रान्तेष्वष्टसु स्वरयुग्मम् । प्रासादपरकर्णिकम् । प्रासाद-परामाह—अग्नीति । अग्नि ह । वायु स । अङ्गदा औ । सर्गो विसर्गः ।। ६२ ।।

आधारध्वनिमालक्ष्य कुलपद्मनिवासिनीम् ।
सार्धत्रिवलयोपेतसुप्तसर्पनिभाकृतिम् ॥६३॥

तडित्कोटिप्रतीकाशां विसतन्तुतनोयसीम् ।
कालाग्निसदृशाभासां स्मरन् प्राणबलोद्यमाम् ॥६४॥

कुम्भकश्वाससम्पर्कप्रबुद्धां ब्रह्मवर्त्मना ।
तज्ज्वालास्पर्शविगलत्परचन्द्रामृतोद्भवाः ॥६५॥

सबिन्दवो मातृकार्णा ध्यात्वैवं विन्यसेदथ ।
विशुद्धौ षोडशदले स्वरान् कादीननाहते ॥६६॥

रविपत्रेऽथ दिक्पत्रे मणिपूरे तु डादिकान् ।
स्वाधिष्ठानेऽथ षट्पत्रे बाद्यान् वादींश्चतुर्दले ॥६७॥

आधारे हक्षकारौ च आज्ञायां द्विदलेऽम्बुजे ।
चतुस्तारादिकान् देवि हृदन्तान् विन्यसेत् क्रमात् ॥६८॥

---

एवं ध्यानान्तरं कर्तव्यमाह—आधारेति । आधारध्वनिमालक्ष्य श्रुत्वा । आधारध्वनिर्नाम कर्णपिधाने श्रूयमाण आन्तरः शब्दः । तस्य श्रवणं प्राणायामाद्यभ्यासवतां सुलभम् । अन्येषां कर्णपिधानेन भवति । कुलपद्मम् आधारसहस्रदलकमलम् ॥ ६३ ॥

प्राणः ज्ञानम् । बलम् इच्छा । उद्यमः क्रिया । एतत्त्रयात्मिकाम् । "जडाद्यावर्तकः प्राणो जन्तूनां ज्ञानमेव हि" इत्यत्र प्राणपदस्य ज्ञानार्थत्वम् । साधारणी (स्वाभाविकी) ज्ञानबलक्रिया च" इत्यत्र बलपदस्येच्छार्थत्वं चोक्तम् ॥ ६४ ॥

कुम्भकं कृत्वा तच्छ्वाससम्पर्केण प्रबुद्धां ध्यायेत् । ब्रह्मवर्त्मना सुषुम्णामार्गेण ॥ ६५ ॥

अथ ध्यानानन्तरम् । विशुद्धौ कण्ठे । अनाहते हृदि । कादीन् ठान्तान् ॥ ६६ ॥

अनाहतं रविपत्रं द्वादशपत्रम् । दिक्पत्रं दशपत्रम् । मणिपूरे नाभौ । डादिकान् फान्तान् । स्वाधिष्ठाने लिङ्गे । बाद्यान् लान्तान् । वादीन् सान्तान् ॥ ६७ ॥

आधारे गुदोपरि । हक्षकारौ हकारक्षकारौ । आज्ञायां भ्रूमध्ये । न्यासमन्त्रानाह–चतुस्तारेति । हृत् नमः । हृदन्तान् तत्तन्न्यासमन्त्रानिति शेषः ॥ ६८ ॥

प्रणवो वाग्भवं माया लक्ष्मीस्तारचतुष्टयम् ।
एतत्सर्वत्र कर्मादौ मन्त्रादौ विनियोजयेत् ॥६९॥
मन्त्राणां वीर्यसिद्ध्यर्थं तेषां तेजोमयत्वतः ।
आद्यहीनं त्रितारं वै द्वितारं चान्त्ययुग्मकम् ॥७०॥
गन्धस्पर्शयुता शान्तिर्लक्ष्मीर्बिन्दुयुता भवेत् ।
एवमन्तर्मातृकाया न्यासं कृत्वा बहिर्न्यसेत् ॥७१॥
तत्र स्थूलं मातृकाया ध्यानं शृणु समाहिता ।
अकचाद्यष्टवर्गाङ्गां शुद्धस्फटिकसन्निभाम् ॥७२॥
चन्द्रचूडां त्रिनयनां पद्मस्थामुन्नतस्तनीम् ।
वरदं पुस्तकं चैव सुधाकुम्भं जपस्रजम् ॥७३॥

---

प्रणवः ॐ। वाग्भवं ऐं। माया ह्रीं। लक्ष्मीः श्रीं। इदमेव चतुस्तारम्। ॐ ऐं ह्रीं श्रीं अं नमः इत्यादि न्यासमन्त्रः। एतत् चतुस्तारम्। सर्वत्र कर्मादौ पठनीयस्य मन्त्रस्यादौ चतुस्तारं योजयेत्। आचमनादिसर्वकर्मसु मन्त्रादौ चतुस्तारयोगः कर्तव्यः। अत्र कर्मादौ इत्यस्य कर्माङ्गभूते इत्यर्थः। तेन कर्माङ्गभूते मन्त्रजपे एव मन्त्रादौ चतुस्तारयोगः। केवलं जपस्य तु स्वस्यैव मुख्यत्वात् कर्माङ्गत्वाभावेन तत्र मन्त्रादौ न चतुस्तारयोगः। अभिमन्त्रणादौ तु कर्माङ्गत्वेन चतुस्तारयोगः कर्तव्य एव। एककर्माङ्गेषु अनेकमन्त्रेषु प्रतिमन्त्रं च पृथक् चतुस्तारयोगः। एककर्मणि मन्त्रावृत्तौ तु सकृदेव तद्योगः। एतदुक्तं योगिनीतन्त्रे—"मन्त्रावृत्तौ सकृद्योगस्ताराणामेककर्मणि। तथा मन्त्रविभेदे तु प्रत्येकं योजयेच्छिवे ॥" इति ॥ ६९ ॥

तद्योगप्रयोजनमाह—मन्त्राणामिति। तेषां चतुर्णां बीजानां तेजोमयत्वतो ब्रह्मसूर्याग्नीषोमात्मक तेजोमयत्वात्। एतदुक्तं त्रिपुरारहस्ये—"तारं ब्रह्ममयं तद्वद् वाग्भवं सूर्यमण्डलम्। अग्नीषोमात्मकं माया लक्ष्मीश्चापि क्रमाद्भवेत् ॥" इति। चतुस्तारस्य तेजोमयत्वेन तद्योगान्मन्त्राणां वीर्याधिक्यमिति भावः। चतुस्तारादिमन्त्रे तु न चतुस्तारयोगः, "त्रितार्यादिमन्त्रेषु तद्योगो नैव विद्यते" इति योगिनीतन्त्रवचनात्। अत्र त्रितारीपदं चतुस्तारायुपलक्षकम्। आद्यः प्रणवः। ऐं ह्रीं श्रीं इतित्रितारम्। ह्रीं श्रीं इत्यन्त्ययुग्मम् ॥ ७० ॥

गन्धः श। स्पर्शः र। शान्तिः ई। बहिर्मातृकां न्यसेत् ॥ ७१ ॥

मातृकासूक्ष्मध्यानम् अमृतोद्भवा इत्युक्तम्। स्थूलं ध्यानं वक्तुमाह—तत्रेति। बहिर्मातृकान्यासादावित्यर्थः। अष्टवर्गा एवाङ्गानि यस्याः सा ॥ ७२ ॥

जपस्रजं जपमालाम्। दधानामिति शेषः। वामाधःकराद्दक्षाधःकरान्तमाणु धानि॥

अशेषविद्यारूपां वै हृदि ध्यात्वा प्रविन्यसेत् ।
मस्तके मुखवृत्ते च नेत्रयोः श्रोत्रयोर्नसोः ॥७४॥

गण्डौष्ठदन्तयुगले जिह्वायां ब्रह्मरन्ध्रके ।
पाणिद्वये मूलमध्यमणिबन्धेषु वै क्रमात् ॥७५॥

शाखामूले तदग्रे च तद्वत् पदयुगे न्यसेत् ।
पार्श्वद्वये पृष्ठनाभिजठरेषु तथा हृदि ॥७६॥

स्कन्धयोर्गलपृष्ठे च हृदयात् पाणिपादयोः ।
नाभौ मूर्ध्नि च देवेशि क्रमादादींस्तु विन्यसेत् ॥७७॥

प्रसादपरयोर्मध्यगताः सेन्दुखिलाक्षराः ।
मातृकाया मनुरयं स्यात्त्रिपञ्चाशदक्षरः ॥७८॥

सर्वमन्त्रमयश्चायमनेन तु महेश्वरि ।
बिलादिपादमूलान्तं व्यापकत्रितयं चरेत् ॥७९॥

तलाभ्यां निखिलाङ्गस्य स्पर्शनं व्यापकं भवेत् ।
विद्यान्यासमथो वक्ष्ये अन्तर्बाह्यविभेदतः ॥८०॥

---

मुखवृत्ते फालमध्याद्दक्षकपोलचिबुकवामकपोलफालमध्यान्तम् । एतदुक्तं योगिनी-तन्त्रे—"फालमध्याद्दक्षतस्तु कपोलचिबुकादितः । फालमध्यान्तमेतच्च मुखवृत्तं प्रकीर्तितम् ॥" इति । दक्षादिनेत्रादिषु । नसोः नासिकयोः ॥ ७४ ॥

ओष्ठे दन्ते चोर्ध्वादि । पाणिपादपार्श्वस्कन्धद्वयेऽपि दक्षादि ॥ ७५ ॥

शाखा अङ्गुलिः । तदग्रे शाखाग्रे । तद्वत् पाणिवत् । मूलमध्यगुल्फाङ्गुलिमूलतदग्रेषु ॥ ७६ ॥

गलपृष्ठं ककुत् । हृदयात् हृदयमारभ्य । पाणिपादयोः पूर्वं क्रमेणाङ्गुल्याग्रान्तम् । नाभौ मूर्ध्नि च हृदयादिति सम्बन्धः । आदीन् अकारादीन् ॥ ७७ ॥

मातृकामन्त्रमाह—प्रासादेति । अन्तर्मातृकाध्यानोक्ता प्रासादपराहसौः । सेन्दुखिलाक्षराः बिन्दुयुता आदिक्षान्ताक्षराणि ॥ ७८ ॥

वक्ष्यमाणव्यापकन्यासमहिमानं द्योतयितुं मन्त्रं स्तौति—सर्वेति । अनेन मातृकामन्त्रेण । बिलं ब्रह्मरन्ध्रम् । पादमूलं पादतलम् ॥ ७९ ॥

व्यापकलक्षणमाह—तलाभ्यामिति । तलं करतलम् । विद्या बालामन्त्रः ॥ ८० ॥

आधारानाहताज्ञासु रोधशक्त्युन्मनासु च ।
अथ बाह्ये पादबाहुशिखासु क्रमशो न्यसेत् ॥८१॥
नवयोनिमथो वक्ष्ये न्यासानामुत्तमोत्तमम् ।
कर्णयोश्चिबुके देवि शङ्खयोर्मुखमण्डले ॥८२॥
नेत्रयोर्नासिकायां च बाहुयुग्मे च वक्षसि ।
कूर्परद्वितये कुक्षौ जान्वोर्नाभौ वरानने ॥८३॥
पादयुग्मे तथोपस्थे पार्श्वयोर्हृदये तथा ।
स्तनद्वये कण्ठदेशे न्यसेद् बीजत्रयं पृथक् ॥८४॥
पञ्चबाणांश्च कामांश्च न्यसेदङ्गुलिषु क्रमात् ।
षडङ्गं च ततः कृत्वा व्यापकत्रितयं चरेत् ॥८५॥
चक्षुस्पर्शौ प्रतिष्ठास्थौ तौ पुनः शान्तिसंस्थितौ ।
कामराजं पादरूपे वामश्रोत्रगते मरुत् ॥८६॥
सर्वत्र बिन्दुयोगः स्यात् सर्गस्त्वन्त्ये प्रकीर्तितः ।
पञ्च बाणाः समाख्यातास्तेषां नाम शृणु प्रिये ॥८७॥

---

अन्तर्न्यासमाह—आधारेति । रोधो रोधिका । एतत्त्रयम् । भ्रूमध्योर्ध्वे त्रित्र्यङ्गुलान्तेऽन्तःस्थानम् । एवं षट्सु स्थानेषु मूलत्रिबीजद्विरावृत्त्या न्यसेत् ॥ ८१ ॥

शङ्खयोः फालदक्षवामोर्ध्वयोः । मुखमण्डलं वक्त्रछिद्रम् ॥ ८२ ॥

बाहुर्भुजमूलम् । कुक्षिर्जठरम् ॥ ८३ ॥

पादयुग्मे चरणयुग्मे बीजत्रयम् । मूलस्य अत्र हृदयवक्षसोः पर्यायत्वेऽपि वक्षसः किञ्चिदूर्ध्वे हृदयमिति सम्प्रदाय इत्युद्योते उक्तम् ॥ ८४ ॥

अत्र न्यासे विशेष उक्तो योगिनीतन्त्रे—"तत्तन्मुद्राविधानेन स्थानं मन्त्रं च देवताम् । एकं विभावयन् यस्य फलानन्त्यमवाप्नुयात् ॥ इति । अङ्गुलिषु अङ्गुष्ठादिषु । षडङ्गं व्यापकं च मूलेन" इति ॥ ८५ ॥

पञ्चबाणबीजान्याह—चक्षुरिति । चक्षुः द । स्पर्शः र । प्रतिष्ठा आ । तौ चक्षुस्पर्शौ । शान्तिः ई । कामराजं मूलद्वितीयम् । पादः ब । रूपं ल । वामश्रोत्रम् ऊ । मरुत् स ॥ ८६ ॥

अन्ते सकारे । सर्गः विसर्गः । तेषां पञ्च बाणानाम् ॥ ८७ ॥

क्षोभणो द्रावणो देवि तथाकर्षणवश्यकौ ।
उन्माद इति विख्याता मायामूलद्वितीयकम् ॥८८॥

वाग्भवं तुर्यबाणश्च मरुच्छ्रोत्रमरुद्गुणाः ।
बिन्द्वाढ्यवामनेत्रस्थाः पञ्च कामाः प्रकीर्तिताः ॥८९॥

कामो मन्मथकन्दर्पौमकरध्वज एव च ।
मीनकेतन इत्येवं तेषां नाम प्रकीर्तितम् ॥९०॥

अथ पूर्वोक्तमुद्राणां स्वरूपं क्रमतः शृणु ।
दक्षपाणितलं देवि वामपृष्ठोपरि न्यसेत् ॥९१॥

अङ्गुष्ठद्वितयं पार्श्वेऽऋजुरूपमधोमुखम् ।
मत्स्यमुद्रेयमाख्याता मण्डलादिप्रकल्पने ॥९२॥

ऊर्ध्वमुष्टौ दक्षहस्ते तर्जनी वक्ररूपिणी ।
मुद्रेयमङ्कुशाख्या स्यात्तीर्थाह्वानादिकर्मणि ॥९३॥

तर्जन्यादिचतुष्कं वै प्रोतं हस्तद्वयस्थितम् ।
दक्षतर्जन्यनामायां वाममध्यकनिष्ठिके ॥९४॥

---

पञ्चकामानाह—मायेत्यादि । मूलद्वितीयकं कामबीजम् ॥ ८८ ॥

वाग्भवं मूलाद्यम् । तुर्यबाणः ब्लूं । मरुत् स । श्रोत्रं त । मरुद्गुणः र । बिन्द्वाढ्य-वामनेत्रम् ईं ॥ ८९ ॥

नामान्याह—काम इति । द्रां संक्षोभणबाणाय नमः । ह्रीं कामाय नम इत्यादि न्यसेत् ॥ ९० ॥

बामपृष्ठोपरि वामपाणिपृष्ठोपरि ॥ ९१ ॥

ऋजुरूपम् अवक्रम् । अधोमुखम् अधोमुखकरतलम् । कल्पने करणे । आदिना प्रदर्शने ॥ ९२ ॥

ऊर्ध्वनुखमुष्टौ मुष्टिनिर्गता तर्जनी वक्ररूपा । आदिः पूर्ववत् ॥ ९३ ॥

दक्षतर्जन्यां वाममध्यमादक्षमध्यमोपरितः वामानामादक्षानामोर्ध्वतः । एतदुक्तं त्रिपुरार्णवे—"वाममध्यानामिके च ऊर्ध्वस्थे दक्षयोस्तयोः" इति ॥ ९४ ॥

वामतर्जन्यनामायां दक्षमध्यकनिष्ठिके ।
अधोमुखी धेनुमुद्रा त्वमृतीकरणे मता ॥९५॥
ऊर्ध्वतो दक्षपृष्ठं तु वामपृष्ठे नियोजयेत् ।
तर्जन्यौ च कनिष्ठे च वेष्टिते तु परस्परम् ॥९६॥
मध्यमानामिके वक्रे चाङ्गुष्ठे चोर्ध्वयोजिते ।
तार्क्ष्यमुद्रेयमाख्याता निर्विषीकरणे शिवे ॥९७॥
अस्त्रं पूर्ववदेवेह रक्षणे संप्रकीर्तितम् ।
हस्तद्वयं मुष्टिरूपं ऋजुरूपा तु तर्जनी ॥९८॥
भ्रामयेद् दक्षवामाभ्यां मुद्रेयमवगुण्ठनी ।
इत्येतत् कथितं देवि द्वारपूजादिकं क्रमात् ।
रहस्यं परमं ह्येतत् किमन्यत् श्रोतुमिच्छसि ॥९९॥

इति श्रीमत्परमानन्दतन्त्रे षष्ठोल्लासः ॥६॥



---

दक्षमध्यकनिष्ठिके योजयेत् ॥ ९५ ॥

ऊर्ध्वतः वामहस्तयोर्ध्वतः । दक्षमणिपृष्ठम् ॥ ९६ ॥

अङ्गुष्ठे अङ्गुष्ठाग्रे । ऊर्ध्वयोजिते ऊर्ध्वाग्रतया योजिते ॥ ९७ ॥

पूर्ववत् षडङ्गन्यासवत् । इह मुद्राप्रदर्शने ॥ ९८ ॥

दक्षवामाभ्यां दक्षवामावर्तक्रमतः । षट्चरणोऽयं श्लोकः ॥ ९९ ॥

एवं बालायाः प्रातःस्मृत्यादिन्यासान्तविधिरुक्तः । तत्र प्रातःस्मृतौ सन्ध्यायां च विशेषः । पञ्चदशीप्रकरणे पञ्चदश्या उच्यते । मूलविद्यादिन्यासास्तु एते बालाया एव । पञ्चदश्यादिन्यासास्तु तत्प्रकरणे एवोच्यन्ते । स्नानविधिभूंशुध्यादिबहिर्मातृकान्यासान्तस्तु सर्वमन्त्रसाधारणो निरुक्त एवेति ज्ञेयम् ।

सौभाग्यानन्दसन्दोहेऽब्धिधीपद्यार्थबोधकः ।
परमानन्दटिप्पण्यामुल्लासः षष्ठको ह्यगात् ॥ ६ ॥



यथा रज्जूद्भवः सर्प आप्तोक्त्या तु मृषात्मकः ।
अदृष्ट्वा चापरोक्ष्येण रज्जुं नैव प्रसीदति ॥८२॥
मनस्तस्माद् गुरूक्त्या वै यावदात्मापरोक्षतः ।
नोपलब्धस्तावदिह भवेत् संसरणं पशोः ॥८३॥
प्रमाणेन गुरूक्त्या वा युक्त्या शास्त्रेण वाऽथवा ।
सकृदात्मस्वरूपं तु स्वस्मिन् येनोपलभ्यते ॥८४॥

---

सम्पादकं सम्यग्यथोक्तरीत्या आश्रयेदभ्यसेत् । तद्विज्ञानं प्रवक्ष्यामीत्यादिनैतदन्तेन शाम्भवोपायो निरूपितः।तल्लक्षणमुक्तम्—"अकिञ्चिच्चिन्तकस्यैव गुरुणा प्रतिबोधतः । उत्पद्यते य आवेशः शाम्भवोऽसावुदीरितः ॥" इति । गुरुणा महता पूर्णेन प्रतिबोधतो ज्ञानेन द्वैतलेशरहितेन अकिञ्चिच्चिन्तकस्य स्वात्मातिरिक्तं किञ्चिदप्यपश्यत इति तदर्थः । तन्त्रालोकेपि—"तैनाविकल्पसंवित्तिर्भावनाद्यनपेक्षिणी । शिवतादात्म्यमापन्ना समावेशोऽत्र शाम्भवः ॥" इति ॥८१॥

तत्त्वापरोक्षस्यैवावश्यकत्वं सदृष्टान्तमाह—यथेति । रज्जौ उद्भवो भ्रान्त्याभासो यस्य । मृषात्मकः असत्यभूतः सर्पः । तुरप्यर्थे आप्तस्य यथार्थवक्तुरुक्त्या नायं सर्प इति वचनेन परोक्षतया विदितोऽपीति शेषः । रज्जुम् । अपरोक्षेण प्रत्यक्षेण चादृष्ट्वा मनो नैव प्रसीदतीति सम्बन्धः । तत्पंजनितभयादिराहित्येन न प्रसन्नं भवतीत्यर्थः ॥८२॥

यस्मादेवं तस्माद् गुरुवाक्यादिना श्रुतस्य मननादिभिर्यावत्कालं वै निश्चयेन संशयविपर्ययराहित्येनापरोक्षेणात्मा नोपलब्धो न प्रत्यभिज्ञातः तावत्कालम् अविद्यापाशितत्वात् पशोः, इह मनुष्यादियोनिषु सम्यक्सरणं पुनः पुनर्गमनागमनं भवेत् ॥८३॥

अपरोक्षे कारणनिममं व्युदस्य यथा कथञ्चिदपरोक्षेणैव साधिते न पुरुषार्थलाभ इति निरूपयति—प्रमाणेनेत्यादि । अत्यन्तसमाहितचित्तस्य प्रमाणेन निर्विकल्पकज्ञानेन । अत्यन्तदृढविश्वासवतो गुरूक्त्या वा । युक्त्या अति निपुणेन सत्तर्केण वा । अथवा कुतर्करहितेन भूयः परिशीलितेन शास्त्रेण । तुरवधारणे । स्वस्मिन्नेव स्वस्वरूपाभेदेनैव सर्वात्मकं सर्वजगतात्मस्वरूपं निश्चयेन संशयविपर्ययराहित्येन येन साधकेनोपलभ्यते साक्षात् क्रियते, अखिला ध्यानसमाध्यादिक्रियाः पिष्टपेषणतुल्यत्वाद्व्यर्था इति सम्बन्धः । तदुक्तम्—'एकवारं प्रमाणेन शास्त्राद् वा गुरुवाक्यतः । ज्ञाते शिवत्वे सर्वस्थे प्रतिपत्त्या दृढात्मना ॥ करणेन नास्ति कृत्यं नास्ति भावनयापि च । सकृज्ज्ञाते सुवर्णे किं भावनाकरणादिना ॥" इति ॥८४॥

**सर्वात्मकं निश्चयेन व्यर्थास्तस्याखिलाः क्रियाः ।**
**सर्वदेशे सर्वदेहे सर्वकाले समात्मना ॥८५॥**
**परित्यक्तक्रमोपाधिसंविदात्मतया शिवः ।**
**येनोपलब्धस्तस्येह न कार्यमवशिष्यते ॥८६॥**
**अन्यैर्दृष्टं कृतमिव द्रष्टृणामेव तद् भवेत् ।**
**अश्वमेधसहस्राणि ब्रह्महत्याशतानि च ॥८७॥**
**आरूढशिवयोगस्य नेषत्स्पृशति कुत्रचित् ।**
**शिवात्मरूपं सर्वेषां भासते सर्वदैव हि ॥८८॥**

---

एवंविधात्मस्वरूपं न सकृच्छ्रवणादिना बुद्धिभूवं निष्प्रकम्पत्वेनावतरत्यतोऽत्र भूयोऽभ्यासो विधेय इति द्योतयितुं तमेवार्थमीषद्भङ्ग्यन्तरेण पुनर्निरूपयति—सर्वदेश इति । सर्वदेशादौ । समात्मना अविशेषरूपेण । अद्वितीयसंविदात्मकत्वेनेति यावत् ॥८५॥

एतदेव स्पष्टमाह—परित्यक्तेति । परितस्त्यक्तः सर्वथाऽसंस्पृष्टकालदेशक्रमाद्याधायक उपाधिर्येन । कालादिक्रमसमर्पकविषयच्छायानाच्छुरित इति यावत् । एवंविधशुद्धसंविदात्मत्वेन शिवः परमेश्वरो येनोपसमीपे स्वात्मरूपे लब्धः प्रत्यभिज्ञातः, तस्य प्राप्तपरपुरुषार्थत्वेन कृतकृत्यत्वान्न कार्यमवशिष्यते ॥८६॥

नन्वेवंविधानामपि शारीरमशनशयनगमनादिरूपमन्यच्च कर्म दृश्यते, तत्कथमिति चेदाह—अन्यैरिति । अन्यैरप्राप्तात्मतत्त्वैः पशुभिर्दृष्टं कृतमिव कर्मेव यत्किञ्चित् तद् द्रष्टृणामेव भवेत् । यथा भ्रमन्नेत्रस्य तरुशिखरादिभ्रमणम्, यथा वा रथाद्युपविष्टस्य क्षिप्रतरयायिनस्तरुशिखरादियानं स्वनिष्ठमेवं परयोगिनोऽननुसन्धानेन संस्कारमात्रेण निर्वृत्तकर्मणां तत्फलजननासमर्थानां कृततुल्यत्वमेव । मयेदं कर्म कृतमित्याद्यनुसन्धानाभावात्तदन्तःकरणभूम्यनारोहेण न तत्र योगिनः सम्बन्धः । अनेनेदं कृतमित्यनुसन्धानादयोग्यन्तःकरणारोहादयोगिनस्तत्र सम्बन्ध इति भावः । अत एवाह—अश्वमेधेत्यादि ॥८७॥

आ अभिव्याप्य रूढः रूढिं प्राप्तः विपर्ययेण बाधसम्भावनारहितः । शिवे अद्वयसंवित्स्वभावे योगः समाधिश्चित्तविश्रान्तिर्यस्य, तस्य कुत्रचिद्देशे काले वा अश्वमेधसहस्राद्यात्मकं कर्म ईषत् स्वल्पमपि न स्पृशति फलदानेन न तत्सम्बन्धो भवतीत्यर्थः । अयमाशयः—कर्मकर्तुः स्वोचितं फलम् ईश्वरो नियतिशक्तिनियमितं ददाति । प्रोक्तशिवयोगिनोऽद्वयसंविन्मात्रशरीरत्वेन तथाविधस्य करचरणादिस्पन्दनात्मककर्मणि

**न प्रज्ञातं तु पशुभिस्तस्मात् प्रज्ञापको गुरुः ।**
**शास्त्रादिकं च नित्यात्मज्ञानत्वादेव सुस्फुटम् ॥८९॥**
**अप्रज्ञातसुवर्णेन पुरुषेणासकृत्तु तत् ।**
**दृष्टं प्रज्ञायते नैव यथाभूतं सुवर्णकम् ॥९०॥**
**आप्तोक्त्या तु तदेवाद्धा सम्यक् प्रज्ञायते जनैः ।**
**तस्मात् प्रज्ञापकं शास्त्रं गुरुर्वा परमेश्वरि ॥९१॥**

---

कर्तृत्वस्यासम्भावना । देहस्य तु जडस्येच्छादिघटितकर्तृत्वं वा सुखाद्यनुभवरूपफलं वा दूरापास्तमिति निरुक्तयोगिकृतं कर्म न तस्य किञ्चित् फलमादधाति । अन्येषां द्रष्टॄणां शुभचित्तानां तन्निषिद्धकर्मसूदासीनानां सुकर्मस्वनुमोदकानां "कर्ता कारयिता चैव प्रेरकश्चानुमोदकः" इत्यादिवचनाच्छुभकर्मफलम् । अशुभचित्तानां तच्छुभकर्मस्वसूयावतामशुभकर्मसु परीवादपराणामशुभफलमिति । यदुक्तम्—"सुहृदः साधुकृत्यानि दुष्कृत्यानि च दुर्हृदः । विभज्य योगी प्राप्नोति परमं पदमच्युतम् ॥" इति । नन्वेवमभ्यासात् पूर्वमद्वयसंवित्स्वभावः प्रकाशते न वा? आद्येऽभ्यासादिवैयर्थ्यम् । द्वितीये तथाविधात्मनः प्रकाशरूपताहानिरित्याशङ्कां निरसितुमुपक्रमते—शिवात्मेति । अद्वयसंवेदनस्वभावशिवात्मकमात्मरूपं हि निश्चयेन सर्वदैव सर्वेषां प्रमातॄणां भासत एव ॥८८॥

ननु तर्हि किं साधनैरभियाच्यते इत्याशङ्क्याह—न प्रज्ञातमिति । तुरवधारणे । भातमपि पशुभिरहं सोऽस्मीति न प्रज्ञातमेव । यत एवं तस्माद् गुरुः स्वरूपप्रज्ञापको न तु भासकः । शास्त्रादिकं च प्रज्ञापकमेव । आदिना सद्युक्तिः । अत्र हेतुः—नित्येत्यादि । नित्यम् आत्मभूतत्वाज्ज्ञानरूपत्वाच्च । आत्मत्वेन नित्यसिद्धस्य ज्ञानत्वेन नित्यभातस्य न शास्त्रादिकं साधकं भासकं वेति भावः । सुस्फुटं न प्रज्ञातमित्यन्वयः ॥८९॥

ननु भासते न प्रज्ञातं चेति विप्रतिषिद्धमित्याशङ्कां व्यपोहितुं सदृष्टान्तं तदुपपादयति—अप्रज्ञातेति । प्रकर्षेण तत्तच्छब्दयोजनेनेदं सुवर्णमिति ज्ञातं प्रज्ञातम् । न प्रज्ञातं सुवर्णं येन स अप्रज्ञातसुवर्णः । एवंविधेन पुरुषेण । तुरप्यर्थे । असकृद् भूयः । इदं किञ्चिदिति दृष्टमपि तत्सुवर्णं यथाभूतं सत्यात्मकं नैव प्रज्ञायते ॥९० ॥

तदेव सामान्येन ज्ञातं सुवर्णमेव । आप्तस्य यथार्थवक्तुः । इदं सुवर्णमित्युक्त्या सम्यक्संशयविपर्ययराहित्येन इदं सुवर्णमिति विशेषतः साक्षात् प्रज्ञायते । यस्मादेवं लोके भातस्यापि प्रज्ञातत्वं न, तस्मात् शास्त्रं गुरुर्वा भातस्यैव प्रज्ञाने कारणमिति ॥९१॥

समानसत्त्वरजसा पुरुषेण गुरूक्तितः ।
न प्रज्ञायते यस्माद्धि तस्माद्योगं समाश्रयेत् ॥९२॥
श्रुतो मनोहरः कान्तो सकृत् प्रज्ञायते न तु ।
यदा तदाऽपूर्णकामा निरानन्दैव सा शिवे ॥९३॥
तमेव सा तदानीं च प्रज्ञाय हितवाक्यतः ।
पूर्णानन्दमयं भावं यथाप्नोति भवेत्तथा ॥९४॥
अद्वयं शिवमात्मानमप्रज्ञाय गुरूक्तितः ।
जनः शोकहतो नित्यं यथा वै विस्मृताकरः ॥९५॥
आत्मानन्दमयः सर्वप्रियहेतुत्वतः शिवे ।
भारादित्यागसुव्यक्तसुखात्मत्वाच्च शङ्करि ॥९६॥

---

एवं सामान्येन भासमानमात्मतत्त्वं गुरूक्त्या समानसत्त्वरजसा प्रागुक्तलक्षणेन पुरुषेण न प्रज्ञायते, अयमहं शिवोऽस्मीति न प्रत्यभिज्ञायते यस्मात्, तस्मात् स योगं वक्ष्यमाणं शास्त्रोपायरूपं सम्यक्फलप्राप्त्यन्तमाश्रयेत् ॥९२॥

ननु सामान्येनात्मनो ज्ञानस्य फलादधिकं प्रज्ञानफलं न किञ्चिदित्याशङ्क्य तद्विशेषफलं सदृष्टान्तं निरूपयति—श्रुत इति । कयाचित् कामिन्या कश्चनातिसुन्दरो मनोहर ईदृशातिसुन्दरस्वरूपवानिति सखीवचनश्रवणेन भूयः परोक्षेण ज्ञातोऽपि यदा न प्रज्ञायत एव अपरोक्षेण न ज्ञात एव । सा कामिनी तद्दर्शनोत्कण्ठितान्तरङ्गा तदा असकृत् परोक्षेणापि तद्दर्शनकाममनवाप्य तत्सुखानुभवविधुरैव भवति ॥९३॥

तमेव कालान्तरेऽकस्माद् दृष्टिगोचरमप्युपलभ्य सा कामिनी तेन सप्रेमभावं भाषिता संस्पृष्टा परिष्वक्तापि विशेषेण तमविदुषी तत्सुखमलभमानैव तदानीमेवाकस्मादयं मनोहरः स यस्त्वया चिराद्दिदृक्षित इति स्वस्यात्यन्तहितवाक्यश्रवणेन तमेव सविधवर्तिनं सोऽयं यो मया द्रष्टुं चिरादभिलषित इति प्रज्ञाय पूर्णानन्दमयं भावं चित्तं सा कामिनी यथाऽऽप्नोति, तथा प्रकृतेऽपि भवेत् ॥९४॥

तदेवं प्रकृते योजयति— अद्वयमिति । अद्वयं शिवं स्वात्मभूतमपि गुरुवचनादिना स एवाहमित्यप्रत्यभिज्ञाय जनो जननमरणधारासमारूढो नित्यमनादिकालादेतत्क्षणावधि शोकेन दुःखेन हतो हिंसितो भवति । अत्र दृष्टान्तः—यथेति । विस्मृतः स्वनिहिताकरो येन । यथा स्वेन निक्षिप्ताऽमूल्यानन्तरत्नविस्मरणेनैकैकवराटकभिक्षणेनातिदुःखितः कश्चिद्दैवहतः ॥९५॥

प्रकृते स्वस्वरूपप्रज्ञानस्य मोक्षरूपं फलमुक्तम् । तच्च वेद्यसुखरूपं चेद्यदि तदनित्यं तर्हि पुनः संसारप्रसक्तिर्यदि नित्यं तर्हि द्वैतप्रसङ्ग इत्याशङ्क्य मोक्षात्मकं

**अकारणेन सौषुप्ते सुखरूपोपलम्भतः ।**
**तथा न दुःखं देवेशि यस्मात् तत्तु सहेतुकम् ॥९७॥**

---

सुखमात्मरूपमेवेत्याह—आत्मेति । आत्मा आनन्दमयः आनन्दैकरूपः । कुत इति चेदाह—सर्वेति । सर्वेषां प्राणिनाम् अन्यत्र प्रियबुद्धौ हेतुत्वात् । आत्मार्थमन्यत्सर्वं प्रियं यस्मादिति यावत् । "आत्मनोऽर्थं प्रियं सर्वं पुत्रमित्रकलत्रकम्" इत्युक्तेः । लोके हि तृप्त्यर्थमोदनं प्रियमिति ओदनात्तृप्तेः प्रियतरत्वम्, तृप्तिरपि स्वात्मसुखाय प्रियमिति स्वात्मसुखं प्रियतमम्, सुखमपि स्वात्मार्थमिति स्वात्मैवातिप्रियतमः । आत्मा न कस्याप्यर्थेऽपेक्ष्यत इति न ततः किञ्चिदधिकं प्रियम् । न चात्रात्मनः सुखमित्यात्मनः सुखस्य भेद इति वाच्यम्, यतस्तत्सुखमनुकूलसंवेदनीयम् । यद्वियोगस्मरणमपि क्लेशावहम् । स्पष्टं चैतल्लोके सुखसाधनस्यापि कान्ताकनकादेर्वियोगस्मरणं दुःखावहमिति । नहि कस्यचित् सुखं मे मा भूत संप्राप्तं सुखं वा निवर्तत्वित्यभिलाषः । एवं चात्मस्वरूपस्य भवननिषेधो निवृत्तिर्वा न केनचिदिष्यत इति सुखरूपत्वमात्मनः, प्रियेषु पर्यवसानभूतस्यैव सुखरूपत्वौचित्यात् । तस्यैव परमफलत्वादात्मैव सुखरूपः । आत्मनः सुखमिति तु राहोः शिर इत्यादिवन्नेयम् । नन्वात्मनः सुखरूपत्वं नानुभवसिद्धमित्याशङ्क्याऽस्तीत्यनुभवमेव प्रदर्शयति—भारादीति । मस्तकसमूढात्यन्तभारादित्यागेन सुष्ठु संशयादिराहित्येन व्यक्तमनुभूतं सुखात्मत्वं यस्य । आदिना गाढव्यापारादिसंग्रहः । न च भारादित्यागेन सुखमुत्पद्यत इति वाच्यम्, भारत्यागस्याभावत्वेन भावकारणत्वासम्भवात् । न च धननाशेन दुःखोत्पत्तेरानुभविकत्वादभावाद्भावोत्पत्तिः प्रामाणिकीति वाच्यम्, यतस्तत्र धननाशो न दुःखहेतुः, किन्तु तद्धनसाध्यत्वेन संभावितागामिसुखाभावसंभावनयैव दुःखोत्पत्तेः, अन्यथा धननाशाज्ञानदशायामपि दुःखप्रसक्तेः । न चैवं भारादित्यागस्थले तत्स्मरणादेः सुखहेतुत्वमानुभविकम् । तस्मात्तत्सुखं स्वभावभूतमेव ॥९६॥

तुष्यतु दुर्जन इति न्यायेनाभावस्य हेतुत्वमभ्युपेत्याह—अकारणेनेति । सौषुप्ते सुषुप्त्यवस्थायाम् । अकारणेन कारणं विनैव सुखात्मकस्वरूपोपलम्भात् । तत्र सुखमहमस्वाप्सं न किञ्चिदवेदिषमिति सर्वानुभवः । तत्र न किञ्चिदवेदिषमिति कारणाभिमतस्य न कस्याप्युपलब्धिः । न च ज्ञानसामान्याभावस्यैव तद्धेतुत्वमिति वाच्यम्, पाषाणादावतिव्याप्तेः । न किञ्चिदवेदिषमिति ज्ञानेन ज्ञानसामान्याभावासिद्धेश्च । नन्वेवं दुःखमप्यात्मरूपं कुतो नेत्याशङ्क्याह—तथेति । दुःखं तथा आत्मरूपं न । यस्माद् दुःखं सहेतुकम् अभिघातादिकारणजन्यम् । इदमत्र तात्पर्यम्—सुखं दुःखं च प्राणिनां भासते । तत्र सुखं सुषुप्त्यादौ स्वरूपातिरिक्तनिमित्तसामान्याभावे सति भासत इति स्वात्मरूपमेव सुखम् । दुःखं तु स्वातिरिक्तनिमित्तपूर्वकं भासत इति न स्वरूपम् । न

**प्रज्ञाततत्त्वस्यानन्दाविर्भावो भवतीश्वरि ।**
**यावदानन्दमयता नोदेति पुरुषस्य तु ॥९८॥**
**समसत्त्वरजस्कस्य तावद् योगं समाश्रयेत् ।**
**योगोऽपि बहुधा प्रोक्तस्तन्त्रभेदेषु शङ्करि ॥९९॥**

---

च यदि सुखं स्वरूपं तर्हि स्वात्मनः संवेदनैकरूपत्वेन सुखस्यापि तावन्मात्रतायां संवेदनस्य सदा भासमानत्ववत् सुखस्य कुतो न भासमानत्वमिति शङ्क्यम् । यथा कामिलारोगहतस्य श्वेतात्मकशङ्खग्रहणेऽपि श्वैत्याग्रहणवत् प्रकृतेऽपि भेदवासनादोषेण संविद्रूपावभासेऽपि सुखात्मतानवभासादिति ॥९७॥

तस्मात् प्रज्ञातशिवात्मतत्त्वस्य प्रमातुरानन्दस्याविर्भावोऽवभासनं भवति, भेदवासनाविगलनात् । तस्मात् समसत्त्वरजस्कस्य पुरुषस्य यावदमन्दमयता नोदेति नावभासते । तुरवधारणे । तावद्योगमेव समाश्रयेदिति सम्बन्धः ॥९८॥

एवं च समसत्त्वरजस्केन आनन्दमयत्वं यावत् स्वात्मनो न भासते तावद्वक्ष्यमाणयोगस्याभ्यासः कर्तव्यः । तदानन्दमयताभासनं नाम भेदाप्रथनपूर्वकस्वरूपप्रथनात्मकाद्वितीयस्वरूपप्रथनमेव । न ततोऽधिकं किञ्चित् । तस्यानन्दरूपत्वं चानुकूलवेदनीयत्वेन सर्वस्पृहणीयत्वात् । एतदुक्तमनुत्तराष्टके—"आनन्दोऽत्र न मद्यवित्तमदवन्नैवाङ्गनासङ्गवद्दीपार्केन्दुकृतप्रभाप्रकरवन्नैव प्रकाशोदयः । हर्षः संभृतभेदमुक्तिसुखभूर्भारावतारोपमः सर्वाद्वैतपदस्य विस्मृतनिधिप्राप्तिः प्रकाशोदयः ॥" इति । अत एव सर्वद्वैतप्रथाशून्यात्मकसुषुप्तौ तिरश्चामपि प्रवृत्तिः । परिचितसमाध्यवस्थानां तु स्पष्टतरमेवैतत् । ननु प्रियापरिष्वङ्गदशासमुपलब्धसुखं सुषुप्तिसुखादधिकम्, यतस्तदर्थं सुषुप्तिमपि परित्यजतीति विषयसुखमात्मसुखादधिकमिति चेच्छृणु—तदपि सुखं स्वरूपभूतमेव । यथा गाढवटच्छायासमाश्रितपुरुषानुभूयमानतच्छैत्यगुणाद् ग्रीष्मातपसंतप्ततनुः सद्यस्तच्छायासमाक्रमणेन तमेव शैत्यगुणमत्यन्तमधिकतममनुभवति, एवं तदेव सुखमधिकतमत्वेन भासतेऽनङ्गदहनावलीढवपुषः । अत एव वनितालिङ्गनसुखमपि तद्भर्तुः शतगुणोत्तरमनुभवत्यन्यश्चिरकालसंप्रार्थितप्रथमपरीरम्भे । ततः स एव द्वितीयादिपरीरम्भेषु मन्दतरं मन्दतममेव सुखमुपलभते । यदुक्तं गोवर्धनाचार्यैः—"सुरतं तदेव सुरतं कृच्छ्राल्लब्धं यदन्यनारीषु" इति । ननु यदि कान्तालिङ्गनजमपि सुखमात्मसुखं तर्हि मुमुक्षूणां बहुप्रयाससाध्यस्तदनुभवो विषयेणापि सिद्ध्यति कथं विषयिणाम्, सिद्धस्य वा तस्य कुतो न पुरुषार्थरूपत्वम् ? इति चेदुच्यते—पुरुषस्येदं मे स्यादिदं मे स्यादिति सूक्ष्मकामवासनाकण्टकसहस्रसमाविद्धवपुषस्तत्रकतरविषयप्राप्तिसम्भावनासमुदिततत्कामनाप्रौढानलज्वालाप्लुष्टस्य सामान्यवासनाकण्टकवेधव्यथा कृशीभवति, यथा गाढानलदग्धाङ्गस्य पूर्वस्थितकण्टकव्यथा तदा प्रकृतप्रोद्भूततीव्रकामानलस्य विषयप्राप्त्योपशमे

**तत्सारमत्र संगृह्य वदामि शृणु संयता ।**
**यदा सकृत् श्रुता नाथवक्त्रादपि महेश्वरि ॥१००॥**
**नान्तर्निरूढिमायाति तत्रोपायत्रयं शृणु ।**
**सत्सङ्गपूर्वकोऽभ्यासो गुरूक्तार्थस्य शङ्करि ॥१०१॥**

---

तत्कालेऽन्यवासनानामभिभूतत्वेन प्रौढतरकामाग्नेरुपशमादाच्च द्युतिद्योतितमाणिक्यवत् क्षणमात्रं तदात्मसुखं भासते। ततः कामान्तरोद्भवेन स्वरूपं पुनराच्छादितं भवति । तत्परिज्ञानाभावेनापुरुषार्थत्वमिति । यदुक्तं स्पन्दे—"निजाशुद्ध्यासमर्थस्य कर्तव्येष्वभिलाषिणः। यदा क्षोभः प्रलीयेत तदा स्यात् परमं पदम् ॥" इति । एवं च सर्ववासनात्यागेनैव सुखात्मस्वरूपोपलब्धिरिति सिद्धम् । तदेतद् गीतं भगवतापि—"प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान्। आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥" इति । श्रीभागवतेऽपि—"एवं प्रसन्नमनसो भगवद्भक्तियोगतः । भगवत्तत्त्वविज्ञानं मुक्तसङ्गस्य जायते ॥" इति । वासिष्ठेऽपि—"समाधिमथ कर्माणि मा करोतु करोतु वा । हृदयेनास्तसर्वाशो मुक्त एवोत्तमाशयः ॥" इति । तथा—"यथाऽभ्रलेखा शशिनं सुधालेपं मषी यथा । दूषयत्येवमेवान्तर्नरमाशापिशाचिका ॥" इति । त्रिपुरारहस्येऽपि—"चैतन्यं निहितं चित्तकरण्डेऽतिसुनिर्मले । अनन्तवासनापङ्कमग्नं नैवोपलक्ष्यते ॥" इति। एवं सुखात्मतां प्रसाध्य योगं वक्तुमुपक्रमते—योग इति। कर्मवद्योगोऽपि बहुधेत्यर्थः। योगश्चित्तस्य निग्रहः। तत्साधनमपि प्रकृते योग इत्युच्यते। तन्त्रभेदेषु तन्त्रान्तरेषु ॥९९॥

तेषां तन्त्रान्तरेषु प्रोक्तानां योगानां मध्ये सारभूतम् अल्पायासे शीघ्रफलदम्। अत्रास्मिन् त्वया पृष्टे परमानन्दसंज्ञिते तन्त्रे। संगृह्य संक्षेपरूपेण कृत्वा। एतस्य सारभूतत्वात् संयता समाहितचित्ता शृणु । तमेव योगमागमेषु शाक्तोपायत्वेन प्रसिद्धं वक्तुं तद्विभजनेनोद्देष्टुमारभते—यदेति । तल्लक्षणमुक्तम्—'उच्चाररहितं वस्तु चेतसैव विचिन्तयत्। य समावेशमाप्नोति शाक्तः सोऽत्राभिधीयते ॥" इति । उच्चाररहितं वागविषयं चेतसा चिन्तनं ध्यानमिति तदर्थः। तन्त्रालोकेऽपि—'अभिमानेन संकल्पाध्यवसायक्रमेण यः। शाक्तः समायोपायोऽपि तदन्ते निर्विकल्पकः।।" इति । अभिमानादिकं मनोमात्रव्यापारः। समायः सभेदो विकल्पभूतः। तस्यान्ते फलभूतो निर्विकल्पक इति तदर्थः। यदा असकृत् श्रुतापि सा संविद्रूपत्ता अन्तर्निरूढिं नायातीति सम्बन्धः ॥१००॥

अन्तः चित्तभूमौ। निरूढिं नायाति अपरोक्षनिश्चयभूमिं नावतरति। तदा तत्रोपायत्रयं क्रमेणापरोक्षनिश्चयसम्पादकं वक्ष्यमाणं शृणु। ते चोपाया अभ्यासमनोनिरोधप्राणनिरोधरूपाः। तत्राद्यमाह—सत्सङ्गेति। सत्सङ्गः पूर्वो यस्य। सतां सेवनादि

पुनः पुनस्तदावृत्तिः स्वीयबुद्ध्या विशुद्धया ।
अभ्यास इति सम्प्रोक्तः क्रमात् सिद्धिमवाप्नुयात् ॥१०२॥
अनेनासंस्थितप्रज्ञो मनोरोधं समाश्रयेत् ।
तत्रोपायास्तु शतशः प्रोक्तास्तन्त्रेषु सर्वतः ॥१०३॥
तीक्ष्णवैराग्ययोगेनाप्यभ्यासेन तु साधयेत् ।
मनसश्चलनं द्वेधा रसात् स्वाभाव्यतोऽपि च ॥१०४॥
मनसश्चञ्चलत्वे तु न प्रज्ञायेत किञ्चन ।
यथा चलज्जलस्थेन्दुबिम्बं प्रज्ञायते न च ॥१०५॥

---

कुर्वन् तैरुच्यमानमर्थं पुनः पुनरभ्यसेदावर्तयेदिति । सत्सङ्गफलमुक्तं वासिष्ठे— 'सदा सन्तोऽभिगन्तव्या यद्यप्युपदिशन्ति नो । या हि स्वैरकथास्तेषामुपदेशा भवन्ति ताः ॥" इति ॥१०१॥

अभ्यासस्वरूपं निरूपयति—पुनः पुनरिति । तस्य सज्जनैरुपदिष्टस्यार्थस्य आवृत्तिर्बुद्ध्या परिशीलनम् । कथंविधया बुद्ध्या ? विशुद्धया अश्रद्धासन्देहादिरहितया । एवमावृत्तिरेवाभ्यासः । एवमभ्यासेन ज्ञानसिद्धिं क्रमेण प्राप्नुयात् ॥१०२॥

एवम् उक्ताभ्यासेन । न संस्थिता सिद्धा प्रज्ञा अपरोक्षरूपा यस्य । मनसो रोधं वक्ष्यमाणक्रमेण सम्यक्फलपर्यन्तमाश्रयेत् । तत्र मनोरोधे । सर्वतः सर्वत्र तन्त्रेषु प्रोक्ताः । अत्र तत्सारं प्रोच्यत इति शेषः ॥१०३॥

तदेवाह—तीक्ष्णेति । वैराग्यलक्षणमुक्तं श्रीपतञ्जलिना—'दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञं वैराग्यम्" इति । दृष्टेषु श्रुतेषु विषयेषु तृष्णाराहित्येन विषयतत्परत्वाभावाद् वशीकाराख्यं वैराग्यमिति तदर्थः । एतद् भेद उक्तोऽन्यत्र— "विषयेषु विनष्टेषु तत्काले या विरागता । सा मन्दा मध्यमा सैव स्थिरा यदि विरागता ॥ दोषबुद्ध्या सत्सु तेषु तीव्रा सा स्याद्विरागता ॥" इति । तीक्ष्णं तीव्रं यद्वैराग्यं तस्य योगेन संस्काररूपस्य धारणेन, अविस्मरणेनेति यावत् । अपिः समुच्चये । अभ्यासेन च साधयेदित्यर्थः । पतञ्जलिनाऽप्युक्तम्— "योगश्चित्तवृत्तिनिरोधः", "अभ्यासवैराग्याभ्यां तन्निरोधः" इति । भगवताऽपि— "अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते" इत्युक्तम् । अभ्यासवैराग्याभ्यां मनोरोध उक्त एव । तत्राभ्यासवैराग्ययोर्मनोरोधे विविच्योपयोगं वक्तुमादौ मनसो निरोधनेन फलजननप्रकारमुपपादयति—मनस इति । द्वेधा द्विप्रकारं चलनम् । रसाद्रागाच्चलति अतिसुन्दरमिदं प्रियावदनमित्यादि प्रीत्या मुखादिविषयेषु प्रवर्तते । स्वाभाव्यतः प्रीतिविषयत्वाभावेऽपि कतीमे पक्षिण आकाशे उत्पतन्तीति गणनायां प्रवर्तते ॥१०४॥

एवं मनसो द्विविधे चञ्चलत्वे स्थिते एव । किञ्चन स्वल्पं शास्त्रार्थादिकमपि

स्थिरे प्रज्ञायते सम्यक् तथैवात्मा मनोभुवि ।
स्वर्भानुः खे यथाऽलक्ष्यो लक्ष्यते विधुमण्डले ॥१०६॥
चित्तादर्शे तथैवात्मा लक्ष्यते निर्मलेऽचले ।
चेत्योन्मुखी तु चिच्छक्तिश्चित्तमित्यभिधीयते ॥१०७॥
चेत्योन्मार्जनयोगेन चित्तं सम्यक् प्रसादयेत् ।
तदेव तत्पदं देवि चित्तं यस्मिन् प्रसीदति ॥१०८॥

---

न प्रज्ञायत एव किं वक्तव्यमात्मा न प्रज्ञायत इति । अत्र दृष्टान्तमाह—यथेति । इन्दुबिम्बं निजवृत्तादिरूपेण न प्रज्ञायते ॥१०५॥

स्थिरे जले सम्यग् वृत्तादिरूपेण प्रज्ञायते, तथैव स्थिरायां मनोभुवि आत्मा सम्यक् प्रज्ञायते । नन्वात्मनो विभुत्वे सति तस्य प्रज्ञानं मनस्येव कुत इत्याशङ्कां दृष्टान्तनिरूपणेन निवारयति—स्वर्भानुरिति । स्वर्भानुः राहुः । खे केवले आकाशे । अलक्ष्योऽपि यथा विधोश्चन्द्रस्य मण्डले लक्ष्यते ॥१०६॥

तथा निर्मले कामादिरूपमलरहिते अचले वासनाविलयेन स्थिरे आत्मा लक्ष्यते । ननु स्वर्भानोस्तमोमयत्वेन केवलमनुपलब्धस्य प्रकाशरूपचन्द्रमण्डलाश्रयेण तदाच्छादकत्वेनोपलब्धिरुचिता, आत्मनः प्रकाशैकरूपत्वेन कथं मनस्येवोपलब्धिरित्याशङ्कानिरासाय मनस एवादौ स्वरूपमाह—चेत्येति । मनश्चित्तमिति पर्यायः । संविदात्मनो जडव्यावृत्तं स्वरूपस्फुरणात्मकविमर्शनसामर्थ्यं यदस्ति सा चिच्छक्तिः । तस्याः स्वरूपमात्रनिष्ठता पूर्णाहंभाव उच्यते । स्वातन्त्र्याख्यमायाशक्त्या यद्विभिन्नमवभास्यते तच्चेत्यं विषयः । यदा सा चिच्छक्तिर्मायया परिच्छिन्नस्वरूपाश्रिता चेत्यविमर्शनायान्तःक्रियात्मकसंरम्भवती तदा सा संरम्भाख्या क्रियैव चेत्योन्मुखत्वम् । एवं चेत्योन्मुखी चिच्छक्तिरेव चित्तम् । एतदुक्तं वासिष्ठे—'असम्यग्दर्शनं यत् स्यादनात्मन्यात्मभावनम् । यदवस्तुनि वस्तुत्वं तन्मनो विद्धि राघव ॥" इति ॥१०७॥

एव मनसः स्वरूपमभिधाय तन्निरोधप्रकारमाह—चेत्येति । चेत्यस्य नीलसुखादेर्विषयस्य प्रतिबिम्बकल्पतयाऽन्तरुल्लिखितस्योन्मार्जनमनुल्लेखनम् । एतद्रूपेण योगेन मनोनिरोधोपायेन चित्तमुक्तलक्षणं मनः । सम्यग् व्युत्थानसंस्कारहानेन प्रसादयेत् प्रसन्नं स्थिरं चाञ्चल्यरहितं कुर्यात् । एवं क्रियमाणे चित्तं यस्मिन् प्रसीदति, यस्मिन् चाञ्चल्यरहिते स्थिरे रूपे प्रकर्षेण सीदति स्थितं भवति, चाञ्चल्यं परित्यज्य यत्स्थिररूपं प्राप्नोति, तदेव तत्पदम् अपारोक्षाख्यं स्वरूपमित्यर्थः । तदुक्तं वासिष्ठे—"दृश्यं नास्तीति बोधेन मनसो दृश्यमार्जनम् । सम्पन्नं चेत्तदा राम परा निर्वाणनिर्वृतिः ॥"

अप्रसन्नं तु तच्चित्तं संसारतरुकारणम् ।
वासनामलिनाच्चित्तात् संसारतरुरुद्गतः ॥१०९॥
बहुशाखापल्लवोद्यत्पुष्पसंघविराजितः ।
फलामोदसमाहूतेन्द्रियषट्पदमण्डितः ॥११०॥
संशोषयेदादितरुं वैराग्यग्रीष्ममारुतैः ।
दोषदृष्टिद्विजिह्वौघदंशनिर्गतजीवनम् ॥१११॥
विचारशाणनिशितज्ञानखड्गेन खण्डितम् ।
संदह्य विज्ञानाग्निना शुभ्रभस्मावशेषितम् ॥११२॥

---

इति । एवं च परित्यक्तचाञ्चल्यं यन्मनस्तदेवात्मरूपं सम्पद्यते । चित्तादर्शे आत्मा लक्ष्यत इति तु स्थूलदृशोक्तमिति ॥१०८॥

तच्चित्तमेवाप्रसन्नमस्थिरं बहिर्मुखं सत् संसाराख्यस्य तरोः कारणं बीजभूतम् । यदुक्तं वासिष्ठे—"चित्तं कारणमर्थानां तस्मिन् सति जगत्त्रयम् । यस्मिन् क्षीणे जगत्क्षीणं तच्चिकित्स्यं प्रयत्नतः ॥" इति । एवंविधचित्तकारणकस्य संसारस्य वृक्षरूपकत्वेन तन्निरसनोपायमभिदधाति—वासनेति । शुभाशुभकर्मवासनाभिर्मलिनादनात्माकाराच्चित्तात् संसाररूपतरुरुद्गतो बहिर्निर्गतो विभेदेन भातः ॥१०९॥

तत्र संसारो देहादिदृश्यावभासरूपस्तरुः । बह्व्यो देहप्राणादिष्वहन्तारूपाः शाखाः । मित्रपुत्रादिषु ममतारूपाः प्रवालाः पल्लवाः । तत्रोद्यन्त्युदयं प्राप्तानि तदर्थं सम्पादितगृहपशुधनादिषु ममतारूपाणि पुष्पाणि । तेषां संघैर्विराजितः । गृहादिसुखभोगः फलम् । तद्भोगवासना आमोदः । तेनाहूता आकृष्टा इन्द्रियरूपाः षट्पदास्तैर्मण्डितः ॥११०॥

एवंरूपं संसारतरुम् । आदिभूतमनादिम् । वैराग्यरूपा ये ग्रीष्मकालिका मारुताः, तैः सम्यक् शोषयेत् । वैराग्ये सति दृश्यावभासस्य नीरसत्वे कृशीभावो युक्त एव । एवं वैराग्येन कृशीभूतस्य पुनर्विषयदर्शनवृष्ट्या प्ररोहः सम्भवतीत्यभिप्रायेणाह—दोषेति । अयं देहो रुधिरास्थिचर्ममयो मलमूत्रपूर्णः, पुत्रमित्रधनादिकं नष्टं सन्महादुःखकरं विद्यमानमपि नाशादिभययुतमित्यादिदोषदृष्टय एव द्विजिह्वास्तेषामोघः समुदायः; तेन दंशो दंशनं तेन निर्गतं जीवनं जीवितम् अध्यात्मवायुसम्बन्धो यस्य । दोषदृष्ट्या वैराग्यस्य तीव्रतायां मृतवृक्षवत् संसारावभासो न प्ररोहति न प्रवर्तयतीति भावः ॥१११॥

एवंविधशुष्कवृक्षत्वेऽपि कालान्तरे तल्लग्नशुष्कबीजेन वृक्षान्तरोत्पत्तिशङ्कयाऽऽह—विचारेति । गुरुवाक्यशास्त्रादिजन्यबोधो ज्ञानम् । विचारः युक्तिभिरनुचि-

राजज्जगच्चक्रदेहं स्वात्मारामं महेश्वरम् ।
एवं वैराग्ययोगेन रसानशेन साधयेत् ॥११३॥

चलच्चित्तं स्वभावेन अभ्यासेनैव साधयेत् ।
वासना विविधाः सर्वा वैराग्येण विनाशयेत् ॥११४॥

स्वभावचलनं देवि अभ्यासेनैव साधयेत् ।
सुखे वैषयिके दोषदर्शनात् सततं शिवे ॥११५॥

---

न्तनरूपं मननम् । स एव शाणः शस्त्रतीक्ष्णीकरणोपलखण्डः, तेन निशितेन तीक्ष्णीकृतेन संशयविपर्ययहीनज्ञानखड्गेन खण्डितं छिन्नं निदिध्यासनेन त्रुटितस्वसम्बन्धम्। विज्ञानमपरोक्षज्ञानं तद्रूपाग्निना सन्दह्य शुभ्रभस्मावशेषितं संसारतरुं कुर्यात् । दग्धपटवत् संसारस्तस्य योगिनो भातीति भावः । भस्मनि शुभ्रेति विशेषणेन दाह्यशेषलेशस्याप्यभावः सूचितः ॥११२॥

एवं भस्मावशेषितमपि जगच्चक्रं दग्धपटवद्भासमानं न पृथक् पश्येत्, किन्तु सितभस्मोद्धूलिताङ्गमहेश्वरमिव राजद् भस्मावशेषितं जगच्चक्रं स्वदेहे यस्य । एवं स्वात्मारामं महेश्वरं पश्येदित्यर्थः । एवं प्रसङ्गागतमभिधाय मनसश्चलनं द्वेधेत्याद्युपक्रान्तं मनोनिरोधं निरूपयति—एवमिति । एवं मनसश्चलनं रसेन स्वाभाव्येन चेत्युक्तम् । तत्र वैराग्यस्य योगेनाभ्यासेन रसस्य नाशेन नाशकरणेन मनः साधयेत् स्थिरीकुर्यात् ॥११३॥

स्वभावेन चलच्चित्तम् । अभ्यासेन वक्ष्यमाणेनैव साधयेत् स्थिरीकुर्यात् । मनसो रसाच्चलनशान्तिर्वैराग्येणोक्ता । तत्र विषयदर्शनोत्तरं रागः समुदयति । रागोत्तरकालं प्रवृत्त्यादिकं भवत्येवेति वैराग्येण किं कर्तव्यमित्याशङ्क्याह—वासनेति । गृहं मे स्याद् धनं मे स्यादित्यादिकामनारूपविविधवासनायुतपुरुषः । गृहादिकं स्वपम्नसाध्यमवलोक्य तत्रानुरागेण युतः सम्पादनाय प्रवर्तते । एवं स्थिते गृहं मे स्यादित्यादिवासना एव वैराग्येण विशेषतो निःशेषेण नाशयेत् । ततश्च वासनायां नष्टायां विषयदर्शनेऽनुरागानुदयात् पुनर्न तत्र प्रवृत्ति प्राप्नोतीति भावः ॥११४॥

एवं वैराग्येण रागपूर्वकचलनमनिवर्त्य स्वभावचलनं निवर्तयितुमशक्यमिति सूचयितुं पुनः स्वभावचलनमभ्यासेन साधयेदित्याह—स्वभावेति । ननु वासनानामपि कथं वैराग्येण निवृत्तिरिति चेदाह—सुख इति । सर्वेषां विषयजन्ये सुखे एवापेक्षा मुख्या । विषयेषु तु सुखार्थमिति न मुख्यापेक्षा । तथा च तस्मिन् सुखे सततं तत्तद्वासनोत्तरकाले दोषाणामिदं सुखं नश्वरं परिणामे स्ववियोगेन दुःखदं नरकासादिधनं जन्ममरणप्रदं क्लेशसहस्रसम्पादितधनादिसाध्यमित्यादीनां दर्शनमालोचनं तस्मात् वैराग्यम् उप समीपे शीघ्रं जायेत इति सम्बन्धः ॥११५॥

वैराग्यमुपजायेत विपरीतग्रहादपि ।
विविधैरभ्यासयोगैर्नाशयेत्तु स्वभावजम् ॥११६॥
अकिञ्चिच्चिन्तको भूत्वा स्वस्थः स्वात्मनि संस्थितः ।
स्वप्नाद्यं जागरान्त्यं च स्वरूपमनुसन्दधेत् ॥११७॥
अथवोद्यमशक्तिं च सर्वोद्योगस्य कारणम् ।
ध्यायन्निरन्तरं देवि निस्तन्द्रः सिद्धिमाप्नुयात् ॥११८॥
अत्यन्तविस्मितो मर्त्यो यं भावं समुपाश्रयेत् ।
तं भावयन् सदा योगी सिद्धिमाप्नोति सुस्थिराम् ॥११९॥

---

नैतत्सुखं मम हितं परिणामदुःखदत्वादित्यादिविपरीतग्रहादपि वैराग्यमुपजायेत । अत्र सुखसाधनविषयेषु दोषदर्शनादिकं वासिष्ठत्रिपुरारहस्याद्युक्तमनुसन्धेयम् । स्वभावचलननाशकमभ्यासं वक्तुमुपक्रमते—विविधैरिति ॥११६॥

तदेवाभ्यासमनेकप्रकारं क्रमेणाह—अकिञ्चिदिति । न किञ्चिदपि चिन्तयतीत्यकिञ्चिच्चिन्तकः । किञ्चिदपि मनसाऽनुल्लिखन् स्वस्थः क्षुत्तृष्णाद्युपद्रवरहितः । स्वस्यात्मनि शरीरे सम्यगचाञ्चल्येन स्थितः, अचलदेह इति यावत् । स्वप्नस्य सुषुप्तेः । आद्यम् आद्यक्षणोपलक्षितम् । तथा जागरस्य जाग्रद्दशाया अन्त्यम् अन्त्यक्षणोपलक्षितं स्वरूपं देहाद्यभिमानरहितं निद्रानावृतमगृहीतविषयाकारमेवंविधं स्वस्य निर्विकल्परूपमनुसन्दधेत् अहमस्मीत्यनुसन्धानरूपं ध्यानं कुर्यादित्यर्थः ॥११७॥

उपायान्तरमाह—अथवेति । उद्यमशक्तिम् । चिच्छक्तेश्चेत्योन्मुखत्वरूपसंरम्भः प्राक् स्पष्टतरं निरूपितः, ताम् । स एव संरम्भो निखिलोद्योगस्य सर्वदेहेन्द्रियव्यापारस्य कारणम् । एवंविधामुद्यमशक्तिं ध्यायन् । चकारेण पूर्वश्लोकोक्ताऽकिञ्चिच्चिन्तनादि समुच्चितं ज्ञेयम् । निरन्तरं प्रत्ययान्तरेणाऽनन्तरितं यथा तथा । निस्तन्द्रः ध्येयस्वरूपमविस्मरन् । सिद्धिं मनःस्थैर्यं पूर्वकापरोक्षात्मदर्शनम् । एतदुक्तं स्पन्दे—"यथा ह्यर्थो स्फुटो दृष्टः" इत्यादिना "यामवस्थां समालम्ब्य" इत्यादिना च ॥११८॥

तथा अत्यन्तं निरवधित्वेन विस्मितो विस्मयं प्राप्तः । यं भावं स्वरूपस्थितिं समुपाश्रयेत् । एतच्चातिक्रुद्धाद्युपलक्षणम् । यदुक्तं स्पन्दे—"अतिक्रुद्धः प्रहृष्टो वा किं करोमीति वामृशन् । धावन् वा यत्पदं गच्छेत्तत्र स्पन्दः प्रतिष्ठितः ।।" इति । अतिक्रोधादिसमुदये अपरिच्छिन्नसंविन्मात्रस्फूर्तिमयी निर्विकल्पदशा आविर्भवति । तं भावं सदा निरन्तरेण भावयन् । योगीति पूर्वोक्ताकिञ्चिच्चिन्तकत्वादिसंग्रहाय ॥११९॥

ग्राह्यग्राहकमध्यस्थां दशां दीर्घं विभावयन् ।
नैश्चल्ययोगमाप्नोति सततं योगतत्परः ॥१२०॥

एकैकं चिन्तयन् दृश्यं बाह्यादन्तः क्रमेण तु ।
दृश्यं न दृश्यते यत्र तं भावं सर्वदाऽभ्यसेत् ॥१२१॥

अदृश्यं दृश्यमपि च दृश्यते यत्र संस्थितम् ।
तं चिन्तयन् सदा योगी तत्पदं प्रविशेद् द्रुतम् ॥१२२॥

प्रकाशश्चान्धकारश्च यत्प्रकाशे प्रकाशते ।
चिन्तयेत्तत् सदा योगी प्रकाशमयतां व्रजेत् ॥१२३॥

---

तथा ग्राह्यं घटादि, ग्राहकं चक्षुरादि, तयोर्मध्यस्था संविद् निर्विकल्परूपा। चक्षुषा निर्गतं ज्ञानं सूर्यमण्डलपर्यन्तमभिव्याप्याऽवभासते। तत्र तदेकमेव ज्ञानं देहप्रदेशे देहं सूर्यमण्डलप्रदेशे सूर्यमण्डलं चावभासयति। देहसूर्यमण्डलयोर्मध्ये तु केवलसंविन्मात्ररूपं निर्विकल्पमवभासते। तां मध्यस्थां निर्विकल्पदशाम्। यदुक्तं वासिष्ठे—"देशाद् देशान्तरं दूरं प्राप्तायाः संविदो वपुः। निमेषेणैव यन्मध्ये तद्रूपं परमात्मनः॥" इति। दीर्घं नैरन्तर्येण। सततं योगतत्पर इति प्रागुक्तसाधनसंग्राहकम् ॥१२०॥

तथा बाह्याद् घटादेः। अन्तःक्रमेण देहप्राणेन्द्रियमनोबुद्धिशून्यक्रमेण। बाह्यघटादिशून्यान्तेषु पूर्वं पूर्वं परित्यजन्नुत्तरोत्तरं मनसा चिन्तयन् शून्यस्य परित्यागे केवलं स्वरूपमात्रं तत्र प्रथत इति यत्र दशायां स्वरूपमात्रप्रथनात्मिकायां दृश्यं न दृश्यते न प्रथते। तं भावं तद्दशास्फुटितनिर्विकल्परूपम्। तुरवधारणे। एकैकमेवेत्यर्थः ॥१२१॥

अदृश्यं दृश्यमपि यत्र संस्थितं दृश्यते। अयं घट इति ज्ञानेन घटो दृश्यभूतो दृश्यते। नास्ति घट इति दृश्याद् घटादिरूपाद् भिन्नात्मकस्तत्तत्तेजःपुञ्जादिरूपो घटाभावो दृश्यते। एवं दृश्यादृश्ययोर्भावाभावयोर्यत्र सम्यक्स्थितयोः सत्तां प्राप्तयोर्दृश्यत्वम्। "प्रागिवार्थो प्रकाशः स्यात् प्रकाशात्मतया विना" इति श्रीप्रत्यभिज्ञोक्तरीत्याऽपरिच्छिन्नसंविदि स्थितानामेवाभासनमिति भावः। तं निखिलज्ञानान्तर्मुखानुस्यूतपूर्णसंविदात्मानम्। तत्पदं प्रविशेत् मनोनैश्चल्यद्वारा निर्विकल्पस्वरूपसाक्षात्कारं प्राप्नुयादिति भावः ॥१२२॥

एतदेवं श्रोतृबुद्ध्युपरोहाय भङ्ग्यन्तरेण पुनः पुनर्निरूपयति—प्रकाश इति। प्रकाशो घटादिज्ञानम्। अन्धकारोऽप्रकाशस्तदभावः। एतज्ज्ञानं मे जातमेतज्ज्ञानं न जातमिति यत्प्रकाशे यस्मिन् ज्ञाने प्रकाशते, तत्पूर्वोक्तं सर्वज्ञानान्तर्मुखानुस्यूतपूर्णसंविद्रूपम्। यश्चिन्तयेत् सप्रकाशमयतां साक्षात्कृतपरसंवित्स्वरूपतां व्रजेत् ॥१२३॥

अशून्यं शून्यमपि च यत्र शून्यात्मतां व्रजेत् ।
महाशून्यं तु तं ध्यायेत् सद्यःप्रत्ययकारकम् ॥१२४॥
एकभावं विमृश्याथो द्वितीयस्य विमर्शने ।
मध्यमार्गः सदा ध्येयः साधकेन शिवात्मना ॥१२५॥
अवश्यं तत्करोमीति यद्बलं संश्रितो वदेत् ।
तद्बलं सर्वदा ध्यायन् लभते सिद्धिमात्मनः ॥१२६॥
चित्तचाञ्चल्यभावेन यद्येकत्र न शक्यते ।
निरोद्धुं तर्हि देवेशि चालयेच्चित्तमेव तु ॥१२७॥

---

अशून्यं न शून्यं यत्र तज्जाग्रत्स्वप्नदशात्मकबाह्यावभासनम् । शून्यं सुषुप्त्यात्मकोऽनवभासः । एतदुभयमपि यत्र यस्यां दशायां शून्यात्मतां व्रजेत्, यद्दशायां जाग्रदाद्यात्मकबाह्यावभासः सुषुप्त्यात्मकानवभासोऽपि न भासते, तत्तुरीयदशात्मकं महाशून्यम् । देशकालादिपरिच्छेदानवभासान्महत्त्वम् । स्वरूपेतरानवभासाच्छून्यत्वम् । तद् ध्यानं सद्यः तत्काले एव प्रत्ययस्यापरोक्षस्वरूपज्ञानस्य कारकम् । तुरवधारणे । महाशून्यमेव ॥१२४॥

एको घटादिरूपो यो भावः । तं विमृश्य विज्ञाय । अथो तदनन्तरम् । द्वितीयस्य पटादिभावस्य विमर्शने विज्ञाने प्रसक्ते । तयोः पूर्वापरयोर्घटज्ञानपटज्ञानयोर्यो मध्यो मार्गः मध्यदशा । घटज्ञानमतीतं पटज्ञानं चागामि । तन्मध्यक्षणे ज्ञानस्य विषयास्पष्टस्य निर्विकल्पत्वम् । एवंविधनिर्विकल्पात्मकमध्यमार्गः । शिवात्मना स एव शिवः सोऽहमिति ध्येयः । तदुक्तं स्पन्दे—"एकचिन्ताप्रसक्तस्य यतः स्यादपरोदयः । उन्मेषः स तु विज्ञेयः स्वयं तमुपलक्षयेत् ॥" इति ॥१२५॥

एतत्कार्यमहमवश्यं करोमीति यद्बलं प्रागुक्तसंरम्भरूपं संश्रितो वदेत् । आत्मनः सिद्धिमपरोक्षज्ञानम् । एतदुक्तं स्पन्दे—"यामवस्थां समालम्ब्य यदयं मम वक्ष्यति । तदवश्यं करिष्येऽहमिति संकल्प्य तिष्ठति ॥" इत्यादि ॥१२६॥

एवं मनो निरोद्धुं मनस आलम्बनानि बहुधा प्रतिपाद्यात्यन्तराजसचित्तस्यैकत्रालम्बने यदि मनःस्थैर्यं नायाति तदोपायमाह—चित्तेति । चित्तस्य चाञ्चल्यभावेन सदा चञ्चलरूपत्वेन स्थित्या । एकत्रालम्बने । चित्तं चालयेदेव । क्षणमात्रमपि नैकत्र विश्रान्तं कुर्यात् ॥१२७॥

**प्रतिक्षणं तु भावानामनेकं संस्मरेद्धिया ।**
**हठादाक्रम्य स्वं चित्तं स्थितिं क्वाप्यजुषन् शिवे ॥१२८॥**
**यावत् स्थिरीभवेच्चित्तं तावदेवं समभ्यसेत् ।**
**स्थितं यावत् स्थिरं कुर्याद्भूयश्चामुं विधिं भजेत् ॥१२९॥**
**स्थिरीभावं समाप्नोति चित्तमत्यन्तचञ्चलम् ।**
**द्रव्यादिसेवनोदञ्चद्बोधभावं विचिन्तयन् ॥१३०॥**
**क्रमेण तत्समापत्तिं प्राप्नोत्येव महेश्वरि ।**
**स्वमनोहारिभावे तु कस्मिंश्चिदपि योजयेत् ॥१३१॥**

---

तत्प्रकारमेवाह—प्रतिक्षणमिति। धिया मनसा प्रतिक्षणं भावानामनेकम् अनेकभावान् सम्यक् तत्तद्गुणक्रियादिसहितं यथा तथा। स्मरेदुल्लिखेत्। प्रतिक्षणमविश्रान्त्या क्रमेण युगपद्वोल्लिखेत्। तेष्वेकत्र कुत्रापि मनः क्षणद्वयं न निवेशयेद् इति भावः। एवमुल्लेखनदशायां चित्तं क्वचित् क्षणद्वयं त्रयं वा उल्लिखितवस्तुनि किञ्चित् कल्पयन् स्थिरीभवेत्तदर्थमाह—हठादिति। बलात्कारेण स्वं चित्तम् आक्रम्य स्वायत्तीकृत्य क्वापि स्थितिम् अजुषन् अजोषयन् संस्मरेत् ॥१२८॥

एवं वेगेन चालितं चित्तं श्रान्तं सद्यावत्कालेन स्थिरीभवेत्तावत्कालम् एवमेवाभ्यसेत्। श्रान्तं सद्यत्र यावत्कालं स्थितं भवेत्तावत्तत्र स्थिरं कुर्यात्। ततश्चलिते पुनरमुं चालनविधिं कुर्यात् ॥१२६॥

एवमभ्यासे क्रियमाणेऽत्यन्तचञ्चलमपि चित्तं स्थिरतां सम्यगाप्नोति। उपायान्तरमाह—द्रव्येति। द्रव्यं प्रथमम्। आदिना संवित्। तस्य सेवनं स्वात्मीकरणं तेनोदञ्चदुन्मिषन् यो बोधभाव उल्लासात्मता। इन्द्रियाणामबहिर्मुखत्वेन मनसः स्वरूपावस्थानम्। तं विचिन्तयन् ध्यायन् ॥१३०॥

तत्समापत्तिं मनोनिरोधद्वारा स्वात्मविज्ञानं प्रत्यहं कालाधिक्यक्रमेण अद्य घटिकामात्रं मनोनिरोधः श्वो घटिकाद्वयमित्यादि क्रमेणैव चिन्तयन्। अतिविषयासक्तचित्तानां यत्र विषये निरोधकाले मनो धावति, तत्रैव मनोनिरोधं कुर्यादित्याह—स्वमन इति। कस्मिंश्चिदपि स्वमनोहारिभावे स्वमनःप्रियवस्तुनि। चित्तं योजयेत् ॥१३१॥

मनस्तेनापि नियतं प्रसादमुपगच्छति ।
ध्याने यत्र मनो याति तत्रैव स्थिरतां नयेत् ॥१३२॥
अथवा प्राणचलनं ध्यायेन्मायामनुस्मरन् ।
अभ्यसन्नपि चैवं तु स्थितिं स्वात्मनि लभ्यते ॥१३३॥
यद्भूतबीजं संस्मृत्य प्राणधारणमभ्यसेत् ।
यद्भूतधारणायोगात् तत्सामर्थ्यमवाप्यते ॥१३४॥
केवलां वापि हृल्लेखां ध्यायन्नपि च सर्वदा ।
क्रमात् सिद्धिमवाप्नोति सत्यमेव न संशयः ॥१३५॥
मदनं घृतकार्पासमेकत्र वटकीकृतम् ।
निक्षिप्य कर्णयोः शृण्वन्नाधारध्वनिमेव च ॥१३६॥

---

तेनापि प्रियवस्तुध्यानेनापि । नियतं नियमेव । प्रसादं निरोधम् । ध्याने ध्यानकाले । यत्र यस्मिन् विषये प्रियेऽप्रिये वा शत्रौ मित्रे वा । तत्रैव मनसोऽत्यन्त-प्रवृत्तिस्थले एव । तथा च योगसूत्रम्—"यथाभिमतध्यानाद्वा" इति ॥१३२॥

एतावता ग्रन्थेनान्तरे परमार्थभूते संविदात्मनि तच्छक्तौ संरम्भरूपायां मनः-संकल्पिते प्रियादिषु ध्यानमुक्त्वा प्रबलदुष्कृतसंस्कारवशादुक्तप्रकारैरप्राप्तमनोनिरोधं प्रति प्राणादिधारणामाह—अथवेति । प्राणस्य बहिरन्तर्गमागमरूपचलनम् । मायां हृल्लेखाम् । गमने आगमने च मायाम् अनु प्राणगमनागमनपृष्ठतः स्मरन्नेवं ध्यायेत् । मनसः स्वात्मनि स्थितिः स्थिरीभावो लभ्यते ॥१३३॥

पञ्चसु भूतबीजेषु मध्ये । यद्भूतबीजं संस्मृत्य सम्यक्पूर्ववत् स्मरन्नित्यर्थः । प्राणधारणं पूर्वोक्तप्राणचलनध्यानम् । तद्भूतबीजस्मृतिसहितत्वात् प्राणधारणस्य तद्भूतधारणात्वम् । एवंविधात्तत्तद्भूतधारणायोगान्मनोनिरोधे सति तद्भूतसामर्थ्यं धारणाप्लावनादिरूपं प्राप्यते ॥१३४॥

केवलां प्राणधारणारहितां हृल्लेखामपि ध्यायंश्च सर्वदा नैरन्तर्येण सिद्धिं मनोनिरोधपूर्वकस्वात्मज्ञानम् ॥१३५॥

मदनं मधूच्छिष्टम् । घृतकार्पासाभ्यामेकत्र संमेल्य वटकीकृतं घुटिकाकारतया कृतम् । अत्र घृतयोगः काठिन्यपरिहाय, कार्पासयोगः कर्णे निहितघुटिकायाः समग्र-निर्गमाय । अन्यथा काठिन्यात् कर्णे व्यथोत्पत्त्यादिरसंश्लिष्टावयवत्वेन कर्णरन्ध्रान्निस्सा-

हृल्लेखामुच्चरन् दीर्घामैक्यं तत्रानुसन्दधेत् ।
नादयोरुभयोर्देवि मनस्तस्माद् विलीयते ॥१३७॥

सम्पूर्णां देवतामूर्तिं ध्यायेदादौ समाहितः ।
स्थिरा यदा भवेन्मूर्तिस्तदैकाङ्गं परित्यजेत् ॥१३८॥

यथा यथा स्थिरीभूतं तथैकैकं परित्यजेत् ।
एवं सम्पूर्णसंत्यागात्तत्पदं समवाप्नुयात् ॥१३९॥

यथा जातो घटो देवि स्वभावाद् गगनान्तरः ।
जलेन पूरितः पश्चाद् गगनं नोपलक्ष्यते ॥१४०॥

---

रणे च्छिन्नवुटिकाशेषस्य कर्णरन्ध्रान्तःप्रवेशश्च स्यात् । एवं च यावता काठिन्यमसंश्लिष्टावयवत्वं च निवर्तते तावन्मदने घृतकार्पासयोर्योगः कर्तव्य. । तां वटिकाम् । कर्णयोः कर्णकुहरयोः । नितरां बाह्यशब्दाश्रवणमन्तर्नादश्रवणं च यथा भवति तथा क्षिप्त्वा । आधारध्वनिमेव शृण्वंश्च ॥१३६॥

दीर्घां यावत्तदनुसन्धानं न च्छिद्यते तावन्मात्राकालां हृल्लेखामुच्चरन् । हृल्लेखोच्चारनादाधारनादयोरुभयोरैक्यस्यानुसन्धानं कुर्यात् । तस्मादेवमभ्यासान्मनो विलीयते स्थिरीभवति ॥१३७॥

ध्यानोक्तां देवतामूर्तिम् । सम्पूर्णां सकलसर्वावयवाम् । आदौ अभ्यासारम्भे । एवं किञ्चित्कालमभ्यासेन यदा सा मूर्तिर्मनसि स्थिरा भवेत् शीघ्रमन्यविषयोल्लेखेनान्तर्हिता न भवेत्, तदा तस्या मूर्तेरेकमङ्गं हस्तपादादिषु यत्किञ्चित् परित्यजेत् । मूर्तेर्यत्किञ्चिदङ्गं परित्यज्यावशिष्टं ध्यायेत् ॥१३८॥

एवमेकाङ्गन्यूनमूर्तेः स्वरूपं स्थिरीभूतं चेद् द्वितीयमङ्गं परित्यजेत् । एवमेव एकैकाङ्गत्यागक्रमेण चरमीभूतैकाङ्गध्याने स्थिरे सति ततस्तस्यापि परित्यागेन सम्पूर्णमूर्तिपरित्यागे सिद्धे तद्रूपं निर्विकल्पस्वरूपभूतं पदमालम्बनं सम्यग् अविपर्ययेण अवाप्नुयात्, स्वरूपमपरोक्षीकृतं भवतीति यावत् ॥१३९॥

ननु घटत्यागमात्रेण व्यापारान्तरं विना यथा पटो न मनोविषयस्तथा सम्पूर्णमूर्तित्यागमात्रेण व्यापारान्तरं विना कथं तत्पदं समवाप्नुयादित्याशङ्कां शमयितुं दृष्टान्तमाह—यथेति । जात उत्पन्नो घटः स्वभावात् कारणान्तरनैरपेक्ष्यात् । गगनान्तरः गगनमन्तरे उदरे यस्य । घटस्योदरे न गगनं प्रविशति किन्तूत्पत्तिकालात्तथैव वर्तत इति भावः । तदुदरे गगनं जलेन यदा घटः पूरितस्तदा जलपूरणस्य पश्चात् नोपलक्ष्यते न दृश्यते ॥१४०॥

प्रतिबिम्बितमाकाशमन्यदेवोपलभ्यते ।
निःसारणे जलानां तु पुनस्तदुपलभ्यते ॥१४१॥
एवं चैतन्यसम्पूर्णं चित्तमादौ तु जायते ।
वासनौघेन सम्पूर्णं भाति तत्र पुनस्तु तत् ॥१४२॥
प्रतिबिम्बवदेवात्र चैतन्यं जीव एव सः ।
येन केनाप्युपायेन चित्ते निर्वासनात्मके ॥१४३॥
स्वात्मभावः प्रकाशेत घटाकाश इव स्फुटम् ।
यस्यैवमपि चित्तं स्वं निगृहीतुं न शक्यते ॥१४४॥

---

तत्र घटोदरे जलप्रतिबिम्बितमाकाशम् । अन्यदेव उदरे स्थितादन्यदेव सर्वैरुपलभ्यते । तुरवधारणे । तेषां जलानां घटोदराद् बहिर्निस्सारणे एव पुनस्तदाकाशमुपलभ्यते ॥१४१॥

दृष्टान्तोपपादितमर्थं दार्ष्टान्तिके योजयति—एवमिति । बाह्योन्मुखत्वेन जायमानचितिशक्तिरूपं चित्रम् । आदौ स्वोत्पत्तिकाले एव गगनपूर्णघटवच्चैतन्येन सम्यक्तादात्म्येन पूर्णम् । तच्चित्तं वासनानां कामक्रोधादिसंस्काराणामोघेन समूहेन जलेन घट इव सम्पूर्णम् । तत्र वासनौघसम्पूर्णे चित्ते । तुरवधारणे । तदेव चैतन्यमेव । पुनरन्तःपूर्णातिरिक्तत्वेन । जलप्रतिबिम्बिताकाशवद् भातीति सम्बन्धः । घटान्तर्गताकाशोऽन्तर्बहिरनुस्यूतैकरूपेण भाति । प्रतिबिम्बाकाशस्तु घटान्तर्जले एवेतिवत्प्रकृतेऽपि चित्तान्तर्बहिः शिवरूपं महाचैतन्यम् वासनासु इदं मे स्यादिदं मे न स्यादित्याद्यासु मे मे इति अस्मत्प्रत्ययविषयत्वेन प्रतिबिम्बविधया परिच्छिन्नं चैतन्यं भातीति भावः ॥१४२॥

अत्र चित्ते प्रतिबिम्बवच्चैतन्यं यदुक्तं स एव जीवः । येन केनापि शाम्भवशाक्ताद्यन्यतमेनोपायेन । अथवा प्रकृतयोगप्रकरणेऽन्यत्र वोक्तानेकेष्वन्यतमेनोपायेन । निर्गता वासना यस्मात् स निर्वासनः । एवंविध आत्मा स्वरूपं यस्य । एवंरूपे चित्ते स्थिते सतीति शेषः ॥१४३॥

स्वस्य साधकस्य य आत्मा परिपूर्णसंविदात्मा परशिवः । तस्य भावः सत्ता । अयमहमस्मीति । जले निःसारिते घटाकाशवत् स्फुटमपरोक्षत्वेन प्रकाशते । तत्रोपायत्रयं शृण्वित्युद्दिष्टेषु अभ्यासो मनोनिरोधश्चोक्तः । प्रकृतेऽत्यन्यमलिनचित्तस्य तृतीयमाह—यस्येति । एवमुक्तोपायद्वयेनापि यस्य चित्तं सर्वथा निगृहीतुं न शक्यते ॥१४४॥

तेन प्राणनिरोधस्तु कर्तव्यः क्रमतः शिवे ।
प्राणरोधादपि मनः स्थिरीभवति निश्चितम् ॥१४५॥

मनःखगस्य द्वौ पक्षौ विषयाकाशचारिणः ।
वासनात्मा तथा प्राणस्पन्दश्चेति महेश्वरि ॥१४६॥

भस्मच्छन्नो यथा वह्निर्भस्त्राभ्यां धमितो यदा ।
तदा ज्वलति तेनेद्ध इन्धनानि दहन् शिवे ॥१४७॥

तथाऽज्ञानेन संछन्नं ज्ञानं संयमितं भवेत् ।
प्राणापानप्रचाराभ्यां समिद्धं विषयान् दहेत् ॥१४८॥

ततस्तु सुखदुःखादि भुज्यते मनुजैः शिवे ।
प्राणसंचरणाच्चित्तं वासनायोगतोऽपि च ॥१४९॥

---

क्रमतः वक्ष्यमाणक्रमेण । अथवा प्रोक्तसाधनैः स्वभ्यस्तैः । फलानुदये सत्येव क्रमतः प्राणनिरोधः कर्तव्यः, नान्यथा । एतेन ज्ञानेऽधिकृतस्य निर्मलचित्तस्य न योगादिष्वधिकार इत्युक्तं भवति । यदुक्तं त्रिपुरारहस्ये—"उपासने तथा योगेऽधिकारो मलचेतसाम्" इति । ननु प्राणनिरोधेन कथं प्रोक्तज्ञानसिद्धिरिति चेदाह—प्राणरोधादपीति । स्थिरीभवतीति विद्वद्भिर्निश्चितम् ॥१४५॥

प्राणरोधान्मनसः स्थिरीभावे उपपत्तिमाह—मन इति । मन एव खगः पक्षी, तस्य विषया इन्द्रियार्थाः शब्दादय एवाकाशोऽनन्तत्वात्, तत्र चरणशीलस्य द्वौ पक्षौ स्तः । कौ तौ पक्षावित्याह—वासनेति । वासना कामक्रोधादिजनकानुभवसंस्कारः । वासनात्मकः प्राणस्पन्दश्चेति द्वौ पक्षौ ॥१४६॥

ताभ्यां पक्षाभ्यां विषयाकाशसञ्चरणक्रममाह—भस्मेति । भस्मना छन्नो वह्निः निक्षिप्तमिन्धनं दग्धुमसमर्थोऽपि यदा भस्त्राभ्यां दृतिभ्यां धमितः ध्मातो भवति, तदा तेन धमनेनेद्धः प्रदीप्तः, इन्धनानि दहन् ज्वलितो भवतीति यथा ॥१४७॥

तथा भस्मस्थानीयेनाज्ञानेनाख्यात्या संच्छन्नमग्निसदृशं ज्ञानं ज्ञायतेऽनेनेति ज्ञानं मनःप्राणापानात्मकाभ्याम् उच्छ्वासनिःश्वासाभ्यां प्राणप्रचाराभ्यां सम्यग् धमितं यदा भवेत्, तदा विषयानिन्धनरूपान् समिद्धं सद् दहेत् । वह्निर्यथेन्धनेष्वन्तर्बहिश्चाविश्य स्वात्मरूपमिन्धनं करोत्येवं मनो विषयेषु बहिरन्तराविश्य स्वात्मैकरूपं प्रकाशमयं करोतीति भावः ॥१४८॥

ततः प्राणचालितस्य मनसो विषयेषु प्रवृत्तेः । तुरवधारणे । तत एवेत्यर्थः । विषयगुणदोषविवेचनद्वारा कामाद्युत्पत्तौ तत्प्राप्त्यप्राप्तिभ्यां सुखदुःखहर्षविषादा

चलत्यनुक्षणं तेन संसारः स्यात् पशोः शिवे ।
प्राणसंचरणाद् देवि वासना वृद्धिमाप्नुयात् ॥१५०॥
वासनावसतः प्राणः स्पन्दते भूय एव तु ।
तस्मादेकनिरोधेऽपि निरुद्धमुभयं भवेत् ॥१५१॥
उपायेन गुरूक्तेन अभ्यासप्राणरोधतः ।
आसनादिसमायोगात् प्राणसंसाधनं भवेत् ॥१५२॥
एतावदेव चित्तस्य रूपं भवति शङ्करि ।
संस्कारवस्तुरूपाभ्यां चिन्तनं यच्च वस्तुनः ॥१५३॥

---

भुज्यन्ते । ततश्च प्राणसञ्चरणात् । वासनाभिर्युक्तत्वादपि च वित्तमनुक्षणं चलतीति सम्बन्धः ॥१४६॥

तेन एवं चलनेन । संसारः सुखदुःखाद्यनुभवः । प्राणसञ्चरणवासनयोर्मनः-प्रवर्तने परस्पराश्रयत्वमाह—प्राणेति ॥१५०॥

भूयः पुनः पुनः । तुरवधारणे । वासनावशत एव । भूय एवेति विभज्य सम्बन्धः । इदमत्र तत्त्वम्—"मनसश्चलनं द्वेधा रसात् स्वाभाव्यतोऽपि च" इति प्रागुक्तम् । तत्र प्राणसञ्चरणेन प्राणापानमध्ये हृदये स्थितं कमलं मनोऽधिष्ठानं प्रचलति । ततश्च मनश्चलितं सद् यस्मिन् कस्मिंश्चिद्विषये सम्पृक्तं भवति । एतदेव प्राणकृतं मनसः स्वाभाव्यतश्चलनम् । यथा कश्चिद् गृहं दहन्नग्निर्यदा वायुना न चाल्यते तदा तदेकमेव गृहं भस्मावशेषीकृत्योपशाम्यति, यदा तु वायुना प्रचाल्यते तदेतस्ततः प्रचलितः सत्सु गृहादिषु नोपशाम्यति । तथा मनो यावत् प्राणेन चाल्यते तावद्विषया-ननुधावन्न विश्राम्यति । निरुद्धे प्राणे न स्वभावात् क्वचित् प्रवर्तते । एवं प्रचलनेन यत्र विषये मनो गच्छति तद्गुणदोषादिकल्पनेन तद्वासनावृद्धिः । कामादिवासना-विष्टस्य काम्यविषयेन्द्रियसम्प्रयोगे द्रुततरं बलाद्विषये मनोऽनुपतति । तदनु तत्प्राप्त्या-द्यर्थं धर्माधर्मसाधनक्रियानुबद्धस्तद्धर्मादिभिः प्राणः प्रचलतीति वासनावशतः प्राणस्य स्पन्दनमिति । यस्मादेवं वासनाप्राणसञ्चारौ परस्परवृद्धिनिमित्तभूतौ तस्मात् । एकस्य वासनाप्राणसञ्चारान्यतरस्य निरोधेऽपि ॥१५१॥

गुरूक्तेनोपायेन प्राणरोधतः प्राणरोधस्याभ्यासात् गुरूक्तेनेति गुरुसम्प्रदाय-रहितस्य न प्रकृतयोगसिद्धिरिति ज्ञेयम् । आसनादीनां वक्ष्यमाणयोगाङ्गानां सम्यग् यथोक्ततया फलपर्यन्तं योगादभ्यासात् प्राणसंरोधनं भवेत् ॥१५२॥

प्रकृते प्राणरोधेनापि निगृहीतचित्तता सम्पादनीया । चित्तस्य निग्रहेन चाञ्चल्ये परिहृते स्वरूपावभासः सम्पद्यते । तत्र चित्तमेव निग्राह्यम् । निगृहीते चित्ते प्राणसञ्चरणेन

प्राणरोधाख्ययोगस्तु तत्राष्टाङ्गः प्रकीर्तितः ।
यमश्च नियमश्चैवासनं प्राणस्य रोधनम् ॥१५४॥
प्रत्याहारो धारणा च ध्यानं चापि समाहितिः ।
अहिंसा सत्यमस्तेयब्रह्मचर्यापरिग्रहाः ॥१५५॥
यमा एते महेशानि नियमानपि संशृणु ।
तपःसंतोषशौचानि स्वाध्यायः शिवसन्नतिः ॥१५६॥

---

वासनाप्राबल्ये किं भविष्यतीत्याशङ्क्य वासनानां धारैव चित्तस्वरूपमित्युपदिशति—एतावदिति । संस्कारः संवृतवस्त्ववभासः । वस्तुदर्शनकाले वस्त्ववभासस्त्वसंवृत्तः स्फुटः । तादृशः स्फुटोऽवभासः प्रसारितचित्रपटवदिन्द्रियसरणिमासाद्य स्थितः । पश्चात् स एव संवर्तितचित्रपटवद् अन्तश्चित्तभूमौ संवृतः स्फुटमनवभासमानस्तिष्ठति संस्कारः । यथा कश्चनान्येन किमरे त्वया सा प्रेयसी किं भाषितेति पृष्टो बाह्येन्द्रियमनभिगम्यैव क्वचित् स्थापितवस्त्वानयनाय गच्छन् पुरुष इव नष्टमिवासंविदन् झटित्यात्मन्येवासावनुवदति चेत्थं सा मया भाषितेति । अस्थिते च संस्कारे विनष्टमिव संविदन् स्वान्तरेव मृगयतीति संस्कारो वस्तुसूक्ष्मावभासः । एवं संस्कारेण वस्तुनः स्फुटावभासरूपेण च यद्वस्तुचिन्तनम् । सूक्ष्मस्थूलवस्त्ववभासच्छायासमाक्रान्ता चिच्छक्तिरेव चित्तमिति भावः । एवं च वासनात्मकसंस्कारसत्त्वमेव चित्तस्यानिग्रह इति तात्पर्यम् । यदुक्तं वासिष्ठे—"अयं सोऽहमिदं तन्मे एतावन्मात्रकं मनः । तदभावनमात्रेण विचारेण विलीयते ॥", तथा—"उपादेयानुपतनं हेयैकान्तविवर्जनम् । यदेतन्मनसो रूपं तद्बन्धं विद्धि नेतरत् ॥" इति ॥१५३॥

अत्र मनसो निरोधं प्राणनिरोधद्वारा वक्तुमुपक्रान्तम् । अयमेव प्राणनिरोधद्वारा मनोनिरोधोऽष्टाङ्गयोगः समाधिः पातञ्जले शास्त्रे निरूपितः । तमेव स्पष्टं निरूपयितुमारभते—प्राणेति । प्राणस्य रोधेन आ अभिव्याप्य सामस्त्येन स्वरूपं ख्यायत इति प्राणरोधाख्यो योगो निर्विकल्पसमाधिः कर्मयोगस्तथा ज्ञानमित्यत्रोद्दिष्ट उपायः । प्राणरोधस्तु कर्तव्य इत्यत्र प्राणरोध इति यमादीनां प्रत्याहारादीनां चोपलक्षणम् । तेन प्राणनिरोधस्तु कर्तव्य इत्युद्देशानुसारात् प्राणरोधस्य मुख्यत्वेन गणनम् । तुरिति पूर्वोक्तोपायेभ्यो व्यवच्छेदः । तत्र योगप्रधानशास्त्रेषु । अष्टावङ्गानि यस्य । अङ्गान्येवाह—यम इति ॥१५४॥

समाहितिः समाधिः । तथा च पातञ्जलं सूत्रम्—"यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि" इति । तत्र यमानाह—अहिंसेति । तथा च सूत्रम्—"अहिंसासत्यमस्तेयब्रह्मचर्यापरिग्रहा यमाः" इति ॥१५५॥

प्रोक्ता यमाः । नियमानाह—तप इति । तथा च सूत्रम्—"शौचसन्तोषतपः-

**यमान् सर्वात्मना कुर्यान्नियमानपि शक्तितः।**
**फलमेषां प्रवक्ष्यामि क्रमेण शृणु सुन्दरि ॥१५७॥**

**विद्विष्टस्यापि सान्निध्ये वैरहानिरहिंसया।**
**क्रियाफलाश्रयित्वं स्यात् सत्यसेवावशेन तु ॥१५८॥**

**सर्वरत्नोपसंस्थानं वीर्यलाभस्तथैव च।**
**जननादिभयाभावः क्रमादस्तेयकादिषु ॥१५९॥**

---

स्वाध्यायेश्वरप्रणिधानानि नियमाः" इति। अत्र प्रोक्ताष्टाङ्गेषु यमनियमौ न साक्षात् फलभूतसमाध्युपकारकौ, किन्तु तत्प्रतिपक्षहिंसादिनिरसनद्वारा। आसनादिकं तु प्राणायामाद्युत्तरोत्तराङ्गोपकारकत्वेनेति ॥१५६॥

तत्र हिंसादेः प्रबलप्रतिपक्षत्वेन तन्निवर्तकयमस्य मुख्यभूतस्यैवानुष्ठेयत्वमाह—यमानिति। सर्वात्मनेति पूर्णात्मना स्थितानसंकुचितानहिंसादीन् कुर्यादित्यर्थः। अहिंसादीनां संकोचस्तु जातिदेशकालसमयैः। यथा जातितो ब्राह्मणं न हनिष्यामीति। एवं तीर्थे पर्वसु च शरणार्थिनं च न हनिष्यामीति देशादिना संकोचः। एवमसंकुचितान् यमान् कुर्यात्। तथा च सूत्रम्—"एते जातिदेशकालसमयानवच्छिन्ना सार्वभौममहाव्रतम्" इति। शक्तित इति। नियमान् शक्त्यनुसारेण कुर्यात्। यथाऽशक्तेन स्नानप्रसक्तावनुकल्पमन्त्रस्नानादिकमेव कर्तव्यमिति। एषाम् अहिंसादीनाम् ॥१५७॥

तत्राहिंसादीनामभ्यासतारतम्येन परिनिष्ठितत्वे क्रमेण फलं निरूपयति—विद्विष्टेति। प्राणिनः प्राणवियोजनव्यापारादुपरमोऽहिंसा विद्विष्टस्य विशेषत स्वभावेनैव द्विष्टस्य हिंस्रत्वेन द्वेषविषयीभूतस्य व्याघ्रसर्पादेः सान्निध्ये सम्भवेऽपि स्वेनात्यन्ताभ्यस्ताहिंसया वैरस्य हिंस्रत्वस्य हानिर्भवति। तत्सान्निध्ये व्याघ्रादयो हिंस्रत्वं परित्यजन्तीत्यर्थः। तथा च सूत्रम्—"अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्यागः" इति। एवं वाङ्मनोभ्यां यथार्थोल्लेखनसत्यस्य स्वभ्यस्तस्य वशेन ज्योतिष्टोमाश्वमेधादिक्रियाणां यत्स्वर्गादिरूपं फलं तदाश्रयित्वं तत्संपत्तिर्भवतीति यावत्। तथा च सूत्रम्—"सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम्" इति ॥१५८॥

अस्तेयं परस्वानपहरणम्। तदभ्यासे सति सर्वेषां रत्नानामुपसंस्थानं स्वतोऽयत्नेनैव प्राप्तिर्भवति। तथा च सूत्रम्—"अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम्" इति। उपस्थेन्द्रियसंयमरूपब्रह्मचर्याभ्यासाच्छरीरेन्द्रियमनसां वीर्यलाभः अपरिमितसामर्थ्यं भवति। तथा च सूत्रम्—"ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः" इति। अपरिग्रहो भोगसाधनविषयसंग्रहाभावः। तस्याभ्यासाज्जननमरणभयराहित्यम्। अग्रे जननमरणयोरभावं जानातीति भावः। तथा च सूत्रम्—"अपरिग्रहस्थैर्ये जन्म-

शुद्धिः करणवर्गस्य तपसा तु भवेच्छिवे ।
संतोषात् सुखलाभः स्याच्छौचादङ्गे जुगुप्सनम् ॥१६०॥
असंसर्गः परेण स्यात् सौमनस्यमपीश्वरि ।
मन्त्राध्ययनयोगेन देवताप्रीतिमाप्नुयात् ॥१६१॥
समाधिसिद्धिः सन्नत्या कथितं क्रमतः फलम् ।
आसनानि पुरोक्तानि विशेषमधुना शृणु ॥१६२॥

---

कथन्तासम्बोधः" इति । अस्तेयकादिषु अस्तेयब्रह्मचर्यापरिग्रहेष्वभ्यस्तेषु सर्वरत्नोपसंस्थानादित्रयं क्रमेण फलं ज्ञेयम् ॥१५९॥

एवं यमानां फलमुक्त्वा नियमानां फलमाह—शुद्धिरिति । तपः स्वधर्माचरणम् । करणेत्युपलक्षणं देहेन्द्रियादीनाम् । परिच्छिन्नत्वाशुद्धेस्तपसा क्षये सति शुद्धिरपरिच्छिन्नता दूरव्यवहितदर्शनादियोग्यतारूपा भवति । तथा च सूत्रम्—"कायेन्द्रियशुद्धिरशुद्धिक्षयात्तपसः" इति । सन्तोषोऽकृपणता । तेनोत्तमसुखलाभः स्यात् । तथा च सूत्रम्—"सन्तोषादनुत्तमः सुखलाभः" इति । बाह्याभ्यन्तरभेदेन द्विविधं शौचम् । बाह्यं मृज्जलैर्देहप्रक्षालनम् । आन्तरं क्रोधेर्ष्यादीनां प्रतिपक्षवृत्त्यभ्यसनम् । तेन शौचेन स्वस्याङ्गे जुगुप्सनम् । प्रत्यहं शोधितव्योऽशुद्धिस्वभावो देह इति निम्नबुद्धिर्जायते ॥१६०॥

तस्यैव फलान्तराण्यप्याह—असंसर्ग इति । परेण स्त्रीपुत्रादिदेहेनासंसर्गः अस्पर्शनं जुगुप्सनादेव स्यात् । अथान्तरशौचफलमाह—सौमनस्यमिति । सौमनस्यं सुमनस्त्वमखिन्नता । एतच्च सत्त्वशुद्ध्यादीनां सूत्रोक्तानामुपलक्षणम् । तथा च सूत्रम्—"शौचात् स्वाङ्गजुगुप्सा परैरसंसर्गः" इति, "सत्त्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शनयोग्यत्वानि च" इति च । मन्त्राध्ययनयोगः स्वाध्यायो मन्त्रजपः । तेन स्वाराध्यदेवता प्रीता भवति । तथा च सूत्रम्—"स्वाध्यायादिष्टदेवतासम्प्रयोगः" इति ॥१६१॥

शिवस्येष्टदेवतायाः सन्नतिराराधनम् । तया सन्नत्या समाधेः फलभूतस्याविघ्नेन सिद्धिर्भवति । तथा च सूत्रम्—"समाधिसिद्धिरीश्वरप्रणिधानात्" इति । एवं यमनियमानां क्रमेण फलं कथितम् । तृतीयमङ्गमाह—आसनानीति । पद्मस्वस्तिकादीनि कम्बलादीनि चासनानि पुरा पुरश्चरणप्रकरणे प्रोक्तानि । विशेषं तेषां योगोपयोगित्वम् ॥१६२॥

स्थिरं सुखं च देवेशि भवेत्तत्सिद्धमुच्यते ।
प्रयत्नशैथिल्ययोगान्मण्डूकाभेदभावनात् ॥१६३॥
उपायद्वययोगेन सिद्धं स्यादासनं शिवे ।
एवं सिद्धे ह्यासने तु द्वन्द्वैर्नैवाभिभूयते ॥१६४॥
संसिद्धासन एवं तु प्राणायामं समभ्यसेत् ।
रथं यथा दुष्टहयाः पातयन्त्यपमार्गके ॥१६५॥
दृढसारथिसंरुद्धरश्मयस्तु तदैव ते ।
विनिवृत्तास्तु सन्मार्गे स्थिरास्तिष्ठन्ति तद्वशे ॥१६६॥
एवं मनोरथस्याश्वौ प्राणापानौ सदैवतम् ।
विषयारण्यमार्गेषु पातयन्ति प्रतिक्षणम् ॥१६७॥

---

स्थिरं निश्चलम् । सुखमदुःखदं च यदभ्यासवशेन भवेत्तदासनं सिद्धं योगोपयुक्तं भवति । एवमासनसिद्धावुपायमाह—प्रयत्नेति । आसनेनासीनस्य इत उत्थायान्यत्र गन्तव्यमित्यादिर्यः प्रयत्नो जायते तस्य शैथिल्यं विपरीतप्रयत्नेनाभिभवः, तस्य योगोऽभ्यासः, तेन । तथा प्रचलिते आसने आदिमण्डूको भगवान् सकलजगद्धारको यः, स एवाहमिति स्वात्माभेदभावनात् सिद्धमप्रचलितं स्यादित्यन्वयः ॥ १६३॥

एवमुपायद्वयस्य योगेनाभ्यासेनासनं सिद्धं स्यात् । तत्फलमाह—द्वन्द्वैरिति । एवं स्थिरसुखत्वेनासने सिद्धे सति द्वन्द्वैः शीतोष्णादिभिर्नैवाभिभूयते पीडितो नैव भवति । तथा च सूत्रम्—"स्थिरसुखमासनम् । प्रयत्नशैथिल्यानन्तसमापत्तिभ्याम् । ततो द्वन्द्वानभिघातः" इति ॥१६४॥

चतुर्थाङ्गं वक्तुमाह—संसिद्धेति । तुरवधारणे । एवं संसिद्धासन एव प्राणायामं सम्यक् फलसाधनयोग्यं वक्ष्यमाणरीत्याऽभ्यसेत् । प्रकृते प्राणायामस्य मुख्यत्वेनोपक्रान्तस्य सदृष्टान्तं मनोरोधहेतुत्वमाह—रथमिति । यथा दुष्टा हयाः, अपगतो मार्गो यस्य स एवंविधे कूपगर्तादौ रथं पातयन्ति ॥१६५॥

तदैव अपमार्गके पातनसमय एव । दृढः अश्वनियन्त्रेण बलवत्तरो यः सारथिर्यन्ता तेन संरुद्धाः संगृहीता रश्मयो येषां ते एवंविधास्त एवाश्वाः अपमार्गाद्विनिवृत्ताः सन्मार्गे एव तस्य सारथेर्वशे आज्ञायां स्थिराश्चाञ्चल्यरहितास्तिष्ठन्ति ॥१६६॥

एवं मनोरूपरथस्य दुष्टाश्वौ प्राणापानौ तं रथं सदैव विषया एवारण्यानि तेषां मार्गेषु इन्द्रियरूपेषु पातयन्ति । बहुवचनमार्षम्, पातयत इत्यर्थः । इन्द्रियमार्गेण सदा

निगृहीतौ यदा स्यातां तदा स्ववशगौ शिवे ।
सोऽपि द्विधा स्थितो देवि सबीजाबीजभेदतः ॥१६८॥
मन्त्रावर्तनयुक्तस्तु सबीजः परिकीर्तितः ।
निर्बीजस्त्वतथाभूतः सबीजः स्यादुपक्रमे ॥१६९॥
पश्चान्निर्बीज एव स्यादन्यथा नैव सिद्ध्यति ।
सोऽपि त्रिधा भवेद् देवि पूरकुम्भकरेचकाः ॥१७०॥
देशकालप्रमाणाभ्यामभ्यसेदधिकं क्रमात् ।
कञ्जकोशाभवक्त्रेण वायुमाकृष्य नासया ॥१७१॥

---

विषयेषु मनः पातयत इति भावः । प्रतिक्षणं यदा तौ प्राणापानरूपावश्वौ निगृहीतौ नियमितौ स्यातामित्यन्वयः ॥१६७॥

तदा वक्ष्यमाणप्राणायामाभ्यासेन निग्रहे कृते स्वस्य वशगौ स्वाभिमतेषु सद्विषयेष्वेव मनोरथप्रापकौ भवतः । तस्मादसद्विषयेभ्यो मनोनिवर्तने प्राणायाम एव मुख्यसाधनमित्युक्तं भवति । एवंविधोऽपि प्राणायामो बीजेन प्रणवादिना सहितः । नास्ति बीजं यस्मिन् सः । एवं सबीजाबीजभेदेन द्विधा स्थितः ॥१६८॥

तयोः स्वरूपं विविच्याह—मन्त्रेति । प्राणायामकाले मन्त्रावर्तनयुक्तः सबीजः । अतथाभूतः मन्त्रावर्तनरहितो निर्बीजः । उपक्रमे प्राणायामाभ्यासादौ सबीजोऽभ्यसनीयः स्यात् । प्राणायामो नाम श्वासप्रश्वासयोर्गतिविच्छेदः । तथा च सूत्रम्—"तस्मिन् सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः" इति ॥१६९॥

पश्चात् कश्चित्कालं सबीजप्राणायामाभ्यासानन्तरम् । अन्यथा आदावेव निर्बीजप्राणायामाभ्यासे । अन्तेऽपि सबीजाभ्यासे च । नैव सिद्ध्यति । आदौ निर्बीजाभ्यासेन दुरदृष्टैर्विहतस्य अन्ते सबीजाभ्यासेन प्रत्याहाराद्ययोग्यचित्तस्य समाधिरूपं फलं नैव सिद्ध्यतीत्यर्थः । सोऽपि प्राणायामोऽपि । पूरककुम्भकरेचका इति त्रिधा ॥१७०॥

स त्रिविधः प्राणायामः । देशकालयोः प्रमाणाभ्यां क्रमादधिकमधिकमभ्यसेत् । यथा पूरके अनाहतादिमूलाधारपर्यन्तं वायुगतिः सूक्ष्मानुभवेन, रेचके नासापुटाद् बहिर्द्वादशाङ्गुलादिषट्त्रिंशदङ्गुलपर्यन्तं वायुगतिः संस्थापितसूक्ष्मतूलचलनेन, सबीजे बीजावृत्तिकालेन, निर्बीजे तालाभिहननमात्राकालेन—इति देशकालप्रमाणाभ्यां प्रत्यहमधिकमभ्यसेत् । एतच्च संख्योपलक्षणम् । अद्य प्राणायामानां त्रयं श्वश्चतुष्टयमित्यादि ।

वायुना पूर्णमुदरं पूरकं त्वभिधीयते ।
एवमन्तर्गतं वायुं निःसार्यान्येन वर्त्मना ॥१७२॥
निःशेषमन्तरं शून्यं रेचकं त्वभिधीयते ।
कुम्भकं तु द्विधा देवि बाह्याभ्यन्तरभेदतः ॥१७३॥
रेचकान्ते तु बाह्यं स्यात् पूरकान्ते तथान्तरम् ।
रेचपूरकयोरन्ते स्थिरावस्था तु कुम्भकम् ॥१७४॥
शुचौ तथैकान्तदेशे चैलाजिनकुशोत्तरे ।
निर्वातोपद्रवे देवि दृढासनतया स्थितः ॥१७५॥
गलं प्रवेशयन्नन्तश्चिबुकं चाधरस्थितम् ।
आदौ मेरुं तु संचाल्य भस्त्राशोधितमार्गकः ॥१७६॥

---

प्राणायामप्रकारमाह—कञ्जेति । कञ्जकोशो मुकुलितकमलं तदाकारवक्त्रेण । प्राणायामकाले यथा मुखाद्वायोर्गमागमौ न स्यातां तथा दृढसंवृतास्येनेति तात्पर्यम् । कञ्जकोशाभं वक्त्रं यस्य साधकस्य ॥१७१॥

एवंविधः साधकः । नासया वायुमाकृष्य तेन वायुनोदरं पूर्णं यत् कुर्यात्तदेव पूरकम् । एवमुदरान्तर्गतं वायुमन्येन पूरितनासापुटादन्येन द्वितीयेन नासामार्गेण बहिर्निसार्य ॥१७२॥

उदरान्तरं निःशेषं यथा तथा वायुना शून्यं यत् कुर्यात्तदेव रेचकम् । बाह्याभ्यन्तरभेदेन कुम्भकं द्विविधम् ॥१७३॥

रेचकान्ते वक्ष्यमाणरीत्या कृतं बाह्यकुम्भकम् । पूरकान्ते तथा वक्ष्यमाणरीत्या कृतमान्तरकुम्भकम् । कुम्भकलक्षणमेवाह—रेचेति । रेचकान्ते पूरकान्ते वा या स्थिरावस्था श्वासधारणरूपा, सा कुम्भकं स्यात् । तथा च सूत्रम्—"स तु बाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसंख्याभिः परिदृष्टो दीर्घसूक्ष्मः" इति । बाह्याभ्यन्तरस्तम्भेति रेचकपूरककुम्भकाख्यं त्रिविधं प्राणायाममुक्त्वा रेचकपूरकाभ्यां रहितं केवलकुम्भकमपि चतुर्थमुक्तं सूत्रे—"बाह्याभ्यन्तरविषयाक्षेपी चतुर्थः" इति ॥१७४॥

प्राणायामानुष्ठानप्रकारमाह—शुचाविति । शुचौ पावने । एकान्तदेशे जनसंघवर्जिते । वातेति शीतोष्णाद्युपलक्षणम् । निर्गता वाताद्युपद्रवा यस्माद्देशात् । दृढासनेत्यादि पूर्वोक्तासनानुवादः ॥१७५॥

गलम् अन्तःप्रवेशयन् अधोमुखत्वेनावस्थित्यानुन्नम्रगल इत्यर्थः । चिबुकम् अधरस्थितं वक्षोर्ध्वप्रदेशसंलग्नम् । कृत्वा प्राणायामं चरेदिति व्यवहितेनान्वयः ।

रेचयेद् वायुमादौ तु प्राणायामं ततश्चरेत् ।
अभ्यस्य पूरकं तद्वद्रेचकं च ततः परम् ।।१७७।।
कुम्भकं चान्तरं पश्चाद्बाह्यमप्यभ्यसेत् क्रमात् ।
न चालयेत् क्वचिच्चाङ्गं नेत्रयुग्मं निमीलयेत् ।।१७८।।
सकृदापूरयेद् देवि त्रिधा रेचनमाचरेत् ।
कुम्भकेऽपि त्रिधा वेगं नियच्छेत् क्रमतः शिवे ।।१७९।।
बीजावृत्त्या मात्रया च कालाधिक्यं समभ्यसेत् ।
देशाधिक्यं चानुभवात् गुरूक्त्या सर्वमेव तु ।।१८०।।

---

एवंविधप्राणायामस्यादौ । मेरुं संचाल्य । मेरुचालनं च मस्तकपरिवर्तनम् । मेरोर्मस्तकस्य सम्यक्प्रादक्षिण्याप्रादक्षिण्याभ्यां परिवर्तनं कृत्वा झटिति केवलरेचकपूरककरणं भस्त्रा । तया यन्नासया श्वासः प्रतिरुद्धो निर्गच्छति तच्छोधनम् अप्रतिरोधो यथा स्यात्तथा शोधितमार्गकः ।।१७६।।

प्राणायामादौ रेचकं कृत्वा ततः पूरकम् । ततः प्राणायामं कुम्भकं चाभ्यस्य तद्वत् पूर्ववत् परं द्वितीयरेचकं चरेदिति योजना ।।१७७।।

आदौ आन्तरं कुम्भकमभ्यस्य पश्चात्किञ्चित्कालानन्तरं क्रमाद् बाह्यकुम्भकमप्यभ्यसेत् । प्राणायामकाले क्वचिदप्यङ्गं न चालयेत् । नेत्रयुग्मं दृढं निमीलयेत् ।।१७८।।

पूरकं सकृत् मध्येऽविच्छेदेनैकरूपेण । रेचनं त्रिधा मध्ये विच्छेदद्वयेन खण्डत्रयरूपेण कुर्यात् । कुम्भकदशायां पूरकेण वायुर्हृदयाभिघ्नन्नभिहत ऊर्ध्वं निर्गच्छति सवेगः । तं वेगं नियच्छेत् । उन्मज्जन्तं वायुं स्वप्रयत्नेन निमज्जयेत् । एवं वेगत्रयं नियच्छेत् । तदपि क्रमतः आदौ एकवेगनियमनं ततो वेगद्वयनियमनमित्यादि ।।१७९।।

सबीजप्राणयामे बीजावृत्त्या अधिकभूतया । निर्बीजे मात्रयाधिकभूतया कालाधिक्यमभ्यसेत् । देशाधिक्यमन्तरनाहतादिष्वभिघातं सूक्ष्मानुभवात् । बहिः सूक्ष्मतूलस्य सूक्ष्मचलनानुभवात् । अभ्यसेत् एतत्सर्वं गुरूक्त्यैव कुर्यात् न केवलं स्वबुद्ध्या पुस्तकाद्यवलोकनेन । यदुक्तम्—''मन्त्रमार्गो योगमार्गः साध्यः स्याद् गुरुमार्गतः । अन्यथाऽनर्थसम्पतिरन्धस्य गिरियानवत् ।।'' इति ।।१८०।।

एवं समभ्यसन् देवि प्राणायामं क्रमेण तु ।
ततश्चाञ्चल्यमालस्यं निद्रा चापि क्षयं व्रजेत् ॥१८१॥
शुद्धं चित्तं धारणादियोग्यतां प्रतिपद्यते ।
एवं शुद्धेन चित्तेन प्रत्याहारं समभ्यसेत् ॥१८२॥
विषयेभ्यः स्वकीयेभ्यः परावृत्त्येन्द्रियाणि तु ।
आत्मशक्तिमनोमात्ररूपाणि तु विभावयेत् ॥१८३॥
प्रत्याहारस्तु संप्रोक्तस्तेनेन्द्रियजयो भवेत् ।
आधारानाहताज्ञासु मूर्ध्नि वान्यत्र कुत्रचित् ॥१८४॥
चित्तं तु धारयेदेतद् धारणा परिकीर्तिता ।
देशादिकं परित्यज्य चित्तमात्मनि तिष्ठतु ॥१८५॥

---

एवमुक्तप्रकारेण क्रमेण सम्यगादरनैरन्तर्यादिनाऽभ्यसन् यः पुरुषोऽस्ति तस्य । ततः अभ्यासात् । मनसः चाञ्चल्यम् । आलस्यं निद्राऽपीत्येतत्सर्वं सत्त्वप्रकाशावरकं क्षयं व्रजेत् । तथा च सूत्रम्—"ततः क्षीयते प्रकाशावरणम्" इति ॥१८१॥

एवं प्राणायामेन शुद्धम् अतिचाञ्चल्यालस्यमूढतादिरहितं धारणाध्यानादियोग्यतां प्राप्नोति । तथा च सूत्रम्—"धारणासु च योग्यता मनसः" इति । प्रति आह्रियन्ते बहिर्मुखानीन्द्रियाणि स्वात्मानं चित्तं प्रति चित्तानुरूपत्वेनाह्रियन्ते यस्मिन् स प्रत्याहारः ॥१८२॥

तमेवाह—विषयेभ्य इति । स्वकीयेभ्यः स्वसम्बन्धिभ्यो रूपादिविषयेभ्यश्चक्षुरादीन्द्रियाणि परावृत्य स्वस्वविषयेभ्यो विमुखीकृत्य । आत्मनो ज्ञानशक्तिभूतं यन्मनस्तन्मात्ररूपाणि मनोमयानीति विषयानिन्द्रियाणि च विभावयेत् ॥१८३॥

अयं प्रत्याहारः । तेन प्रत्याहारेण । इन्द्रियाणां जयः स्वाधीनता भवेत् । तथा च सूत्रम्—"स्वस्वविषयासंप्रयोगे चित्तस्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः । ततः परमा वश्यतेन्द्रियाणाम्" इति । षष्ठाङ्गमाह—आधारेति । अन्यत्र कुत्रचित् नासाग्रभ्रूमध्यादिषु । चित्तं धारयेदित्यन्वयः ॥१८४॥

आधाराद्युक्तस्थानेषु चित्तस्य धारणं तत्तदाकारपरिणतचित्तवृत्तेः पुनः पुनरवष्टम्भो धारणा । तथा च सूत्रम्—"देशबन्धश्चित्तस्य धारणा" इति । सप्तमाङ्गमाह—देशेति । आधाराद्यान्तरं देशं नासाग्रादिकं च परित्यज्य चित्तस्य तदाकारपरिणतिं विहाय आत्मनि संविद्रूपे तिष्ठत्वित्येवं संकल्प्येत्यन्वयः ॥१८५॥

संकल्प्यैवंविधं चित्तं ध्यानमित्यभिधीयते ।
समाधिर्द्विविधः संज्ञातश्चासंज्ञात एव च ॥१८६॥
अविच्छिन्नमेतदेव समाधिरभिधीयते ।
अष्टानां च पुरोक्तानां समाधिः फलमुच्यते ॥१८७॥
संस्मृतावपि विच्छेदाद् ध्यानं प्रोक्तं महेश्वरि ।
अविच्छेदात् संस्मृतौ तु समाधिः स्याद् गुणात्मकः ॥१८८॥
असंस्मृतावविच्छेदात् समाधिः फलमुच्यते ।
संज्ञातो गुणभूतः स्यादसंज्ञातः फलं भवेत् ॥१८९॥

---

एवंविधम् आत्मनि तिष्ठत्विति संकल्प्यात्मनि स्थितं चित्तमात्मन्येव चित्तस्यावस्थापनं ध्यानम् । तथा च सूत्रम्—"तत्र प्रत्ययैकतानता ध्यानम्" इति । यद्यपि तत्राधारादिषु प्रत्ययानां चित्तवृत्तीनाम् एकतानता धारणायां यद्विसदृशप्रत्ययेनान्तरितत्वं तदभाव एकाकारप्रत्ययप्रवाहो ध्यानमित्युक्तम्, तथाप्याधारादिषु ध्यानादिकं विविधसिद्धिप्रयोजकत्वेनोक्तम् । प्रकृते आत्मज्ञानस्यैव साध्यत्वे तद्ध्यानादिकमुच्यत इति । अष्टमाङ्गं वक्तुमाह—समाधिरिति । संज्ञातः सम्प्रज्ञातः । असंज्ञातोऽसम्प्रज्ञातः ॥१८६॥

तत्रादौ सम्प्रज्ञातमाह—अविच्छिन्नमिति । एतद्ध्यानमेवाविच्छिन्नं सत् समाधिरुच्यते । एवं यमाद्यष्टाङ्गानां पुरा आदावुक्तानामसंज्ञातः समाधिः फलम् ॥१८७॥

अधुना ध्यानसमाधीनां स्वरूपभेदमाह—संस्मृताविति । इदमत्र तात्पर्यम्—आत्मनि चित्तं तिष्ठतु इति यः संकल्पः कृतः, तत्संकल्पस्य विस्मरणे क्वचिद्देशादौ चित्तं गच्छति । अतोऽविस्मरणेनैव ध्येयं चित्तेनावष्टभ्य स्थेयम् । एवं स्थिते यावन्मध्ये मध्ये तत्संस्मरणविच्छेदेन ध्येयं चित्ताद्विच्छिद्यते तावद् ध्यानमुच्यते । ध्यानाभ्यासप्रकर्षेण स्वाभिमतकालपर्यन्तं संस्मृतेरविच्छेदे सम्प्रज्ञातसमाधिः । सम्प्रज्ञातसमाध्यभ्यासप्रकर्षेण संस्मरणमनपेक्ष्य ध्येयस्याविच्छेदेऽसम्प्रज्ञातसमाधिरिति । अपिना ध्येयस्यापि । संस्मृतावविच्छेदादेव ध्येयाविच्छेदे गुणात्मकः अङ्गभूतः सम्प्रज्ञातः ॥१८८॥

संस्मरणाभावेऽपि ध्येयाविच्छेदात् फलभूतोऽसम्प्रज्ञातः । समाधिद्वये एकमङ्गमेकं फलमिति स्पष्टमाह—संज्ञात इत्यादि । श्रीपतञ्जलिरमुमेवार्थं भङ्ग्यन्तरेणोवाच । तथा च सूत्रम्—"तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः" इति, "वितर्कविचारानन्दास्मितानुगमात् संप्रज्ञातः। विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः" इति च ॥१८९॥

फलमेषां प्रवक्ष्यामि चतुर्णां क्रमतः शृणु ।
प्रत्याहारेण चित्तस्य भवेदक्षिप्तता द्रुतम् ॥१९०॥
अनेकवासनाजालनिवृत्त्या परमेश्वरि ।
धारणाभ्यासयोगेन चित्ते चैकाग्रतोद्भवः ॥१९१॥
ध्यानेन तस्याः स्थिरता समाध्या निर्विकल्पता ।
संज्ञातया समाध्या तु असंज्ञाता प्रजायते ॥१९२॥
निरोधयत्नबाहुल्याद् व्युत्थानक्षपणेन च ।
चित्तं प्रतिक्षणं शान्तं भवत्यतिसुनिर्मलम् ॥१९३॥
निस्तरङ्गसुधाम्भोधिसन्निभं परमं पदम् ।
निर्वातदीपकलिकाकारमत्यन्तनिश्चलम् ॥१९४॥

---

प्रत्याहारादीनां फलं वक्तुमाह—फलमिति । क्षिप्तं मूढं विक्षिप्तमेकाग्रं निरुद्धमिति चित्तं पञ्चधाऽवस्थितं भवति । बहिर्विकल्पैकरूपं क्षिप्तम् । क्रोधादिनाऽनुसन्धानरहितं मूढम् । दुःखपरिहारेण सुखमात्रप्रवृत्तं विक्षिप्तम् । एकाग्रता धारणध्यानयोः । निरुद्धं समाधाविति । प्रत्याहारस्य क्षिप्ततानाशः फलम् ॥१९०॥

धारणाभ्यासेनानेककामादिवासनाक्षयादेकाग्रतोत्पद्यते ॥१९१॥

तस्याः एकाग्रतायाः । समाध्या संप्रज्ञातसमाधिना । निर्विकल्पता एकाग्रतायाः प्रकर्षो निरुद्धता । एवंविधनिर्विकल्पत्वमेवासंप्रज्ञातरूपं संप्रज्ञातसमाधेः फलमित्याह—संज्ञातेति । संज्ञातेन समाधिना ॥१९२॥

असम्प्रज्ञातसमाधेरविघ्नेन संपत्तये निरोधपरिणामोपायमाह—निरोधेति । अत्रायमभिप्रायः—अन्यन्न चिन्तनीयमेतदेव चिन्तनीयमिति यदा संकल्प्य समाधौ तिष्ठति, तदा अन्यन्न चिन्तनीयमिति योऽयं निरोधस्तत्संस्कारोऽन्तस्तिष्ठति । तथा अनेकजन्माभ्यस्तस्य व्युत्थानस्य विषयान्तरचिन्तनस्य संस्कारोऽपि तिष्ठति । तत्र निरोधसंस्कारस्य पुनः पुनर्दृढीकरणरूपयत्नबाहुल्याद् व्युत्थानसंस्कारोदयकाल एव तस्य क्षपणं तदनुल्लेखेन नाशनं कर्तव्यमिति । निरोधसंस्कारस्य यत्नबाहुल्याद् व्युत्थानसंस्कारक्षपणं कर्तव्यम् । तेन क्षपणेन चित्तं क्षणे क्षणे शान्तं क्रोधादिसंस्काररहितम्, अत एव सुनिर्मलं क्रोधादिक्षोभरहितं भवति । तथा च सूत्रम्—"व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधक्षणचित्तान्वयो निरोधपरिणामः" इति ॥१९३॥

एवमभ्यासिनोऽसंप्रज्ञातसमाधावुपलभ्यस्वरूपं वर्णयन् फलमभिदधाति—निस्तरङ्गेति । निर्गतास्तरङ्गाः विकल्परूपा यस्मादेवंविधसुधाम्भोधिसन्निभम्

**किञ्चित्पदं समाप्यैवमनिवृत्तिं लभेदसौ ।**
**एष गुप्तो महापन्थाः सर्वार्थखनिरूपकः ॥१९५॥**
**गत्वा स निर्भयो देवि यथेच्छं चरतीश्वरि ।**
**पूज्यं तस्य नेतरत् स्यात्तत्पदं दृढमाश्रितः ॥१९६॥**
**पिबन् वीथीषु कान्ताभी रमन् स्वैरविहारतः ।**
**मन्त्रपूजाविहीनोऽपि विचरन् भैरवाश्रयः ॥१९७॥**
**जनानामनुगृह्णन् वै सर्वां पर्यटते महीम् ।**
**जीवन् वापि मृतो वापि न मुक्तिं प्राप्नुयात् क्वचित् ॥१९८॥**

---

अपरिच्छिन्नानन्दमयत्वेन सुखामृतसमुद्रकल्पम् । परमं सर्वोत्तमं पदम् आश्रयम् । निर्गतवायुदेशस्थदीपकलिकेव निश्चलप्रकाशैकरूपम् । तदेव स्पष्टमाह—अत्यन्तनिश्चलमिति ॥१९४॥

एवंविधं किञ्चित्पदं वाचा मनसा वा निर्देष्टुमशक्यस्थानं सम्यगपरोक्षेणाप्युपलभ्य अनिवृत्तिं तत्स्वरूपादच्युतिमसौ साधको लभेत् । एवं प्रकरणं समाप्य प्रतिपादितमर्थं स्तौति—एष इति । एष सम्प्रति प्रोक्तो योऽर्थः, स महापन्थाः परपुरुषार्थप्रापकत्वेनोत्तमो मार्गः । गुप्तः परशिवकृपाविधुरैरनासादितगुरुवरणैः पशुभिर्न दृष्टः । सर्वैरर्थ्यमानस्य परमानन्दस्वरूपरत्नपूर्णः खनिरूपकः आकरस्वभावः ॥१९५॥

एवंविधं पन्थानं गत्वा प्राप्य जननमरणादिभयान्निर्गतो यथेच्छं चरति विधिनियन्त्रणरहितो भवति । आद्यप्रश्नस्यैवैतावता ग्रन्थेनोत्तरमुक्तमिति सूचयन्नाह—पूज्यमिति । कुत इति चेदाह—तदिति । यतस्तत्पदं पूज्यस्वरूपं दृढं स्वात्मत्वेनाश्रितः ॥१९६॥

एवंविधयोगिनः किंविधमाचरणादिकमित्याशङ्क्याह--पिबन्निति । स्वैरं स्वेच्छामात्रनिमित्तकः, न तु विधिनिषेधनियन्त्रितः, विहारो विहरणमाचरणं यस्य । विहारत इति भावप्रधानो निर्देशः, विहारत्वादित्यर्थः । वीथीषु राजमार्गेषु पिबन् कान्ताभी रमन् । भैरवः परशिव एवाश्रयो विषयः सर्ववृत्तीनां यस्य, सर्वत्र परशिवदर्शीति यावत् । एवंविधो मन्त्रपूजारहितोऽपि तत्र तत्र विहरन् । जनानामनुगृह्णन्ननुग्रहं कुर्वन् सर्वां महीं यथेच्छं पर्यटत इत्यन्वयः ॥१९७॥

एवंविधस्य योगिनो मुक्तिः कदेत्याशङ्कायामाह—जीवन्निति । जीवन् वापि जीवनक्रियया देहादिचेष्टायुतोऽपि । मृतो वापि तद्रहितोऽपि । क्वचिदपि काले देशे

नित्यमुक्तस्वरूपत्वात् 'सदाशिवमयत्वतः ।
न बन्धस्तस्य कस्माच्चिदतो मुक्तिर्न विद्यते ॥१९९॥

देव्युवाच—

साधकस्य विधानं तु प्रोक्तं सुबहुविस्तरम् ।
अननुष्ठाय तत्सर्वं दुःखमाप्नोति सर्वथा ॥२००॥
कथमभ्यासनिरतो भवेत् साधकसत्तमः ।
एतन्मे संशयं देव छेत्तुमर्हसि भैरव ॥२०१॥

भैरव उवाच—

साधु पृष्टं महादेवि लोकानां हितकाम्यया ।
वक्ष्यामि तदशेषेण सर्वत्रैव सुगोपितम् ॥२०२॥
प्राग्जन्मार्जितसंपत्त्या साधनानां तु साधकः ।
शक्तिपातवशाद्देवि सकृत्प्रज्ञां समाश्रितः ॥२०३॥

---

वा मुक्ति न प्राप्नुयात् ॥१९८॥

मुक्त्यर्थमेवं साधितयोगादेः कुतो न मुक्तिरिति चेदाह—नित्येति । एवंविधस्य कस्माच्चिदपि कुतश्चिदपि यतो बन्धो न, अतोऽस्य मुक्तिर्न विद्यते । सति बन्धे मुक्तिरिति भावः । तदुक्तमनुत्तराष्टके—"संसारोऽस्ति न तत्त्वतस्तनुभृतां बन्धस्य वार्तैव का, बन्धो यस्य न जातु तस्य वितथा मुक्तस्य मुक्तिक्रिया" इति । नन्वस्य कुतो न बन्ध इति चेदाह—सदाशिवेति । सदाशिवात्मकत्वात् । नन्वेवमभ्यासात् पूर्वं बन्धः स्थित एवेति चेदाह—नित्येति । नित्यमुक्तस्वस्वरूपे एवामुक्तताभ्रान्ति-निरसनमेवैतावता कृतं नापूर्वं किञ्चित् सम्पन्नमिति भावः ॥१९९॥

ननु एवं सिद्धस्य परशिवात्मनः पूज्यस्यान्यस्याभावात् पूजादिकं मास्तु साधकेन तु सर्वं कर्तव्यमेव । ततश्च नित्यकर्मरतस्य कथं निरुक्तसाधनं संभवेदिति प्रष्टुं देव्यु-वाचेति । साधको दुःखमाप्नोत्येव ॥२००॥

सर्वकर्मकरणाभ्यासयोर्यौगपद्यासंभवात् साधकः कथमभ्यासनिरतो भवेत् ॥२०१॥

उत्तरं भैरव उवाचेति ॥२०२॥

यस्य प्राग्जन्मशतसंपादितसाधनसम्पत्त्या अनुपायेन शाम्भवोपायेन वा सम्य-क्प्रज्ञोदयस्तस्य कर्मकरणेऽकरणे वा न किञ्चिद् बाधकमित्याह—प्राग्जन्मेति ।

# अथ षष्ठः पटलः

देवी उवाच

पुरा श्रुतं महादेव ! शवसाधनमेव च ।
श्मशानसाधनं नाथ श्रुतं परममादरात् ॥ १ ॥
न स्तोत्रं कवचं नाथ ! श्रुतं न शवसाधने ।
कवचेन महादेव ! स्तोत्रेणैव च शङ्कर ॥
कथं सिद्धिर्भवेद् देव ! कवचं ब्रूहि साम्प्रतम् ॥ २ ॥

श्रीशिव उवाच

शृणु देवि वरारोहे दुर्गे ! परमसुन्दरि ।
सिद्ध्यर्थे विनियोगश्च कवचस्य नियन्त्रणात् ॥ ३ ॥
सिद्धिं सिद्धेश्वरी पातु मस्तकं पातु कालिका ।
कपालं कामिनी भालं पातु नेत्रं नगेश्वरी ॥ ४ ॥
कर्णौ विश्वेश्वरी पातु हृदयं जगदम्बिके ।
काली सदा पातु मुखं जिह्वां नीलसरस्वती ॥ ५ ॥
करौ करालवदना पातु नित्यं सुरेश्वरी ।
दन्तं गुह्यं नखं नाभिं पातु नित्यं हिमात्मजा ॥ ६ ॥
नारायणी कपोलं च गण्डा गण्डं सदैव तु ।
केशं मे भद्रकाली च दुर्गा पातु सुरेश्वरी ॥ ७ ॥
पुमान् रक्षतु मे चण्डी धनं पातु धनेश्वरी ।
स्तनौ विश्वेश्वरी पातु सर्वाङ्गं जगदीश्वरी ॥ ८ ॥
उग्रतारा सदा पातु महानीलसरस्वती ।
पातु जिह्वां महामाया पृष्ठं मे जगदम्बिका ॥ ९ ॥

हरप्रिया पातु नित्यं श्मशाने जगदीश्वरी ।
शवे पातु च शर्वाणी सदा रक्षतु चण्डिका ॥ १० ॥

कात्यायनी कुलं पातु सदा च शववाहिनी ।
घोरदंष्ट्रा करालास्या पार्वती पातु सर्वदा ॥ ११ ॥

कमला पातु राज्यं मे मन्त्रं मन्त्रेश्वरी तथा ।
इत्येवं कवचं देवि ! देवानामपि दुर्लभम् ॥ १२ ॥

यः पठेत् सततं देवि ! सिद्धिमाप्नोति निश्चितम् ।
सिद्धिकाले समुत्पन्ने कवचं प्रपठेद् यदि ॥ १३ ॥

अज्ञात्वा कवचं देवि ! यश्च सिद्धिमुपक्रमः ।
यश्च सिद्धिमवाप्नोति न मुक्तिर्न च सद्गतिः ॥ १४ ॥

अत एव महामाये ! कवचं सिद्धिकारकम् ।
देवानां च नराणां च किन्नराणां च दुर्लभम् ॥ १५ ॥

पठित्वा कवचं चण्डि ! शीघ्रं सिद्धिमवाप्नुयात् ।
महोत्पाते महादुःखे महाविपदि सङ्कटे ॥ १६ ॥

प्रपठेत् कवचं देवि ! पठित्वा मोक्षमाप्नुयात् ।
शून्यागारे श्मशाने वा कामरूपे महाघटे ॥ १७ ॥

स्वत्रामामन्दिरे कालेऽप्यथवा काममन्दिरे ।
मन्त्रं मन्त्री जपेद् बुद्ध्या भक्त्या परमया युतः ॥ १८ ॥

मूले दले फले वापि नले कालेऽनिले मले ।
जले पठेत् प्राणबुद्ध्या मनसा साधकोत्तमः ॥ १९ ॥

नाडीशुद्धिं ततः कृत्वा भावशुद्धिं महेश्वरि ! ।
विहरेद्धरिमध्ये च सर्वशास्त्रार्थकोविदः ॥ २० ॥

चितामारुह्य सिद्धेशो नीलकण्ठत्वमाप्नुयात् ।
वामे चलति का नाडी दक्षिणे खलु जाह्नवी ॥ २१ ॥

मध्ये कुलाचला नाडी दुर्लभा धरणीतले ।
चित्रिणी पद्मिनी शङ्खा विजृम्भा शोणदा तथा ॥ २२ ॥

कङ्काला कूटजा नाडी कपोला गोलजा खला ।
निजदेहे वसन्त्येता ब्रह्मनाडीं समाश्रिताः ॥ २३ ॥

सर्वासां धरणीमध्ये गौरी सूक्ष्मा च तारिणी ।
घण्टाकर्णा लोलजिह्वा विकटा चन्द्रवल्लभा ॥ २४ ॥

महानीला वीरभद्रा सुलज्जा नखदा शुभा ।
बलाका काकिनी राका कालघण्टा शिवा सिता ॥ २५ ॥

दर्दुरा च दुराराध्या विशोकवदनाऽनघा ।
जम्भिनी पुक्कसा शोणा यशोदा मखदा खदा ॥ २६ ॥

खगा खरवती नाडी कोला हेला हलाहला ।
इडा च पिङ्गला चैव सुषुम्ना प्राणरूपिणी ॥ २७ ॥

गान्धारी कोटराक्षी च कुलजा कुलपण्डिता ।
सव्ये कनखला नाडी दक्षिणे कामपालिका ॥ २८ ॥

विहारं नीलकण्ठस्य देवानामपि दुर्लभम् ।
क्रोडे विश्वम्भरा कामा कराला मेघवाहिनी ॥ २९ ॥

घनभा घनदा चण्डी सुशीला वरपण्डिता ।
विश्वारण्या विश्वबसनी बहुपादा कटाक्षजा ॥ ३० ॥

नन्दिनी शोणदा गङ्गा काशी कमलवासिनी ।
एवं यदि महामाये भावयेत् सुरपूजिताम् ॥ ३१ ॥

तदैव जायते सिद्धिः सत्यं सत्यं न संशयः ।
बहुपादकटा घोरा निर्जिता घनभेदिनी ॥ ३२ ॥

नाडीविहारसम्पर्काज्जीवन्मुक्तो न संशयः ।
शृणु देवेशि ! घोराभे करालाभे दिगम्बरे ॥ ३३ ॥

चिन्तामणिप्रसादेन किं न सिध्यति भूतले।
मूले चतुर्दले पद्मे स्वाधिष्ठाने च षड्दले ॥ ३४ ॥

मणिपूरेऽनाहते च आज्ञाचक्रे महेश्वरि ! ।
एवं चक्रे परिन्यस्तैर्दशद्वादशषोडशैः ॥ ३५ ॥

दलैस्तु मङ्कुरं वर्णं न्यस्तं गात्रशतं मतम् ।
यत्र कालीपुरं देवि ! ब्रह्माद्यैरपि सेवितम् ॥ ३६ ॥

नीलकण्ठं त्रिलोकेशं सहस्राब्जनिवासिनम् ।
कोटीशं कुलकोटीशं साधकेन्द्रैः सुशोभितम् ॥ ३७ ॥

ध्यायेत् परमनिर्विण्णो देवः परमपावनः ।
जीवः शिवस्तु विज्ञेयो विश्वेशः सर्वदा रतिः ॥ ३८ ॥

ब्रह्मतत्त्वं वरारोहे ! देवानामपि दुर्लभम् ।
स्वरादिनिष्ठितं लिङ्गं स्वरव्यञ्जनभूषितम् ॥ ३९ ॥

वर्णमालापरिन्यस्तं लिङ्गं भुवनशोभितम् ।
महावीजं महोत्साहैर्नादितं परमात्मकम् ॥ ४० ॥

नीलकण्ठं महादेवं सदा शक्तिसमन्वितम् ।
ध्यायेत् तु पूजयेद् देवं मनसा वचसा इति ॥ ४१ ॥

तदैव साधको लोके चान्तर्यागपरायणः ।
अन्तर्यागं महामाये ! साधकानामगम्यकम् ॥ ४२ ॥

ब्रह्माण्डं वै शरीरं तु सर्वेषां प्राणधारिणाम् ।
ब्रह्माण्डे ये गुणाः सन्ति ते तिष्ठन्ति कलेवरे ॥ ४३ ॥

शरीरं तत्त्वघटितं नानारसपरिप्लुतम् ।
चन्द्रबिन्दुसमायुक्तं नादबिन्दुविभूषितम् ॥ ४४ ॥

शरीरं शङ्करस्यापि दुर्लभं मुक्तिदायकम् ।
यावन्मुक्तिर्महामाये तावदेव हि साधकः ॥ ४५ ॥

तावत् क्रिया च भुक्तिश्च मुक्तिरव्यभिचारिणी ।
महाघोरे समाक्लेशे शरीरं ब्रह्मणः पदम् ॥ ४६ ॥

पावितं च प्रसूनं च देहजं सर्वमङ्गजम् ।
गृहीत्वा कालिकां देवीं मुण्डमालाविभूषिताम् ॥ ४७ ॥

पूजयेत् परया भक्त्या शिव एव न संशयः ।
ब्रह्माण्डघटितां मूर्त्तिमङ्गैश्च विभूषिताम् ॥ ४८ ॥

चतुर्भुजां लोलजिह्वां नानाशक्तिसमन्विताम् ।
पूजयेत् परमानन्दो निजशक्तिसमन्वितः ॥ ४९ ॥

वामे स्ववामां देवेशि ! नानालङ्कारभूषिताम् ।
कुलचक्रस्य देवेशि ! प्रजपेत् तु समः शिवः ॥ ५० ॥

निशि चक्रे करालास्यां मुक्तकेशो दिगम्बरः ।
सहस्रं वाऽयुतं वापि जपेन्मदनमन्दिरे ॥ ५१ ॥

श्वेतं वा लोहितं वापि कुसुमं पञ्चमान्वितम् ।
एवं विधिविधानेन महाकाल्यै निवेदयेत् ॥ ५२ ॥

दिवा पूजा विधातव्या निशि पूजा महेश्वरि ! ।
सन्ध्या पूजा प्रकर्तव्या तदा सिद्धिमवाप्नुयात् ॥ ५३ ॥

न दिवा न निशाभागे न सन्ध्यायां कदाचन ।
पूजयेन्न जगद्धात्रीं हेलायां परिपूजयेत् ॥ ५४ ॥

दिवा न पूजयेद् देवीं रात्रौ नैव च नैव च ।
सर्वदा पूजयेद् देवीं दिवा रात्रौ विवर्जयेत् ॥ ५५ ॥

यथा इडा पिङ्गला च सुषुम्ना ब्रह्मभेदिनी ।
नाडीभ्रमणसम्पर्कान्मुक्तिं प्राप्नोति साधकः ॥ ५६ ॥

विना नाडीपरिज्ञानं विना नाडीनिषेवणम् ।
विना विश्वकरं देवि ! नहि सिध्यति भूतले ॥ ५७ ॥

सव्ये बिल्वं करे दक्षे मालां संगृह्य साधकः ।
प्रजपेत् पार्वतीमन्त्रं सर्वकार्याय भूतले ॥ ५८ ॥

घोरदंष्ट्रां करालास्यामट्टहासां दिगम्बराम् ।
प्रणम्य भक्त्या देवेशीं जपेच्चिन्तामणिं मनुम् ॥ ५९ ॥

चिन्तामणिप्रसादेन किं न सिध्यति भूतले ।
चिन्तामणिं कल्पलतां गृहीत्वा परमां शिवाम् ॥ ६० ॥

जप्त्वा महामनुं चण्डि ! देवदेवेश्वरो भवेत् ।
जीवः शिवत्वं लभते ज्ञानस्य वरवर्णिनि ! ॥ ६१ ॥

गुरुपादाब्जकं देवि ! रहस्यं परमाद्भुतम् ।
विचित्रं चारुपादाब्जं पार्वत्याः शङ्करस्य च ॥ ६२ ॥

भजेदैक्यं विधानेन जीवन्मुक्तः स एव हि ।
पिण्डे युक्ताः पदे युक्ता रूपे युक्ता वरानने ! ॥
गुणातीताश्च ये भक्तास्ते मुक्ता नात्र संशयः ॥ ६३ ॥

श्रीपार्वती उवाच

न पिण्डं न पदं रूपं न जानामि सुरोत्तम ! ।
कथ्यतां मे दयासिन्धो ! निश्चितं मतमुत्तमम् ॥ ६४ ॥

श्रीशिव उवाच

गुह्याद् गुह्यतरं देवि ! सारमेकं वदाम्यहम् ।
पिण्डं कुण्डलिनी शक्तिः पदो हंसः प्रकीर्तितः ॥ ६५ ॥

रूपं चापि वरारोहे ! ध्यानमेव न संशयः ।
महाकुण्डलिनीं देवीं यो भजेत् तु भुजङ्गिनीम् ॥ ६६ ॥

स कृतार्थः स धन्यश्च स देवो वीरसत्तमः ।
स गुणी साधको ज्ञानी स मानी स च पण्डितः ॥ ६७ ॥

स कृती सर्वब्रह्माण्डे देवत्वं लभते ध्रुवम् ।
ये दिव्याः साधकेन्द्राश्च ये वीराः साधकोत्तमाः ॥ ६८ ॥

पशवः पशवो ज्ञेयाः सर्वशास्त्रार्थकोविदाः ।
भावशुद्धिं समास्थाय सर्वकार्यार्थकोविदः ॥ ६९ ॥

साधको मुक्तिमाप्नोति सत्यं सत्यं वरानने ! ।
शृणु देवि ! जगद्धात्रि ! सर्वमङ्गलमङ्गलम् ॥ ७० ॥

तन्त्रं शृणुयाद् देवेशि ! ब्रह्मनिर्वाणमाप्नुयात् ।
निशाभागे जपेन्मन्त्रं वामायुक्तो महेश्वरि ! ॥ ७१ ॥

अयुतं भक्तिभावेन जीवन्मुक्तः स एव हि ।
सहस्रमयुतं वापि कुजवारे निशामुखे ॥ ७२ ॥

जपेच्चिन्तामणिं मन्त्रं क्ष्मातले नात्र संशयः ।
चिन्तामणिप्रसादेन किं न सिध्यति भूतले ॥ ७३ ॥

यथाविधि विधानं च कृत्वा च मन्मथालयम् ।
व्रजेत् तु भक्तिभावेन स गच्छेत् परमां गतिम् ॥ ७४ ॥

नभोगतं महापद्मं सर्वदेवसुपूजितम् ।
तन्मध्यस्थं महादेवं नीलकण्ठं सदाशिवम् ॥ ७५ ॥

यथा शक्तियुतं देवि ! सर्वानन्दमनोहरम् ।
शुक्लं रक्तं नीलवर्णं पीतादिवर्णशोभितम् ॥ ७६ ॥

मनसा चिन्तितं देवि ! देवं परमकारणम् ।
ध्यानं च मनसा देवि ! मनसा परिपूजितम् ॥ ७७ ॥

मनसा पूजयेल्लिङ्गं मनसा तर्पणादिकम् ।
मनसा कालिकां तारां मनसा तु भुजङ्गिनीम् ॥ ७८ ॥

मनसा ब्रह्मनाडीं वै विदध्यात् सर्वकामदाम् ।
इत्येवं ध्यानयोगेन मनसा जगदम्बिकाम् ॥ ७९ ॥

पूजयेत् परया बुद्ध्या स विश्वेशो भवेद् ध्रुवम् ।
सुषुम्नामध्यगां कालीं करालवदनां शिवाम् ॥ ८० ॥

प्रणमेत् पार्वतीं देवीं महानीलसरस्वतीम् ।
उग्रताराक्रमं वक्ष्ये देवानामपि दुर्लभम् ॥ ८१ ॥

त्रिकोणवलयाम्भोजे महानीलसरस्वतीम् ।
मया बुधस्वरूपेण भावयेत् तामहर्निशम् ॥ ८२ ॥

हृत्पद्मे भावयेत् चण्डीं हृत्पद्मे भावयेच्छिवम् ।
हृत्पद्मे भावमासाद्य पूजयेद् वरवर्णिनि ! ॥ ८३ ॥

यावन्नानात्वभावं च तावदेवं पृथग्विधम् ।
तावत् क्रियाः पृथग्भावास्तावन्नानाविधा मताः ॥ ८४ ॥

तावद् भिन्नाश्च देवाश्च ब्रह्मविष्णुमहेश्वराः ।
गणेशं च दिनेशं च वह्निं वरुणमेव च ॥ ८५ ॥

कुबेरं चापि दिक्पालमेतत् सर्वं पृथक् पृथक् ।
तावन्नानाविधाश्चेष्टाः स्त्रीपुंनपुंसकात्मकम् ॥ ८६ ॥

तावद् बिल्वदलं भिन्नं देवेशि ! तुलसीदलात् ।
तावज्जवा द्रोणकृष्णा करवीराणि भूतले ॥ ८७ ॥

विभिन्नानि च देवेशि ! सत्यं वै तुलसीदलात् ।
तावद् दिव्यशरीरश्च तावत् तु पशुभावकः ॥ ८८ ॥

तावत् तन्त्रे भेदबुद्धिस्तावदेव पृथक् क्रिया ।
हरौ हरे भेदबुद्धिर्जायते जगदम्बिके ! ॥ ८९ ॥

करालवदना काली श्रीमदेकजटा शिवा ।
षोडशी भैरवी भिन्ना भिन्ना च भुवनेश्वरी ॥ ९० ॥

छिन्ना भिन्नाऽन्नपूर्णा च भिन्ना च बगलामुखी ।
मातङ्गी कमला भिन्ना भिन्ना वाणी च राधिका ॥ ९१ ॥

भिन्ना चेष्टा क्रिया भिन्ना भिन्नो वाचारसंग्रहः ।
यावन्नैक्यं पादपद्मे भवान्या नैव जायते ॥ ९२ ॥

अद्वैते तारिणीपादपद्मे परमपावने ।
ज्ञानपारे समुत्पन्ने हृत्पद्मनिलयं तथा ॥ ९३ ॥
ऐक्यं भवति चार्वङ्गि ! सर्वं ब्रह्ममयात्मकम् ।
..............................जीवेषु शाङ्करि ! ॥ ९४ ॥

न च पापं न वा पुण्यं न यमो नरकं न च ।
न सुखं नापि दुःखं च न रोगेभ्यो भयं तथा ॥ ९५ ॥

न भयं नापि शोकं च सर्वं ब्रह्ममयात्मकम् ।
ब्राह्मणी क्षत्रिया वैश्या वैश्यजा शूद्रजाऽन्त्यजा ॥ ९६ ॥

तथैव तारिणी विद्या यथा विद्या तथा तथा ।
एवं ज्ञानं महेशानि ! यथा वै जायते प्रिये ! ॥ ९७ ॥

तथैव विद्या देवेशि ! विद्याऽविद्याविरोधिनी ।
जायते नात्र सन्देहो ब्रह्मानन्दमयो भवेत् ॥ ९८ ॥
अद्वैतं च गुणातीतं निर्गुणं प्रकृतेः परम् ।
परमानन्दसंयुक्तो मुक्तिं यास्यति निश्चितम् ॥ ९९ ॥

इति सत्यं पुनः सत्यं सत्यं चण्डि ! वरानने ! ।
तत्त्वज्ञानात् परं नास्ति नास्ति देवः सदाशिवात् ॥१००॥

नास्ति भावस्तु मध्यस्थाद् नास्ति दुर्गासमं पदम् ।
सोऽहं सोऽहं पुनः सोऽहं सोऽहमित्येव जायते ॥१०१॥

तदेव चिरकालेन सोऽहं ज्ञानं प्रजायते ।
नानात्वबुद्धिं कृत्वा वै सात्त्विकीं परमात्मिकाम् ॥१०२॥

गृहीत्वा च वरारोहे ! जायते परमार्थवित् ।
ज्ञानात् परतरं नास्ति नास्ति नास्ति वरानने ! ॥१०३॥
लब्ध्वा हि तत्त्वं परमं मुच्यते देहबन्धनात् ।
कुलवारे कुलीनस्तु कुलधर्मं कुलव्रतः ॥१०४॥

आश्रयेत् परमानन्दः परमानन्दमेव च ।
न कुलीने परा बुद्धिर्न कुलीनपरा गतिः ॥१०५॥

न कुलीने परा भक्तिर्न कुलीने परा क्रिया ।
एवं वदति यो यस्तु स मुक्तिं न च याति वै ॥१०६॥

इहैव स्वर्गो देवेशि ! इह कैलासमन्दिरम् ।
इहैव मुक्तिर्भक्तिश्च मुक्तिरव्यभिचारिणी ॥१०७॥

भोगः स्वर्गश्च मोक्षश्च करस्थश्चैव शाङ्करि ! ।
शाक्तानां त्रिपुरेशानि ! सत्यं चण्डि ! न संशयः ॥१०८॥

श्रीपार्वती उवाच

नीलकण्ठ ! महादेव ! महेश्वर ! जगद्गुरो ! ।
पृच्छामि परमं तत्त्वं ब्रूहि नाथ ! जगत्प्रभो ! ॥१०९॥

कथं वा जायते मुक्तिर्मुक्तिर्भक्तिर्महेश्वरे ।
जीवः शिवत्वं लभते केन रूपेण शङ्कर ! ॥११०॥

श्रीशिव उवाच

विश्वेश्वरि ! जगद्धात्रि ! महामाये ! महेश्वरि ! ।
गुह्याद् गुह्यतरं वाक्यं शृणुष्व नगनन्दिनि ! ॥१११॥

शान्तं दान्तं कुलीनं च सर्वशास्त्रार्थकोविदम् ।
एवं गुरुं महेशानि ! आश्रयेद् भक्तिभावतः ॥११२॥

ततः प्रथमतो लब्ध्वा गुरुं परमकारणम् ।
गृह्णीयात् परमं मन्त्रं देव्याश्च वरवर्णिनि ! ॥११३॥

सेतुं च कुल्लुकां ज्ञात्वा मन्त्रसङ्केतकं तथा ।
समयाचारसङ्केतं ज्ञानभावं समभ्यसेत् ॥११४॥

पूजयेत् परया भक्त्या पार्वतीं पटलक्रमात् ।
यथा गुरुविधानेन पूजयेत् परदेवताम् ॥११५॥

# श्रीपाद्मसंहितायां योगपादः

## प्रथमोऽध्यायः ।

### निःश्रेयससाधनयोगनिरूपणम्

ब्रह्मा—

भगवन् योगयुक्तस्य निःश्रेयसमुदीरितम् । पुरुषस्य दयासिन्धो ज्ञानिनः पुरुषोत्तम ॥ १ ॥

स योगः कथ्यतां भूयः श्रोतव्यं यदि मद्विधैः । यदि वानुग्रहोऽस्मासु भजमानेषु विद्यते ॥ २ ॥

### योगद्वैविध्यम्

श्रीभगवान्—

अव्याकुलस्य चित्तस्य [1]बन्धनं विषये क्वचित् । यत्संयोगश्चतुर्वक्त्र स च द्वैविध्यमश्नुते ॥ ३ ॥

### विभक्तयोः प्रत्येकं लक्षणम्

कर्म कर्तव्यमित्येवं विहितेष्वेव कर्मसु । बन्धनं मनसो नित्यं कर्मयोगः स उच्यते ॥ ४ ॥

यत्तु चित्तस्य सततं अर्थे श्रेयसि बन्धनम् । ज्ञानयोगः स विज्ञेयः सर्वसिद्धिकरः शुभः ॥ ५ ॥

### समुच्चितयोस्तयोर्मोक्षसाधनत्वम्

यस्योक्तलक्षणे योगे द्विविधेऽवस्थितं मनः । स याति परमं श्रेयो मोक्षलक्षणमञ्जसा ॥ ६ ॥

### योगाङ्गनिरूपणम्

यमादिरङ्गं पूर्वस्य वैराग्यादि परस्य तु । अष्टौ यमादयो[2]योगाः यमोऽहिंसादिलक्षणः ॥ ७ ॥

अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयार्जवम् । क्षमा धृतिर्मिताहारो शौचं चेति यमा दश ॥ ८ ॥

तपःप्रभृति[3]रूपस्तु नियमः कथ्यते पुनः । तपस्स तुष्टिरास्तिक्यं दानमाराधनं हरेः ॥ ९ ॥

सिद्धान्तश्रवणं ह्रीश्च जप इत्यादिलक्षणः । आसनादीनि सर्वाणि स्वस्तिकादीनि संप्रति ॥ १० ॥

वर्ण्यन्ते स्वस्तिकं पादतलयोरुभयोरपि । पूर्वोत्तरे जानुनी द्वे कृत्वासनमुदीरितम् ॥ ११ ॥

सीवन्या दक्षिणे पार्श्वे सव्यं सव्ये तु दक्षिणम् । गुल्फं कृत्वासनं तच्च स्वस्तिकं कथ्यते बुधैः ॥ १२ ॥

आरोप्य चोर्वोश्चरणौ तदङ्गुष्ठद्वयं पुनः । व्युत्क्रमेणैव हस्ताभ्यां गृह्णीयात्तत्तदासनम् ॥ १३ ॥

बद्धपद्मासनं ज्ञेयमासनेषु सुपूजितम् । एकं चरणमन्यस्मिन्नूरावारोप्य निश्चलः ॥ १४ ॥

---

1. सन्धानं. 2. म. अङ्गानि. 3. श्री. रूर्ध्वं तु.

आस्ते यदिदमेनोघ्नं वीरासनमुदाहृतम् । सीवनीं गुल्फदेशाभ्यां निपीड्य व्युत्क्रमेण तु ॥ १५ ॥
प्रसार्य जानुनोर्हस्तावासनं सिंहपूर्वकम् । गुल्फौ च वृषणस्याधः सीवन्युभयपार्श्वयोः ॥ १६ ॥
निवेश्य पादौ हस्ताभ्यां दृढं बध्वा यदासनम् । भद्रासनं तद्विज्ञेयं सर्वपापप्रणाशनम् ॥ १७ ॥
गुल्फं सव्येतरं सव्ये पृष्ठपार्श्वे [1]निधाय च । गुल्फं तथेतरं पृष्ठपार्श्वेऽन्यस्मिन्निधाय च ॥ १८ ॥
आसनं गोमुखं यद्वत् गोमुखासनमिष्यते । सीवनीपार्श्वमुभयं गुल्फाभ्यां व्युत्क्रमेण तु ॥ १९ ॥
निपीड्यासनमेतच्च मुक्तासनमुदाहृतम् । मेढ्रस्योपरि निक्षिप्य सव्यं गुल्फं तथेतरम् ॥ २० ॥
निवेश्योपरि गुल्फस्य यद्वा मुक्तासनं भवेत् । अवष्टभ्य धरां सम्यक् तलाभ्यां हस्तयोर्द्वयोः ॥ २१ ॥
कूर्परौ नाभिपार्श्वे च स्थापयित्वा मयूरवत् । समुन्नम्य शिरःपादौ मयूरासनमिष्यते ॥ २२ ॥

इति श्रीपाञ्चरात्रे महोपनिषदि श्रीपाद्मसंहितायां योगपादे आसनभेदलक्षणं नाम प्रथमोऽध्यायः ॥

---

## द्वितीयोऽध्यायः ।

### नाडीशुद्धिः

श्रीभगवान्—

यमैश्च नियमैश्चैव योगाङ्गैरासनैरपि । सुसंयतो नाडिशुद्धौ प्राणायामो विधीयते ॥ १ ॥
देहमानं स्वाङ्गुलीभिः षण्णवत्यङ्गुलायतम् । प्राणः शरीरादधिको द्वादशाङ्गुलमानतः ॥ २ ॥
देहस्थमनिलं देहसमुद्भूतेन वह्निना । न्यूनं समं वा योगेन कुर्वन् ब्रह्मविदिष्यते ॥ ३ ॥
देहमध्ये शिखिस्थानं तप्तजाम्बूनदप्रभम् । त्रिकोणं द्विपदामन्यच्चतुरश्रं चतुष्पदाम् ॥ ४ ॥
वृत्तं विहङ्गमानां तु षडश्रं जलजन्मनाम् । अष्टाश्रं स्वेदजानां तु तस्मिन् दीपवदुज्ज्वलः ॥ ५ ॥
वैश्वानरोऽग्निः पचति प्राणापानसमायुतः । चतुष्प्रकार[2]मशनं देहमध्येऽभिधीयते ॥ ६ ॥
अपानात् द्व्यङ्गुलादूर्ध्वं अधो मेढ्रस्य वामतः । देहमध्यं मनुष्याणां मेढ्रमध्यं चतुष्पदाम् ॥ ७ ॥
*इतरेषां तुन्दमध्यं सर्वेषामेव पद्मज । कन्दस्थानं मनुष्याणां देहमध्ये नवाङ्गुलम् ॥ ८ ॥
चतुरङ्गुलमुत्सेधं चतुरङ्गुलमायतम् । अण्डाकृतिस्तिरश्चां च द्विपदां च चतुष्पदाम् ॥ ९ ॥
तुन्दमध्यं तदिष्टं वै तन्मध्यं नाभिरिष्यते । तत्र चक्रं द्वादशारं आहुर्मासानराणि तु ॥ १० ॥

---

1. म. विधाय. 2 श्री. मशितं [* 'इतरेषा" इति श्लोक "चतुरङ्गुलमिति" श्लोकात्-अनन्तरं दृश्यते श्रीग्रन्थे ।

तव योनिर्महेशानि परं ब्रह्मस्वरूपिणी ।
तव योनिर्महेशानि भवस्य मोहिनी प्रिये ॥ २२ ॥
तव योनिर्महेशानि सिद्धिसूत्रेण वेष्टयेत् ।
सिद्धिसूत्रं महेशानि त्रिप्रकारं वरानने ॥ २३ ॥
ईडा च पिङ्गला चैव सुषुम्नात्रितयं तथा ।
सदानन्दमयीं योनिं नानासुखविलासिनीम् ॥ २४ ॥
शृङ्गारसमये देवि नान्तं गच्छामि पार्वति ।
मम लिङ्गो महेशानि भिनत्ति सकलं जगत् ॥ २५ ॥
तथापि परमेशानि नान्तं गच्छामि कामिनि ।
तव योनिर्महेशानि न जाने कीदृशीं गतिम् ॥ २६ ॥
तव योनिर्महेशानि आद्या प्रकृतिरूपिणी ।
सदा कुण्डलिनीं योनिमहाकुण्डलिनीं पराम् ॥ २७ ॥
यः सदा परमेशानि योनिं दृष्ट्वा वरानने ।
जपेद् बीजं वरारोहे भगाख्यं भगरूपिणीम् ॥ २८ ॥
योनिं बद्ध्वा महेशानि भगबीजेन पार्वति ।
अष्टोत्तरशतं जप्त्वा मम तुल्यो भवेत् प्रिये ॥ २९ ॥
तव योनौ महेशानि रमणं यत्नतश्चरेत् ।
तस्या रमणमात्रेण ब्रह्मविष्णुशिवात्मकः ।
स एव धनवान् वाग्मी वागीशसमतां व्रजेत् ॥ ३० ॥

श्रीदेवी उवाच

नीलकण्ठ महादेव रहस्यं कृपया वद ।
यदि नो कथ्यते देव विमुञ्चामि तदा तनुम् ॥ ३१ ॥

श्री ईश्वर उवाच

शृणु पार्वति कृष्णाङ्गि खञ्जनाक्षि सुलोचने ।
गोपनीयं रहस्यं हि सर्वकामफलप्रदम् ॥ ३२ ॥

तिस्रः कोट्यस्तदर्धेन शरीरे नाडिका मताः ।
तासु मध्ये दश प्रोक्तास्तासु तिस्रो व्यवस्थिताः ।। ३३ ।।

प्रधाना मेरुदण्डाग्रे चन्द्रसूर्याग्निरूपिणी ।
मज्जयित्वा सुषुम्नायामहं योगी सुरेश्वरि ।। ३४ ।।

षट्चक्रे परमेशानि भावयेद् योनिरूपिणीम् ।
प्रथमं परमेशानि आधारयुगपत्रकम् ।। ३५ ।।

वादिसान्त्यैश्चतुर्वर्णैर्द्रुतहेमसमप्रभम् ।
तडित्कोटिप्रभाकारं स्थानं परमदुर्लभम् ।। ३६ ।।

तत् कर्णिकायां देवेशि त्रिकोणमतिसुन्दरम् ।
इच्छाज्ञानक्रियारूपं ब्रह्मविष्णुशिवात्मकम् ।। ३७ ।।

मध्ये स्वयंभूलिङ्गं च कुण्डलीवेष्टितं सदा ।
त्रिकोणाख्यं तु देवेशि लकारं चिन्तयेत् तथा ।। ३८ ।।

ब्रह्माण्डं तत्र संचिन्त्य कामदेवं च चिन्तयेत् ।
बीजं तत्रैव निश्चिन्त्यं योनावादानमेव च ।। ३९ ।।

पदे च गमनं पायौ विसर्गं नसि कामिनि ।
घ्राणं संचिन्त्य देवेशि महेशि प्राणवल्लभे ।। ४० ।।

डाकिनीं परमाराध्यां शक्तिं च भावयेत् ततः ।
एतानि गिरिजे मातः पृथ्वीं नीत्वा गणेश्वरि ।। ४१ ।।

तन्मध्ये लिङ्गरूपं हि कुण्डलीवेष्टितं प्रिये ।
तत्र कुण्डलिनीं नित्यां परमानन्दरूपिणीम् ।। ४२ ।।

तत्र ध्यानं प्रकुर्वीत सिद्धिकामो वरानने ।
कोटिचन्द्रप्रभाकारां परंब्रह्मस्वरूपिणीम् ।। ४३ ।।

चतुर्भुजां त्रिनेत्राञ्च वराभयकरां तथा ।
तथा च पुस्तकं वीणां धारिणीं सिंहवाहिनीम् ।। ४४ ।।

गच्छन्ति स्वासनं भीमां नानारूपधरां पराम् ।
पूर्वोक्तां पृथ्वीं धन्यां गन्धे नीत्वा महेश्वरि ॥ ४५ ॥

आकृष्य प्रणवेनैव जीवात्मानं नगेन्द्रजे ।
कुण्डलिन्या सह प्रेमे गन्धमादाय साधकः ॥ ४६ ॥

सोऽहमिति मनुना देवि स्वाधिष्ठाने प्रवेशयेत् ।
तत्पद्मं लिङ्गमूलस्थं सिन्दूराभं च षड्दलम् ॥ ४७ ॥

स्फुरद्विक्रमसंकाशैर्वादिनान्तैः सुशोभितम् ।
तत्कर्णिकायां वरुणं तत्रापि भावयेद्धरिम् ॥ ४८ ॥

युवतिं राकिणीं शक्तिं चिन्तयित्वा वरानने ।
रसनेन्द्रिययूपस्थं जलञ्च कामलालसे ॥ ४९ ॥

एतानि गन्धञ्च शिवे रसे नीत्वा विनोदिनीम् ।
जीवात्मानं कुण्डलिनीं रसञ्च मणिपूरके ॥ ५० ॥

नीत्वा परमयोगेन तत्पद्मं दिग्दलं प्रिये ।
नीलवर्णं तडिद्रूपं डादिफान्तैश्च मण्डितम् ॥ ५१ ॥

तत्कर्णिकायां सुश्रोणि वह्निं सञ्चिन्त्य साधकः ।
तत्र रुद्रः स्वयं कर्ता संहारे सकलस्य च ॥ ५२ ॥

लाकिनीशक्तिसंयुक्तो भावयेत् तं मनोहरे ।
तत्र चक्षुरिन्द्रियञ्च कृत्वा तेजोमयं यजेत् ॥ ५३ ॥

एतं रसञ्च सुभगे रूपं नीत्वा महाभागे ।
जीवात्मानं कुण्डलिनीरूपञ्चानाहते नयेत् ॥ ५४ ॥

बन्धूकपुष्पसंकाशं तत्पद्मं द्वादशारकम् ।
कादिठान्तैः स्फुरद्वर्णैः शोभितां हरवल्लभाम् ॥ ४६ ॥

तत्कर्णिकायां वायुञ्च जीवस्थाननिवासिनम् ।
तत्र योनेर्मण्डलञ्च बाणलिङ्गविराजितम् ॥ ५६ ॥

काकिनीशक्तिसंयुक्तं तत्र वायोस्त्वगिन्द्रियम् ।
एतद् रूपञ्च संयोज्य स्वर्गे रमणकामिनि ॥ ५७ ॥

जीवकुण्डलिनीं स्पर्शं विशुद्धौ स्थापयेत् ततः ।
धूम्रवर्णं कण्ठपद्मं षोडशस्वरमण्डितम् ॥ ५८ ॥

तत्कर्णिकायामाकाशं शिवञ्च कारिणीयुतम् ।
वाचं श्रोत्रं च आकाशे संस्थाप्य नगनन्दिनि ॥ ५९ ॥

एतानि स्पर्शं शब्दे च नीत्वा शाङ्करि मत्प्रिये ।
जीवं कुण्डलिनीं शब्दश्चाज्ञापत्रे निधापयेत् ॥ ६० ॥

नेत्रपद्मं शुक्लवर्णं द्विदलमक्षभूषितम् ।
तत्कर्णिकायां त्रिकोणं यद् बाणलिङ्गञ्च सङ्गतम् ॥ ६१ ॥

मनश्चात्र सदा भाति हाकिनीशक्तिलाञ्छितम् ।
बुद्धिप्रकृत्यहङ्कारलक्षितं तेजसा परम् ॥ ६२ ॥

जीवात्मानं कुण्डलिनीं मनश्चापि महेश्वरि ।
सहस्रारे महापद्मे मनश्चापि नियोजयेत् ॥ ६३ ॥

सहस्रारं नित्यपद्मं शुक्लवर्णमधोमुखम् ।
अकारादिक्षकारान्तैः स्फुरद्वर्णैर्विराजितम् ॥ ६४ ॥

तत्कर्णिकायां देवेशि अन्तरात्मा ततो गुरुः ।
सूर्यस्य मण्डलञ्चैव चन्द्रमण्डलमेव च ॥ ६५ ॥

ततो वायुर्महानादो ब्रह्मरन्ध्रं ततः स्मृतम् ।
तस्मिन् रन्ध्रे विसर्गञ्च नित्यानन्दं निरञ्जनम् ॥ ६६ ॥

तदूर्ध्वे शंखिनी देवी सृष्टिस्थित्यन्तकारिणी ।
तस्याधःस्था च देवेशि चतुर्मण्डलमध्यगम् ॥ ६७ ॥

त्रिकोणं तत्र संश्चिन्त्य कैलासमत्र भावयेत् ।
इह स्थाने महादेवि स्थिरचित्तं विधाय च ॥ ६८ ॥

जीवजीवी गतव्याधिर्न पुनर्जन्मसंभवः ।
अत्र नित्योदिता वृद्धिक्षयहीना अमाकला ॥ ६९ ॥

तन्मध्ये कुटिला निर्वाणाख्या सप्तदशी कला ।
निर्वाणाख्यान्तर्गता वह्निरूपा निरोधिका ॥ ७० ॥

नादोऽव्यक्तस्तदुपरि कोट्यादित्यसमप्रभा ।
निर्वाणशक्तिः परमा सर्वेषां योनिरूपिणी ॥ ७१ ॥

अस्यां शक्तौ शिवं ज्ञेयं निर्विकारं निरञ्जनम् ।
अत्रैव कुण्डलीशक्ति र्मुद्राकारा सुरेश्वरि ॥ ७२ ॥

पुनस्तेन प्रकारेण गच्छन्त्याधारपङ्कजे ।
कथिता योनिमुद्रेयं मया ते परमेश्वरि ॥ ७३ ॥

विना येन न सिद्धेन निहरेत् परमात्मना ।
तद् दिव्यामृतधाराभिर्लाक्षाभाभिर्महेश्वरि ॥ ७४ ॥

तर्पयेद् देवतां योगी योगेनाऽनेन साधकः ।
कुण्डलीशक्तिसिद्धिः स्याद् वर्णकोटिशतैरपि ॥ ७५ ॥

तस्मात् त्वयापि गिरिजे गोपनीयं प्रयत्नतः ।
मन्त्ररूपां कुण्डलिनीं ध्यात्वा षट्चक्रमण्डले ॥ ७६ ॥
कन्दमध्यात् सुमधुरं कूजन्तीं सततोत्थिताम् ।
गच्छन्तीं ब्रह्मरन्ध्रेण प्रविशन्तीं स्वकेतनम् ॥ ७७ ॥
मूलाधारे च तां देवीं संस्थाप्य वीरवन्दिते ।
चित्रिणीग्रथिता मालाजापं ब्रह्माण्डसुन्दरि ॥ ७८ ॥
रहस्यं परमं दिव्यं मन्त्रचैतन्यमीरितम् ।
मुद्राचैतन्ययोर्ज्ञानं वर्णानां ज्ञानमेव च ॥ ७९ ॥
मन्त्रार्थं कथितं देवि तव स्नेहात् प्रियंवदे ।
अस्य ज्ञानं विना भद्रे सिद्धिर्न स्यात् सुलोचने ।
इति ते कथितं देवि योनिक्रीडेदमुत्तमम् ॥ ८० ॥

श्रीईश्वरी उवाच

सुरासुरजगद्वन्द्य पार्वतीभगसेवक ।
इदानीं श्रोतुमिच्छामि योनेः कवचमुत्तमम् ॥ ८१ ॥

श्री ईश्वर उवाच

यद् धृत्वा पठनात् सर्वाः शक्तयो वरदाः प्रिये ।
एतस्य कवचस्यापि ऋषिश्च श्रीसदाशिवः ॥ ८२ ॥

छन्दो गायत्री देवता योनिरूपा सनातनी ।
चतुर्वर्गेषु देवेशि विनियोगः प्रकीर्तितः ॥ ८३ ॥

ॐ मम् माम् मिम् मीम् मुम् मूम् मेम् मैम् मोम् मौम् मं मः ।
( दक्षपादम् ) मम शिरो रक्षन्तु स्वाहा ।

ॐ मम् माम् मिम् मीम् मुम् मूम् मेम् मैम् मोम् मौम् मं मः
ॐ माम् ॐ आकुटाम् मम रक्षन्तु स्वाहा मम् माम् ।
ॐ मम् माम् मिम् मीम् मुम् मूम् मेम् मैम् मोम् मौम्
मं मः मम हृदयादिदक्षबाहुं रक्षन्तु ।

ॐ मं मां मिं मीं मुम् मूम् मेम् मैम् मोम् मौम् मं मः
ॐ मम् माम् मिम् मीम् मुम् मूम् मेम् मैम् मोम् मौम् मं मः
मम हृदयादिवामबाहुं रक्षन्तु मम । ॐ मम् माम् मिम्
मीम् मुम् मूम् मेम् मैम् मोम् मौम् मं मः दक्षपादं रक्षन्तु
मम । वामपादं रक्षन्तु मम सदा स्वाहा स्वाहा स्वाहा ।

ॐ मम् माम् मिम् मीम् मुम् मूम् मेम् मैम् मोम् मौम् मं मः
मम हृदादिषु नासां रक्षन्तु स्वाहा । ॐ मम् माम् मिम्
मीम् मुम् मूम् मेम् मैम् मोम् मौम् मं मः उपस्थं रक्षन्तु मम
सदा स्वाहा । ॐ मम् माम् मिम् मीम् मुम् मूम् मेम् मैम्
मोम् मौम् मं मः ॥

इदं हि योनिकवचं रहस्यं परमाद्भुतम् ।
अज्ञात्वा यो जपेन्मन्त्रं सर्वं निष्फलतां व्रजेत् ॥ ८४ ॥

रहस्यं परमं दिव्यं सावधानाऽवधारय ।
मूलाधारे महेशानि जपेद् यन्त्रं वरानने ॥ ८५ ॥

मूलाधारे महेशानि वरारोहेऽन्तरात्मनि ।
प्रतिचक्रे महेशानि पठेद् योनिं सनातनीम् ॥ ८६ ॥

चन्द्रसूर्योपरागे च पठेद् वा कवचं प्रिये ।
स्वनारीं रमयेद् यन्त्रे परनारीमथापि वा ॥ ८७ ॥

कवचस्य प्रसादेन योनिमुद्रा हि सिद्धयति ।
इदं हि कवचं देवि पठित्वा कमलानने ॥ ८८ ॥

मैथुनं महदाख्यानं त्वया सह मया कृतम् ।
कवचस्य प्रसादेन जना यान्ति परां गतिम् ॥ ८९ ॥

भूर्जपत्रे समालिख्य स्वयंभूकुसुमेन तु ।
शुक्लेन कुसुमेनापि रोचनालक्तकेन च ॥ ९० ॥

स्वर्णस्थां गुटिकां कृत्वा धारयेद् यन्त्रमानवः ? ।
इह लोके परत्रे च स एव श्रीसदाशिवः ॥ ९१ ॥

अष्टोत्तरशतश्चास्य प्रपठेत् सिद्धि वाञ्छया ।
किमत्र बहुनोक्तेन अस्मात् परतरो नहि ।
नमो योन्यै नमो योन्यै कुण्डलिन्यै नमो नमः ॥ ९२ ॥

इति दक्षिणाम्नाये सार्धलक्षग्रन्थे कङ्कालमालिनीतन्त्रे
योनिमुद्रादिकथनं द्वितीयः पटलः ॥ २ ॥

॥ १७ ॥

# सपल्लवयोगः

अथ योगः। तत्र देवलः

देवमनुष्ययोः द्विविधः पुरुषार्थोऽभ्युदयो निःश्रेयसमिति। तयोरभ्युदयः पूर्वोक्तः द्विविधः। निश्रेयसमिति सांख्ययोगौ। पञ्चविंशतितत्वज्ञानं सांख्यम्। विषयेभ्यो निवृत्याऽभिप्रेतेऽर्थे मनसोऽवस्थापनं योगः। उभयत्राऽपवर्गः फलम्।

विष्णुपुराणे

[1]आत्मप्रयत्नसापेक्षा विशिष्टा या मनोगतिः।
तस्या ब्रह्मणि संयोगो योग इत्यभिधीयते॥

दक्षः

वृत्तिहीनं मनः कृत्वा क्षेत्रज्ञं परमात्मनि।
एकीकृत्य विमुच्येत योगोऽयं मुख्य उच्यते॥

विष्णुपुराणे

तदेतत्कथितं राजन्नविद्याया मया तव।
क्लेशानां च क्षयकरं योगादन्यन्न विद्यते॥

1 ६, ७, ३१.

योगियाज्ञवल्क्यः

सर्वधर्मान् परित्यज्य योगधर्मं समाश्रयेत् ।
सर्वे धर्माः सदोषास्तु पुनरुत्पत्तिकारकाः ॥
[1]नेहाऽतिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥

'अतिक्रमः' अनारम्भः नाशोऽत्र नैष्फल्यम् ।

महाभारते

[2]यथा वाऽनिमिषाः स्थूला जालं भित्वा पुनर्जलम् ।
प्राप्नुवन्ति तथा योगात्तत्पदं वीतकल्मषाः ॥

'अनिमिषाः' मत्स्याः ।

तथैव वागुरां भित्वा बलवन्तो यथा मृगाः ।
प्राप्नुयुर्विमलं मार्गं विमुक्ताः सर्वबन्धनैः ॥
लोभजानि तथा राजन् बन्धनानि बलान्विताः ।
[3]भित्वा योगात् परं मार्गं गच्छन्ति विमलाः शिवम् ।

यथा च शकुनाः सूक्ष्माः प्राप्य जालमरिन्दमम् ।

तत्राऽशक्ता[4] निबध्यन्ते विमुच्यन्ते बलान्विताः ।
कर्मजैर्बन्धनैर्बद्धास्तद्वद्योगाः परन्तप ॥
अबलाश्चैव नश्यन्ति मुच्यन्ते च बलान्विताः ।
[5]अप्रमत्तो यथा धन्वी लक्ष्यं हन्ति समाहितः ॥

1 गीतायामपि दृश्यते—२, ४०.
2 शां—३०६, १२.
3 शा—३०६, १७.
4 'तत्र शक्ता' इति ना. and स; तत्र सक्ता इति मु. महाभारते.
5 शा—३०६, ३१.

युक्तः सम्यक् तथा योगी मोक्षं प्राप्नोत्यसंशयम् ।
[1]यथा कश्चिद्वनं घोरं बहुसर्पसरीसृपम् ॥
श्वभ्रवत्तोयहीनं च दुर्गमं बहुकण्टकम् ।
अभक्तमटवीप्रायं दावदग्धमहीरुहम् ॥
पन्थानं तस्कराकीर्णं क्षेमेणाऽतिपतेन्नरः ।
योगमार्गं समाश्रित्य यः कश्चिद्व्रजते द्विजः ॥
क्षेमेणोपरमं मार्गं बहुदोषो हि स स्मृतः ।

तथा

अपि वर्णावकृष्टस्तु नारी वाऽधर्मकांक्षिणी ।
तावप्येतेन मार्गेण गच्छेतां परमां गतिम् ॥

[2]तथा

नास्ति बुद्धिरयुक्तस्य न चाऽयुक्तस्य भावना ।
न चाऽभावयतः शान्तिरशान्तस्य कुतः सुखम् ॥

[3]तथा

तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि ततोऽधिकः ।
कर्मिभ्यश्चाऽधिको योगी तस्माद्योगी भवाऽर्जुन ॥
योगिनामपि सर्वेषां मद्गतेनाऽन्तरात्मना ।
श्रद्धावान् भजते यो मां स मे युक्ततमो मतः ॥

अथ योगाङ्गानि

तत्र महाभारते

यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टाङ्गानि योगस्य ।

1 शा—३०६, ५१–५३.
2 भगवद्गीता—२, ६६.
3 भगवद्गीता—६, ४६–४७.

मार्कण्डेयपुराणे

[1]प्रागेवाऽऽत्माऽऽत्मना ज्ञेयो योगिनां स हि दुर्जयः ।
कुर्वीत तज्जये यत्नं तस्योपायं शृणुष्व मे ॥
प्राणायामैर्दहेद्दोषान् धारणाभिश्च किल्बिषम् ।
प्रत्याहारेण संसर्गान् ध्यानेनाऽनीश्वरान् गुणान् ॥

'दोषान्' स्वेदवेपथुप्रभृतीन् । 'संसर्गान्' विषयसंबन्धान् । 'अनीश्वरान्' प्राकृतान् ।

देवलः

रागद्वेषमोहाः कषाया उच्यन्ते । तेषां यमनियमलक्षणेन तपसा पञ्चविधेन तत्त्वज्ञानेन चाऽपकर्षणम् । कषायपाचनम् ।

विष्णुपुराणे

[2]ब्रह्मचर्यमहिंसां च सत्यास्तेयापरिग्रहान् ।
सेवेत योगी निष्कामो योग्यतां सुमना नयन् ॥
स्वाध्यायशौचसन्तोषतपांसि नियतात्मवान् ।
कुर्वीत ब्रह्मणि तथा परस्मिन्प्रवणं मनः ॥
एते यमाः सनियमाः पञ्च पञ्च च कीर्तिताः ।
विशिष्टफलदाः काम्या निष्कामानां विमुक्तिदाः ॥
एकं तत्राऽऽसनादीनां समास्थाय गुणैः पुनः ।
[3]यमाख्यैर्नियमाख्यैश्च युञ्जीत नियतो यतिः ॥

1 ३९, ९–१०.
2 ६, ७, ३६.
3 समाख्यैः इति उद. मातृ.

## वायुपुराणे

[1]पद्ममूर्द्धासनं वाऽपि तथा स्वस्तिकमासनम् ।
आस्थाय योगी युञ्जीत कृत्वा तत्प्रवणं मनः ॥

## मार्कण्डेयपुराणे

[2]प्राणापाननिरोधश्च प्राणायाम उदाहृतः ।

## विष्णुपुराणे

[3]प्राणाख्यमनिलं वश्यमभ्यासात् कुरुते हि यः ।
प्राणायामः स विज्ञेयः सबीजोऽबीज एव च ।

'सबीजो' मन्त्राद्यालम्बनः ।

## बृहस्पतिः

[4]बद्ध्वाऽऽसनं नियम्याऽसून्स्मृत्वा चर्ष्यादिकं तथा ।
सन्निमीलितहङ्मौनी प्राणायामं समभ्यसेत् ॥
सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥
[5]आदानं बोधमुत्सर्गं वायोस्तिस्रः समभ्यसेत् ।
ब्रह्माणं केशवं शम्भुं ध्यायन् मुच्येत बन्धनात् ॥
रक्तं[6] पितामहं ध्यायेद्विष्णुं नीलोत्पलप्रभम् ।
श्वेतं त्र्यक्ष्यं हरं चैव संसारार्णवतारणम् ॥

1 ११–१३.
2 ३९, १२.
3 ३, ७, ४०.
4 आचारकाण्डम्—३१, ३२.
5 संस्कारकाण्डम्—५५९.
6 आचारकाण्डम्—३८ ; प्रजापतिमिति मु. पु. पाठः

अतीतानागतानर्थान् विप्रकृष्टांस्तिरोहितान् ।
विजानातीन्दुसूर्यर्क्षं ग्रहाणां ज्ञानसंपदम् ॥
तुल्यप्रभावस्तु यदा योगी प्राप्नोति संविदम् ।
तदा संविदिति ख्याता प्राणायामस्य सा स्थितिः ॥
यान्ति प्रसादं येनाऽस्य मनः पञ्च च धातवः ।
इन्द्रियाणीन्द्रियार्थाश्च स प्रसाद इति स्मृतः ॥

'पञ्चधातवः' पृथिव्यादि पञ्चभूतानि ।

तथा

[1]प्राणायामा दश द्वौ च धारणा साऽभिधीयते ।
द्वे धारणे स्मृतो योगो योगिभिस्तत्त्वदर्शिभिः ॥
तथा वै योगयुक्तस्य योगिनो नियतात्मनः ।
सर्वदोषाः प्रणश्यन्ति स्वस्थश्चैवोपजायते ॥
वीक्षते च परं ब्रह्म प्राकृतांस्तु गुणान् पृथक् ।
व्योमादिपरमाणुश्च तथाऽऽत्मानमकल्मषम् ॥
इत्थं योगी यताहारः प्राणायामपरायणः ।
जितां जितासनो भूमिमारोहेत यथा गृहम् ॥
दोषान्मोहं तथा व्याधिमाक्रान्ता भूरनिर्जिता ।
विवर्द्धयति नारोहेत्तस्माद्भूमिमनिर्मितम्[2] ॥
[3]उपायश्चाऽत्र कथितो योगिभिः परमर्षिभिः ।
येन व्याध्यादयो दोषा न जायन्ते हि योगिनः ॥
यथा तोयार्थिनस्तोयं पद्मनालादिभिः शनैः ।
आपिबेयुस्तथा योगी पिबेद्वायुं जितश्रमः ॥

1 ३९, ३५.
2 अनिर्जिताम्—स.
3 ३९, ४२–४६.

प्राङ्नाभ्यमुदरे चाऽथ तृतीया च तनोपरि[1] ।
कण्ठे मुखे नासिकाग्रे नेत्रभ्रूमध्यमूर्द्धसु ॥
किञ्चित् परस्यात्तस्मिंस्तु धारणा परमा स्मृता ।
दशैता धारणाः प्राप्य प्राप्नोत्यक्षरसाम्यताम् ॥
[2]प्राणानामुपसंरोधात् प्राणायाम उदाहृतः ।
धारणेत्युच्यते ज्ञेयं धार्यते यन्मनोऽनया ॥
शब्दादिभ्योऽनिवृत्तानि यदक्षाणि यतात्मभिः ।
प्रत्याह्रियन्ते योगेन प्रत्याहारस्ततस्स्मृतः ॥

'अनिवृत्तानि' स्वविषये संसक्तानि । 'योगेन चित्तवृत्तिनिरोधेन', 'योगश्चित्तवृत्तिनिरोध' इति पातञ्जलेऽभिधानात् ।

देवलः

अणुत्वाच्चापल्याल्लाघवाद्बलवत्वाद्वा योगभ्रष्टस्य मनसः पुनः प्रत्यानीयार्थे योजनं प्रत्याहारः ।

'अर्थो' त्राऽत्मा ।

विष्णुपुराणे

[3]शब्दादिष्वनुरक्तानि निगृह्याणीति योगवित् ।
कुर्याच्चित्तानुकारीणि प्रत्याहारपरायणः ॥
वश्यता परमा तेन जायतेति च नात्मनाम् ।
इन्द्रियाणामवश्यैस्तै र्न योगी योगसाधकः ॥

1 तथोरसि इति स.
2 ३९, ४०–४१.
3 ६, ७, ४३.

देवलः

शरीरेन्द्रियमनोबुध्यात्मनां धरणाद्धारणा ।

हारीतः

मनसो धारणं अन्तःशरीरे, हृदि, ललाटे, परंब्रह्मात्मज्योतिरादित्यमहीनभस्सु जलभाजनवन्मनसस्त्वेकधारणाद्धारणा ।

'अन्तर्देहे', हृदयादौ, बहिर्वापहृतपाप्मादि गुणक परब्रह्मादौ, यन्मनसो धारणं सा धारणा। 'जलभाजनवत्' इति, यद्भाजनगतं जलं तस्य भाजन एव स्थितिः। एव मेतेषु सत्सु, गतिर्मनसोऽवस्थितिरेकत्र देशविशेषे धारणाज्ञायत इति। 'एवं च देशवन्न चित्तस्य' यः साधारण उक्ता स्यात्। तथा च पातञ्जलसूत्रम्। "देशवन्न चित्तस्य धारणा" इति।

शङ्खः

मनस्संयमनं तज्ज्ञै र्धारणेति निगद्यते ॥

विष्णुपुराणे

[1]प्राणायामेन पवनैः प्रत्याहारेण चेन्द्रियैः ।
वशीकृतं ततः कुर्यात् स्थितं चेतः शुभाश्रये ॥

महाभारते

[2]सुस्थेयं क्षुरधारासु निशितासु महामते ।
धारणासु सुयोगस्य दुःस्थेयमकृतात्मभिः ॥

1 ६, ७, ४५.
2 शा—३०६, ५४.

विपन्ना धारणा यस्मान्नयन्ति न शुभां गतिम् ।
नेत्रहीनं यथा नारं पुरुषाणां तु वै नृप ॥
यस्तु तिष्ठति कौन्तेय धारणासु यथाविधि ।
मरणं जन्मदुःखं च सुखं च परिमुञ्चति ॥
योगकृत्येषु योगानां ध्यानमेव परं बलम् ।
तथाऽपि द्विविधं ध्यानमाहुर्वेदविदो जनाः ॥
एकाग्रभावं मनसः प्राणायामास्तथैव च ।
तद्रूपप्रत्ययायैकसन्ततिश्चान्यनिःस्पृहा ॥
तद्ध्यानं प्रथमैरङ्गैः षड्भिर्निष्पाद्यते नृप ।
तस्यैव कल्पनाहीनस्वरूपग्रहणं हि यत् ॥
मनसा ध्याननिरताद्यः समाधिः सोऽभिधीयते ।

अथाहारादिनियमः

तत्र मार्कण्डेयपुराणे

[1]भैक्षं यवागू तक्रं वा पयो यावकमेव वा ।
फलं मूलं विपक्वं वा कणपिण्याकसक्तवः ॥
इत्येते वै शुभाहारा योगिनां सिद्धिकारकाः ।

महाभारते

[2]कणानां भक्षणो युक्तः पिण्याकस्य च भक्षणे ।
स्नेहानां वर्जने युक्तो योगी बलमवाप्नुयात् ॥
भुञ्जानं यावकं भक्ष्यं दीर्घकालमरिन्दम ।
एकदाऽसौ विशुद्धात्मा योगी बलमवाप्नुयात् ॥

1 ४१, ११.
2 शा—३०६, ४३-४५.

पक्षान्मासान् ऋतून् स्थित्वा सञ्चरंश्च ग्रहांस्तथा ।
अपः पीत्वा पयोमिश्राः योगी बलमवाप्नुयात् ॥

वायुपुराणे

[1]योगिनां चैव सर्वेषां श्रेष्ठं चान्द्रायणं स्मृतम् ।
एकंद्वे त्रीणि चत्वारि शक्तितो वा समाचेरत् ॥

महाभारते

मोक्षधर्मेषु नियतो लब्धाहारो जितेन्द्रियः ।
प्राप्नोति ब्रह्मणःस्थानं यत्परं प्रकृतेर्ध्रुवम् ॥

तथा

सदुष्करं ब्रह्मचर्यमुपायं तत्र मे शृणु ।
संप्रवर्त्तमुदीर्णं च निगृह्णीयाद्विजोत्तमः ।
योषितां न कथा श्राव्या न निरीक्ष्या निरम्बराः ॥
कथञ्चिद्दर्शनादासां दुर्बलानाऽऽविशेद्रजः ।
रागोत्पत्तौ चरेत्कृच्छ्रमह्नस्त्रिः प्रविशेदपः ॥
मग्नः स्वप्ने[2] च मनसा त्रिर्जपेदघमर्षणम् ।
पाप्मानं त्रिर्दहत्येवं अन्तर्भूतरजोमयम् ॥

'दुर्बलान्' अजितेन्द्रियान् । 'स्वप्ने च' स्त्रीविषयानुरागोत्पत्तौ इत्यर्थः ।

मार्कण्डेयपुराणे

[3]शून्येष्वेवावकाशेषु वनेषु च गुहासु च ।
नित्ययुक्तः सदा योगी ध्यानं सम्यगुपाक्रमेत् ॥

1 १६, १६.
2 स्वल्पेन मनसा—ना. and स.
3 ४१, २१.

[1]सशब्देऽग्निजलाभ्याशे जीर्णे गोष्ठे चतुष्पथे ।
शुष्कपर्णचये नद्यां श्मशाने ससरीसृपे ॥
सभये कूपतीरे वा चैत्यवल्मीकसञ्चये ।
देशेष्वेतेषु तत्त्वज्ञो योगाभ्यासं विवर्जयेत् ॥

महाभारते

[2]विमुक्तः सर्वसङ्गेभ्यो लघ्वाहारो जितेन्द्रियः ।
सपूर्वापररात्रिषु धारयेन्मनसाऽऽत्मनि ॥
[3]मूत्रोत्सर्गे पुरीषे च भोजने च नराधिप ।
त्रिकालं नाऽभियुञ्जीत शेषं युञ्जीत तत्परः ॥

मार्कण्डेयपुराणे

[4]नाऽऽध्मातः क्षुधितः श्रान्तो न च व्याकुलचेतनः ।
युञ्जीत योगं राजेन्द्र योगी सिध्यर्थमाहतः ॥
नाऽतिशीते न चोष्णे वा द्वन्द्वे नाऽप्यनिलात्मके ।
कालेष्वेतेषु युञ्जीत न योगं ध्यानतत्परः ॥
[5]सत्त्वस्याऽनुपपत्तौ च देशे काले विवर्जिते ।
नाऽसतो दर्शनं योगे तस्मात्तं परिवर्जयेत् ॥
दोषानेताननाहत्य मूढत्वाद्यो युनक्ति वै ।
विघ्नाय तस्य ये दोषा जायन्ते तान्निबोध मे ॥
बाधिर्यं जडता लोपः स्मृतेर्मूकत्वमन्धता ।
ज्वरश्च जायते सद्यः तद्वदज्ञानयोगिनः ॥

1 ३९, ४८, ५०.
2 शा—३११, १३.
3 शा—३११, ९.
4 ३९, ४६–४७.
5 ३९, ५०–५३.

## अथ दोषचिकित्सा

तत्र वायुपुराणे

[1]तेषां चिकित्सां वक्ष्यामि दोषाणां च यथाक्रमम् ।
यथा शाम्यन्ति ते दोषाः प्राणायामसमुत्थिताः ॥
स्निग्धां यवागूमत्युष्णं भुक्त्वा तत्र तु धारयेत् ।
अनेन क्रमयोगेन वातगुल्मं प्रणश्यति ॥
तदावर्त्तप्रतीकारमिदं कुर्याच्चिकित्सितम् ।
सर्वगात्रप्रकंपेन समारब्धस्य योगिनः ॥
इमां चिकित्सां कुर्वीत यथा संपद्यते सुखम् ।
मनसा पर्वतं काये विष्टम्भीकृत्य धारयेत् ॥
उरोघाते [2]रसस्थाने कण्ठदेशे च धारयेत् ।
[3]वचोघाते तथा वाचि बाधिर्ये श्रोत्रयोस्तथा ॥

'समारब्धस्य' क्रान्तस्य । विष्टंभीकृत्य धारयेत् पर्वतं धारयेत् ।

मार्कण्डेयपुराणे

[4]अमानुषं सत्त्वमन्तर्योगिनं प्रविशेद्यदि ।
वाय्वग्निधारणादेनं देहसंस्थं विनिर्दहेत् ॥

'अमानुषं सत्त्वं' रक्षःपिशाचादि ।

वायुपुराणे

[5]कृष्णसर्पोपबाधे तु धारयेत् हृदयोदरे ।
महर्जनस्तपःसत्यं हृदि कृत्वा तु धारयेत् ॥

1 ११, ३९.
2 उरस्स्थानं, इति, मु. पाठः
3 त्वचोऽवघाते तां वाचि बाधिर्ये श्रोत्रयोस्तथा, इति, मु. पाठः
4 ३९, ६०.
5 ११, ५५.

विषस्य तु पलं पीत्वा विशल्यां धारयेत्ततः ।
सर्वतः सनगां पृथ्वीं कृत्वा मनसि धारयेत् ॥
हृदि कृत्वा समुद्रांश्च तथा सर्वाश्च देवताः ।
सहस्रेण घटानां तु युक्तः स्नायीत योगवित् ॥
उदके कण्ठमात्रे तु धारणां मूर्ध्नि धारयेत् ।
प्रतिस्रोतोपविष्टस्तु[1] धारयेत्सर्वगात्रकम् ॥
शीर्णार्कपर्णपुटकैः पिबेत् वल्मीकमृत्तिकाम् ।
चिकित्सितविधिर्ह्येष [2]क्रमशो योगिनां हितः ॥
व्याख्यातस्तु समासेन योगदृष्टेन हेतुना ।

अथ योगविधिः

[3]तत्र महाभारते

योगी युञ्जीत सततमात्मानं रहसि स्थितः ।
एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥
शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।
नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥
तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।
उपविश्याऽऽसने युञ्ज्याद्योगमात्मविशुद्धये ॥
समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।
संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चाऽनवलोकयन् ॥
प्रशान्तात्मा विगतभीः ब्रह्मचारिव्रते स्थितः ।
मनः संयम्य मच्चित्तो युक्त आसीत मत्परः ॥

1 विषाविष्टो for पविष्टस्तु in printed वायुपुराण.

2 विश्रुतो योगनिर्मितः इति, मु. पाठः

3 भगवद्गीता—६, १०–१४.

वायुपुराणे

[1]ओंकारं प्रथमं कृत्वा चन्द्रसूर्यौ नमस्य च ।
आसनं स्वस्तिकं कृत्वा पद्ममर्द्धासनं तथा ॥
समजानुरेकजानुर्वा उत्तानस्वस्तिकोऽपि वा ।
समो दृढासनो भूत्वा संहृत्य चरणावुभौ ॥
पार्ष्णिभ्यां वृषणौ च्छाद्य तथा प्रजननं ततः ।
इन्द्रियाणीन्द्रियार्थेभ्यो मनः पञ्च च मारुतान् ॥
निगृह्य समवायेन प्रत्याहारमुपक्रमेत् ।
यस्तु प्रत्याहरेत् कामान् कूर्मोऽङ्गानीव सर्वशः ॥
तथाऽत्मरतिरेकस्थः पश्यत्यात्मानमात्मना ।
पूरयित्वा समीरं तु सबाह्याभ्यन्तरः शुचिः ॥
आकण्ठनाभियोगेन प्रत्याहारमुपक्रमेत् ।

[2]याज्ञवल्क्यः

ऊरुस्थोत्तानचरणः सव्ये न्यस्येतरं करम् ।
उत्तानं किञ्चिदुन्नम्य[3] मुखं विष्टभ्य चोरसा ॥
निमीलिताक्षः सत्वस्थो दन्तैर्दन्तानसंस्पृशेत्[4] ।
तालुस्थाचलजिह्वश्च संवृतास्यः सुनिश्चलः ॥
सन्निरुद्धेन्द्रियग्रामो नातिनीचोच्छ्रितासनः ।
द्विगुणं त्रिगुणं वाऽपि प्राणायाममुपक्रमेत् ॥

'सत्त्वस्थः' कामक्रोधादिरहितः ।

1 ११, १३.
2 ३, १९८–२००.
3 उन्नम्य इति विज्ञानेश्वरपाठः, उन्नम्य इति अपरार्कपाठः
4 संस्पृशन् इति अपरार्कमिताक्षरापाठः

देवलः

देवतायतनं शून्यागारगिरिकन्दरनदीपुलिनगुहारण्यानामन्यतमे शुचौ निराबाधे विभक्ते समुपस्तीर्णमानसं कृत्वा, तस्मिन्लघ्वाहारो निरामयः, शुचिः शिरोग्रीवापाणिपादौ च समास्थाप्य, शरीरमृजुं समाधाय, शिश्नवृषणावपीडयन्, यत्किञ्चिदपाश्रित्य स्वस्तिकं भद्रकं मण्डलं वाऽधिष्ठाय, उदङ्मुखः, प्राङ्मुखो वा, दन्तैर्दन्तानसंस्पृश्य, अक्षिभ्यामव्यक्तमनुन्मील्य च, मुखनासिकाभ्यां ऐक्यावसन्नाग्रस्थितदृष्टिः, सर्वेन्द्रियाणि संहृत्योर्ध्वं प्राणानुदीर्य, मनसा तच्चिन्तनं ध्यानम् ।

[1]महाभारते

नाऽत्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः ।
न चाऽतिस्वप्नशीलस्य जाग्रतो नैव चाऽर्जुन ॥
युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥
तथाच देवमुपशान्तेन दान्तेनैकान्तशीलिना ।
आत्मारामेण वृद्धेन यो ह्यात्मा स नसंशयः ॥

दक्षः

कषायमोहविक्षेपलज्जाशङ्कादिचेतसः ।
व्यापारास्तु समाख्याताः तैर्हीनं वशमानयेत् ।
कुटुम्बैः पञ्चभिर्ग्रामषष्ठं तत्र महान्मनः ।
देवासुरमनुष्यैर्वा संजेतुं नैव शक्यते ॥

1 भगवद्गीता—६, १६, १७.

बलेन परराष्ट्राणि गृह्णन् शूरस्तु नोच्यते ।
[1]जितेन्द्रियेन्द्रियग्रामः स शूरः कथ्यते बुधैः ॥

## महाभारते

[2]श्रीभगवानुवाच ।

सङ्कल्पप्रभवान् कामान् त्यक्त्वा सर्वानशेषतः ।
मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ॥
शनैःशनैरुपरमेत् बुद्ध्या धृतिगृहीतया ।
आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत् ॥
यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥
युञ्जन्नेवं सदाऽऽत्मानं योगी विगतकल्मषः ।
सुखेन ब्रह्मनिर्वाणमत्यन्तं[3] सुखमश्नुते ॥
सर्वभूतस्थमात्मानं सर्वभूतानि चाऽऽत्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥
यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।
तस्याऽहं न प्रणश्यामि स च मे न प्रणश्यति ॥
सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।
सर्वथा वर्तमानोऽपि स योगी मयि वर्तते[4] ॥
आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ।
सुखं वा यदि वा दुःखं स योगी परमो मतः ॥

1 जितो येनेन्द्रियग्रामः स शूरः कथ्यते बुधैः—ना. and स.

2 भगवद्गीता—६, २४–२८–३५; श्रीभगवानुवाच appears only at the beginning of the chapter.

3 ब्रह्मसंस्पर्शम् इति ना. स. and श्री शङ्करभाष्यपाठश्च.

4 उदयपुरमातृकायां 'न स भूयोऽपि जायते' इति पाठः

अर्जुन उवाच ।

यो यो योगस्त्वया प्रोक्तः साम्येन मधुसूदन ।
एतस्याऽहं न पश्यामि चञ्चलत्वात् स्थितिं स्थिराम् ॥
चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम् ।
तस्याऽहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥

श्रीभगवानुवाच ।

असंशयं महाबाहो मनो दुर्निग्रहं चलम् ।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥
असंयतात्मना योगो दुष्प्राप इति मे मतिः ।
वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ॥

'न प्रणश्यामि' न तिरो भवामि। 'सर्वथा वर्तमानोऽपि' मयि वा बुद्धिविकारे वा प्रपञ्चे ब्रह्मबुद्ध्या। 'चेतसा वर्तमानो' मय्येवाऽसौ वर्त्तत इत्यर्थः ।

<u>तथा</u>

पिण्डीकृत्येन्द्रियग्राममासीनः काष्ठवन्मुनिः ।
शब्दं न विन्देच्छ्रोत्रेण स्पर्शं चाऽपि न वेदयेत् ॥
रूपं न चक्षुषा विन्द्याज्जिह्वया च रसांस्तथा ।
श्रेयांस्यपि च सर्वाणि जह्याद्योगेन योगवित् ॥
पञ्चवर्गप्रमाथीनि नेच्छेच्चैतानि वीर्यवान् ।
तमो मनसि संसृज्य पञ्चवर्गविचक्षणः ॥
समादध्यान्मनो भ्रान्तमिन्द्रियार्थैः सपञ्चभिः ।
निःसंसारि निरालम्बं पञ्चद्वारं चलाचलम् ॥
पूर्वध्यानपथे धीरः सदा दध्यान्मनोन्तरम् ।
इन्द्रियाणि मनश्चैव यदा पिण्डीकरोत्ययम् ॥

एवं ध्यानपथः पूर्णो मया समनुवर्णितः ।
तस्य तत्पूर्वसंरुद्धमात्मषष्ठमनोन्तरम् ।
स्फुरिष्यति समुद्भ्रान्तं विद्युदम्बुधरो यथा ॥
जलबिन्दुर्यथा लोकपर्णस्थः सर्वतश्चलः ।
एवमेवाऽस्य तच्चित्तं भवति ध्यानवर्त्मनि ॥
समाहितं क्षणं किञ्चित् ध्यानवर्त्मनि तिष्ठति ।
पुनर्वायुपथभ्रान्तं मनो भवति वायुवत् ॥
अनिर्वेदो गतक्लेशो गततन्द्री विमत्सरः ।
समादध्यात्पुनश्चेतो ध्यानेन ध्यानयोगवित् ॥
विचारश्च वितर्कश्च विवेकश्चोपजायते ।
मुनेः समादधानस्य प्रथमं ध्यानमात्मनः ॥
मनसा क्लिश्यमानस्तु स समाधानकाम्यया ।
न निर्वेदं मुनिर्गच्छेत्कुर्यादेवाऽऽत्मनो हितम् ॥
स्वयमेव मनश्चैकं पञ्चवर्गश्च भारत ।
पूर्वं ध्यानपथं प्राप्य नित्ययोगेन शाम्यति ॥
न तत्पुरुषकारेण न च दैवेन केनचित् ।
सुखमेष्यसि तत्तस्य यदेवं संयतात्मनः ॥
सुखेन तेन संयुक्तो वंस्यते ध्यानकर्मणि ।

'पिण्डीकृत्य' प्रत्याहृत्य ।

दक्षः

लोको वशीकृतो यैस्तु यैरात्मा च वशीकृतः ।
इन्द्रियार्थान् यतस्तेषां योगं वक्ष्याम्यशेषतः ॥
नाऽरण्यसेवनाद्योगो नाऽनेकग्रन्थचिन्तनात् ।
व्रतैर्यज्ञैस्तपोभिर्वा न योगः कस्यचिद्भवेत् ॥

न वै पद्मासनाद्योगो न नासाग्रनिरीक्षणात् ।
न वै शास्त्रातिरिक्तेन शौचेन भवति क्वचित् ॥
न मौनमन्त्रकुहकैरनेकैः कुसृतैस्तथा ।
लोकयात्राभियुक्तस्य न योगः कस्यचिद्भवेत् ॥
अभियोगात्तथाऽभ्यासात्तस्मिन्नेव विनिश्चयात् ।
पुनः पुनरनुद्वेगाद्योगः सिध्यति नाऽन्यथा ॥
आत्मचिन्ताविनोदेन शौचक्रीडनकेन च ।
सर्वसत्त्वसमत्वेन योगः सिध्यति नाऽन्यथा ।
यस्त्वात्ममिथुनो नित्यमात्मक्रीडस्तथैव च ॥
आत्मानन्दश्च सततमात्मन्येव समाहितः ॥
आत्मन्येव च सन्तुष्टः सन्तुष्टो नाऽन्यमानसः ।
आत्मन्येव च तृप्तस्य योगः सिध्यति नाऽन्यथा ॥
स्वप्नेऽपि योऽभियुक्तश्च जाग्रदेव विशेषतः ।
ईदृक्चेष्टः स्मृतः श्रेष्ठो वरिष्ठो ब्रह्मवादिनाम् ॥

[1]याज्ञवल्क्यः

अनन्यविषयं कृत्वा मनोबुद्धिस्मृतीन्द्रियम् ।
ध्येय आत्मा स्थितो योऽसौ हृदये दीपवत् प्रभुः ॥
यथाविधानेन पठन् सामगायत्र्यमव्ययम्[2] ।
सावधानस्तथाऽभ्यासात्[3] परमात्माऽधिगच्छति ॥
अपरान्तकमुल्लोप्यं मद्रकं प्रकरीं तथा ।
आवैणकं सरोबिन्दुमुत्तरं गीतकानि तु ॥
ऋग्गाथा पाणिका दक्षविहिता ब्रह्मगीतिका ॥

1 ३, १११–११६.
2 सामगायमविच्युतम् इति विज्ञानेश्वरपाठः;
सामगायत्यविस्वरम् इति अपरार्कपाठः (पृ. ९९०.)
3 तदभ्यासात् परं ब्रह्माधिगच्छति इति मिताक्षरापाठः

गेयमेतत्तदभ्यासकारणान्मोक्षसंज्ञकम् ।
वीणावादनतत्त्वज्ञः श्रुतिजातिविशारदः ॥
तालज्ञश्चाऽप्रयासेन मोक्षमार्गं नियच्छति ।
गीतज्ञो यदि गीतेन नाऽऽप्नोति परमं पदम् ।
रुद्रस्याऽनुचरो भूत्वा तेनैव सह मोदते ॥

'अपरान्तकमुल्लोप्यम्' अत्र प्रकर्यो रेणकानि स्वरबिन्दुसहितमुत्तरं चेति। एतानि प्रकरणाख्यानि सप्तगीतकानि ऋग्गाथाद्याः चतस्रो गीतिकाः। एतदपरान्तकादिगीतजातं परमात्मतया चिन्तितं मोक्ष साधनत्वान्मोक्षसंज्ञकं ज्ञातव्यम्। तदभ्यासस्यैकाग्रताप्रतिपादनद्वारेणौत्सुक्यापत्तिहेतुत्वात्। 'श्रूयत' इति। श्रुतिर्द्वाविंशतिधा। सा तु स्वरेषु। तथाहि षड्जमध्यमपञ्चमाः प्रत्येकं चतुःश्रुतयः। ऋषभधैवते प्रत्येकं त्रिश्रुती। गान्धारनिषादौ प्रत्येकं द्विश्रुती। जातयस्तु षड्जातयः शुद्धाः। सङ्करजास्त्वेकादश। एवमष्टादशविधाः। 'गीतज्ञो यदि' इति। गीतिज्ञो यदि कथञ्चिद्विघ्नतो योगस्थः सन्मुच्यते तदा रुद्रानुचरत्वं लभत इत्यर्थः।

॥ १८ ॥

# युक्तलक्षणम्

तत्र महाभारते

युक्तस्य तु महाराज लक्षणान्युपधारयेत् ।
निर्वाते तु यथा दीपो ज्वलेत्स्नेहसमन्वितः ॥
निश्चलोर्द्ध्वशिखस्तद्वद्युक्तमाहुर्मनीषिणः ।
पाषाण इव मेघोत्थैर्यथा बिन्दुभिराहतः ॥
नालं चालयितुं शक्यः तथा युक्तस्य लक्षणम् ।
शङ्खदुन्दुभिनिर्घोषैः विविधैर्गीतवादितैः ॥
क्रियमाणैर्न कम्पेच्च युक्तस्यैतन्निदर्शनम् ।
तैलपूर्णं यथा पात्रं कराभ्यां धारयन्नधः ॥
सोपानमारुहेद्भीतः तर्ज्यमाणोऽसिपाणिभिः ।
संयतात्मा भयात्तेषां न पात्राद्बिन्दुमुत्सृजेत् ॥
तथैवोत्तरमाणस्य एकाग्रमनसस्तथा ।
स्थिरत्वादिन्द्रियाणां च निश्चलत्वे तथैव च ॥
एवं युक्तस्य तु मुनेर्लक्षणान्युपधारयेत् ।
संयुक्तः पश्यति ब्रह्म यत्तत्परममव्ययम् ॥
महतस्तमसो मध्ये स्थितं ज्वलनसन्निभम् ।
एतेन केवलं याति त्यक्त्वा देहमसाक्षिकम् ॥
कालेन महता राजन् श्रुतिरेषा सनातनी ।

तथा

स्थिरीकृत्येन्द्रियग्रामं मनसा मिथिलेश्वर ।
मनो बुद्ध्या स्थिरं कृत्वा पाषाण इव निश्चलः ॥

स्थाणुवच्चाऽप्यकम्पः स्याद्गिरिवच्चाऽपि निश्चलः ।
बुद्ध्या विधिविधानज्ञास्तदा युक्तं प्रचक्षते ॥
न शृणोति नचाऽऽघ्राति न रस्यति न पश्यति ।
न च स्पर्शं विजानाति न सङ्कल्पयते मनः ॥
न चाऽभिमन्यते किञ्चिन्न बुद्ध्यति च काष्ठवत् ।
तदा प्रकृतिमापन्नं युक्तमाहुर्मनीषिणः ॥

तथा

[1]यदा विनियतं चित्तमात्मन्येवाऽवतिष्ठति ।
निस्स्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥
यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।
योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ॥
यत्रोपरमते चित्तं निरुद्धं योगसेवया ।
यत्र चैवाऽऽत्मनाऽऽत्मानं पश्यन्नात्मनि तुष्यति ॥
सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम् ।
वेत्ति यत्र न चैवाऽयं स्थितश्चलति तत्त्वतः ॥
यं लब्ध्वा चाऽपरं लाभं मन्यते नाऽधिकं ततः ।
यस्मिन् स्थितो न दुःखेन गुरुणाऽपि विचाल्यते ॥
तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम् ।
स निश्चयेन योक्तव्यो योगो निर्विघ्नचेतसा ॥

तथा

[2]ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः ।
युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः ॥

'कूटस्थो' निर्विकार इत्यर्थः ।

1 गीता—६, १८–२३.
2 गीता—६, ८.

॥ १९ ॥

# अथ ध्येयस्वरूपम्

[1]विष्णुः

ऊरुस्थोत्तानचरणः सव्ये करे करं इतरं न्यस्य तालुस्थाचलजिह्वो दन्तैर्दन्तान् संस्पृशन्, स्वं नासिकाग्रं पश्यन्, दिशश्चाऽनवलोकयन्, विगतभीः, प्रसन्नात्मा,[2] चतुर्विंशत्या तत्त्वैर्व्यतीतं चिन्तयेत् ॥ १ ॥ नित्यमतीन्द्रियमगुणम् । शब्दस्पर्शरूपरसगन्धातीतं, सर्वस्थमतिस्थूलम् ॥ २ ॥ सर्वगमतिसूक्ष्मम् ॥ ३ ॥ सर्वतः पाणिपादं, सर्वतोऽक्षिशिरोमुखं, सर्वतः सर्वेन्द्रियशक्तिम् ॥ ४ ॥ एवं ध्यायन् ॥ ५ ॥ ध्याननिरतस्य च संवत्सरेण योगाविर्भावो भवति ॥ ६ ॥ अथ निराकारे लक्षबन्धं कर्तुं न शक्नोति तदा पृथिव्यप्तेजोवाय्वाकाशमनोबुद्ध्यात्माऽव्यक्तपुरुषाणां पूर्वं पूर्वं ध्यात्वा तत्र लब्धलक्षः तत्तत् परित्यज्याऽपरमपरं ध्यायेत् ॥ ७ ॥ एवं पुरुषध्यानमारभेत ॥ ८ ॥ अत्राऽप्यसमर्थो हृदयपद्मस्याऽधोमुखस्य मध्ये दीपवत्पुरुषं ध्यायेत् ॥ ९ ॥ तत्राऽप्यसमर्थो

1 All three Mss. attribute what follows to the *Viṣṇupurāṇa*. The passage is from *Viṣṇusmṛti*, अ. ९७, १— . Even *Vīramitrodaya*, Mokṣaprakāśa, p. 359 refers to this passage as from the *Viṣṇupurāṇa*.

2 प्रशान्तात्मा इति मु. पु. (पृ. २००).

भगवन्तं वासुदेवं किरीटिनं कुण्डलिनं गदिनम् । श्रीवत्साङ्कं वनमालाविभूषितोरस्कं सौम्यरूपं चतुर्भुजं शङ्खचक्रगदापद्मधरं ध्यायेत् ॥ १० ॥ यद्यद्ध्यायेत् तदाप्नोति ध्यानगुह्यम् ॥ ११ ॥ तस्मात्सर्वमेव क्षरं त्यक्त्वाऽक्षरमेव ध्यायेत् ॥ १२ ॥ न च पुरुषं विना किञ्चिदपि अक्षरं अस्ति ॥ १३ ॥ तं प्राप्य मुक्तो भवति ॥ १४ ॥

पुरमाक्रम्य सकलं शेते यस्मान्महाप्रभुः ।
तस्मात्पुरुष इत्येवं प्रोच्यते तत्त्वचिन्तकैः ॥ १५ ॥
प्राग्रात्रापररात्रेषु योगी नित्यमतन्द्रितः ।
ध्यायेत्तु पुरुषं विष्णुं निर्गुणं पञ्चविंशकम् ॥ १६ ॥
सर्वतत्त्वात्मगरूयं च सर्वतत्त्वविवर्जितम् ।
[[1]सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।]
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥ १७ ॥
बहिरन्तश्च भूतानामचरं चरमेव च ।
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चाऽन्तिके च तत् ॥ १८ ॥
अविभक्तं च भूतेन विभक्तमिव च स्थितम् ।
भूतभव्यभवद्रूपं ग्रसिष्णु प्रभविष्णु च ॥ १९ ॥
ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् ॥ २० ॥
इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः ।
मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते[2] ॥ २१ ॥

1 [ ] Not found in printed विष्णुस्मृति.

2 All three manuscripts are unintelligible in parts. Text restored from printed *Viṣṇusmṛti*.

नरसिंहपुराणे

महेश्वर उवाच ।

[1]ज्ञातामृतं परं गुह्यं रहस्यमृषिसत्तम ।
वक्ष्यामि हृदि दुःखघ्नं सर्वबन्धभयापहम् ॥
तृणादि चतुरास्यान्तं भूतग्रामं चतुर्विधम् ।
चराचरं जगत्सर्वं सुषुप्तं यस्य मायया ॥
तस्य विष्णोः प्रसादेन यदि कश्चित्प्रबुध्यते ।
स निस्तरति संसारं देवानामपि दुस्तरम् ॥
भोगैश्वर्यमदोन्मत्तः तत्वज्ञानपराङ्मुखः ।
संसारे सुमहापङ्के जीर्णा गौरिव मज्जति ॥
यस्त्वात्मानं निबध्नाति कर्मभिः कोशकारवत् ।
तस्य मुक्तिं न पश्यामि जन्मकोटिशतैरपि ॥
तस्मान्नारद सर्वेशं देवानां देवमव्ययम् ।
आराधयेत्सदा सम्यग्ध्यायन् विष्णुं समाहितः ॥
यस्तं विश्वमनाद्यन्तमजं स्वात्मनि संस्थितम् ।
सर्वज्ञमचलं विष्णुं सदा ध्यायन् विमुच्यते ॥
स्वग्राह्यमक्षरं नित्यं निर्गुणं तमसःपरम् ।
सर्वदृक् शाश्वतं विष्णुं सदा ध्यायन् विमुच्यते ॥
निर्विकल्पं निराभासं निष्प्रपञ्चं निरामयम् ।
वासुदेवं सदा विष्णुं सदा ध्यायन् विमुच्यते ॥
निरञ्जनपरं शान्तमच्युतं भूतभावनम् ।
वेदगर्भं विभुं विष्णुं सदा ध्यायन् विमुच्यते ॥
सर्वभावविनिर्मुक्तमप्रमेयमलक्षणम् ।
निर्वाणमनघं विष्णुं सदा ध्यायन् विमुच्यते ॥

1 १७, ११–२८.

अमृतं परमानन्दं सर्वपापविवर्जितम् ।
ब्रह्म ज्ञेयं शिवं विष्णुं सदा ध्यायन् विमुच्यते ॥
योगेश्वरं पुराणाख्यं स्वशरीरगुहाशयम् ।
अमात्रमव्ययं विष्णुं सदा ध्यायन् विमुच्यते ॥
शुभाशुभविनिर्मुक्तमूर्मिषट्कपरं प्रभुम् ।
तं वेद्यममलं विष्णुं सदा ध्यायन् विमुच्यते ॥
सर्वद्वन्द्वविनिर्मुक्तं सर्वदुःखविवर्जितम् ।
अप्रतर्क्यं सदा विष्णुं सदा ध्यायन् विमुच्यते ॥
अनामगोत्रमद्वैतं चतुर्थं परमं पदम् ।
तं सर्वहृद्गतं विष्णुं सदा ध्यायन् विमुच्यते ॥
अरूपं सत्यसङ्कल्पं शुद्धमाकाशवत् परम् ।
एकाग्रमनसा विष्णुं सदा ध्यायन् विमुच्यते ॥
सर्वात्मकं स्वभावस्थमात्मचैतन्यरूपकम् ।
शुभ्रमेकाक्षरं विष्णुं सदा ध्यायन् विमुच्यते ॥
कालातीतं त्रिकालज्ञं विश्वेशं लोकसाक्षिणम् ।
सर्वस्मादुत्तरं विष्णुं सदा ध्यायन् विमुच्यते ।
[1]विष्णौ प्रतिष्ठितं विश्वं विष्णुर्विश्वे प्रतिष्ठितः ॥
विश्वेश्वरमजं विष्णुं सदा ध्यायन् विमुच्यते ।

तथा

[2]ध्येयः सदा सवितृमण्डलमध्यवर्त्ती
नारायणः सरसिजासनसन्निविष्टः ।
केयूरवान् मकरकुण्डलवान् किरीटी
हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥

1 १७, ३२.
2 २६, १७.

<u>शङ्खः</u>

हृत्स्थस्य ध्यानयोगेन देवदेवस्य दर्शनम् ।
ध्यानं प्रोक्तं प्रवक्ष्यामि ध्यानयोगमतः शुभम् ॥
हृदिस्था देवतास्सर्वा हृदि प्राणः प्रतिष्ठितः ।
हृदि ज्योतींषि सूर्यश्च हृदि सर्वं प्रतिष्ठितम् ॥
स्वदेहमरणिं कृत्वा प्रणवं तूत्तरारणिम् ।
ध्याननिर्मन्थनाभ्यासाद्विष्णुं पश्येद्धृदि स्थितम् ॥
रविमध्ये स्थितः सोमः सोममध्ये हुताशनः ।
तेजोमध्ये स्थितं सत्वं सत्वमध्ये स्थितोऽच्युतः ॥
[1]अणोरणीयान्महतो महीयान्
आत्मा गुहायां निहितोऽस्य जन्तोः ।
तेजोमयं पश्यति वीतशोको
धातृप्रसादान्महिमानमीशम् ॥
एष देवस्तु मर्त्यानां पटैरिव विधीयते ।
अज्ञानपटसंवीतैरिन्द्रियैर्विषयैः श्रुतिः ॥
एष वै पुरुषो विष्णुर्व्यक्ताव्यक्तः सनातनः ।
एष धाता विधाता च प्रधानं निष्कलः शिवः ।
[2]वेदाऽहमेतं पुरुषं महान्त-
मादित्यवर्णं तमसः परस्तात् ।
तं वै विदित्वा न बिभेति मृत्यो-
र्नाऽन्यः पन्था विद्यतेऽयनाय ॥

1 तैत्तिरीयारण्यकम्—२, ४, १०, १०, १.
महानारायणोपनिषत्—८, ३.
कठोपनिषत्—२, २०; श्वेताश्वेतरोपनिषत्, ३, २०.
2 तैत्तिरीयारण्यकम्—३, १२, ७; १३, १.
श्वेताश्वतरोपनिषत्—३, ८; वाजसनेयिसंहिता (वेबरं) ३१, १८.

ब्रह्माण्डपुराणे

[1]यस्माद्वाचो निवर्तन्ते अप्राप्य मनसा सह ।
अव्यक्तं तत्परोक्षत्वाद्गहनं तु दुरासदम् ॥
भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चाऽस्य कर्माणि दृष्टे तस्मिन् परावरे ॥

[2]याज्ञवल्क्यः

ततो ध्येयः स्थितो योऽसौ हृदये दीपवत् प्रभुः ।
धारयेत्तत्र चाऽऽत्मानं धारणा धारयन् बुधः ॥

[3]तथा

द्वासप्ततिसहस्राणि हृदयादभिनिःसृताः ।
हिताहिता नाम नाड्यस्तासां मध्ये शशिप्रभम् ॥
मण्डलं तस्य मध्यस्थ आत्मा दीप इवाऽचलः ।
स ज्ञेयस्तं विदित्वेह पुनराजायते न तु ॥

नरसिंहपुराणे

[4]योगाभ्यासरतस्येह नश्यन्ते पातकानि च ।
तस्माद्योगपरो भूत्वा ध्यायेन्नित्यक्रियान्तरे ॥
प्राणायामेन पवनं प्रत्याहारेण चेन्द्रियम् ।
धारणाभिर्वशीकृत्य पूर्वं दुर्धर्षणं मनः ॥
एकं कारणमानन्दं बोधरूपमनामयम् ।
सूक्ष्मात्सूक्ष्मतरं ध्यायेत् जगदाधारमच्युतम् ॥

1 'यतो वाचो निवर्तन्त' इति तैत्तिरीयोपनिषदि—२, ४, १; ९, १; ४, ४, ११.
2 ३, २०१.
3 ३, १०८–१०९.
4 ६१, ३–१३.

आत्मानमरविन्दस्थं तप्तचामीकरप्रभम् ।
रहस्येकान्त आसीनो [1]ध्यायेदभिरणादणुम् ॥
यः सर्वप्राणचित्तज्ञो यः सर्वेषां हृदि स्थितः ।
यश्च [2]सर्वावरज्ञेयः सोऽहमस्मीति चिन्तयेत् ।
आत्मलाभसुखं यावत् तावद्ध्यानमुदाहृतम् ॥
श्रुतिस्मृत्युदितं कर्म तदूर्ध्वं तु समाचरेत् ।
यथाश्वरथहीनस्तु रथश्चाऽऽश्वैर्विना यथा ॥
एवं तपोऽप्यविद्यस्य विद्या[3] वाऽप्यतपस्विनः ।
[4]यथाऽन्नं मधुसंयुक्तं मधु वाऽन्नेन संयुतम् ॥
एवं तपश्च विद्या च संयुक्तं भेषजं महत् ।
उभाभ्यामेव पक्षाभ्यां यथा खे पततां गतिः ।
तथैव ज्ञानकर्मभ्यां प्राप्यते ब्रह्म शाश्वतम् ॥
विद्यातपोभ्यां संपन्नो ब्राह्मणो योगतत्परः ।
देहद्वयं[5] विहायाऽऽशु मुक्तो भवति बन्धनात् ।
न देवयानमार्गेण यावत्प्राप्तं परं पदम् ॥
न [6]तावल्लिङ्गदेहस्य विनाशो विद्यते क्वचित् ।

'नित्यक्रियान्तरे' नित्यानां कर्मणामन्तराले, नित्यकर्मकाल एवेत्यर्थः । '[7]आरणै'रुपनिषद्भिः ।

1 ध्यायेदात्महृदि स्थितम्—इति मु. पाठः
2 सर्वानवज्ञेयः—ना ; सर्वावरज्ञेयः—स ; सर्वारणिर्ज्ञेयः—मु. पाठः
3 एवं तपश्चविद्या च उभावपितपस्विनः—इति मुद्रितपाठः
4 यथाऽऽज्यं मधुसंयुक्तं मधुचाऽऽज्येन संयुतम्—ना.
5 द्वन्द्वं—इति मु. पाठः
6 न तावद्देहलिङ्गस्य इति मु. पाठः
7 नेदं पदं वचनेषु दृश्यते.

<u>तथा</u>

[1]उत्पन्नवैराग्यबलेन योगी
ध्यायन् परब्रह्म सदा क्रियावान्।
सत्यात्मकं चित्सुखरूपमाद्यं
विहाय देहं पदमेति विष्णोः॥

<u>योगियाज्ञवल्क्यः</u>

[2]ॐतत्सदिति निर्देशो ब्रह्मणस्त्रिविधस्मृतः।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा॥
तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः।
प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम्॥

तस्य च मात्रास्तिस्रो व्यक्ताऽव्यक्ता तथाऽपरा सूक्ष्मा।

अध्यात्मामधिभूतामधिदेवीं तां विजानीयात्।

ॐकारप्रणवस्तारः अक्षरः प्रणवः परः।
उद्गीथश्च तथाऽऽदित्यो हंसो नारायणो विभुः॥
पर्यायैश्च तथाऽन्यैश्च शास्त्रेभ्यः संप्रतीयते।
ॐकारसंज्ञं त्रिविधं त्र्यक्षरं च त्रिदैवतम्॥
त्रिब्रह्म च त्र्यवस्थानं त्रिकालं त्रिप्रतिष्ठितम्।
सत्वं रजस्तमश्चेति गुणास्तैस्त्रिगुणाः स्मृताः॥
अकारश्चाऽप्युकारश्च मकारश्चाऽक्षरं त्रयम्।
ब्रह्मा विष्णुश्च रुद्रश्च त्रिदैवत्य उदाहृतः॥
अग्निवायुरविभ्यश्च त्रिमात्र इति संज्ञितः।
ऋग्यजुश्च तथा साम त्रिब्रह्म इति कीर्तितः॥

1 नरसिंहपुराण—६१, २२.
2 गीता—१७, २३-२४.

भूर्भुवःस्वस्त्र्यवस्थानं हृत्कण्ठतालुकास्तथा ।
तुर्ये प्राणे तथाऽऽदित्ये त्रिषु चैव प्रतिष्ठितः ॥
भूतं भव्यं भविष्यच्च त्रिकालस्तेन चोच्यते ।
अन्तःप्रज्ञो बहिःप्रज्ञो घनप्रज्ञ उदाहृतः ॥
गार्हपत्यो दक्षिणाग्निराहवनीयः त्रिधात्मकः ।
शान्तो घोरस्तथा मूढस्त्रिरवस्थ इति स्मृतः ॥
स्त्रीपुंनपुसकं चैव तत् त्रिलिङ्गमिति स्मृतम् ।
त्रिप्रकारं विदित्वा तु ॐकारं मुच्यते द्विजः ॥
एकैकाऽत्र भवेन्मात्रा बहुधा सा[1] तु वै पुनः ।
तासां सर्वं वाङ्मयं तु ओतं प्रोतं व्यवस्थितम् ॥
प्रथमा तस्याऽकारेण वाक् सत्वं भू हुताशनः ।

विष्णुः

स्थूला जाग्रद्वृत्तिर्विज्ञेया योगतत्वज्ञैः ॥
ब्रह्माऽन्तरिक्षसंज्ञो मनोरजः सोमसंज्ञित उकारः ।
मात्रा स्वप्नविकल्पा सृष्टिः संज्ञा द्वितीया स्यात् ॥
रौद्री मकारसंज्ञा प्राणाख्या तामसी तृतीया स्यात् ।
संहरति जगत् कृत्स्नं सा सौषुप्ताख्या महानिद्रा ।
आद्या परा तु सूक्ष्माशां तार्यावयवालक्ष्म्याः (?) ।
सौम्या मकारसंज्ञा विज्ञाता काश्च संबन्धा (?) ।
अ उ म इति तिस्रो मात्रा मकारश्चाऽर्द्धमात्रिकः ।
तिस्रो मात्रा लयं यान्ति अर्धमात्रे न संशयः ।
अर्द्धमात्रा त्वमात्रे सा लयं याति निरामये ।
अकारे पीड्यमाने तु उकारं प्रतिपद्यते ।
उकारे पीड्यमाने तु मकारं प्रतिपद्यते ।

1 मानुषैः पुनः—ना.

मकारे पीड्यमाने तु अर्धमात्रा तदा भवेत् ।
जिह्वायां पीड्यमानायां निरालम्बस्तदा भवेत् ।
एकमात्रं द्विमात्रं वा त्रिमात्रं कृत्स्नमेव च ।
ह्रस्वं दीर्घं प्लुतं शान्तं शान्तेन मनसोद्भवेत् ।
समाहितमना भूत्वा तत्वध्यानपरायणः ।
ॐकारं यस्त्वभिध्यायेदाध्यात्मिक इति स्मृतः ।
यथा वै शंकुना पर्णाः संपूर्णा एव सर्वशः ।
एवं सर्वास्तु वै वाचः [1]संतृण्णाः प्रणवेन तु ।
क्लेशकर्मविपाकैस्तु वासनाभिस्तथैव च ।
अपरामृष्टमेवाह पुरुषं हीश्वरं श्रुतिः ।
वाच्यस्तस्येश्वरः प्रोक्तो वाचकः प्रणवः स्मृतः ।
वाचकेन तु विज्ञातो वाच्य एव प्रसीदति ।
तदर्थं प्रणवो जप्यो ध्यातव्यः सततं बुधैः ।
ईश्वरः पुरुषस्तेनोपासितः संप्रसीदति ।
यथा हि गौर्वत्सरुतं निशम्य
हुंकृत्य वत्साभिमुखी प्रयाति ।
ब्रह्माऽपि तद्वत्प्रणवोपहूतं
वक्तारमागच्छति चाऽऽशु वक्त्रे ॥
[2]द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत् ।
शब्दब्रह्मणि निष्णातः परं ब्रह्माऽधिगच्छति ।
अन्तःशरीरप्रभवमुदानप्रेरितं च यत् ।
वागुच्चार्यं श्रोत्रवृत्ति शब्दवृत्तिस्तदुच्यते ।
शब्दब्रह्म परं ब्रह्म तस्मिन् क्षीणे यदक्षरम् ।
तदक्षरं सदा ध्यायेद्यदीच्छेद्योगमात्मनि ॥

1 संपूर्णाः—ना.

2 विष्णुपुराणे ६, ५, ६४.

अकारश्चाऽप्युकारश्च मकारो विष्णुरेव च ।
मात्रार्द्धत्रययोगाच्च प्रणवः पञ्चलक्षणः ।
[1]वेदादौ यः स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः ।
तस्य प्रकृतिलीनस्य यः परः स महेश्वरः ।
[2]यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ।
आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन ।
[3]प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ।
अप्रमत्तेन वेद्धव्यं शरवत् तन्मयो भवेत् ।
स्वदेहमधरां[4] कृत्वा प्राणमेवोत्तरारणिम् ।
ध्याननिर्मथनाभ्यासाद्देवं पश्येन्निगूढवत् ।
कश्चिदाराधनाकामो विष्णोर्भक्तिं करोति वै ।
तदाराधनसिद्ध्यर्थं प्रतिमां व्यञ्जिकां तथा ॥
धातुदार्वादिपाषाणैः कृत्वा भावं निवेशयेत् ।
भक्त्या श्रद्धादराभ्यां च तस्य विष्णुः प्रसीदति ॥
ओँकारेण तदा ह्यात्मोपासितः संप्रसीदति ।
[5]एतदालेवनं श्रेष्ठमेतदालेवनं परम् ।
एतदालम्बनं ज्ञात्वा ब्रह्मभूयाय कल्पते ॥
अदृष्टविग्रहो देवो भावग्राह्यो मनोमयः ।
तस्योंकारः परं नाम तेनाऽऽहूतः प्रसीदति ॥
तस्मादोमिति पूर्वं तु कृत्वा युञ्जीत तत्परः ।
जाग्रत्स्वप्नसुषुप्तानि पदान्येतानि तस्य तु ॥

1 महानारायणोपनिषत्—१०, ८.

2 तैत्तिरीयोपनिषत्—२, ४, १.

3 मुण्डकोपनिषत्—२, २, ४.

4 अरणिं कृत्वा इति श्वेताश्वतरोपनिषत्—१, १४.

5 कठोपनिषदि, २, १७:—"एतदालम्बनं श्रेष्ठमेतदालम्बनं परम् । एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते ॥"

बहिःप्रज्ञस्तथांऽतश्च घनप्रज्ञस्त्रिधा भवेत् ।
दक्षिणाक्षिमुखे विष्णोर्मनस्यन्तस्तु तेजसः ॥
आकाशे तु हृदि प्राज्ञस्त्रिधा देहे व्यवस्थितः ।
स्थूलं वैश्वानरो नित्यं तेजसोऽन्तःप्रवृत्तिभुक् ॥
आनन्दभुक् तथा प्राज्ञस्त्रिधा भोगं विजानता ।
स्थूलं तु सर्वतो विश्वं प्रविभक्तं तु तैजसम् ॥
आनन्दं च तथा प्राज्ञं त्रिधा तृप्तिं विजानत ।
त्रिषु धामसु यद्भोज्यं भोक्ता यश्च प्रकीर्तितः ॥
उभयं विन्दते यस्तु स भुञ्जानो न लिप्यते ।
यस्तु शब्दमयोङ्कार उच्चार्यः स्थूल एव सः ॥
अमात्रश्चाऽयमुच्चार्यः पर ॐकार उच्यते ।
तिस्रः सार्द्धास्तथा मात्राः स गृह्णाति यथाक्रमम् ॥
परब्रह्म तदेवाहुः स्वात्मानं ब्रह्मचिन्तकाः ।
यत्पूर्वं तु समुद्दिष्टमोकारेऽग्रे व्यवस्थितम् ॥
अक्षरैश्च पदैश्चैतदतीतं परमं पदम् ।
यत्प्राप्य न निवर्त्तन्ते ॐकारपरमाश्रिताः ॥
मनस्तत्र समाधाय शरीरं लिङ्गमात्रकम् ।
सङ्कल्पाध्यवसायं च अभिमानाख्यमेव च ॥
चेतनाधिष्ठितं सूक्ष्मं तथा सूक्ष्मैः सहैव तत् ।
ॐकारं पद्मनालेन हृद्युद्धृत्य नियोजयेत् ॥
परे व्योम्नि अनन्ताख्ये सर्वसङ्कल्पवर्जिते ।
तस्मिंस्तावन्निबोद्धव्यो मनश्चोंकार एव च ॥
निर्मलस्तां गतो यावदेष योग उदाहृतः ।
मनो युंज्यात्तथोंकारे ॐकारं प्रणवे तथा ॥
प्रणवं ब्रह्मणि स्थाप्य न किञ्चिदपि चिन्तयेत् ।

अप्राणो विमलः शुद्धो निश्शब्दो ब्रह्मसंज्ञितः ॥
तस्मादुत्पद्यते प्राणः पुनस्तत्रैव लीयते ।
प्रणवे नित्ययुक्तस्य न भयं विद्यते क्वचित् ॥

[1]मनुः

सर्वमात्मनि संपश्येत्सच्चाऽसच्च समाहितः ।
सर्वमात्मनि संपश्यन्नाऽधर्मे कुरुते मनः ॥
आत्मैव देवताः सर्वाः सर्वमात्मन्यवस्थितम् ।
आत्मा हि जनयत्येषां कर्मयोगं शरीरिणाम् ॥
खं संनिवेशयेत् खेषु चेष्टनस्पर्शनेऽनिलम् ।
पंक्तिदृष्ट्योः परं तेजः स्नेहे योगं च मूर्तिषु ॥
मनसीन्दुं दिशः श्रोत्रे पादे विष्णुं बले हरम् ।
वाच्यग्निं मित्रमुत्सर्गे प्रजने च प्रजापतिम् ॥
प्रशासितारमेतेषां अणीयांसमणोरपि ।
रुक्माभं स्वप्नधीगम्यं विद्यात्तं पुरुषोत्तमम्[2] ॥
एतमेके वदन्त्यग्निमनुमेके प्रजापतिम् ।
इन्द्रमेके परे प्राणमपरे ब्रह्म शाश्वतम् ॥
एष सर्वाणि भूतानि पञ्चभिर्व्याप्य मूर्तिभिः ।
जन्मवृद्धिक्षयैर्नित्यं संसारयति चक्रवत् ॥
एवं यः सर्वभूतेषु पश्यत्यात्मानमात्मना ।
स सर्वसमतामेत्य ब्रह्माऽभ्येति सनातनम् ॥

'कर्मफलसम्बन्धः' सर्वमात्मनि संपश्येदिति युक्तम्। तत्र विशेषमाह—'खं सन्निवेशयेत् खेष्विति' बाह्यमाकाशं शरीरगतनवच्छिद्राकाशेन सहैकत्वेन भावयेत्। एवं चेष्टा-

1 १२, ११८–१२५.
2 पुरुषं परमिति—मु. पु.

स्पर्शकारणभूतेन दैहिकेन वायुना सह बाह्यस्य वायोरैक्यम्। अशितपीतान्नपाकहेतुभूतकोष्ठचाक्षुषतेजोभ्यां सह प्रकृष्टतेजसः आदित्याख्यस्य ऐक्यं शारीराभिरद्भिः सह बाह्यानामपामैक्यम्। शारीरैश्च कठिनैर्भागैः पार्थिवैः सह बाह्यायाः पृथिव्या अप्यैक्यम्। मनसा सह चन्द्रस्य श्रोत्रेण सह दशदिशां पादेन्द्रियेण सह विष्णोः वीर्येण सह तस्यैक्यं भावयेत्। एवमाध्यात्मिकभूम्यादिभिः सहाऽऽधिभौतिकाधिदैविकानामैक्यं भावयित्वा तेषां प्रशासितारं ब्रह्मादिस्तम्बपर्यन्तानां व्यवस्थाकारिणां तथा च "तस्याक्षरस्य शासने गार्गी"त्यादि ब्राह्मणं परमाणोरपि सकाशात् सूक्ष्मतरममूर्तत्वात् सुवर्णवत् शुद्धरूपं उर्मिषट्करहितत्वात् सुषुप्तावस्थाविज्ञानोपमेयस्वरूपं परमात्मानं जानीयात्। यादृक् सुषुप्तावस्थायां प्रत्यस्तमितसुखदुःखविकल्पं क्षेत्रज्ञस्वरूपमेवं सर्वदा परमात्मनः। एनं परमात्मानमग्नित्वेनोपासते याज्ञिकाः।

अन्ये पुनः 'सर्वत एवाऽऽत्मानो व्युचरन्ती'ति स्रष्टृत्वश्रुतेः मन्वाख्यप्रजापतिरूपतयोपासते। अपरे पुनरैश्वर्ययोगादिन्द्ररूपतयोपासते। केचित् 'प्राणमुद्गीथमुपासीते'ति श्रुतेः प्राणात्मनैनमुपासते। अन्ये पुनः परमात्मतयेति 'एष परमात्मा सर्वान् प्राणिनः' पंचभिः पृथिव्यादिभिर्भूतैः शरीरांभकैः परिगृह्य स्वार्जितकर्मापेक्षयोत्पत्तिस्थितिविनाशैरसकृन्नियोजयतीत्यर्थः।

महाभारते

इन्द्रियग्राममखिलं मनस्यभिनिवेश्य च।
मनस्तथैवाऽहंकारे प्रतिव्याप्य नराधिप॥

अहङ्कारं तथा बुद्धौ बुद्धिं च प्रकृतावपि ।
एवं च परिसंख्याय ततो ध्यायेच्च केवलम् ॥
विरजसममलं नित्यमनन्तं शुद्धमव्रणम् ।
तस्थुषं परमं तत्वमभेद्यमजरामरम् ॥
शाश्वतं चाऽव्ययं चैव ईशानं ब्रह्म तत्परम् ।

विष्णुपुराणे

[1]आश्रयश्चेतसो ब्रह्म द्विधा तच्च स्वरूपतः ।
भूप मूर्तममूर्तं च परं चाऽपरमेव च ॥
[2]अक्षीणेषु समस्तेषु[3] विशेषज्ञानकर्मसु ।
विश्वमेतत्परं त्वन्यद्भेदभिन्नं दृशां नृप[4] ।
प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम् ।
वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसञ्ज्ञितम्[5] ।
तच्च विष्णोः परं रूपमरूपस्याऽऽद्यमक्षयम् ।
विश्वस्वरूपवैरूप्यलक्षणं परमात्मनः ।
न तद्योगयुजा शक्यं नृप चिन्तयितुं यतः ॥
ततः स्थूलं हरेरूपं चिन्तयेद्विश्वगोचरम् ।
हिरण्यगर्भो भगवान् वासवोऽथ प्रजापतिः ॥
मरुतो वसवो रुद्रा भास्करास्तारका ग्रहाः ।
गन्धर्वयक्षदैत्याद्याः सकला देवयोनयः ॥
मनुष्याः पशवः शैलाः समुद्रास्सरितो द्रुमाः ।

1 ६, ७, ४७.
2 ६, ७, ५२.
3 समस्तेषु—ना and स. ; मु—पाठश्च.
4 भेदभिन्नदृशां नृपः इति मु. पाठः
5 संज्ञितम्—ना—स. ; मु—पाठश्च.

[1]भूभृतान्यप्यशेषाणि भूतानां पञ्चहेतवः[2] ।
प्रधानादि विशेषान्तं चेतनाचेतनात्मकम् ॥
एकपादं द्विपादं च बहुपादमपादपम्[3] ।
मूर्त्तमेत्तत्त्वदो रूपं भावनात्रितयात्मकम् ॥
तच्च सर्वमिदं विश्वं जगदेतच्चराचरम् ।
परं ब्रह्म स्वरूपस्य विष्णोः शक्तिसमन्वितम् ॥
[4]एतान्यशेषरूपाणि कथितान्यस्य पार्थिव ।
यतस्तच्छक्तियोगेन युक्तानि नभसा यथा ॥
द्वितीयं विष्णुरूपस्य योगिध्येयं महामते ।
अमूर्तं ब्रह्मणो रूपं यत्सदित्युच्यते बुधैः ॥
समस्तविषयाश्चैते नृप यत्र प्रतिष्ठिताः ।
तद्विश्वरूपरूपं वै रूपमन्यद्धरेर्मतम्[5] ॥
समस्तशक्तिरूपाणि तत्करोति जनेश्वर ।
देवतिर्यङ्मनुष्याद्यैः चेष्टावन्ति स्वलीलया ॥
जगतामुपकाराय न सा कर्मनिमित्तजा ।
चेष्टा तस्याऽप्रमेयस्य [6]व्यापिन्यविहतात्मिका ॥
तद्रूपं विश्वरूपस्य तस्य योगजुषा नृप ।
चिन्त्यमात्मविशुद्ध्यर्थं सर्वकल्मषनाशनम् ॥
यथाऽग्निरुद्धतशिखः कक्षं दहति सानिलः ।
तथा चित्तस्थितो विष्णुः योगिनां सर्वकिल्बिषम् ॥

1 नृपभूतानि इति मु. पा.
2 ये च हेतवः इति मु. पा.
3 तथैव च for अपादपम्—ना and स. ; अपादकम्—इति मु. पा.
4 ६, ७, ६८.
5 महत् for मतम्—ना. and स. ; मु—पाठश्च.
6 व्यापिन्यव्याहतात्मिका इति मु. पाठः

तस्मात्समस्तशक्तीनामाकारे[1] तत्र चेतसः ।
कुर्वीत संस्थितिं सा तु विज्ञेया शुद्धधारणा ॥
शुभाश्रयस्य चित्तस्य सर्वगस्य तथाऽऽत्मनः ।
त्रिभावभावनातीतो मुक्तये योगिनां नृप ॥
अन्ये तु पुरुषव्याघ्र चेतसो ये व्यपाश्रयाः ।
अशुद्धास्ते समस्तास्तु देवाद्याः कर्मयोनयः ॥
मूर्ते भगवतो रूपे सर्वापाश्रयनिस्पृहे ।
एषा वै धारणा ज्ञेया यच्चित्तं यत्र धारयेत् ॥
तच्च मूर्तं हरेरूपं तद्विचिन्त्य नराधिप ।
तच्छ्रूयतामनाधारा धारणा तूपपद्यते[2] ॥
प्रसन्नचारुवदनं पद्मपत्रोपमेक्षणम् ।
सुकपोलं सुविस्तीर्णललाटं कनकोज्वलम् ॥
समकर्णान्तविन्यस्तचारुकुण्डलभूषणम् ।
कम्बुग्रीवं सुविस्तीर्णं श्रीवत्सांकितवक्षसम् ॥
वलीविभङ्गिनाभग्ननाभिना चोदरेण च ।
प्रलंबाष्टभुजं विष्णुमथवाऽपि चतुर्भुजम् ॥
समस्थितोरुजङ्घं च सुस्थिरांघ्रिकराम्बुजम् ।
चिन्तयेद्ब्रह्मरूपं तं पीतनिर्मलवाससम् ॥
किरीटचारुकेयूरकटकादिविभूषितम् ।
शार्ङ्गशङ्खगदाचक्रखड्गाक्षवलयान्वितम् ॥
चिन्तयेत्तन्मयो योगी समाधायाऽऽत्ममानसम् ।
तावद्यावद्दृढीभूता तत्रैव नृप धारणा ।
वदतस्तिष्ठतोऽन्यद्वा स्वेच्छया कर्म कुर्वतः ॥

1 आधारे—मु. पाठः

2 नोपपद्यते—ना and स. ; मु. पा.

नाऽपयाति यदा चित्तात् सिद्धां मन्येत तां तदा ।
ततः शङ्खगदाचक्रशार्ङ्गादिरहितं बुधः ॥
चिन्तयेद्भगवद्रूपं प्रशान्तं साक्षसूत्रकम् ।
सा यदा धारणा तद्वदवस्थानवती तदा ॥
किरीटकेयूरमुखैर्भूषणै रहितं स्मरेत् ।
तदेकावयवं देवं चेतसो हि पुनर्बुधः ॥
कुर्यात्ततोऽवयविनि प्रणिधानपरो भवेत् ।

तथा

मैत्रेय उवाच ।

[1]भूषणास्त्रस्वरूपस्थं यथैतदखिलं जगत् ।
बिभर्ति भगवान् विष्णुः तन्ममाऽऽख्यातुमर्हसि ॥

पराशर उवाच ।

नमस्कृत्याऽप्रमेयाय विष्णवे प्रभविष्णवे ।
कथयामि यथाख्यातं वसिष्ठेन ममाऽभवत् ॥
आत्मानमस्य जगतो निर्लेपमगुणामलम् ।
बिभर्त्ति कौस्तुभमणिस्वरूपं भगवान् हरिः ॥
श्रीवत्ससंस्थानधरमनन्ते च समाश्रितम् ।
प्रधानं बुद्धिरप्यास्ते गदारूपेण माधवे ॥
भूतादिमिन्द्रियादिं च द्विधाऽहङ्कारमीश्वरः ।
बिभर्ति शङ्खरूपेण शार्ङ्गरूपेण च स्थितम् ॥
बलस्वरूपमत्यन्तं जवेनाऽन्तरितानिलम् ।
चक्रस्वरूपं च मनो धत्ते विष्णोः करे स्थितम् ॥

1 Omission in Udaipur Ms; supplied by ना and स.; विष्णुपुराणे, १, २२, ६६–७८.

पञ्चरूपा तु या माला वैजयन्ती गदाभृतः ।
सा भूतहेतुसङ्घाता भूतमाला च वै द्विज[1] ॥
यानीन्द्रियाण्यनेकानि बुद्धिकर्मात्मिकानि वै ।
[2]शवरूपाण्यशेषाणि तानि धत्ते जनार्दनः ॥
बिभर्त्ति यच्चाऽसिवरमव्यक्तोऽत्यन्तनिर्मलम् ।
विद्यामयं तु तद्ज्ञानमविद्याकोशसंस्थितम् ॥
इत्थं पुमान् प्रधानं च बुध्यहङ्कारमेव च ।
भूतादीनि हृषीकेशे मनः सर्वेन्द्रियाणि च ॥
विद्याऽविद्ये च मैत्रेय सर्वमेतत् समाश्रितम् ।
अस्त्रभूषणसंस्थानस्वरूपं रूपवर्जितम् ॥
बिभर्त्ति मायारूपोऽसौ श्रेयसे प्राणिनां हरिः ।
सविकारं प्रधानं च यत्पुमांश्चाऽखिलं जगत् ॥
बिभर्त्ति पुण्डरीकाक्षस्तदेवं परमेश्वरः ।
[3]या विद्या या यथाऽविद्या यत्सत्यं चाऽसमव्ययम् ॥
तत्सर्वं सर्वभूतेश मैत्रेय मधुसूदने ।

दक्षः

बहिर्मुखानि सर्वाणि कृत्वा चाऽन्तर्मुखानि वै ।
मनसैवेन्द्रियग्रामं स्वात्मना विनियोजयेत् ॥
सर्वभावविनिर्मुक्तं क्षेत्रजं ब्रह्मणि न्यसेत् ।
एतद्ध्यानं च योगं च शेषोऽन्यो ग्रन्थविस्तरः ॥
चतुर्णां सन्निकर्षेण फलं यत्तदशाश्वतम् ।
द्वयोस्तु सन्निकर्षेण शाश्वतं ध्रुवमव्ययम् ॥

1 भूतमाला वै द्विज— ना. and स.
2 शेषरूपाणि—ना. ; शररूपाणि—मु. पाठः
3 या विद्यायातथा विद्या यत्सद्यच्चासदव्य—पम् इति मु. पाठः

यन्नाऽस्ति सर्वलोकस्य तदस्तीति विरुध्यते ।
कथ्यमानं तथाऽन्यस्य हृदये नाऽवतिष्ठते ॥
सुसंवेद्यं हि तद्ब्रह्म कुमारी स्त्री सुखं यथा ।
अयोगी नैव जानाति जात्यन्धो हि यथाघटम् ॥
नित्याभ्यसनशीलस्य सुसंवेद्यं हि तद्भवेत् ।
तत्सूक्ष्मत्वादनिर्देश्यं परं ब्रह्म सनातनम् ॥

'चतुर्णामिति' आत्ममनोविषयेन्द्रियाणामिति। 'द्वयोः' आत्ममनसोः ।

ब्रह्मपुराणे

गुणेन्द्रियशरीरैश्च भूततन्मात्रजातिभिः ।
सुखदुःखैरहं नित्यमपरामृष्ट एव हि ॥
चिद्रूपो विमलो व्यापी द्रष्टा श्रोता च सर्वशः ।
घ्राता स्पर्शयिता देही तथा रसयिताऽस्मि च ॥
नित्यं कर्ता न कर्त्ता च ग्रहीता देहवर्जितः ।
ऐश्वर्ययोगमेतन्मे स्थितोऽस्म्येकस्त्वनेकधा ॥
आकाशं यदिदं सर्वं व्याप्यमस्थाणुजङ्गमम् ।
आत्मैवाऽहं जगत्सर्वं निष्कलं सकलं हि यत् ॥
इति भावनया योगी यदा स्यात्सुदृढीकृतः ।
विमुक्तो देहगहनात्तदा स्यात् परमेश्वरः ॥
शुभेऽशुभे च संक्षीणे दग्धे जीवे च जन्मनाम् ।
प्रयाति परमात्मानं तद्विष्णोः[1] परमं पदम् ॥
मोक्षस्य नैव किञ्चित्स्यादन्यत्र गमनं क्वचित् ।
स्थानं वा धाम परमं यत्र गच्छन्ति योगिनः ॥

1 बीजे इति उदयपुरकोशपाठः

अज्ञानं बन्धभेदस्तु मोक्षो ब्रह्मलयस्त्विति ।
त्यक्त्वा सर्वविकल्पांस्तु आत्मस्थं निश्चलं मनः ॥
कृत्वा शान्तो भवेद्योगी दग्धेन्धन इवाऽनलः ।
अगाधबुद्धिं पृथिवीं विचरेद्गगनाकृतिः ॥
उपगम्य स्वमात्मानं नाशोत्पत्तिविवर्जितम् ।
यस्मिन्काले स्वमात्मानं योगी जानाति केवलम् ॥
तस्मात्कालात्समारभ्य जीवन्मुक्तोऽभिधीयते ।

[1]महाभारते

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥
ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥
सन्नियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥
[2]क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥
ये तु सर्वाणि कर्माणि मयि सन्यस्य मत्पराः ।
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥
तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।
भवामि न चिरात्पार्थ मय्यावेशितचेतसाम् ॥
मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।
निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः ॥

1 भगवद्गीता—१२, २-१२.

2 These three lines are missing in the Udaipur Ms. but are found in the other two Mss.

अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् ।
अभ्यासयोगेन ततो मामिच्छाऽऽप्तुं धनञ्जय ॥
अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव ।
मदर्थमपि कर्माणि कुर्वन् सिद्धिमवाप्स्यसि ॥
अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः ।
सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥
श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते ।
ध्यानात्कर्मफलत्यागस्त्यागाच्छान्तिर्निरन्तरम्[1] ॥

मार्कण्डेयपुराणे

सारभूतमुपासीत ज्ञानं यत्कर्मसाधनम्[2] ।
ज्ञानानां बहुता येऽयं योगविघ्नकरी हि सा ॥
इदं ज्ञेयमिदं ज्ञेयमिति यस्तृषितश्चरेत् ।
अपि कल्पसहस्रैस्तु[3] न स ज्ञेयमवाप्नुयात् ॥

महाभारते

यस्मिन्यस्मिंस्तु विषये यो यो याति विनिश्चयम् ।
स तमेवाऽभिजानाति नाऽन्यं भरतसत्तम ॥

1 अनन्तरमिति शङ्करभाष्यपाठः; स. पुस्तके च.
2 कार्यसाधकम्—ना. and स. ४१, १८–१९.
3 सहस्रेषु—ना and स.

॥ २० ॥

# अथ योगप्रवृत्तिचिह्नानि

तत्र मार्कण्डेयपुराणे

[1]अलौल्यमारोग्यमनिष्ठुरत्वम्
गन्धः शुभो मूत्रपुरीषमल्पम् ।
कान्तिः प्रसादः स्वरसौम्यता च
योगप्रवृत्तेः प्रथमं हि चिह्नम् ॥
अनुरागं जनो याति परोक्षे गुणकीर्तनम् ।
न बिभ्यति च सत्वानि सिद्धेर्लक्षणमुत्तमम् ॥
शीतोष्णादिभिरत्युग्रैर्यस्य बाधा न जायते ।
न भीतिमेति चाऽन्येभ्यस्तस्य सिद्धिरुपस्थिता ॥
प्रवृत्तिर्लक्षणाख्याता योगिनो विस्मयात्तथा ।
विज्ञानं विलयं याति तस्माद्गोप्याः प्रवृत्तयः ॥

वायुपुराणे

[2]आत्मानं पृथिवीं चैव ज्वलन्तीं यदि पश्यति ।
भूतान्याविशते चैव विन्द्यात् सिद्धिमुपस्थिताम्

1 ३९, ६३.
2 ११, ६४.

॥ २१ ॥

# अथ योगोपसर्गाः

तत्र देवलः

[1][नि ?]ष्ठाभिभवो निद्राबाधाभयानकोत्पत्तिर्ज्ञानपीडा। भोगातिशयः कोपनैपुण्यमैश्वर्यविशेषो धर्ममहत्वं विद्यास्थानानि यशोदीप्तिरिति योगिनां दशोपसर्गाः।

'ज्ञानपीडा' स्मृत्यादिभ्रंशः।

मार्कण्डेयपुराणे

[2]उपसर्गाः प्रवर्त्तन्ते दृष्टेऽप्यात्मनि योगिनः।
ये तांस्ते संप्रवक्ष्यामि समासेन निबोध मे॥
काम्याः क्रियास्तथा कामान्मानुषानभिवाञ्छति।
स्त्रियो दानफलं विद्या मायाः कुप्यं धनं दिनम्॥
देवत्वममरेशत्वं रसायनवयःक्रियाः।
मरुत्प्रपतनं यज्ञो जलाग्न्याविशनं तथा॥
श्रद्धानाशकदानानां फलानि नियमास्तथा।
तपोपवासपूर्वं च देवतेज्या धनानि च॥
तेभ्यस्तेभ्यश्च कर्मभ्य उपसृष्टोऽभिवाञ्छति।
चित्तमित्थं प्रवर्तन्ते येन योगी निवर्त्तयेत्॥

1 All Mss. read like this. निष्ठाभिभव is suggested.
2 ४०, १-२८.

ब्रह्मसङ्गि मनः कुर्वन्नुपसर्गात्प्रमुच्यते ।
उपसर्गैर्जितैरेभिरुपसर्गास्ततः पुनः ॥
योगिनः संप्रवर्तन्ते सात्त्वराजसतामसाः ।
प्रातिभः श्रावणो देवो भ्रमावर्तौ तथा परौ ॥
पञ्चैते योगिनो योगविघ्नाय कटुकोदयाः ।
वेदान्तशास्त्रकाव्यात्मविद्याः शिल्पान्यनेकशः ॥
प्रतिभान्ति यदस्येति प्रातिभः स तु योगिनः ।
शब्दार्थानखिलान्वेत्ति शब्दं गृह्णाति चैव यत् ॥
योजनानां सहस्रेभ्यः श्रावणः सोऽभिधीयते ।
अष्टौ यदा तु दृश्यन्ते समन्ताद्देवयोनयः ॥
उपसर्गं तमप्याहुर्दैवमुन्मत्तवद्बुधाः ।
भ्राम्यते यन्निरालम्बं मनो दोषेण योगिनः ॥
समस्ताधारविभ्रंशाद्भ्रमः स परिकीर्तितः ।
आवर्त इव तोयस्य ज्ञानावर्त्तो यदाऽऽकुलः ॥
चित्तनाशकृदावर्त्त उपसर्गः स उच्यते ।
एतैर्नाशितयोगास्तु सकला देवयोनयः ॥
उपसर्गैर्महाघोरैरावर्तन्ते पुनः पुनः ।
प्रवृत्यालम्बकं शुक्लं योगी तस्मान्मनोमयम् ॥
चिन्तयेत्परमं ब्रह्म कृत्वा तत्प्रवणं मनः ।
योगयुक्तः सदा योगी लघ्वाहारो जितेन्द्रियः ॥
सूक्ष्मास्तु धारणाः सप्त भूराद्या मूर्ध्नि धारयेत् ।
धरित्रीं धारयन् योगी तत्सौक्ष्म्यं प्रतिपद्यते ॥
आत्मानं मन्यते चोर्वीं तद्गन्धं च जहाति सः ।
तथैवाऽप्सु रसं सूक्ष्मं तद्वद्रूपं च तेजसि ॥
स्पर्शं वायौ तथा तद्वद्बिभ्रतस्तस्य धारणा ।

व्योम्नस्सूक्ष्मप्रवृत्तस्य शब्दं तत्र जहाति च ॥
मनसा सर्वभूतानां मन आविशते यदा ।
मानसीं धारणां बिभ्रन्मनः सौक्ष्म्यं जहाति च ॥
एतद्बुद्धिमशेषाणां सत्वानामेत्य योगवित् ।
परित्यजति संप्राप्य बुद्धिसौक्ष्म्यमनुत्तमम् ॥
परित्यजति सूक्ष्माणि सप्त त्वेतानि योगवित् ।
सम्यग्विज्ञाय यो तर्कं [तत्त्वं?] तस्यावृत्तिर्न विद्यते ॥
एतासां धारणानां तु सप्तानां सौक्ष्म्यमात्मवान् ।
दृष्ट्वा दृष्ट्वा ततः सिद्धिं त्यक्त्वा त्यक्त्वा परां भजेत्[1] ॥
यस्मिन् यस्मिंश्च कुरुते भूते रागं महीयते ।
तस्मिंस्तस्मिन् समासक्तिं सम्प्राप्य स विनश्यति ॥
तस्माद्विदित्वा सूक्ष्माणि संसक्तानि परं परम् ।
परित्यजति यो योगी स परं प्राप्नुयात्पदम् ॥
एतान्येव तु बन्धाय सप्त सूक्ष्माणि पार्थिव ।
भूतादीनां विरागोऽत्र सद्भावज्ञस्य मुक्तये ॥
गन्धादिषु समासक्तमित्येतदखिलं जगत् ।
पुनरावृत्तये भूप स ब्रह्म स न मानुषम्[2] ॥
सप्तैव धारणा योगी समतीत्य यदिच्छति ।
तस्मिंस्तस्मिन् लये सूक्ष्मे याति भूते नरेश्वर ॥
देवानामसुराणां च गन्धर्वोरगरक्षसाम् ।
देहेषु लयमायाति सङ्गं नाऽऽप्नोति च क्वचित् ॥

'मानुषाः कामाः' सत्वादयः । 'दारफलं' पुत्रादिकं । 'विद्या' आध्यात्मिकातिरिक्ताः । 'माया' इन्द्रजालादि ।

1 त्यजेत् इति—ना.

2 स ब्रह्ममनमानुषम्—ना. and स.

'कुप्यं' हेमरूप्यव्यतिरिक्तं कांस्यादि। 'मरुत्प्रपतनं' मरुद्गमनम्।

वायुपुराणे

[1]विदित्वा सप्त सूक्ष्माणि षडङ्गं च महेश्वरम्।
प्रधानं विनियोगज्ञः परं ब्रह्माऽधिगच्छति॥
सर्वज्ञता तृप्तिरनादिबोधः
स्वतन्त्रता नित्यमलुप्तशक्तिः।
अनन्तशक्तिं च विभुर्विभुज्ञाः
षडाहुरङ्गानि महेश्वरस्य॥
नित्यं ब्रह्मपरो युक्त उपसर्गैः प्रमुच्यते।

1 १२, ३२.

॥ २२ ॥

# अथ योगविभूतयः

तत्र देवलः

अणिमा महिमा लघिमा प्राप्तिः प्राकाम्यमीशित्वं वशित्वं यत्र कामावसायित्वं चाऽष्टावैश्वर्यगुणाः। तेषामणिमामहिमालघिमास्त्रयः शारीराः। प्राप्त्यादयः पञ्चैन्द्रियाः। तत्र स्वशरीरत्वमणिमा[1] अणुभावात् सूक्ष्माण्यप्याविशति। शरीरमहत्त्वं महिमा। महत्वात् सर्वशरीराण्यावृणोति। शरीराशुगामित्वं लघिमा। तेनाऽतिदूरस्थानपि क्षणेनाऽऽसादयति। विश्वविषयावाप्तिः प्राप्तिः। प्राप्त्या सर्वप्रत्यक्षदर्शी भवति। यथेष्टचारित्वं प्राकाम्यम्। प्राकाम्येन सर्वभोगवरानाप्नोति। अप्रतिहतैश्वर्यमीशित्वम्। ईशित्वेन दैवतान्यप्यतिशेते। आत्मवश्यता वशित्वम्। वशित्वेनाऽपरिमितायुर्वश्यजजन्मा च भवति। यत्र कामावसायित्वं त्रिविधम्—छायावेशः अवध्यानावेशः अङ्गप्रवेश इति। यत् परस्य छायाप्रवेशमात्रेण चित्तं वशीकरोति स छायावेशः। यद्दूरस्थानामपि अनुध्यानेन चित्ताधिष्ठानं, सोऽवध्यानावेशः। यत्सजीवस्योभिस्ते [?] जीवस्य वा शरीरानुप्रवेशनं

1 वी. मि. मोक्ष. पृ. ४४८. reads तत्राणुशरीरत्वमणिमा.

सोऽङ्गप्रवेशः। यत्र कामावसायित्वेन मूर्तद्रव्यं चाधितिष्ठतीति ऐश्वर्यावस्थानं तच्च प्रकृति-पुरुषोत्तरहेतोर्द्धर्मतेजोज्ञानविशेषात्। [1]सातिशयेन संभूतं चैश्वर्याद्भवतीति। एवमेतानैश्वर्यगुणानधिगम्योद्धूतकल्मषः छिन्नसंशयः प्रत्यक्षदर्शी धर्मपरावरज्ञः कूटस्थः सर्वमिदं असदनित्यमिति ज्ञात्वा स्वयमेव शान्तिमधिगच्छतीत्यैश्वर्याव्याप्तिः[2]।

[3]अल्पकश्च यथा राजन् वह्निः शाम्यति दुर्बलः।
आक्रान्त इन्धनैः स्थूलैस्तद्वद्योगो हि नु प्रभो[4] ॥
स एव च यथा राजन् बहिर्जातबलः पुमान्[5]।
समीरणयुतः कृत्स्नां दहेत् क्षिप्रं महीमिमाम् ॥
न त्वजातबलो योगी दीप्ततेजो महाबलः।
अन्तकाल इवाऽऽदित्यः कृत्स्नं संशोधयेज्जगत् ॥
दुर्बलश्च यथा राजन् स्रोतसा [6]ह्रियते नरः।
बलहीनस्तथा योगी विषयैः क्रियतेऽवशः ॥
तदेव च यथा स्रोतो विष्टम्भयति रावणः।
तद्वद्योगबलं लब्ध्वा व्यूहते विषयान् बहून्।

1 'सातिशयं न भूतं चैश्वर्यात्भवति'—ना. and स.
'सातिशयं नवभूतं चैश्वर्यात् भवति—वी. मि. मोक्ष., पृ. ४४९.

2 "तेषां इति—पूर्वपूर्वोक्तानां ऐश्वर्याणां शरीरेन्द्रियत्वेन विभाग उक्तः। तत्र 'अणुशरीरत्वं' इत्यारभ्य 'सोऽङ्गप्रवेश' इत्यन्तेन अष्टानामपि लक्षणान्युक्तानि। 'प्रकृतिपुरुषोत्तर हेतोरिति। ईश्वरत्वेन हि प्रकृतिपुरुषनियामकत्वं भवति। तेनैव हेतुना धर्मतेजोज्ञानविशेषाः उत्पद्यन्ते। तेनैव सातिशयो भवतीति समुदायार्थः ॥"—वी. मि. मोक्ष., पृ. ४४९.

3 शा—३०६, १९.

4 वी. मि. मोक्ष., पृ. ४५०, reads 'तद्वद्योगवल प्रभोः'।
ना. and स. read 'तद्वद्योगो न प्रभो'.

5 पुनः इति वी. मि. मो., ना. and स. पाठः

6 वी. मि. मो., पृ. ४५०, हीयते; ना. and स., क्रियते.

[[1]तथा]

विशन्ति परशल्यार्थं [2]योगायोगबलान्विताः ।
प्रजापतीनृषीन् देवान् महाभूतानि चेश्वराः ॥
न यमो नान्तकः क्रुद्धो न मृत्युर्भीमविक्रमः ।
ईशते नृपते सर्वे योगस्याऽमिततेजसः ॥
आत्मानं तु सहस्राणि बहूनि भरतर्षभ ।
योगं कुर्याद्बलं प्राप्य तैश्च सर्वैर्महीं चरेत्[3] ॥
प्राप्नुयाद्विषयान् कैश्चित् कैश्चिद्दुःखं तपश्चरेत् ।
संक्षिपेच्च पुनस्तानि सूर्यस्तेजोगणानिव[4] ॥

[5]याज्ञवल्क्यः

अन्तर्धानं स्मृतिः कान्तिः दृष्टिश्रोत्रज्ञता तथा ।
निजं शरीरमुत्सृज्य परकायप्रवेशनम् ॥
[6]अन्धानां छन्नतां (?) दृष्टिर्योगसिद्धेस्तु लक्षणम् ।
सिद्धे योगे त्यजन् देहममृतत्वाय कल्पते ॥

1 वी. मि. मोक्ष., पृ. ४४९.
2 *Ibid.*, परभोगार्थम्.
3 *Ibid.*, महीचरे.
4 *Ibid.*, गणानि च.
5 ३, २०२-२०३.
6 'अर्थानां छन्दतः सृष्टिः' इति मिताक्षरापाठः

॥ २३ ॥

# अथ स्थितप्रज्ञचरितम्

तत्र महाभारते

[1]अर्जुन उवाच ।

स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ।
स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥

श्रीभगवानुवाच ।

प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान् ।
आत्मन्येवाऽऽत्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥
दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।
वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥
यः सर्वत्राऽनभिस्नेहस्तत्तत् प्राप्य शुभाशुभम् ।
नाऽभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥
यदा संहरते चाऽयं कूर्मोऽङ्गानीव सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यः तस्य प्रज्ञा प्रतिष्ठिता ॥
[2]या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥

1 भगवद्गीता—२, ५४–५८.
2 भगवद्गीता—२, ६९–७२.

आपूर्यमाणमचलप्रतिष्ठं
समुद्रमापः प्रविशन्ति यद्वत्।
तद्वत्कामा यं प्रविशन्ति सर्वे
स शान्तिमाप्नोति न कामकामी ॥
विहाय कामान् यः सर्वान् पुमांश्चरति निस्पृहः।
निर्ममो निरहङ्कारः स शान्तिमधिगच्छति ॥
एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति।
स्थित्वाऽस्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति ॥

'या निशे'त्यादि निशेव निशा ब्रह्मतत्वं। तत्र हि सर्वभूतानां दर्शनाभावः। तस्यां जागर्ति तद्ब्रह्मस्वरूपमनुभवति। 'संयमी'योगध्यायीत्यर्थः। 'यस्यां जाग्रति' विषयासक्तिलक्षणायां निशायामुन्मीलिताक्षाणि भूतानि च यस्यां तस्यां तद्दर्शनवृत्तेर्निरोधादित्यर्थः। 'अचलप्रतिष्ठमिति'। अचला प्रतिष्ठा स्थितिर्यस्य तं अचलप्रतिष्ठम्। आपो यथा प्रविशन्ति विक्रियामनापादयन्त्यस्तथा योगिनः चित्तविक्रियामकुर्वन्तः कामविषया उपतिष्ठन्ते इत्यर्थः।

[1]तथा

प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव।
न द्वेष्टि संप्रवृत्तानि न निवृत्तानि कांक्षति ॥
उदासीनवदासीनो गुणैर्यो न विचाल्यते।
गुणा वर्तन्त इत्येवं योऽवतिष्ठति नेङ्गते ॥
समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः।
तुल्यप्रियाप्रियो धीरः तुल्यनिन्दार्थसंस्तुतिः ॥

1 भगवद्गीता—१४, २२–२६.

मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ।
सर्वारम्भपरित्यागी गुणातीतः स उच्यते ॥
मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥
ब्रह्मणो हि प्रतिष्ठाऽहममृतस्याऽव्ययस्य च ।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥

प्रकाशस्य धर्मो ज्ञानं । प्रवृत्ती रजसो धर्मः । मोहस्तु तमसो धर्मः । 'संप्रवृत्तानि' सुखनिमित्तानीति शेषः । 'निवृत्तानि' सुखदुःखनिमित्तानीति शेषः । 'नेङ्गते' न चलति ।

[1]तथा

यदा भूतपृथग्भावमेकस्थमनुपश्यति ।
तत एव च विस्तारं ब्रह्म संपद्यते तथा ॥

[तथा]

[2]विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥
इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः ।
निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः ॥
न प्रहृष्येत् प्रियं प्राप्य नोद्विजेत् प्राप्य चाऽप्रियम् ।
स्थिरबुद्धिरसम्मूढो ब्रह्मविद्ब्रह्मणि स्थितः ॥
बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत्सुखम् ।
स ब्रह्मयोगयुक्तात्मा सुखमक्षय्यमश्नुते ॥

1 भगवद्गीता—१३, ३०.
2 भगवद्गीता—५, १८-२५.

ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ।
आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥
शक्नोतीहैव यः सोढुं प्राक् शरीरविमोक्षणात् ।
कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः ॥
योऽन्तःसुखोऽन्तरारामः तथाऽन्तर्ज्योतिरेव यः ।
स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ॥
लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः ।
छिन्नद्वैधा यतात्मानः सर्वभूतहिते रताः ॥
कामक्रोधवियुक्तानां यतीनां यतचेतसाम् ।
अभितो ब्रह्मनिर्वाणं वर्त्तते विदितात्मनाम् ।

[तथा]

[1]सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु ।
साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥

[तथा[2]]

यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।
तस्याऽहं न प्रणश्यामि स च मे न प्रणश्यति ॥
सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।
सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥
आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ।
सुखं वा यदि वा दुःखं स योगी परमो मतः ॥

'यदा भूतपृथग्भावमि'ति भूतानां पृथग्भावमेकस्थं प्रलयावस्थायां परमकारणेऽनुपश्यति तत एव चैकस्मा-

1 भगवद्गीता—६, ९.
2 भगवद्गीता—६, ३०-३२.

त्परमात्मनो विस्तारं। "तस्माद्वा एतस्मादात्मन आकाशः संभूत[1]" इति सृष्टिप्रलयविद्ब्रह्म संपद्यते इत्यर्थः। 'पण्डिताः समदर्शिनः' ब्राह्मणादिषु ब्रह्माऽवस्थितं समदर्शिनो भवन्ति। सर्वभूतेष्वाकाशवद् ब्रह्मरूपमनुगतं पश्यन्तीत्यर्थः।

[2]तथा

बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः॥

'सर्वं वासुदेवमि'तिज्ञास्तेषामित्यर्थः।

[3]तथा

चरन्तं ब्राह्मणं कंचित् स्वल्पवित्तमनामयम्।
पप्रच्छ राजा प्रह्लादो बुद्धिमान् बुद्धिमत्तरम्[4]॥

[[5]प्रह्लाद उवाच।]

स्वस्थः शक्तो मृदुर्दान्तो निर्विधित्सोऽनसूयकः।
सुवाक् प्रगल्भो मेधावी [6]प्राज्ञश्चरसि बालवत्॥
नैव प्रार्थयसे लाभमानीते नाऽनुशोचसि[7]।
नित्यतृप्त इव ब्रह्मन् न किंचिदभिमन्यसे॥
स्रोतसा ह्रियमाणासु प्रजासु विमना इव।
धर्मकामार्थकार्येषु कूटस्थ इव शिष्यसे[8]॥

1 तैत्तिरीयोपनिषत्, आनन्दवल्ली—२, २.
2 भगवद्गीता—७, १९.
3 महाभारत, शान्तिपर्व—१७०, ३–१०.
4 प्राज्ञसत्तमः—मु. भा. (कुम्बकोणं)
5 Omitted in text.
6 बहुमतो लोके—मु. भा.
7 नाऽलाभेऽनुशोचसि—मु. भा.
8 लक्ष्यसे—ना., मु. भा.

नाऽनुतिष्ठसि धर्मार्थौ न कामं वाऽनुवर्त्तसे ।
इन्द्रियार्थाननादृत्य मुक्तश्चरसि साक्षिवत् ॥
का नु प्रज्ञा श्रुतं वाऽपि वृत्तिर्वा का नु ते मुने! ।
क्षिप्रमाचक्ष्व मे ब्रह्मन् श्रेयो यदिह मन्यसे ॥

[[1]भीष्म उवाच ।]

अनुयुक्तः स मेधावी लोकधर्मविधानवित् ।
उवाच श्लक्ष्णया वाचा प्रह्लादमनपार्थया ॥
पश्यन् प्रह्लाद भूतानामुत्पत्तिमनिमित्ततः ।
ह्रासं [2]वृद्धिं विनाशं च न प्रहृष्ये न च व्यथे ॥

[[3]तथा]

दिवि सञ्चरमाणानि ह्रस्वानि च महान्ति च ।
ज्योतींष्यपि यथाकालं पतमानानि लक्षये ॥
इति भूतानि संपश्यन् अनुषक्तानि मृत्युना ।
सर्वं सामान्यतो विद्वान् कृतकृत्यः सुखं स्वपे ॥
सुमहान्तमपि ग्रासं ग्रसे लब्धं यदृच्छया ।
शये पुनरभुञ्जानो दिवसानि बहून्यपि ॥
आशयन्त्यपि मामन्नं पुनर्बहुगुणं बहु ।
पुनरल्पं पुनस्तोकं पुनर्नैवोपपद्यते ॥
कणं कदाचित् खादामि पिण्याकमपि च ग्रसे ।
भक्षये शालिमांसानि भक्ष्यांश्चोच्चावचान् बहून् ॥
शये कदाचित् पर्यङ्के भूमावपि पुनः शये ।
प्रासादे वाऽपि शय्या मे कदाचिदुपपद्यते ॥

1 Omitted in text.

2 वृद्धिविनाशं—ना. and मु. भा.

3 महाभारत, शान्तिपर्व, १७७, १७–३७.

धारयामि च चीराणि शाणक्षौमाजिनानि च ।
महार्हाण्यथ वासांसि धारयाम्यहमेव च[1] ॥
न सन्निपतितं धर्म्यमुपभोगं यदृच्छया ।
प्रत्याचक्षे न चाऽप्येनमनुरुन्धे सुदुर्लभम् ॥
अचलमनिधनं शिवं विशोकं
शुचिमतुलं विदुषां मते निविष्टम् ।
अनभिमतमसेवितं च मूढैः
व्रतमिदमाजगरं शुचिश्चरामि ॥
अचलितमतिरच्युतः स्वधर्मात्
परिमितसंसरणः परापवर्गः[2] ।
विगतभयकषायलोभमोहो
व्रतमिदमाजगरं शुचिश्चरामि ॥
अनियतफलभोज्यभक्ष्यपेयं
विधिपरिणामविभक्तदेशकालम् ।
हृदयसुखमसेवितं कदर्यैः
व्रतमिदमाजगरं शुचिश्चरामि ॥
इदमिदमिति तृष्णयाऽभिभूतं
जनमनवाप्तधनं विषीदमानम् ।
निपुणमनुनिशाम्य तत्वबुद्ध्या
व्रतमिदमाजगरं शुचिश्चरामि ॥
बहुविधमनुदृश्य चाऽर्थहेतोः
कृपणमिहाऽऽर्यमनार्यमाश्रयन्तम् ।
उपशमरुचिरात्मवान् प्रशान्तो
व्रत्तमिदमाजगरं शुचिश्चरामि ॥

1 एकदा—मु. भा.
2 परावरज्ञः—मु. भा.

सुखमसुखमलाभमर्थलाभं
रतिमरतिं मरणं च जीवितं च ।
विधिनियतमवेक्ष्य तत्वतोऽहं
व्रतमिदमाजगरं शुचिश्चरामि ॥
अपगतभयरागमोहदर्पो
धृतिमतिबुद्धिसमन्वितः प्रशान्तः ।
उपगतफलभोगिनो निशाम्य
व्रतमिदमाजगरं शुचिश्चरामि ॥
अनियतशयनासनप्रकृत्या
यमनियमव्रतशौचसत्ययुक्तः ।
अपगतफलसञ्चयः प्रहृष्टो
व्रतमिदमाजगरं शुचिश्चरामि ॥
अपगतमसुखार्थमीहनार्थैः
उपगतबुद्धिरवेक्ष्य चाऽऽत्मसंस्थः ।
तृषितमनियतं मनो नियन्तुं
व्रतमिदमाजगरं शुचिश्चरामि ॥
न हृदयमनुरुध्यते मनो वा
प्रियसुखदुर्लभतामनित्यतां च ।
तदुभयमपि लक्षयन्निवाऽहं
व्रतमिदमाजगरं शुचिश्चरामि ॥
बहुकथितमिदं हि बुद्धिमद्भिः
कविभिरतिप्रथयद्भिरात्मकीर्तिम् ।
इदमिदमिति तत्र तत्र हन्त
स्वपरमतैर्गहनं प्रतर्कयद्भिः ॥

तदिदमनुनिशम्य विप्रपातं
पृथगभिपन्नमिहाऽबुधैर्मनुष्यैः ।
अनवसितमनन्तदोषपारं
नृषु विहरामि विनीतदोषतृष्णः ॥

[[1]भीष्म उवाच ।]

अजगरचरितव्रतं महात्मा
य इह नरोऽनुचरेद्विनीतरागः ।
अपगतभयमन्युलोभमोहः
स खलु सुखी विहरेदिमं विहारम् ॥

[2]तथा

युधिष्ठिर उवाच ।

किंशीलः किंसमाचारः किंविद्यः किंपराक्रमः ।
प्राप्नोति ब्रह्मणस्स्थानं यत्परं प्रकृतेर्ध्रुवम् ॥

भीष्म उवाच ।

मोक्षधर्मेषु नियतो लघ्वाहारो जितेन्द्रियः ।
आप्नोति ब्रह्मणः स्थानं यत्परं प्रकृतेर्ध्रुवम् ॥
अत्राऽप्युदाहरन्तीममितिहासं पुरातनम् ।
जैगीषव्यस्य संवादमसितस्य च भारत[3] ॥
जैगीषव्यं महाप्राज्ञं धर्माणामागतागमम् ।
अक्रुद्ध्यन्तमहृष्यन्तमसितो देवलोऽब्रवीत् ॥

1 Omitted in the text.

2 महाभारत, शान्तिपर्व—२३६, १-२६.

3 The following s'loka occurs immediately after भारत in the Kumbhakonam edition of the *Mahābhārata* :—

महादेवान्तरे वृत्तं देव्याश्चैवान्तरे तथा ।
यथावच्छृणु राजेन्द्र ज्ञानदं पापनाशनम् ॥

[1]देवल उवाच ।

न प्रीयसे वन्द्यमानो निन्द्यमानो न कुप्यसे ।
का ते प्रज्ञा कुतश्चैषा किं ते तस्याः परायणम् ॥

भीष्म उवाच ।

इति तेनाऽनुयुक्तस्तमुवाच स महातपाः ।
महद्वाक्यमसन्दिग्धं पुष्कलार्थपदं शुचि ॥

जैगीषव्य उवाच ।

या गतिर्या परा निष्ठा या शक्तिः[2] पुण्यकर्मणाम् ।
तामहं संप्रवक्ष्यामि यन्मां पृच्छसि वै द्विज ॥
निन्दत्सु च समा नित्यं प्रशंसत्सु च देवल ।
निह्नुवन्ति च ये तेषां समयं सुकृतं च यत् ॥
उक्ताश्च न विवक्षन्ति वक्तारमहिते हितम् ।
प्रतिहन्तुं च नेच्छन्ति हन्तारं च मनीषिणः ।
नाऽप्राप्तान्यनुशोचन्ति प्राप्तकालानि कुर्वते ।
न चाऽतीतानि शोचन्ति नैतानि प्रतिजानते ।
संप्राप्तानां च पूज्यानां कामादर्थेषु देवल ॥
यथोपपत्तिं कुर्वन्ति शक्तिमन्तो धृतव्रताः ।
पक्वविद्या महाप्रज्ञाः जितक्रोधा जितेन्द्रियाः ॥
मनसा कर्मणा वाचा नाऽपराध्यन्ति कर्हिचित् ।
अनीर्षवो न चाऽन्योन्यं विहिंसन्ति कदाचन ॥
न च जातूपतप्यन्ते धीराः परसमृद्धिभिः ।
निन्दाप्रशंसे नात्यर्थं न वदन्ति परस्य च ॥

1 Not found in मु. भा.

2 शान्तिः—मु. भा.

न च निन्दाप्रशंसाभ्यां विक्रियन्ते कदाचन ।
सर्वतश्च प्रशान्ता ये सर्वभूतहिते रताः ॥
न क्रुप्यन्ति न हृष्यन्ति नाऽपराध्यन्ति कस्यचित् ।
विमुच्य हृदयग्रन्थिं संक्रमन्ते यथासुखम् ॥
येषां न बान्धवास्सन्ति येऽन्येषां च न बान्धवाः ।
अमित्राश्च न सन्त्येषां ये चाऽमित्रा न कस्यचित् ॥
य एवं कुर्वते मर्त्याः सुखं जीवन्ति सर्वदा ।
धर्ममेवाऽनुरुध्यन्ते धर्मज्ञा द्विजसत्तमाः ॥
ये ह्यतो विच्युता मार्गात्ते हृष्यंत्युद्विजन्ति च ।
आस्थितस्तमहं मार्गमसूयिष्यामि तत्कथम् ॥
निन्द्यमानः प्रशस्तो वा हृष्येयं केन हेतुना ।
यद्यदिच्छन्ति तत्तस्मादधिगच्छन्ति मानवाः ॥
न मे निन्दा प्रशंसाभ्यां ह्रासवृद्धी भविष्यतः ।
अमृतस्येव संतृप्येदवमानस्य तत्त्ववित् ॥
विषस्येवोद्विजेन्नित्यं सम्मानस्य विचक्षणः ।
अवज्ञातः सुखं शेते इह चामुऽत्र चोभयोः ॥
विमुक्तः सर्वपापेभ्यो योऽवमन्ता स बुध्यते ।
परां गतिं च ये केचित् प्रार्थयन्ति मनीषिणः ॥
[1]एतद्ब्रह्म समाश्रित्य सुखमेधन्ति ते जनाः ।
सर्वतश्च समाहृत्य क्रतून् सर्वान् जितेन्द्रियः ॥
प्राप्नोति ब्रह्मणः स्थानं यत्परं प्रकृतेर्ध्रुवम् ।
नाऽस्य देवा न गन्धर्वा न पिशाचा न राक्षसाः ।
पदमन्ववरोहन्ति प्राप्तस्य परमां गतिम् ॥

1 एतद्व्रतं समाश्रित्य—मु. भारते.

[1]मार्कण्डेयपुराणे

दत्तात्रेय उवाच ।

दुःखापहारमद्यैव करोमि तव पार्थिव ।
सत्यं ब्रूहि किमर्थं ते दुःखं च पृथिवीपते ॥

[[2]जड उवाच ।]

[3]कस्य त्वं कस्य वा दुःखं तत्वमेवं विचार्यताम् ।
[4]अङ्गानीमानि देहस्य सर्वाङ्गानि च चिन्तय ॥
इत्युक्तश्चिन्तयामास स राजा तेन धीमता ।
त्रिविधस्याऽपि दुःखस्य स्थानमात्मानमेव च ॥
स विमृश्य चिरं राजा पुनःपुनरुदारधीः ।
आत्मानमात्मना वीरः प्रहस्येदमुवाच ह ॥
[5]नाऽहमुर्वी न सलिलं न ज्योतिरनिलो न च ।
नाऽऽकाशं किन्तु शारीरं न मेऽद्य सुखमिष्यते[4] ॥
तथा च [6]ममतात्यक्ते विशेषेणोपलभ्यते[7] ।

1 ३७, २९–४२.

2 Not found in the manuscripts.

3 Not found in printed edition.

4 A. S. B. Ms. G. 10645 begins here.

5 The following lines, found in the printed Mārkandeyapurāṇa, are omitted here :—

न्यूनातिरिक्ततां याति पञ्चकेऽस्मिन् सुखासुखम् ।
यदि स्यान् मम किं नस्यात् अन्यस्थेऽपि हितं मयि ॥
नित्यप्रभूतसद्भावे न्यूनातिक्यान् नतोन्नते ।

6 A. S. B. समता for ममता; तत्वावमयत्यक्ते—ना; तथा च ममता त्यक्ते—स.

7 The following lines are omitted here :

तन्मात्रावस्थिते सूक्ष्मे तृतीयांशे च पश्यतः ।
तथैव भूतसद्भावं शारीरं किं सुखावहम् ॥

मनस्यवस्थितं दुःखं सुखं वा मनसा श्रितम्[1] ।
यतस्ततो न मे दुःखं सुखं वा न ह्यहं मनः ॥
नाऽहङ्कारो न च मनो बुद्धिर्नाऽहं यतस्ततः ।
अन्तःकरणजं दुःखं पारक्यं मम तत्कथम् ॥
नाहं शरीरं न मनो यतोऽहं
पृथक् शरीरात् मनसस्तथाहऽम् ।
तत्सन्तु चेतस्यथ वाऽपि देहे
सुखानि दुःखानि च किं ममाऽत्र[2] ॥
न यस्य हस्तादिकमप्यशेषं
न मांसमस्थीनि [3]सिरादिभागः ।
कस्तस्य नागाश्वरथादिकोशैः
स्वल्पोऽपि संबन्ध इहाऽस्ति पुंसः ॥
तस्मान्न मेऽरिर्न च मेऽस्ति दुःखं
न मे सुखं नाऽपि पुरं न कोशः ।
न चाऽश्वनागादिबलं न तस्य
नाऽन्यस्य वा कस्य मया विनाऽस्ति[4] ॥
[5]यथा घटीकुम्भकमण्डलुस्थ-
माकाशमेकं बहुधा विभाति ।
तथा सुबाहुः स च काशिपोऽहं
मन्ये च देहेषु शरीरभेदैः ॥

1 मनसाश्रयं—A. S. B. ना. स ; मानसं च यत्—मु. पु.

2 This s'loka appears in the printed text of the Purāṇa :

राज्यस्य वांशं कुरुतेऽग्रजोऽस्य देहस्य चेद् पञ्चमयस्स राशिः ।
गुणप्रवृत्या मम किं तत्र तत्स्थः स चाहं च शरीरतोऽन्यः ॥

3 त्वोराहि भागः—A. S. B. ; शिराविभागः—मु. पु.

4 कस्यचिद्वा ममास्ति—मु. पु.

5 यदा यथा for यद्यपि. U., A. S. B. and मु. पु.

विष्णुपुराणे[1]

राजोवाच ।

किं [2]श्रान्तोऽस्यल्पमध्वानं त्वयोढा शिबिका मम ।
किं मया स सहो नत्वं पीवानसि [3]निरीक्ष्यसे ॥

ब्राह्मण उवाच ।

नाऽहं पीवा न वै वोढा शिबिका भवतो मया ।
न श्रान्तोऽस्मि न चाऽऽयासः सोढव्योऽसि महीपते ॥

राजोवाच ।

प्रत्यक्षं दृश्यसे पीवा नाऽद्यापि शिबिका त्वयि ।
श्रमश्च भारोद्वहने भवत्येव हि देहिनाम् ॥

ब्राह्मण उवाच ।

प्रत्यक्षं भवता भूप यद्दृष्टं मम तद्वद ।
बलवानबलश्चेति वाच्यं पश्चाद्विशेषणम् ।
त्वयोढा शिबिका चेति त्वय्यद्याऽपि च संस्थिता ॥
मिथ्यैतदत्र तु भवान् शृणोतु वचनं मम ।
भूमौ पादयुगस्याऽऽस्था जङ्घे पादद्वये स्थिते ।
ऊरू जङ्घाद्वयावस्थे तदाधारं तथोदरम् ॥
वक्षःस्थलं तथा बाहू स्कन्धौ चोदरसंस्थितौ ।
स्कन्धाश्रितेऽयं शिबिका मम भारोऽत्र किंकृतः ॥

1 Mitramis'ra omits entirely the quotation from विष्णुपुराण, evidently as the passage goes against the Advaita doctrine. *Lakṣmīdhara's* rejection of Advaita is also presumable from his selection of this passage. Rāmānuja cites the identical passages in his सिद्धित्रयम्—२, १३, ६१.

2 यातोस्यल्पं for श्रान्तोस्यल्पं—A. S. B. and मु. पु.

3 निरीक्षसे—A. S. B. and मु. पु.

शिबिकायां स्थितं चेदं वपुस्त्वदुपलक्षितम् ।
तत्र त्वमहमप्यत्र प्रोच्यते चेदमन्यथा ॥
अहं त्वं च तथाऽन्ये च[1] भूतैरूह्यामहे वयम् ।
गुणप्रवाहपतितो भूतवर्गोऽपि यात्ययम् ॥
कर्मवश्या गुणाश्चैते सत्त्वाद्याः पृथिवीपते ।
अविद्यासंचितं[2] कर्म तच्चाऽशेषेषु जन्तुषु ॥
आत्मा शुद्धोऽक्षरः शान्तो निर्गुणः प्रकृतेः परः ।
प्रवृद्ध्युपचयौ नाऽस्य एकस्याऽखिलजन्तुषु ॥
यदा नोपचयस्तस्य न चैवाऽपचयो नृप ।
तदा पीवानसीतीत्थं कया युक्त्या त्वयेरितम् ॥
भूपादजङ्घाकट्यूरुजठरादिषु संस्थिते ।
शिबिकेयं यदा स्कन्धे तदा [3]भावसमस्त्वया ॥
तथाऽन्यजन्तुभिर्भूप शिबिकोत्था न केवलम् ।
शैलद्रुमगृहस्थोऽपि[4] पृथिवीसंभवोऽपि वा ॥
यदा पुंसः पृथग्भावः कारणैः प्राकृतैर्नृप ।
सोढव्यस्तु तदाऽऽयासः कतरो नृपते मया ॥
यद्द्रव्या शिबिका चेयं तद्द्रव्यो भूतसंग्रहः ।
भावतो मेऽखिलस्याऽस्य ममत्वेनोपबृंहितः ॥

पराशर उवाच ।

एवमुक्त्वाऽभवन्मौनी स वहन् शिबिकां द्विजः ।
सोऽपि राजाऽवतीर्योर्व्यां तत्पादौ जगृहे त्वरन् ॥

1 च for वा—A. S. B.

2 संवितं कर्म for संचितं कर्म ; A. S. B. संचिते कर्म ना.

3 भारसमस्त्वया for भावसमस्त्वया—ना. स. and A. S. B.

4 गृहोत्थोपि for गृहस्थोपि—A. S. B.

राजोवाच ।

भो भो विसृज्य शिबिकां प्रसादं कुरु मे द्विज ।
कथ्यतां को भवानत्र [1]जाल्मरूपधरः स्थितः ॥
यो भवान् यन्निमित्तं च यदागमनकारणम् ।
तत्सर्वं कथ्यतां विद्वन्मह्यं शुश्रूषवे तथा[2] ॥

ब्राह्मण उवाच ।

श्रूयतां कोऽहमित्येतद्वक्तुं किंचिन्न शक्यते ।
उपभोगनिमित्तं च सर्वत्राऽऽगमनक्रिया ॥
सुखदुःखोपभोगौ तु तौ देहाद्युपपादकौ ।
धर्माधर्मोद्भवौ भोक्तुं जन्तुर्देहादिमृच्छति ॥
सर्वस्यैव हि भूपाल जन्तोः सर्वत्र कारणम् ।
धर्माधर्मौ यतस्तस्मात् कारणं पृच्छ्यते कुतः ॥

राजोवाच ।

धर्माधर्मौ न सन्देहः सर्वकार्येषु कारणम् ।
उपभोगनिमित्तं च देहदेशान्तरागमः ॥
यदेतद्भवता प्रोक्तं कोऽहमित्येतदात्मनः ।
वक्तुं न शक्यते श्रोतुं तन्ममेच्छा प्रवर्त्तते ॥
योऽस्ति सोऽहमिति ब्रह्मन् कथं वक्तुं न शक्यते ।
आत्मन्येष न दोषाय शब्दोऽहमिति यो द्विज ॥

ब्राह्मण उपाच ।

शब्दोऽहमिति दोषाय नाऽऽत्मन्येव तथैव तत् ।

1 जाड्यरूप for जाल्मरूप—A. S. B.,

2 त्वया for तथा—A. S. B., ना and स.

अनात्मन्यात्मविज्ञानं शब्दो[1] वा भ्रान्तिलक्षणः ॥
जिह्वा ब्रवीत्यहमिति दन्तोष्ठौ तालुकं नृप ।
एतेनाऽहं यतः सर्वे वाङ्निष्पादनहेतवः ॥
किं हेतुभिर्वदत्येषा वागेवाऽहमिति स्वयम् ।
तथाऽपि वाङ्नाहमेतद्वक्तुमित्थं न युज्यते ॥
पिण्डः पृथग्यतः पुंसः शिरःपाण्यादिलक्षणः ।
ततोऽहमिति कुत्रैतां संज्ञां राजन् करोम्यहम् ॥
यद्यन्योऽस्ति परः कोऽपि मत्तः पार्थिवसत्तम ।
तदेशोऽहमयं[2] चाऽन्यो वक्तुमेवमपीष्यते ॥
यदा समस्तदेहेषु पुमानेको व्यवस्थितः ।
तदा हि को भवान्कोऽहमित्येतद्विफलं वचः ॥
त्वं राजा शिबिका चेयं वयं वाह्याः[3] पुरःसराः ।
अयं च भवतो लोको न सदेतन्नृपोच्यते ॥
वृक्षाद्दारु ततश्चेयं शिबिका त्वदधिष्ठिता ।
क्व वृक्षसंज्ञा याता स्याद्दारुसंज्ञाऽथवा[4] नृप ॥
वृक्षारूढो महाराजो नायं वदति ते जनः ।
न च दारुणि तिष्ठन्तं[5] ब्रवीति शिबिकागतम् ॥
शिबिका दारुसङ्घातो रचनास्थितिसंस्थितः ।
[6]अन्विष्यतां नृपश्रेष्ठ तद्भेदे शिबिका त्वया ॥
एवं छत्रशलाकानां पृथग्भावो विमृश्यताम् ।
क्व यातं छत्रमित्येष न्यायस्त्वयि तथा मयि ॥

1 शब्दादाभ्रान्तिलक्षणः—A. S. B.
2 तदेशोऽस्मयं चान्यो A. S. B.
3 वाहाः for वाह्यः—A. S. B.
4 वा तस्याः—ना.
5 दारुवितिष्ठन्तं—A. S. B.
6 अधिष्यतां—A. S. B.

[1]पुमांस्त्री गौरजो वाजी कुञ्जरो विहगस्तरुः ।
देहेषु लोके संज्ञेयं विज्ञेया कर्महेतुषु ॥
पुमान्न देवो न नरो न पशुर्न च पादपः ।
शरीराकृतिभेदास्तु भूपैते कर्मयोनयः ॥
वस्तु राजेति यल्लोके यच्च राजभटात्मकम् ।
तथाऽन्यच्च नृपेत्थं तन्न सत्संकल्पमात्रकम् ॥
यत्तु कालान्तरेणाऽपि नाऽन्यसंज्ञामुपैति वै ।
परिणामादिसंभूतं तद्वस्तु नृप तच्च किम् ॥
त्वं राजा सर्वलोकस्य पितुः पुत्रो रिपोरिपुः ।
पत्न्याः पतिः पिता सूनोः कं त्वां भूप वदाम्यहम् ॥
त्वं किमेतच्छिरः किन्तु शिरस्तव ततोदरम् ।
किमु पादादिकं त्वं वै न वैतत् किं महीपते ॥
समस्तावयवेभ्यस्त्वं पृथग्भूतो व्यवस्थितः ।
कोऽहं त्वं चेति निपुणो भूत्वा चिन्तय पार्थिव ॥
एवं व्यवस्थितोऽतत्वे मयाऽहमिति भावितम् ।
पृथक्करणनिष्पाद्यं शक्यते नृप ते कथम् ॥

'तदुपलक्षितस्त्वयात्मनाऽहं त्वया गृहीतः । तत्र त्वमिति'। तत्र त्वमहमत्रेत्यन्यथोच्यते । यतो नावयोर्वाच्यवाचकभावोऽस्तीति भावः । 'गुणप्रवाहः' गुणपरिणामस्रोतः । 'शुद्धः' केवलो वस्त्वन्तरसंसर्गशून्योऽसंज्ञीत्यर्थः । 'अक्षरो'ऽविनाशी । 'शान्तो' रागद्वेषरहितः । 'निर्गुणो' गुणातीतः । 'प्रकृतेः परः' अचेतनादत्यन्तविलक्षणः । 'भूपालेत्यादि'। यद्यन्येन ध्रियमाणे भावे परस्याऽपि भारो भवेत्,

1 Fol. 39 of the Nagpur Ms. which should begin here is lost.

तदा मदुपलक्षितस्कन्धाश्रिते भर्त्तव्ये तवाऽपि भारः[1] स्यादिति भावः। तथाऽन्यजन्तुभिर्भारः सम इत्यन्वयः। न केवलं शिबिकोत्थः भारः समः। किन्तु शैलभारोऽपि समः। 'जाल्मः' असमीक्ष्यकारी[2] यन्निमित्तमित्यागमनहेतुविषयः। 'किमागमनकारणमिति' उद्देश्यप्रश्नः। 'शब्दोऽहमि'ति दोषायेत्यादि। 'अहमि'ति शब्दोऽयमात्मनि स्वप्रयोक्तरि वर्त्तमानो न दोषाय भवति। किन्तु अनात्मन्यात्मविज्ञानं भ्रमः। तथाऽऽत्मशब्दस्याऽप्यनात्मनि प्रयोगो भ्रान्तिलक्षण इत्यर्थः। 'एते जिह्वादयः' शब्दाभिव्यक्तिहेतवो नाऽहं कर्तृकत्वादशरीरत्वात् (?) अशरीरत्वाचाऽहमिति शब्द-विज्ञानयोरन्यदानयनमित्यर्थः।

तथा

[3]परमार्थस्तु भूपाल संक्षेपात् श्रूयतां मम।
एको व्यापी समः शुद्धो निर्गुणः प्रकृतेः परः॥
जन्मबुध्यादिरहित आत्मा सर्वगतोऽव्ययः।
परज्ञानमयोऽसद्भिः नामजात्यादिभिर्विभुः॥
न योगवान्न युक्तोऽभून्नैव पार्थिव योक्ष्यते।
तस्याऽऽत्मपरदेहेषु सतोऽप्येकतमं हि तत्॥
विज्ञानं परमार्थोऽसौ द्वैतनोऽतत्त्वदर्शिनः।
वेणुरन्ध्रविभेदश्च यथा षड्जादिसंज्ञितः॥
अभेदव्यापिनो[4] वायोस्तथा तस्य महात्मनः।

1 भावः इति उदयपुरमातृकायाम्.

2 असमीक्षकारी.

3 २, १४, २८.

4 अभेदयायिनो—A. S. B.

तथा

[1]श्रूयतां नृपशार्दूल यद्गीतमृभुणा पुरा ।
प्रतिबोधं जनयता निदाघस्य महात्मनः ॥
ऋभुर्नामाऽभवत्पुत्रो ब्रह्मणः परमेष्ठिनः ।
विज्ञाततत्वसद्भावो निसर्गादेव भूपते ॥
तस्य शिष्यो निदाघोऽभूत्पुलस्त्यतनयः पुरा ।
प्रादादशेषविज्ञानं स तस्मै परया मुदा ॥
अवाप्तज्ञानतत्वस्य न तस्याऽद्वैतवासना ।
स ऋभुस्तर्कयामास निदाघस्य नरेश्वरः ॥
देविकायास्तटे वीर नगरं नाम वै पुरम् ।
समृद्धमतिरम्यं च पुलस्त्येन निवेशितम् ॥
रम्योपवनपर्यन्ते स तस्मिन् पार्थिवोत्तम ।
निदाघनामा योगज्ञ ऋभुशिष्योऽवसत्पुरा ॥
दिव्यवर्षसहस्रे तु समतीतेऽस्य तत्पुरम् ।
जगाम स ऋभुः शिष्यं निदाघमवलोककः ॥
स तस्य वैश्वदेवान्ते द्वारालोकनगोचरे ।
स्थितस्तेन गृहीतार्घो निजवेश्म प्रवेशितः ॥
प्रक्षालिताङ्घ्रिपद्मं च कृतासनपरिग्रहम् ।
उवाच स द्विजश्रेष्ठो भुज्यतामिति सादरम् ॥

ऋभुरुवाच ।

भो विप्रवर्य भोक्तव्यं यदत्र भवतो गृहे ।
तत्कथ्यतां कदन्नेषु नः प्रीतिः सततं मम ॥

1 २, १५, २.

निदाघ उवाच ।

सक्तु [1]यावकवाट्यानामपूपानां च मे गृहे ।
यद्रोचते द्विजश्रेष्ठ तद्भक्षय यथेच्छया ॥

ऋभुरुवाच ।

कदन्नानि द्विजैतानि मिष्टमन्नं प्रयच्छ मे ।
संयावपायसादीनि द्राक्षाफाणितवन्ति च ॥

निदाघ उवाच ।

हे हे शालिनि मद्गेहे यत्किंचिदतिशोभनम् ।
भक्ष्योपसाधनं मिष्टं तेनाऽस्याऽन्नं प्रसाधय[2] ॥
इत्युक्ता तेन सा पत्नी मिष्टमन्नं द्विजस्य तत्[3] ।
प्रसाधितवती तस्य भर्त्तुर्वचनगौरवात् ॥
तं भुक्तवन्तमिच्छातो मिष्टमन्नं महामुनिम् ।
निदाघः प्राह भूपाल प्रश्रयावनतः स्थितः ॥
अपि ते परमा तृप्तिरुत्पन्ना तुष्टिरेव च ।
अपि ते मानसं स्वस्थमाहारेण कृतं द्विज ॥
क्वनिवासो भवान्विप्र क्व वा गन्तुं समुद्यतः ।
आगम्यते वा भवता यतस्तच्च द्विजोच्यताम् ॥

ऋभुरुवाच ।

क्षुद्यस्य तस्य भुक्तान्ने[4] तृप्तिर्ब्राह्मण जायते ।
न मे क्षुन्नाऽभवत्तृप्तिः कस्मान्मां द्विज पृच्छसि ॥

1 यावकवाट्यातां—A. S. B.
2 प्रसादय for प्रसाधय—A. S. B.
3 यत् for तत्.—A. S. B.
4 भुक्तेन्ने—A. S. B. makes a better reading.

वह्निना पार्थिवे धातौ क्षयिते क्षुत्समुद्भवः ।
भवत्यम्भसि[1] च क्षीणे नृणां तृप्ति[र्न]जायते ॥
क्षुत्तृष्णे देहधर्माख्ये न ममैते यतो द्विज ।
ततः क्षुत्संभवाभावात्तृप्तिरस्त्येव मे सदा ॥
मनसः सुस्थता तुष्टिश्चित्तधर्मो न मे द्विज ।
चेतसो ये तु[2] तत्प्रश्न पुमानेभिर्न युज्यते ॥
क्व निवासस्तवेत्युक्तं क्व गन्ताऽसि च यः त्वया ।
कुतश्चाऽऽगम्यते ह्यत्र त्रितयेऽपि निबोध मे ॥
पुमान् सर्वगतो व्यापी आकाशवदयं यतः ।
कुतः कुत्र क्व गन्ताऽसि ते तदप्यर्थवत्कथम् ॥
नाऽहं गन्ता न वाऽऽगन्ता[3] नैकदेशनिकेतनम् ।
त्वं चाऽन्ये च न च [4]त्वं नं नाऽन्येऽन्येवाऽहमप्यहम् ॥
मिष्टान्नमिष्टमित्येषा जिज्ञासा मे कृता तव ।
किं वक्ष्यसीति तत्राऽपि श्रूयतां द्विजसत्तम ॥
किमस्वाद्वथवा मिष्टं भुञ्जतोऽन्नं द्विजोत्तम ।
मिष्टमेव यदाऽमिष्टं तदेवोद्वेगकारणम् ॥
अमृष्टं जायते मृष्टं मृष्टादुद्विजते जनः ।
आदिमध्यावसानेषु किमत्र रुचिकारणम् ॥
मृन्मयं हि गृहं यद्वन्मृदा लिप्तं स्थिरं भवेत् ।
पार्थिवोऽयं यदा देहः पार्थिवैः परमाणुभिः ॥
यवगोधूममुद्गादि घृतं तैलं पयो दधि ।
गुडः फलादीनि तथा पार्थिवाः परमाणवः ॥

1 भवत्यांभसि for भवत्यभसि—A. S. B.

2 यस्य for यत्तु—A. S. B.

3 नचागन्ता for नावगन्ता—A. S. B.

4 त्वं त्वं for न च त्वं तं—A. S. B.

तदेतद्भवता ज्ञात्वा मिष्टाऽमिष्टविचारि यत् ।
तन्मना समतालम्बी कार्यं साम्यं हि मुक्तये ॥
इत्याकर्ण्य वचस्तस्य परमार्थान्वितं नृप ॥
प्रणिपत्य महाभागो निदाघो वाक्यमब्रवीत् ।
प्रसीद मद्धितार्थाय कथ्यतां कस्त्वमागतः ॥
नष्टो मोहस्समाकर्ण्य वचांस्येतानि वै द्विज ।

ऋभुरुवाच ।

ऋभुरस्मि तवाऽऽचार्यः प्रज्ञादानाय ते द्विज ।
इहाऽऽगतोऽहं यास्यामि परमार्थस्तवोदितः ॥
एकमेवमिदं ब्रह्मन्नभेदि सकलं जगत् ।
वासुदेवाभिधानस्य स्वरूपं परमात्मनः ॥
तथेत्युक्तो निदाघेन प्रणिपानपुरस्सरम् ।
पूजितः परया भक्त्या इच्छातः प्रययौ ऋभुः ॥
[1]पुनर्वर्षसहस्रे तु समतीते नरेश्वर ।
निदाघज्ञानदानाय तदेव नगरं ययौ ॥
नगरस्य बहिः सोऽथ निदाघं ददृशे मुनिम् ।
महाबलपरीवारे पुरं विशति पार्थिवे ॥
दूरे स्थितं महाभागं जनसम्मर्दवर्जकम् ।
क्षुत्क्षामकण्ठमायान्तमरण्यात् ससमित्कुशम् ॥
दृष्ट्वा निदाघं स ऋभुरुपगम्याऽभिवाद्य च ।
उवाच कस्मादेकान्ते स्थीयते भवता द्विज ॥

निदाघ उवाच ।

भो विप्र जनसंमर्दो महानेष नरेश्वरे ।
प्रविविक्षौ पुरं रम्यं तेनाऽत्र स्थीयते मया ॥

1 २, १६, १.

ऋभुरुवाच ।

नराधिपोऽत्र कतमः कतमश्चेतरो जनः ।
कथ्यतां मे द्विजश्रेष्ठ त्वमभिज्ञो मतो मम ॥

निदाघ उवाच ।

योऽयं गजेन्द्रमुन्मत्तं अद्रिशृंगमिवोच्छ्रितम् ।
अधिरूढो नृपेन्द्रोऽयं परलोकस्तथेतरः ॥

ऋभुरुवाच ।

एतौ हि गजराजानौ युगपद्दर्शितौ मम ।
भवता न विशेषेण पृथक्चिह्नोपलक्षितौ ॥
तत्कथ्यतां महाभाग विशेषो भवताऽनयोः ।
ज्ञातुमिच्छाम्यहं कोऽत्र गजः को वा नराधिपः ॥

निदाघ उवाच ।

गजो योऽयमजो [1]ब्रह्मन्नुपर्यस्यैष भूपतिः ।
वाह्यवाहकसम्बन्धं को न जानाति वै द्विज ॥

ऋभुरुवाच ।

जानाम्यहं यथा ब्रह्मन् तथा मामवबोधय ।
अधश्शब्दनिगद्यं किं किं चोर्ध्वमभिधीयते ॥

ब्राह्मण उवाच ।

इत्युक्तस्सहसाऽऽरुह्य निदाघः प्राह तं ऋभुम् ।
श्रूयतां कथयाम्येष यन्मां त्वं परिपृच्छसि ॥
उपर्यहं यथा राजा त्वमधः कुञ्जरस्तथा ।
अवबोधाय ते ब्रह्मन् दृष्टान्तो दर्शितो मया ॥

1 अथो for अजो—A. S. B.

ऋभुरुवाच ।

त्वं राजवद्विजश्रेष्ठ स्थितोऽहं गजवद्यदि ।
तदेव त्वं समाचक्ष्व कतरस्त्वमहं तथा ॥

ब्राह्मण उवाच ।

इत्युक्तस्सत्वरस्तस्य प्रगृह्य चरणावुभौ ।
निदाघः प्राह भगवानाचार्यस्त्वं ऋभुर्ध्रुवम् ॥
नाऽन्यस्याऽद्वैतसंस्कारसंस्कृतं मानसं तथा ।
यथाऽऽचार्यस्य तेन त्वां मन्ये प्राप्तमहं गुरुम् ॥

ऋभुरुवाच ।

तवोपदेशदानाय पूर्वशुश्रूषयाऽऽहृतः ।
गुरुस्तेऽहमृभुर्नाम निदाघ समुपागतः ॥
तदेतदुपतिष्ठन्ते संक्षेपेण महामते ।
परमार्थसारभूतं यत् तदद्वैतमशेषतः ॥

ब्राह्मण उवाच ।

एवमुक्त्वा ययौ विद्वान् निदाघं स ऋभुर्गुरुः ।
निदाघोऽप्युपदेशेन तेनाऽद्वैतपरोऽभवत् ।
सर्वभूतान्यभेदेन ददृशे स तदात्मनः ॥

<u>तथा</u>

परब्रह्मपरो मुक्तिमवाप परमां द्विजः ।
तथा त्वमपि धर्मज्ञ तुल्यात्मरिपुबान्धवः ॥
भव सर्वगतं जानन्नात्मानमवनीपते ।
सितनीलादिभेदेन यथैकं दृश्यते नभः ॥
भ्रान्तदृष्टिभिरात्माऽपि तथैकस्सन् पृथक् पृथक् ।

एकः समस्तं यदिहास्ति किंचित्
तदच्युतो नास्त्यपरं ततोऽन्यत् ।
सोऽहं स च त्वं स च सर्वमेत-
दात्मस्वरूपं त्यज भेदमोहम् ॥

तथा प्रह्लादचरिते[1]

प्रह्लाद उवाच ।

ममोपदिष्टं सकलं गुरुणा नाऽत्र संशयः ।
गृहीतं च मया किं तु न सदेतन्मतं मम ॥
साम चोपप्रदानं च भेददण्डौ तथाऽपरौ ।
उपायाः कथिता ह्येते मित्रादीनां च साधने ॥
तदहं च न पश्यामि मित्रादींस्तात मा क्रुधः ।
साध्याभावे महाबाहो साधनैः किं प्रयोजनम् ॥
सर्वभूतात्मके तात जगन्नाथे जगन्मये ।
परमात्मनि गोविन्दे मित्रामित्रकथा कुतः ॥
त्वय्यस्ति भगवान्विष्णुर्मयि चाऽन्यत्र चाऽस्ति सः ।
यतस्ततोऽयं मित्रं मे शत्रुर्वेति पृथक् कुतः ॥
तदेभिरलमत्यर्थं दुस्तरे[2] तूक्तिविस्तरे ।
अविद्यान्तर्गतैर्यत्नः कर्तव्यस्तात शोभने ॥
विद्या बुद्धिरविद्यायामज्ञानात्तात जायते ।
बालोऽग्निं किं न खद्योतमसुरेश्वर मन्यते ॥
तत्कर्म यन्न बन्धाय सा विद्या या विमुक्तये ।
आयासायाऽपरं कर्म विद्याऽन्या शिल्पनैपुणम् ॥

1 विष्णुपुराण, १, १९, ३४—४९.

2 दुष्टारम्भोक्तिविस्तरैः—मु. पु., पृ. १०६.

तदेतदवगम्याऽहमसारं सारमुत्तमम् ।
निशामय महाभाग प्रणिपत्य ब्रवीमि ते ॥
न चिन्तयति को राज्यं को धनं नाऽभिवाञ्छति ।
तथाऽपि भाव्यमेवैतदुभयं प्राप्यते नरैः ॥
सर्व एव महाभाग महत्त्वं प्रति सोद्यमः ।
तथाऽपि पुंसां भाग्यानि नोद्यमा भूतिहेतवः ॥
जनानामविवेकानामश्रृण्वानामपि प्रभो ।
भाग्यभोगानि राज्यानि सन्त्यनीतिमतामपि ॥
तस्माद्यतेत धर्माय[1] यदीच्छेन्महतीं श्रियम् ।
यतितव्यं [2]समत्वेन निर्वाणमपि चेच्छता ॥
देवा मनुष्याः पशवः पक्षिवृक्षसरीसृपाः ।
रूपमेतदनन्तस्य विष्णोर्भिन्नमिव स्थितम् ॥
एतद्विजानता सर्वं जगत्स्थावरजंगमम् ।
द्रष्टव्यमात्मवद्विष्णुर्यतोऽयं विश्वरूपधृक् ॥
एवं ज्ञाते स भगवाननादिः परमेश्वरः ।
[3]प्रसीदति ततस्तत्र प्रसन्ने क्लेशसंक्षयः ॥

1 पुण्येषु—मु. पु.
2 समत्वे च—मु. पु.
3 प्रसीदत्यच्युतः तस्मिन्.

॥ २४ ॥

# अथ योगभ्रष्टगतिः

तत्र महाभारते[1]

अर्जुन उवाच ।

अयतिः श्रद्धयोपेतो योगाच्चलितमानसः ।
अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥
कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति ।
अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि ॥
एतन्मे संशयं कृष्ण छेत्तुमर्हस्यशेषतः ।
त्वदन्यः संशयस्याऽस्य छेत्ता न ह्युपपद्यते ॥

श्रीभगवानुवाच ।

पार्थ नैवेह नाऽमुत्र विनाशस्तस्य विद्यते ।
न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति ॥
प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः ।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥
अथवा योगिनामेव कुले भवति श्रीमताम्[2] ।
एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥

1 भगवद्गीता—६, ३७-४५.
2 'धीमतां' इति भाष्यकाराः पठन्ति.

तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ।
यतते च ततो भूयः संसिद्धौ कुरुनन्दन ॥
पूर्वाभ्यासेन तेनैव ह्रियते[1] ह्यवशोऽपि सः ।
जिज्ञासुरपि योगस्य शब्दब्रह्माऽतिवर्तते ॥
[2]प्रसन्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः ।
अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥

विष्णुपुराणे

[3]योगयुक् प्रथमं योगी युंजानस्त्वभिजायते ।
विनिष्पन्नसमाधिस्तु परं ब्रह्मोपलब्धिमान् ॥
यद्यन्तरायदोषेण मुच्यते नरमानसम् ।
जन्मान्तरैरभ्यसतो मुक्तिः पूर्वैव जायते ॥
विनिष्पन्नसमाधिस्तु मुक्तिं तत्रैव जन्मनि ।
प्राप्नोति योगी योगाग्निदग्धकर्मचयोऽचिरात् ॥

1 क्रियते हि अवशोऽपि सः— A. S. B.

2 प्रयत्नाद्यतमानस्तु—A. S. B., स. ना. भाष्यकाराश्च.

3 ६, ७, ३३–३५.

# भूतशुद्धितन्त्रम्

## ॥अथ प्रथमः पटलः ॥

ॐ देव्युवाच —

कथयेशान ! सर्वज्ञ ! यतोऽहं तव वल्लभा ।
योगं शारीरिकं देव ! यतस्त्वं योगवित्तमः ॥१ ॥
विना येन न सिद्ध्येत् तु जपहोमार्चनादिकम् ।
आत्मज्ञानं महेशान येन त्वं सिद्धिमान् गुरुः ॥२ ॥

भैरव उवाच —

श्रृणु देवि ! प्रवक्ष्यामि सारात् सारतरं परम् ।
स्त्रीस्वभावात् कदा कुत्र न प्रकाश्यं कदाचन ॥३ ॥
अतिप्रेमवशीभूतः कथयामि तवाऽग्रतः ।
गुदोर्ध्वं द्व्यङ्गुलं देवि ! कन्दमूलं खगाण्डवत् ॥४ ॥
तत्र नाड्यः समुत्पन्नाः सहस्राणां द्विसप्ततिः ।
तासु नाड्यः प्रधानास्तु तत्र मुख्याश्चतुर्दश ॥५ ॥
तासां मुख्यतमास्तिस्र इडाद्याः परमेश्वरि ।
इडा च पिङ्गला चैव सुषुम्णा चेति तत्क्रमात् ॥ ६ ॥
सुषुम्णा त्रितया ज्ञेया वज्राचित्रान्तरान्विता ।
पञ्च नाड्यः प्रधानास्तु योगिनां साधने हिताः ॥ ७ ॥
मेरोर्वामे इडा दक्षे पिङ्गला चाऽस्थिनि स्थिते ।
पार्श्वयोर्मध्यदेशे च सुषुम्ना त्रिगुणा मता ॥ ८ ॥
पृष्ठदेशं समाश्रित्य प्रोद्गता ब्रह्मरन्ध्रकम् ।
सुषुम्ना चैव वल्ली च मेरोः श्लिष्टाः पुरोगताः ॥ ९ ॥

ग्रीवान्तं प्राप्य गलितं तिर्यग्भूता वराङ्गने ! ।
शङ्खिनीनालमालम्ब्य गता सा ब्रह्मसाधने ॥१० ॥
तदूर्ध्वं द्व्यङ्गुलान्तं च वज्राख्या चित्रिणी तथा ।
त्रिगुणा चातिसूक्ष्माग्रा ललन्ती ललना तथा ॥११ ॥
अतः सुषुम्णा त्रिगुणा ब्रह्मविष्णुशिवात्मिका ।
सत्त्वादित्रिगुणाधारा मता तु ब्रह्मनाडिका ॥१२ ॥
कन्दलग्नोर्ध्वदेशे तु सहस्रच्छदमुत्तमम् ।
श्वेतोदरं तथा श्वेतकिञ्जल्कपरिमण्डितम् ॥१३ ॥
पीतकर्णिकमाश्चर्यमैश्वर्यमजमव्ययम् ।
कमलं सर्वदेवानामाक्रीडं तद्धि पार्वति ! ॥१४ ॥
तदूर्ध्वं त्र्यङ्गुलं गुह्यं मूलाधाराच्चतुर्दलम् ।
रक्तं वशषसोपेतं डाकिन्या समधिष्ठितम् ॥
ध्यानं तस्याः प्रवक्ष्यामि सावधानाऽवधारय ॥१५ ॥
रक्ताक्षीं रक्तवर्णां पशुजनभयकृच्छूलखट्वाङ्गहस्तां
वामे खड्गं दधानां चणकमपि सुधापूरितं चैकवक्त्राम् ।
अत्युग्रामुग्रदंष्ट्रामरिकुलमथनीं पायसान्ने प्रसक्तां
मूलाधारेऽमृतार्थे परिवृतवससां डाकिनीं चिन्तयेत् ताम् ॥१६ ॥
ध्यायेत् तत्र त्रिकोणं च तन्मध्ये विवरं शुचि ।
तत्र ध्यायेत् कुण्डलिनीं प्रसुप्तां भुजगाकृतिम् ॥१७ ॥
संवेष्ट्याधोमुखं लिङ्गं त्रिवृत्त्या पुच्छसंयुताम् ।
विनोद्वेगं विनोत्कण्ठां निजे याति ततोत्थिता ॥१८ ॥
हुताशतापसंविग्नां चोर्ध्वमात्रामृतार्थिनाम् ।
ततो नयेत् पथि प्राज्ञो जीवयोगेन तत्पदम् ॥१९ ॥

तदूर्ध्वं ध्वजमूले तु पङ्कजं षड्दलं परम् ।

स्वाधिष्ठानाख्यमाश्चर्यं सूक्ष्मं सर्वगुणान्वितम् ॥

बभमैर्यवलैर्युक्तमारक्तं राकिणीस्थितम् ॥२० ॥

श्यामां शूलाग्रहस्तां डमरुकरयुतां तीक्ष्णटङ्कं वहन्ती

मुग्रां रक्तां त्रिनेत्रां शुचिकुटिललसच्चोग्रदंष्ट्रां प्रभाति ।

दीप्तां तां देवदेवीं त्रितयकमलगां रक्तधारैकनाथां

शुक्लान्ने सक्तचित्तामभिमतफलदां राकिनीं चिन्तयेत् ताम् ॥२१ ॥

रं बीजं कर्णिकायां तु तदन्ते विष्णुलिङ्गकम् ॥२२ ॥

॥इति श्रीभूतशुद्धितन्त्रे परमरहस्ये प्रथमः पटलः ॥



## ।।अथ द्वितीयः पटलः ।।

तदूर्ध्वं नाभिमूले तु पङ्कजं मणिपूरकम् ।
नीलं दशदलं शुद्धं डादिकान्ताक्षरान्वितम् ।।१ ।।

नीलां देवीं त्रिवक्त्रां त्रिनयनलसितां दंष्ट्रिणीमुग्ररूपां
वज्रं शक्तिं दधानामभयवरकरां दक्षवामक्रमेण ।
ध्यात्वा नाभौ सुपद्मे दशदलविलसत्कर्णिके लाकिनीं तां
मांसाशीं गौरवर्णां भक्तोत्सुकहृदयां विन्यसेत् साधकेन्द्रः ।।२ ।।

कर्णिकायां त्रिकोणस्थं रक्ताभं वह्निबीजकम् ।
तदन्तं चैव लिङ्गं च ध्यात्वा सिद्धीश्वरो भवेत् ।।३ ।।

बाह्योत्तरे मुखं तत्र त्रिकोणत्रयमुत्तमम् ।
हृदि पीतं द्वादशार्णं कादिठान्तार्णसंयुतम् ।।
अनाहताख्यं देवेशि ! पङ्कजं सुमनोहरम् ।।४ ।।

तत्र ध्यायेदिमां तां रविदलकमले कामिनीं वेदहस्तैः
पाशं शूलं वहन्तीं डमरुकमभयं धारिणीं पीतवर्णाम् ।
दध्यन्ने सक्तचित्तां - - - - - काकिनीं मत्तचित्तां
पत्रार्णैः कादिठान्तैः परिवृतवपुषां भावयेद् योगिनीं ताम् ।। ५ ।।

कर्णिकायां च षट्कोणे वायुबीजयुतं महत् ।
ततः क्रोडे ईशं तदधस्त्रिकोणे बाणलिङ्गकम् ।। ६ ।।

तन्मध्येऽष्टदलं रक्तं तत्र कल्पतरुं तथा ।
इष्टदेवासनं चारु चन्द्रार्कोपरि राजितम् ।। ७ ।।

पिङ्गलाभं कण्ठदेशे विशुद्धाख्यं कलादलम् ।
षोडशस्वरसंयुक्तं पङ्कजं व्योमसंस्थितम् ।
हकारं धूम्रवर्णं तु तदङ्के च सदाशिवम् ।। ८ ।।

देवीं ज्योतिःस्वरूपां त्रिनयनलसितां पञ्चवक्त्राभिरामां

हस्तैश्चापैश्च पाशं सृणिमपि दधतीं पुस्तकं ज्ञानमुद्राम्।

ध्यायेत् कण्ठस्थपद्मे निखिलपशुजनोम्नादिनीमस्थिसंस्थां

दुग्धान्ने प्रीतियुक्तां मधुमदमुदितां शाकिनीं साधकेन्द्रः ॥९ ॥

कर्णिकायां त्रिकोणस्थं पूर्णचन्द्रं च चिन्तयेत्।

हेमाभबीजमारूढमाकाशं तत्र चिन्तयेत् ॥१० ॥

शुक्लं सुवेषचरितं ततो देवं सदाशिवम्।

गिरिजाभिन्नदेहार्धं रौप्यहेमशरीरकम् ॥११ ॥

॥ इति श्रीभूतशुद्धितन्त्रे परमरहस्ये द्वितीयः पटलः ॥

■

## ॥अथ तृतीयः पटलः ॥

तदूर्ध्वमाज्ञाचक्रं च द्विदलं धूम्रधूमकम्।
हस्ताभ्यां लसितं शङ्खमालाधिष्ठितमद्भुतम् ॥१ ॥
कर्णिकायां त्रिकोणस्थं मत्तालिप्रणवाकृतिम्।
जलद्वीपनिभं चोर्ध्वं नादरूपं मनोरमम् ॥
बिन्दुं मकाररूपं च तदूर्ध्वं मनसालयम् ॥२ ॥
चक्रस्थां शुक्लवर्णां डमरुकरयुतामक्षसूत्रां कपालं
विद्यां मुद्रां दधानां त्रिनयनविलसद्रक्तसद्वक्त्रयुक्ताम्।
हारिद्रान्ने प्रसक्तां मधुमदमुदितां शुक्लमब्जस्वरूपां
देवीं देवेन्द्ररत्नाकरमधुमुदितां भावयेत् शाकिनीं ताम् ॥३ ॥
नादस्थानं तदूर्ध्वे तु नादान्तं च तदूर्ध्वतः।
शक्तिस्थानं तदूर्ध्वे तु समनिं च तदूर्ध्वतः ॥४ ॥
उन्मनीं चिन्तयेदूर्ध्वे ततो ब्रह्मपुरं व्रजेत्।
ब्रह्मरन्ध्रस्थितं शुद्धं सहस्रच्छदमद्भुतम् ॥ ५ ॥
शङ्खिनीशिखरासीनं प्रफुल्लं भानुतेजसा।
सर्वदेवाधिसंस्थानं गुरुराष्ट्रेण वर्त्मना ॥ ६ ॥
हृदिस्थां कुञ्जिकां कृत्वा गत्वा तदुपरि शिवे !
कण्ठाद्यं समनुप्राप्य द्वारं सङ्कोचयेद् हठात् ॥ ७ ॥
उत्थाप्य परमेशानि ! परमात्मनि दीपयेत्।
हुताशनं प्रतप्त्वा तु तापसम्भूतमूर्ध्वता ॥ ८ ॥
प्रसुप्ता नागिनी लिङ्गे योनिवक्त्रे प्रधापयेत्।
ततः प्रचालयेद् वायुं यावन्नाभ्यन्तरेषु च ॥ ९ ॥
गुरुराष्ट्रेण मार्गेण सकृत् तु कुम्भकेन वै।
आक्रम्यैवं ततो जीवः श्वासत्वेन यथाम्भसः ॥१० ॥

ऊर्ध्वश्वासेनोर्ध्वमुखान् कोरकान् पङ्कजान् शिवे ! ।
प्रबोधयन् शनैर्भग्नमेरुश्रृङ्गं नयेत् सुधीः ॥११ ॥
गृहीत्वा प्रविसेद् वापि तत्तद्देवस्वरूपिणीम् ।
चित्रिणीं विवरे रक्तभेदपङ्कसमुद्भवाम् ॥१२ ॥
सत्यदक्षे पार्श्वयोश्च नालस्थां वाहयेच्च ताम् ।
पद्मान् नाडीन् मध्यवर्त्मबोधितान् परमेश्वरि ॥१३ ॥
नालं वार्य विशेत् पद्मान् तेन भेदः प्रजायते ।
यथाऽसौ परतिं रश्मिवह्निं नाययति प्रभुः ॥१४ ॥
भेदयित्वा तथा चक्रं स उ जीवं नयेष्टताम् ।
शिरःस्थानि महेशानि ! चिन्तयेद् गुरुमार्गतः ॥१५ ॥
साङ्गत्ये. . . तयोः सामरस्यं विभाव्य च ।
तदुद्भूतरसेनैव तर्पयेद् देहदेवताम् ॥१६ ॥
पाननिष्ठां सदा हृष्टामानन्दाप्लुतविग्रहाम् ।
पुनस्तेन पथा देवि ! आनयेत् कुलगह्वरम् ॥१७ ॥
एवं यो चिन्तयेद् देवि ! योगं चाहरहः सुधीः ।
आजातयाममन्त्रस्थस्तुभ्यं नित्यं न संशयः ॥१८ ॥
एतद्योगं विना देवि ! दीक्षापूजाजपादिकम् ।
निष्फलं नात्र सन्देहो विजस्थे चषकं यथा ॥१९ ॥
एतत् तत्त्वं परं तत्त्वं यो जानाति स एव हि ।
इत्येतत् कथितं तत्त्वं परं पिण्डविशोधनम् ॥
विना येन न सिद्धिः स्यात् सप्तजन्मकृतात् श्रमात् ॥२० ॥
तथाऽन्यत् सम्प्रवक्ष्यामि गुह्याद् गुह्यतरं महत् ।
यज्ज्ञात्वा सिद्धिमाप्नोति षण्मासादपि साधकः ॥२१ ॥

॥ इति श्रीभूतशुद्धितन्त्रे परमहस्ये तृतीयः पटलः ॥

## ॥अथ चतुर्थः पटलः ॥

भैरव उवाच —

इडायां सञ्चरेच्चन्द्रः पिङ्गलायां च भास्करः ।
सुषुम्नायां सदा वह्नी रेतायोगविशेषतः ॥१ ॥

युगपत्रक्रमोद्योगमहं वेद्मि न चापरः ।
शुद्धचित्तेन सिद्धेन गुरोः प्रियहुतं क्वचित् ॥२ ॥

जानाति परमेशान ! गुरुपादप्रसादतः ।
त्रिधारां वहते तास्तु यस्तां वेत्ति स सर्ववित् ॥३ ॥

इडायां यमुना देवि ! पिङ्गलायां सरस्वती ।
सुषुम्नायां वहेद् गङ्गा तासां योगस्त्रिधा भवेत् ॥४ ॥

सङ्गता ध्वजमूलेन विमुक्ता भ्रूवियोगतः ।
त्रियोगवेणी सा प्रोक्ता तत्र स्नानं महाफलम् ॥ ५ ॥

ग्रहणेऽर्कस्य चेन्दोर्वा सुषुम्नायां सदा शुभे ।
गत्वा त्रिवेण्यां स्नात्वा च मनःसङ्कल्पपूर्वकम् ॥ ६ ॥

ग्रासाद् विमुक्तिपर्यन्तं जप्त्वा सिद्धीश्वरो भवेत् ।
यस्तु मन्त्री सुषुम्नायां विमले बिन्दुतीर्थके ॥ ७ ॥

गयाश्राद्धं कृतं तेन शताब्दं नात्र संशयः ।
त्रिवेण्यां यस्तु स्नायाद्वै पुष्करे वा द्विजाकुले ॥ ८ ॥

तस्य पुण्यफलं वक्तुं न शक्नोमि महेश्वरि ।
नित्यं स्नात्वा च तीर्थेऽस्मिन् जपपूजादिकं चरेत् ॥ ९ ॥

मन्त्रसिद्धिर्भवेत् तस्य पुरश्चर्यादिभिर्विना ।
सहस्रारे गुरुं ध्यात्वा परमानन्दनिर्वृतः ॥
कुर्वीताहरहः कृत्यं न च पापैर्विलिप्यते ॥१० ॥

सहस्रदलपङ्कजं सकलशीतरश्मिप्रभं
वराभयकराम्बुजं विविधगन्धमालान्वितम् ।
प्रसन्नवदनेक्षणं सकलदेवतारूपिणं
स्मरेत् शिरसि हंसगं तदभिधानपूर्वं गुरुम् ॥११ ॥

एतत् ते कथितं तत्त्वं सुगोप्यं पशुसङ्कटे ।
न कस्मैचित् प्रवक्तव्यं यदीच्छेत् सिद्धिमात्मनः ॥१२ ॥

॥ इति श्रीभूतशुद्धितन्त्रे परमरहस्ये चतुर्थः पटलः ॥

॥ग्रन्थश्च समाप्तः ॥



akulavIra tantram

# अकुलवीर तन्त्रम्

## Sanskrit Document Information



Text title : akulviiratantra

File name : akulviiratantra.itx

Category : tantra, devii, devI

Location : doc_devii

Transliterated by : Michael Magee <ac70 at cityscape.co.uk> 1997 - http://www.shivashakti.com/

Proofread by : Mike Magee <ac70 at cityscape.co.uk>

Latest update : January 5,2005

Send corrections to : Mike Magee <ac70@cityscape.co.uk>



September 29, 2018

*sanskritdocuments.org*

# अकुलवीर तन्त्रम्



श्रीमच्छन्दपादकेभ्यो नमः ।
श्रीमीनसहजनन्दं स्वकीयाङ्गसमुद्भवम् ।
सर्वमाधारगम्भीरमचलं व्यपकं परम् ।
अथातः सम्प्रवयामि अकुलवीरं महद्भूतम् ।
गुह्याद् गुह्यतरं गुह्यं सिद्धसद्भावसन्ततिः ॥ १॥

अनग्रहाय लोकानां सिद्धनाथेन भाषितम् ।
गोपनीयं प्रयत्नेन यदीच्छन् शाश्वतं पदम् ॥ २॥

संसारार्णवमग्नातां भूतानां महदाश्रयम् ।
यथा नदीनदाः सर्वे सागरे समुपागताः ॥ ३॥

तथा अकुलवीरेषु सर्वधर्मा लयङ्गताः ।
सर्वाधारमशेषस्य जगतः सर्वदा प्रभुः ॥ ४॥

सहजानन्दं न विन्दन्ति सर्वधर्मसमासृताः ।
अनानन्तमलैर्ग्रस्ता महामायान्धच्छदिताः ॥ ५॥

शास्त्रजालेन सन्तुष्टा मोहितास्त्यजयन्तिताः (?) ।
न विन्दन्ति पदं शान्तं कौलानां निष्कलं गुरुम् ॥ ६॥

संवादयन्ति ये केचिन् न्यायवैशेषिकास्तथा ।
बौधास्तु अरिहन्ता ये सोमसिद्धान्तवादिनः ॥ ७॥

मीमांस पञ्चस्त्रोताश्च वामसिद्धान्तदक्षिणाः ।
इतिहासपुराणञ्च भूततत्त्वन्तु गारुडम् ॥ ८॥

एभिः शैवागमैः सर्वैः परोक्षञ्च क्रियान्विताइः ।
सविकल्पसिद्धिर्सञ्चारन्तत् सर्वं पापबन्धवित् ॥ ९॥

विकल्पबहुलाः सर्वैर्मिथ्यावादा निरर्थकाः ।

न ते मुञ्चन्ति संसारे अकुलवीरविवर्जिताः ॥ १०॥

सर्वज्ञं सर्वमासृत्य सर्वतो हितलक्षणम् ।
सर्वेषां सिद्धिस्तत्रस्था सर्वसिद्धिश्च तत्र वै ॥ ११॥

यत्नासौ अकुलवीरो दृश्यते सर्वतोमुखम् ।
तं विदित्वा परं रूपं मनो निश्चलतां व्रजेत् ॥ १२॥

शब्दरूपरसस्पर्शगन्धश्चैवात्र पञ्चमम् ।
सर्वभावाश्च तत्रैव प्रलीणाः प्रलयं गताः ॥ १३॥

भावाभावविनिर्मुक्त उदयास्तमनवर्जितः ।
स्वभावमतिमतं शान्तं मनो यस्य मनोमयम् ॥ १४॥

अकुलवीरमिति ख्यातं सर्वाधारपापरम् ।
नाधारलक्षभेदन्तु न नादगोचरे पठेत् ॥ १५॥

हृदि स्थाने न वक्रे च घण्टिका तालरन्ध्रके ।
न इडा पिङ्गला शान्ता न चास्तीति गमागमे ॥ १६॥

न नाभिचक्रकण्ठे च न शिरे नैव मस्तके ।
तथा चक्षुरुन्मीलने च न नासाग्रनिरीक्षणे ॥ १७॥

न पूरककुम्भके तत्र रेचके [च] तथा पुनः ।
न बिन्दुभेदके ग्रन्थौ ललाटे न तु वह्निके ॥ १८॥

प्रवेशनिर्गमे नैव नावाहनविसर्जनम् ।
न करणैर्नासनं मुद्रैर्नमासे भिन्नतालुके ॥ १९॥

न निरोधो न चोद्धारो नातीतां चालनं न हि ।
न प्रेर्यप्रेरकञ्चैव न स्थानन्नैव चश्रयम् ॥ २०॥

न चात्मनैव तद् ग्राह्यं ग्राह्यातीतपदं भवेत् ।
एतत् पक्षविर्निर्मुक्तं हेतुदृष्टान्तवर्जितम् ॥ २१॥

न दूरे न च वै निकटे न भरितो न च रिक्तकः ।
न उन्नोन सोऽधिक एभिः पक्षैर्विवर्जितम् ॥ २२॥

यश्च विंशात्मको ह्येष पुद्गल नास्ति यत्र वै ।
यत्र लक्षं न विद्येत अकुलवीर स उच्च्यते ॥ २३॥

यस्यैवं संशितं कऽश्चित् समरस संशितः ।
स ब्रह्मा सो हरिश्चैशः स रुद्रो स च ईश्वरः ॥ २४॥

स शिवः परमदेवः स सोमार्काग्निकस्तथा ।
स च साङ्ख्यः पुराणाश्च अर्हन्तबुद्ध एव च ॥ २५॥

स्वयं देवी स्वयं देवः स्वयं शिष्यः स्वयं गुरुः ।
स्वयं ध्यानं स्वयं ध्याता स्वयं सर्वत्र देवता ॥ २६॥

यादृशेन तु भावेन पुरुषो भावयेत् सदा ।
तादृशां फलमाप्नोति नात्र कार्यविचारणात् ॥ २७॥

अस्यैव हि हि नामानि पृथग्भूतानि योगिभिः ।
अनाम तस्य गियन्ते भ्रान्तिज्ञानविमोहितैः ॥ २८॥

धर्माधर्मसमाक्लिष्टाविकल्पतमश्छादिताः ।
तेन मुञ्चन्ति संसारं नरकं योनिसङ्कुलम् ॥ २९॥

अकुलवीरं महद्भूतं यदा पश्यन्ति सर्वगम् ।
स बाह्याभ्यन्तरे नित्यं एकाकारं चराचरम् ॥ ३०॥

निस्तरङ्गं निराभासं पदभेदविवर्जितम् ।
सर्वावयवनिर्मुक्तं निर्लयं निर्विकारजम् ॥ ३१॥

अदृष्टनिर्गुणं शान्तं तत्त्वातीतं निरञ्जनम् ।
सर्वज्ञं परिपूर्णञ्च स्वभावश्चैवमक्षयम् ॥ ३२॥

कार्यकारणनिर्मुक्तमचिन्त्यमनामयम् ।
मायातीतं निरालम्बं व्यापकं सर्वतोमुखम् ॥ ३३॥

समत्वं एकभूतञ्च ऊहापोहविवर्जितम् ।
अकुलवीरं महद्भूतं अस्तिनास्तिविवर्जितम् ॥ ३४॥

न मनो न च वै बुद्धिर्न चिन्ताचेतनादिकम् ।
न कालः कलनाशक्तिर्न शिवो न च इन्द्रियः ॥ ३५॥

न भूते गृह्यते सो हि न सुखं दुःखमेव च ।
न रसो हि न सुखं दुःखमेव च ॥ ३६॥

न रसो विरसश्चैव न कृतो न च जायते ।
न च्छाय न च तापस्तु न शीतो न च उष्णवान् ॥ ३७॥

न दृश्यते मन स्तत्र उदयास्तमनवर्जितम् ।
न सीमा दृश्यते तत्र न च तिर्थ्यं न चर्हिवर्हि ॥ ३८॥

अद्वैतमचलं शान्तं सङ्गदोषविवर्जितम् ।
निराकुलं निर्विकल्पञ्च निबद्धञ्च मलक्षणम् ॥ ३९॥

अनाथं सर्वनाथञ्च उन्मनां मदवर्जितम् ।
अनिगृढमसन्धिञ्च स्थावरं जङ्गमेव च ॥ ४० ॥

ज्वलज्वलनभूम्या च आपोञ्चैव तथैव च ।
सर्वं समरसं पूर्णं अकुलवीरन्तु केवलम् ॥ ४१ ॥

यस्यैषा सम्।स्थिता मुक्तिः स मुक्तो भवबन्धनात् ।
न तस्य मातापिता व बान्धवं न च देवता ॥ ४२॥

न यज्ञं नोपवासञ्च न क्रिया वर्णभेदकम् ।
त्यक्त्वा विकल्पस।घातं अकुलवीरलयं गताः ॥ ४३॥

न जपो नार्चनं स्नानं न होमं नैव साधनम् ।
अग्निप्रवेशनं नास्ति हेतन्तभृगु नोदनम् ॥ ४४॥

नियमोऽपि न तस्यास्ति नोपवासो विधीयते ।
पितृकार्यं न करोताति तीर्थयात्राव्रतानि च ॥ ४५॥

धर्माधर्मफलं नास्ति न स्नानं नोदकक्रिया ।
स्वयं त्यज सर्वकार्याणि लोकाचाराणि यानि च ॥ ४६ ॥

समयाचारविचारञ्च कृतका बन्धकानि तु ।
सङ्कल्पञ्च निकल्पञ्च ये चान्ये किल धर्मिणः ॥ ४७॥

भवे योगी निराचारो पशुचारविवर्जितः ।
सिद्धिश्चविविधाकार पाताले च रसायनम् ॥ ४८॥

प्रत्यक्षञ्च या लब्धं न गृह्णीयात् कदाचन ।
सर्वञ्च पाशजालञ्च अधोमार्गप्रदायकः ॥ ४९॥

एतेषु मोचना नास्ति अकुलवीरविवर्जिताः ।
यथा मृताः न जानन्ति स्वादं कटुमधुरस्य तु ॥ ५०॥

तथा अकुलवीरन्तु न जानन्ति स्वभावगम् ।

यथा मदिरा महान्तस्य कथितं नेवशकृते ॥ ५१॥

रस्यपरमानन्दमतिगुह्यं सुगोपितम् ।
लोकानां च हितार्थाय सिद्धनाथेन भाषितम् ॥ ५२॥

निर्विकल्पं पदं शान्तं यत्र लीनं परापरम् ।
मोक्षस्य तन्महास्थानं मन्त्ररूपविवर्जितम् ॥ ५३॥

तत्रैव सृष्टिरूपेण पुनस्तत्र लयं गता ।
किन्तेन बहुनोक्तेन सर्वबन्धविवर्जितम् ॥ ५४॥

अकुलवीरं यदा लब्धं तदा किं कौलिकैः क्रमैः ।
लब्ध्वा तु मोक्षसद्भावं अकुलवीरं महापहम् ॥५५॥

कौलमार्गे द्वयो सन्ति कृतका सहजा तथा ।
कुण्डलि कृतका ज्ञेया सहजा समरस स्थिता ॥ ५६॥

प्रेर्यप्रेरकभावस्था कृतका साऽभिधीयते ।
ततः स पातयेद् भूमै मुद्रामन्त्रैर्नियोगितैः ॥ ५७॥

आहुते पतने चान्ये कर्णजापेन धूपकैः ।
एतत् साध्यमिदं तत्त्वं एतद् ध्यानञ्च धारणा ॥ ५८॥

अनेकैः कर्मसङ्घातैः नानामार्गविभावनैः ।
विकल्पकललोल्लोया उद्भ्रान्ता भ्रान्तचेतसः ॥ ५९॥

हृदि शोकेन सन्तप्ता व्यासङ्गाच्च महाभयैः ।
हर्षविषादसम्पन्ना शोच्यमाना मुहुर्मुहुः ॥ ६०॥

तावद्भ्रमन्ति संसारे कल्पाकल्पैर्भवार्णवैः ।
दग्धबीजेषु सम्भूतिर्यथा नैव प्रजायते ॥ ६१॥

मूलछिन्ने यथा वृक्षे न प्ररोहं विद्यते ।
अकुलवीरगतं भिन्नं नानाभावानुबन्धनैः ॥ ६२॥

न बध्यते यथा विमले रसं विप्रलयं गतम् ।
तद्वदकुलवीरे च सत्त्वे भ्राभ्राख्य यद्गतः ॥ ६३॥

तिमिरेण यथाच्छन्नमुदितार्कं न पश्यति ।
अज्ञानमनस्तद्वद् भ्रान्तिजालविमोहिता ॥ ६४॥

अकुले वीरे च सम्प्राप्ते सर्वमेतद्विनिश्यति ।
दधिमधे यथा सर्पिः काष्ठे चाग्नि स्थितो यथा ॥ ६५॥

पुष्पे गन्धस्तिले तैलं वृक्षे चाया समाश्रिता ।
मद्यमध्ये यथानन्दं दीपे प्रभा समाश्रिता ॥ ६६॥

पद्ममध्ये च कुण्डल्या अङ्गप्रत्यङ्गमेव च ।
रक्तार्थाकुलवीरे च तत्सर्वं विनियोजितम् ॥ ६७॥

भावाऽभावादिसम्। युक्तैः प्रत्ययैर्दृष्टिगोचरैः ।
अकुलवीरं न जानन्ति कृतकैर्मोहितात्मनः ॥ ६८॥

पाशजालनिबद्धाश्च महामायविमोहिताः ।
न जानन्ति पदं शान्तमचिन्त्यं नित्यसम्भवः ॥ ६९॥

सर्वव्यापिभावस्थं स्थानवर्णविवर्जितम् ।
सर्वभूतस्थितं ह्येकमध्ययं धेयवर्जितम् ॥ ७०॥

स च सर्वगतो भावः स्थिरे पूर्णो निरन्तरे ।
तत्र मनो विलीनन्तु अचलं भवतन्मयम् ॥ ७१॥

मनोवृद्धिस्तथा चिन्त्यं क्षिप्ता तन्मयतां गता ।
यथा तिष्ठति तत्त्वस्थः शिवनिष्कलमव्यये ॥ ७२॥

तदा तन्मयतां याति निर्मलं निश्चलं पदम् ।
अकुलवीरं महद्भुतमेकवीरं च सर्वगम् ॥ ७३॥

दुर्लभं सुरसिद्धानां योगिनीनाञ्च गोचरम् ।
केचिद् वदन्तीदं धर्ममिदं शास्त्रमिदं तपः ॥ ७४॥

अयं लोकमिमं स्वर्गमिदं साध्यमिदं फलम् ।
इदं ज्ञानञ्च विज्ञानं शुद्धाशुद्धमिदं परम् ॥ ७५॥

ज्ञेयञ्च तत्त्वकूटञ्च यत्र ध्यानञ्च धारणा ।
तदासौ योगिनी ह्येकः नान्यस्तु हि द्वितीयकः ॥ ७६॥

अनागतन्तु गतञ्चैव न हच्छेन्न च तिष्ठति ।
न भूतं न भविष्यञ्च स्थितिप्रलयवर्जितम् ॥ ७७॥

न चाहं प्रचितैर्दोषैः लिप्तते न कदाचन ।
नाहं कश्चिन्न मे कश्चिन्न बद्धो न च बाधकः ॥ ७८॥

न मुक्ति वै न च न मुक्तमे मोक्षस्य च स्पृहा ।
गच्छंस्तिष्ठन् स्थपन् जाग्रद्भूञ्ञानओ मैथुनेऽपि वा ॥ ७९॥

भयदारिद्रशोकैश्च विविधैर्भक्षणैस्तथा ।
चिकित्सा नैव कुर्वीत इन्द्रियार्थैः कदाचन ॥ ८०॥

आचरेत् सर्ववर्णैस्तु न तु भक्ष्यं विचारयेत् ।
एवं स चरते योगी यथारण्ये हुताशनः ॥ ८१॥

पिण्डबधाञ्च नानास्ति अवस्था मुर्खवासनाम् ।
सोमशून्यस्तथा वह्निप्राणायमवर्जितम् ॥ ८२॥

अप्रमेयनिराभासं धारणाध्यानवर्जितम् ।
येन जन्मसहस्राणि भक्त्या सम्पूजितो गुरुः ॥ ८३॥

ते लभन्ति महाज्ञानं अकुलवीरन्तु मोक्षदम् ।
योगिनीराकिणीचक्रे यस्य भक्तिः सुनिश्चला ॥ ८४॥

अकुलवीरं महद्भूतं गम्भीरं गहनामयम् ।
पिण्डातीतं यदा ज्ञेयमपिण्डं पिण्डवर्जितम् ॥ ८५॥

पदव्यञ्जननिर्मुक्तं विमलं सततोदितम्।
तल्लिने तन्मयात्मानं विन्दते श्वाश्वतं पदम् ॥ ८६॥

चितातीतं भवेत् सो हि योगसंयोगवर्जितम् ।
निर्वाणं वासनाहीनं तृप्तात्म च निरामयः ॥ ८७॥

तेन लब्ध्वा न सन्देहोऽमला मलच्छेदनाः ।
तस्य प्रवर्त्तते क्षिप्तं तस्यैव सर्वसर्वगम् ॥ ८८॥

वेदसिद्धान्तशास्त्राणि नानाविधानि शिखानि च ।
तानि सर्वाणि मोहानि कायक्लेशैर्निरर्थकम् ॥ ८९॥

विद्याहङ्खारग्रस्तास्तु गर्विताः कुगतिं गताः ।
अनर्थेन च सन्तुष्टा बहुग्रन्थार्थचिन्तकाः ॥ ९०॥

अकुलवीरं न विन्दन्ति कृतकैर्मोहितामनः ।
गर्वितानं कुतो ज्ञानं ग्रन्थकोटिशतैरपि ॥ ९१॥

कर्पूरकुङ्कुमादीनां वस्त्रताम्बूलमेव च ।

खरवद्भवति तद्द्वारं सर्वं तस्य निरर्थकम् ।
अकुलवीरञ्च देहस्थं यदा पश्यति सर्वगम् ॥ ९२॥

धर्माधर्मफलं नास्ति नोदकं तीर्थसेवना ।
न क्रिया सत्यश्चैवं वा कर्मकाण्डे न भावना ॥ ९३॥

न तस्य कर्मकर्माणि लोकाचाराणि यानि च ।
चरिताः समयाचारा जनैर्भ्रान्तिविमोहितैः ॥ ९४॥

अकुलवीरं न जानन्ति किं विशिष्टं कुतः स्थितम् ।
कृतका बन्धना लोके कल्पिताश्च कुपण्डितैः ॥ ९५॥

सम्।कल्पविकल्पञ्च कलाकर्माणि यानि च ।
सिद्धयो विविधा लोके पातालं च रसायनम् ॥ ९६॥

प्रत्यक्षञ्च यदा लब्धं न विगृह्णीयात् कदाचन ।
सर्वे ते पाशबद्धाश्च अधोमार्गप्रदायकाः ॥ ९७॥

न चैतैर्मुक्तिः सम्।सारे अकुलं बीरवर्जिताः ।
यथा मदिरमानन्दं कथितं नैव जायते ॥ ९८॥

तद्वदकुलवीराख्यं स्वसम्।वेद्यनिरोपणम् ।
न जानन्ति नरा मूढाः सारात् सारतरं परम् ॥ ९९॥

तावद् भ्रान्तिविमुग्धात्मा यावत्तलं न विन्दति ।
चितातीते यदा योगी स योगी योगचिन्तकः ॥ १००॥

विरक्ता वासना यस्य तृप्तात्म च निरामयः ।
तावद् भ्रमन्ति मोहात्मा नानाभावानुबन्धनैः ॥ १०१॥

यावत् सममेकत्वं परमानन्दं न विन्दति ।
मुर्खाणां च यथाशास्त्रं कुमारीसुरतिं यथा ॥ १०२॥

अकुलवीरं विन्दन्ति कथ्यमानैः कुमारिकाः ।
दिशवेशाविनिर्मुल्तं स्थानवर्णविवर्जितम् ॥ १०३॥

निराकुलं निर्विकल्पं निर्गुणञ्च सुनिर्मलम् ।
अनाथं सर्वनाथञ्च प्रमादोन्मादवर्जितम् ॥ १०४॥

घननिविडनिसन्धिस्थावरे जङ्गमेषु च ।
जले ज्वलने तथा पवने भूम्याकाशे तथैव च ॥ १०५॥

सर्वत्र समरसं भरितमकुलवीरन्तु केवलम् ।
न ज्ञातं येन देहस्थं स मुक्तः सर्वबन्धनात् ॥ १०६॥

न तस्य क्रियाबन्धेन न वेद्यं न च वेदना ।
न यज्ञो नोपवासश्च न चर्या न क्रियोदयः ॥ १०७॥

न वर्णो वर्णभेदश्च अकुलवीरं यदागतम् ।
न जापो नार्चानग्नीनां न होमो नैव साधनम् ॥ १०८॥

नाग्निप्रवेशनन्तस्य मन्त्रपूजाचरणोदकम् ।
नियमाश्च न तस्यास्ति क्षेत्रपीठे च सेवनैः ॥ १०९॥

न क्रिया नार्चनाकाद्यैर्न तीर्थानि व्रतानि च ।
निरालम्बपदं शान्तं तथातीतं निरञ्जनम् ॥ ११०॥

सर्वज्ञपरिपूर्णञ्च स्वभावेन विलक्ष्यते ।
कार्यकारणनिर्मुक्तमचिन्तितञ्च अनामयम् ॥ १११॥

मायातीतं निरालम्बं व्यापकं सर्वतोमुखम् ।
स्वदेहे संस्थितं शान्तमकुलवीरं तदुच्यते ॥ ११२॥

समस्तमेकदाभूतं द्वैताभावविवर्जितम् ।
अकुलवीरं महद्भूतमस्तिनास्तिविवर्जितम् ॥ ११३॥

मनोबुद्धिचित्तस्तचित्ता नैव स्वचेतना ।
न कालकलना चैव न शक्तिश्च न चेन्द्रियः ॥ ११४॥

न भूते गृह्यते सो हि न दुःखं सुखमेव च ।
न रसोऽधिरसश्चैव कृतकं नैव कारकम् ॥ ११५॥

न च्छाया नातपो वह्निर्न च शीतोष्णववेदना ।
न दिनं रात्रिमित्युक्तमुदयास्तमनवर्जितम् ॥ ११६॥

न मनो दृश्यते तत्र नोर्ध्वमध्यं च ज्ञायते ।
अक्षोभ्यमचलं शान्तमीदृशं तत्त्वनिर्णयम् ॥ ११७॥

यादृशेन तु भावेन पुरुषो भावयेत् सदा ।
तादृशं फलमाप्नोति नात्र कार्यविचारणात् ॥ ११८॥

एवञ्च कुलसद्भावमवाच्यं परमामृतम् ।

अगम्यं गम्यते कस्माद् भ्रान्तिज्ञानविहोहिताः ॥ ११९॥

न दूरे न निकटे चैव प्रत्यक्षं न परोक्षता ।
न भरितो न रिक्तो वा निपुणो नापि चाधिकः ॥ १२०॥

एतत्पक्षविनिर्मुक्तो हेतुदृष्टान्तवर्जितः ।
कृतकैर्मोहिता मूढाः कर्मकाण्डरतास्तु ये ॥ १२१॥

न तेषां मुक्तिः संसारे नरके योनिसङ्कुले ।
अकुलवीरं महद्भूतं यदा पश्यति सर्वगम् ॥ १२२॥

सबाह्याभ्यन्तरैकत्वं सर्वत्रैव व्यवस्थितम् ।
निस्तरङ्गं निराभासं पदच्छेदविवर्जितम् ॥ १२३।
सर्वावयवनिर्मुक्तं निर्विकारञ्च निर्मलम् ।
अदृश्यं निर्गुणं नित्यं निर्णिरोधञ्च निश्चलम् ॥ १२४॥

न ध्यानं धारणा नैव न स्थानं वर्णमेव च ।
न रेचकं पूरकञ्चैव नरोद्घातञ्च कुम्भकम् ॥ १२५॥

न चान्तमादिमध्यस्थं न सतो वृद्धिरेव च ।
ग्राह्यग्राहकनिर्मुक्तग्रन्थातीतञ्च यद्भवेत् ॥ १२६॥

एतैः सर्वैर्विनिर्मुक्तं हेतुदृष्टान्तवर्जितम् ।
सबाह्याभ्यन्तरैकत्वं सर्वत्रैव व्यवस्थितम् ॥ १२७॥

समरसानन्दरूपेण एकाकारं चराचरे ।
ये च ज्ञातं स्वदेहस्थमकुलवीरं महद्भूतम् ॥ १२८॥

यस्या वशं स्थितः कश्चित् समरसं रससंस्थितम् ।
स ब्रह्मा स हरिश्चैव स रुद्रश्चैवेश्वरस्तथा ॥ १२९॥

स शिवः शाश्वतो देवः स च सोमार्कशङ्करः ।
स विशाख्यो मयुराक्षो अर्हन्तो बुधमेव च ॥ १३०॥

स्वयं देवि स्वयं देवः स्वयं शिष्यः स्वयं गुरुः ।
स्वयं ध्यानं स्वयं ध्याता स्वयं सर्वेश्वरो गुरुः ॥ १३१॥

सर्वज्ञः सर्वमासृत्य सर्वतो हितलक्षणः ।
सर्वयोगिनी तत्रस्था सर्वे सिद्धाश्च तत्र वै ॥ १३२॥

सर्वं सर्वार्थकं चैव सर्वज्ञानश्च तत्र वै ।

यथासौ महार्थञ्च अकुलवीरमिति स्मृतम् ॥ १३३॥

शब्दः स्पर्शौ रसो रूपं गन्धो वद्याणिपम च ।
सर्वे भीराश्च तत्रैव ये प्रलीनाः प्रलयं गताः ॥ १३४॥

नाधारे ध्येयलक्ष्ये च न नादगोचरे परे ।
न हृदि नाभिकण्ठे वा वक्रे घण्टिकरन्ध्रयोः ॥ १३५॥

न इडा पिङ्गला चैव सुष्मण च गमागमैः ।
न नाभिचक्रे कण्ठे च न शिरे बिन्दुके तथा ॥ १३६॥

चक्षुकर्णोन्मीलनं नैवं नासिकाग्रनिरीक्षणे ।
न पूरके कुम्भके चैव रेचके च तथा पुनः ॥ १३७॥

न बिन्दुभेदग्रन्थौ च ललाटे न च चन्द्रमाः ।
प्रवेशे निर्गमे चैव शिखा ऊर्द्धे न बिन्दुके ॥ १३८॥

न करैर्न सरैर्मुद्रैः नाकाशो वायुमण्डले ।
न चापे चन्द्रसूर्यै च भावाभावे समागमे ॥ १३९॥

अनौपम्यं निरालम्बं पक्षापक्षविवर्जितम् ।
अज्ञानमलग्रस्तात्मा महामायविमोहिताः ॥ १४०॥

शास्त्रार्थेन विमुढात्मा मोहिता विदुषो जनाः ।
न विदन्ति पदं शान्तं कैवल्यं निश्क्रियं गुरुम् ॥ १४१॥

सङ्ख्यादयश्च ये केचित् न्यायवैशेषिकास्तथा ।
बौद्धारहन्ताश्च ये केचित् सोमसिद्धान्तदक्षिणाः ॥ १४२॥

मीमांसा पञ्चरात्रञ्च वामदक्षिणकौलिकाः ।
इतिहासपुराणानि भूततत्त्वञ्च गारुडम् ॥ १४३॥

एते चैव समाः सर्वे केचित् वाऽपि क्रियान्विताः ।
विकल्पसिद्धिदाः सर्वे तद्विदुर्न च पण्डिताः ॥ १४४॥

विकल्पबहलाः सर्वे मिथ्यावादनिरर्थकाः ।
न ते मुच्यन्ति संसारे अकुलवीरविवर्जिताः ॥ १४५॥

यानि कानि च स्थानानि गिरिर्नगरसागरम् ।
सर्वत्र संस्थितं नित्यं स्थावरे जङ्गमेषु च ॥ १४६॥

पञ्चभूतात्मकं सर्वे यत् किञ्चित् सचराचरम् ।
शिवाद्यदेवपर्यन्तं सर्वं तत्रैव संस्थितम् ॥ १४७॥

ईदृशं योगिनं दृष्ट्वा उपसर्पन्ति ये नराः ।
गन्दैः पुष्पैश्च धूपैश्च खानपानादिभक्षणैः ॥ १४८॥

तर्पयन्ति च ये भक्तास्त्रिविधैश्चैवान्तरात्मना ।
तेऽपि बन्दैः प्रमुच्यन्ति मुक्तिमार्गी न काङ्क्षिणः ॥ १४९॥

ब्रहेन्द्रविष्णुरुद्रञ्च अरहन्ता बुद्धमेव च ।
विषाख्यो मयूराक्ष ये च ऋषयस्तपोधनाः ॥ १५०॥

देवादिभो नरेन्द्राश्च ये चान्ये मोक्षकाङ्क्षिणः ।
ते सर्वे मोक्षमिच्छन्ति अकुलवीरन्तु मोक्षदम् ॥ १५१॥

अथान्यं सम्प्रवक्ष्यामि भिन्नावस्थां स्वभागः ।
पूर्वं यदुक्ता सर्वे अन्वयमार्गे त्वकौलिके ॥ १५२॥

* * * * * * * * * * *
* * * * * * * नात्र संशयः ॥ १५३॥

न जरास्तेषां न मृत्युश्च न शोको दुःखमेव च ।
सर्वव्याधिहरश्चैव न पुनर्भवसम्भवः ॥ १५४॥

अकुलवीरं स्थितं दिव्यं सिद्धनाथप्रसादतः ।
सर्वतः सर्वदा शुद्धः सर्वतः सर्वदा प्रभुः ॥ १५५॥

इति मच्छेन्द्रपादावतारिते कामरूपिस्थाने
योगिनीप्रसादाल्लब्धं अकुलवीरं समाप्तम् ।

Encoded by Mike Magee ac70@cityscape.co.uk

*akulavIra tantram*
pdf was typeset on September 29, 2018

Please send corrections to *sanskrit@cheerful.com*

# अथ योगप्रकरणन्तृतीयम् ॥ ३ ॥



( १ ) मूलाधारादिषट्चक्रसहस्रारोपरि स्थितम् ॥ योगज्ञानैकफलकं रामचन्द्रपदं भजे॥१॥

अथ योगज्ञानयोरन्योन्याश्रयत्वमाह ।

( २ ) योगहीनं कथं ज्ञानं मोक्षदं भवतीह भोः॥ योगोऽपि ज्ञानहीनस्तु न क्षमो मोक्षकर्मणि ॥ तस्माज्ज्ञानं च योगञ्च मुमुक्षुर्दृढमभ्यसेत् ॥२॥

( ३ ) सर्वे वदन्ति शस्त्रेण जयो भवति नान्यथा ॥ विना युद्धेन वीर्येण कथञ्जयमवाप्नुयात् ॥ तथा ज्ञानेन कैवल्यं तद्योगररहितन्न हि ॥ ३ ॥

अथ योगस्य परत्वमाह ।

( ४ ) जन्मान्तरैश्च बहुभिर्योगो ज्ञानेन लभ्यते ॥ ज्ञानन्तु जन्मनैकेन योगादेव

( १ ) योगचूडामण्युपनिषद् प० ४४५ । पृ० २ । पं० ३ ॥
( २।४ ) योगशिखोपनि० अ० १ । श्लो० १३ । ५२ । ५१ । प० ६०६ । पृ० २ । पं० ९।१ ॥
( ३ ) योगबीजो० प० ३ । पृ० २ । प० ४ ।

प्रजायते ॥ तस्माद्योगात्परतरो नास्ति मार्गस्तु मोक्षदः ॥ ४ ॥

( १ ) योगमार्गे मोक्ष एव प्रार्थयन्ते ॥ ५ ॥

अथ योगलक्षणम् ।

( २ ) मनः प्रशमनोपायो योग इत्यभिधीयते ॥ ५ ॥

( ३ ) यदा पञ्चावतिष्ठन्ते[१] ज्ञानानि[२] मनसा सह ॥ बुद्धिश्च न विचेष्टते[३] तमाहुः परमां[४] गतिम् ॥ तां योगमिति मन्यन्ते स्थिरामि[५]न्द्रियधारणाम्[६] ॥ ६ ॥

---

१-निर्व्यापाराणि भवन्ति ॥ २-श्रोत्रादिज्ञानेन्द्रियाणि ॥ ३-व्यापारवती न भवति ॥ ४-आत्मनो भानस्य साधनभूताम ॥ ५-लय, विक्षेप, कषाय, रसास्वादादिविघ्नैरकम्पाम् ॥ ६ ज्ञानेन्द्रियमनोबुद्धिनैश्चल्यरूपामवस्थाम् ॥

---

( १ ) भिक्षुकोपनिषत् प० ५६६ । पृ० २ । पं० ६ ॥

( २ ) महोपनिषद् अ० ५ । श्लो० ४२ । प० ५८९ । पृ० १ । पं० ३ ॥

( ३ ) कठोपनि० अ० २ । व० ९ । प० १२ । पृ० २ । पं०४॥

(१) अपानप्राणयोरैक्यं स्वरजोरेतसोस्तथा ॥ सूर्याचन्द्रमसोर्योगो जीवात्मपरमात्मनोः ॥ एवन्तु द्वन्द्वजालस्य संयोगो योग उच्यते ॥ ७ ॥

अथ योगसाधनानि ।

(२) षट्चक्रं षोडशाधारं त्रिलक्ष्यं व्योमपञ्चकम् ॥ स्वदेहे यो न जानाति तस्य सिद्धिः कथं भवेत् ॥ ८ ॥

अथ मन्त्रयोगः ।

(३) अनाख्येयमिदं गुह्यं योगिनां कोशसन्निभम् । हंसस्याकृतिविस्तारं भुक्तिमुक्तिफलप्रदम् ॥ ९ ॥

---

(१) योगशिखोपनिषत् अ० १ । श्लो० ६८ । प० ६१० । पृ० २ । पं० १ ॥

(२) योगचूडामण्युपनिषद् श्लो०३ । प० ४४५ । पृ०१। पं०५॥

(३) हंसोपनि० प० १९४ । पृ० ३ । प० ५ ॥

अथ षट्चक्राण्याह ।

(१) चतुर्दलं स्यादाधारं स्वाधिष्ठानं च षड्दलम् । नाभौ दशदलं पद्मं हृदये द्वादशारकम् ॥ १० ॥ षोडशारं विशुद्धाख्यं भ्रूमध्ये द्विदलं तथा ॥ सहस्रदलसङ्ख्यातं ब्रह्मरन्ध्रे महापथि ॥ ११ ॥

१–आधारचक्रं चतुर्दलं तप्तहेमवर्णाभं वँ शँ षँ सँ विभूषितं मध्ये त्रिकोणमिच्छाज्ञानक्रियात्मकं तन्मध्ये स्वयंभूलिङ्गं कोटिसूर्यसमप्रभं सवाहनं सशक्ति श्रीगणेशाधिष्ठितं विभावयेत् ॥ २–स्वाधिष्ठानचक्रं षड्दलं वह्निवर्णं हीरकप्रभं वँ भँ मँ यँ रँ लँ भूषितं सवाहनशक्ति ब्रह्माधिष्ठितं भावयेत् ॥

३–मणिपूरकाब्जं दशदलं नीलजीमूतसन्निभं बहुतेजोमयं डँढँणँ तँथँदँधँनँपँफँ संयुतं सवाहनं सशक्ति श्रीविष्ण्वधिष्ठितं विभावयेत् ॥ ४–अनाहताब्ज द्वादशदलं प्रवालरुचिवर्णमुद्यतादित्यसन्निभं कँखँगँघँङँचँछँजँझँञँटँठँसंयुतं मध्ये बाणाख्यलिङ्गं सूर्यायुतसमप्रभं सवाहनं सशक्ति रुद्राधिष्ठितं भावयेत् ॥ ५ विशुद्धाब्जं षोडशदलं धूम्रवर्णं महत्प्रभं सबिन्दुस्वरभूषितं प्रदीपकलिकाकारं जीवात्माधिष्ठितं भावयेत् ॥ ६ आज्ञाचक्र द्विदलं चन्द्राभं हँक्षंभूषितं दिव्यसौदामिनीनिचयाकारं निर्वाणाख्यपरमात्माधिष्ठितं भावयेत् ॥–

(१) योगचूडामण्युपनिषद् पं० ४४५ । पृ० २ । पं० ८ ॥

( १ ) आधारं गुदमित्युक्तं स्वाऽधिष्ठानं तु लैङ्गिकम् ॥ मणिपूरं नाभिदेशं हृदयस्थमनाहतम् ॥ १२ ॥

विशुद्धिः कण्ठमूले च आज्ञाचक्रं च मस्तकम् ॥ षट्चक्राणि परिज्ञात्वा प्रविशेत्सुखमण्डले ॥ १३ ॥

अथ वैष्णवीमुद्रायाः सामान्यलक्ष्यमाह ।

( २ ) गुदमेढ्रान्तरालस्थं मूलाधारं त्रिकोणकम् ॥ १४ ॥

( ३ ) तप्तचामीकराभासं तडिल्लेखेव विस्फुरत् ॥ १५ ॥

---

—७ सहस्रारं हिमवर्णाभं स्फटिकप्रभं सर्ववर्णविभूषितं तन्मध्ये श्वेतवर्णं द्विभुजं वराभयकरं श्वेतमाल्यानुलेपनं स्वप्रकाशरूपं स्ववामस्थितरक्तशक्त्या स्वप्रकाशरूपया सहितं गुरुं भावयेत् ॥

१—रक्ताम्बरधारिणम् ।

---

( १ ) योगकुण्डलिन्युप० अ० ३ । श्लो० १० । ११ । प० ७५० । पृ० १ । प० ९ ॥

( २ ) योगतत्त्वोपनिषद् अ० १ । श्लो० १६९ । प० ६१७ । पृ० १ । प० ५ ॥

( ३ ) योगचूडामण्युप० श्लो० ९ । प० ४४६ । पृ० १ । पं० ५ ॥

(१) तस्य मध्यगतं वह्निम्प्रज्वलेद्दीपवर्त्तिवत् ॥ १६ ॥

अथ मठप्रकारः ।

(२) सुशोभनं मठं कुर्यात्सूक्ष्मद्वारन्तु निर्व्रणम्[१] ॥ मत्कुणैर्मशकैर्लूकैर्वर्जितं च प्रयत्नतः ॥ १७ ॥

अथासनविधिः ।

नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥ १८ ॥

अथाभ्यासविधिः ।

(३) सिद्धासने स्थितो योगी मुद्रां संधाय वैष्णवीम् ॥ १९ ॥

---

१ भूमिगतविवरादिरहितम् ॥

---

(१) योगशिखोपनि० श्लो० ७८ । प० ६१० । पृ०२ । पं०९॥
(२) योगतत्त्वोपनिषत् श्लो० ३२ । प० ३८८ । पृ० २ । पं० ६ ॥
(३) नादबिन्दूपनिषद् श्लो० ३१ । प० ३६९ । पृ०२ । पं०३॥

( १ ) गुदमवष्टभ्याधाराद्वायुमुत्थाप्य स्वाधिष्ठानं त्रिः प्रदक्षिणीकृत्य मणिपूरकं च गत्वा अनाहतमतिक्रम्य विशुद्धौ प्राणान्निरुध्याज्ञामनुध्यायन्ब्रह्मरन्ध्रं ध्यायन् त्रिमात्रोऽहमित्येवं सर्वदा ध्यायन् ॥ २० ॥

( २ ) अकारे रेचितं पद्ममुकारेणैव भिद्यते । मकारे लभते नादमर्धमात्रा तु निश्चला ॥ २१ ॥

( ३ ) अनाहतस्वरूपेण ज्ञानिनामूर्ध्वगो भवेत ॥ तैलधारामिवाच्छिन्नं दीर्घघण्टानिनादवत् ॥ २२ ॥ प्रणवस्य ध्वनिस्तद्वत्तदग्रं ब्रह्म चोच्यते ॥ ज्योतिर्मयं तदग्रं स्यादवाच्यं बुद्धिसूक्ष्मतः ॥ २३ ॥

अथ नादस्वरूपम् ।

( ४ ) अथो नादमाधाराद् ब्रह्मरन्ध्रपर्यन्तं शुद्धस्फटिकसङ्काशं स वै ब्रह्म परमात्मेत्युते ॥ २४ ॥

---

( १ ) हंसोपनि० । प० १९४ । पृ० २ । पं० ८ ॥
( २ ) योगतत्त्वोप० । प० ३९५ । पृ० २ । प० २ ॥
( ३ ) योगचूडामण्युपनिषद् । श्लो० ९ । प० ४५१ । पृ० २ । पं० ४ ॥
( ४ ) हंसोपनिषद् प० १९५ । पृ० १ । प० २ ॥

## अथाजपाजपविधिः ।

अथ हंस ऋषिः । अव्यक्ता गायत्री छन्दः । परमहंसो देवता । अहमिति बीजम् । स इति शक्तिः । सोऽहमिति कीलकम् । सूर्याय सोमाय निरञ्जनाय निराभासाय तनुसूक्ष्मं प्रचोदयादिति । अग्नीषोमाभ्यां वौषट् हृदयाद्यङ्गन्यासकरन्यासौ भवतः ॥ २५ ॥ एवं कृत्वा हृदये अष्टदले हंसात्मानं ध्यायेत् अग्नीषोमौ पक्षावोङ्कारः शिरो बिन्दुस्तु नेत्रे मुखं रुद्रो रुद्राणी चरणौ बाहू कालश्चाग्निश्चोभे पार्श्वे भवतः पश्यत्यनागारश्च शिष्टोभयपार्श्वे भवतः एषोऽसौ परमहंसो भानुकोटिप्रतीकाशः येनेदं व्याप्तम् ॥ २६ ॥

## अथ हंसस्याष्टधा वृत्तिः ।

तस्याष्टधा वृत्तिर्भवति । पूर्वदले पुण्ये मतिः आग्नेये निद्रालस्यादयो भवन्ति ॥ याम्ये क्रूरे मतिः ॥ नैर्ऋते पापे मनीषा ॥ वारुण्यां क्रीडा ॥ वायव्ये गमनादौ

बुद्धिः ॥ सौम्ये रतिप्रीतिः ॥ ईशाने द्रव्यादानम् ॥ मध्ये वैराग्यम्। केसरे जाग्रदवस्था कार्णिकायां स्वप्नः॥ लिङ्गे सुषुप्तिः॥ पद्मत्यागे तुरीयम् । यदा हंसो नादे लीनो भवति तदा तुर्यातीतमुन्मनमजपोपसंहार इत्यभिधीयते ॥ २७ ॥

अथाजपाजपस्वरूपम् ।

( १ ) हङ्कारेण बहिर्याति सकारेण विशेत्पुनः। हंसहंसेत्यमुं मन्त्रं जीवो जपति सर्वदा ॥ २८ ॥ षट्शतानि दिवा रात्रौ सहस्राण्येकविंशतिः। एतत्सङ्ख्यान्वितं मन्त्रं जीवो जपति सर्वदा ॥ २९ ॥

---

१-जपसमर्पणमाह-षट्शतं गणनाथाय षट्सहस्रन्तु वेधसे । विष्णवे षट्सहस्रन्तु षट्सहस्रं शिवात्मने । जीवात्मने सहस्रन्तु सहस्रं परमात्मने । सहस्रं गुरवे चैव जपसंख्यां निवेदयेत् ॥

( १ ) योगचूडामण्युपनिषद् श्लो० ३१ । ३२ । प० ४४७ । पृ० ७ । पं० ३ ॥

( १ ) स एव जपकोट्या नादमनुभवति ॥३०॥

( २ )अनाहतस्य[1] शब्दस्य तस्य शब्दस्य यो ध्वनिः । ध्वनेरन्तर्गतं ज्योतिर्ज्योतिषोऽन्तर्गतं मनः ॥ तन्मनो विलयं याति तद्विष्णोः परमम्पदम् ॥ ३१ ॥

( ३ ) हंसवशान्नादो दशविधो जायते ।

अथ नादभेदाः ।

चिणीति प्रथमः ॥ चिञ्चिणीति द्वितीयः ॥ घण्टानादस्तृतीयः ॥ शङ्खनादश्चतुर्थः । पञ्चमस्तन्त्रीनादः । षष्ठस्तालनादः । सप्तमो वेणुनादः । अष्टमो मृदङ्गनादः । नवमो भेरीनादः । दशमो मेघनादः । नवमं परित्यज्य दशममेवाभ्यसेत् ॥ ३२ ॥

---

१–अनाहतन्तु यच्छब्दं तस्य शब्दस्य यो ध्वनिरिति पाठान्तरम् ।

---

( १–३ ) हंसोपनिषद् प० १९५ । पृ० २ । प० ६।९ ॥
२. योगशिखोपनि० अ० ६ । श्लो० २१ । प०६२८।पृ०१।पं०३॥

अथ नादफलानि ।

प्रथमे चिञ्चिणीगात्रं द्वितीये गात्रभञ्जनम् ।
तृतीये खेदनं याति चतुर्थे कम्पते शिरः ॥
पञ्चमे स्रवते तालु षष्ठेऽमृतनिषेवणम् ।
सप्तमे गूढविज्ञानं परा वाचा तथाष्टमे ॥
अदृश्यं नवमे देहं दिव्यं चक्षुस्तथाऽमलम् ।
दशमे परमं ब्रह्म भवेद्ब्रह्मात्मसन्निधौ ॥
तस्मिन् मनो विलीयते मनसि सङ्कल्पविकल्पे दग्धे पुण्यपापे सदाशिवः शक्त्यात्मा सर्वत्रावस्थितः स्वयंज्योतिः शुद्धो बुद्धो नित्यो निरञ्जनः शान्तः प्रकाशते ॥ २३ ॥

( १ ) अजपा नाम गायत्री योगिनां मोक्षदा सदा ॥ अस्यास्सङ्कल्पमात्रेण सर्वपापैः प्रमुच्यते ॥ अनया सदृशं ज्ञानं न भूतं न भविष्यति ॥ २४ ॥

इति मन्त्रयोगः ।

---

( १ ) योगचूडामण्युपनिषद् श्लो० ३३ । ३४ । प० ४४७ । पु० २ । प० ६ ॥

अथाष्टाङ्गयोगमाह ।

(१) सांकृते शृणु वक्ष्यामि योगं साष्टाङ्गदर्शनम् ॥ यमश्च नियमश्चैव तथैऽऽवासनमेव च ॥ ३५ ॥ प्राणायामस्तथा ब्रह्मन्प्रत्याहारस्ततः परम् ॥ धारणा च तथा ध्यानं समाधिश्चाष्टमं मुने ॥ ३६ ॥

अथ सलक्षणदशविधयमानाह ।

अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयाऽऽर्जवम्[1] ॥ क्षमा धृतिर्मिताहारश्शौचश्चैव यमादश॥३७॥ वेदोक्तेन प्रकारेण विना सत्यं तपोधन ॥ कायेन मनसा वाचाऽहिंसाऽहिंसा न चान्यथा ॥ ३८॥ आत्मा सर्वगतोऽच्छेद्यो न ग्राह्य इति मे मतिः ॥ सा चाहिंसा वरा प्रोक्ता मुने वेदान्तवेदिभिः ॥ ३९ ॥ चक्षुरादीन्द्रियैर्दृष्टं श्रुतं घ्रातं मुनीश्वर ॥ तस्यैवोक्तिर्भवेत्सत्यं विप्र तन्नाऽन्यथा भवेत् ॥४०॥

१ चित्तस्य कोमलत्वम् ।

(१) श्रीजाबालदर्शनोप० खं० १ । श्लो० ४ । १३ । प० ७६७। पृ० १ । पं० ३ ॥

सर्वं सत्यम्परम्ब्रह्म न चान्यदिति या मतिः॥ तच्च सत्यं वरम्प्रोक्तं वेदान्तज्ञानपारगैः ॥ ॥ ४१ ॥ अन्यदीये तृणे रत्ने काञ्चने मौक्तिकेऽपि च ॥ मनसा विनिवृत्तिर्य्या तदस्तेयं विदुर्बुधाः ॥ ४२ ॥ आत्मन्यनात्मभावेन व्यवहारविवर्ज्जितम् ॥ यत्तदस्तेयमित्युक्तमात्मविद्भिर्महामते ॥ ४३ ॥ कायेन वाचा मनसा स्त्रीणाम्परिविवर्ज्जनम् ॥ ऋतौ भार्यान्तदा स्वस्य ब्रह्मचर्यन्तदुच्यते ॥ ४४ ॥

( १ ) दर्शनं स्पर्शनं केलिः कीर्त्तनं गुह्यभाषणम् ॥ संकल्पोऽध्यवसायश्च क्रियानिष्पत्तिरेव च ॥ ४५ ॥ एतन्मैथुनमष्टाङ्गम्प्रवदन्ति मनीषिणः ॥ विपरीतम्ब्रह्मचर्यमनुष्ठेयम्मुमुक्षुभिः ॥ ४६ ॥

( २ ) ब्रह्मभावे मनश्चारम्ब्रह्मचर्यम्परन्तपः ॥ ॥ ४७ ॥ स्वात्मवत्सर्वभूतेषु कायेन मनसा

( १ ) कठरुद्रोपनिषद् श्लो० ५ । ६ । प० ७३१। पृ० १।पं०५॥
( २ ) श्रीजाबालदर्शनोपनिषद् खं० १ । श्लो० १४ । से १८ । प० ७६७ । पृ० ७ । पं० ५ ॥

गिरा ॥ अनुज्ञा[1] या दया सैव प्रोक्ता वेदान्तवेदिभिः ॥ ४८ ॥ पुत्रे मित्रे कलत्रे च रिपौ स्वात्मनि सन्ततम् । एकरूपम्मुने यत्तदार्जवम्प्रोच्यते मया ॥ ४९ ॥ कायेन मनसा वाचा शत्रुभिः परिपीडिते ॥ बुद्धिक्षोभनिर्वृत्तिर्या क्षमा सा नरपुङ्गव ॥ ५० ॥

(१) अपकारिणि कोपश्चेत् कोपे कोपः कथन्न ते ॥ धर्मार्थकाममोक्षाणाम्प्रसह्य परिपन्थिनि ॥ ५१ ॥

(२) धृतिर्नामार्थहानौ स्वेष्टबन्धुवियोगे तत्प्राप्तौ सर्वत्र चेतः स्थापनम् ॥ ५२ ॥

(३) वेदादेव विनिर्मोक्षः संसारस्य न चान्यथा ॥ अहमात्मा नचान्योस्मीत्येवमप्र-

---

१–बोधः ।

---

(१) याज्ञवल्क्योपनिषद् श्लो० २० । प० ८०८ । पृ० २ । पं० ६ ॥
(२) शाण्डिल्योपनिषद् खं० १ । प० ५४२ । पृ० १ । पं० ८ ॥
(३) श्रीजाबालदर्शनोपनिषद् खं० १ । श्लो० १९ । प० ७६८ । पृ० १ । पं० २ ॥

च्युता मतिः ॥ इति विज्ञाननिष्पत्तिर्धृतिः प्रोक्ता हि वैदिकैः ॥ ९३ ॥ अल्पमृष्टाऽशनाभ्याञ्च चतुर्थांशावशेषकम् । तस्माद्योगानुगुण्येन भोजनम्मितभोजनम् ॥ ९४ ॥

( १ ) लवणं सार्षपं चाम्लमुष्णं रूक्षं च तीक्ष्णकम् ॥ शाकजातं रामठादिवह्निस्त्रीपथसेवनम् ॥ प्रातःस्नानोपवासादि कायक्लेशांश्च वर्जयेत् ॥ ९५ ॥ अभ्यासकाले प्रथमं शस्तं क्षीराज्यभोजनम् ॥ गोधूममुद्गशाल्यन्नं योगवृद्धिकरं विदुः ॥ ९६ ॥

( २ ) आहारशुद्धौ सात्त्वशुद्धिः, सत्त्वशुद्धौ ध्रुवा स्मृतिः, स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः ॥ ९७ ॥

---

१-हिङ्गुप्रभृतिवृक्षनिर्यासरूपम् ॥ २-भोक्तुर्भोगायाहियत इत्याहारः शब्दादिविषयाविज्ञानम । तस्य विषयोपलब्धिल-

---

( १ ) योगतत्त्वोपनिषद् श्लो० ४७ । ४८ । प० ३८९ । पृ० २ । पं० ४ ॥

( २ ) छान्दोग्योपनि० प्र० ७ । ख० २६ । प० ९७ । ० १ । पं० ५ ॥

(१) स्वदेहमलनिर्मोक्षो मृज्जलाभ्याम्महामुने॥
यत्तच्छौचम्भवेद्बाह्यम्मानसम्मननं विदुः५८॥
अहं शुद्ध इति ज्ञानं शौचमाहुर्मनीषिणः ॥
अत्यन्तमलिनो देहो देही चात्यन्तनिर्म्मलः॥
उभयोरन्तरं ज्ञात्वा कस्य शौचं विधीयते॥५९॥

अथ सलक्षणदशाविधनियमानाह ।

(२) तपः सन्तोष आस्तिक्यं दानमीश्वर-
पूजनम्॥सिद्धान्तश्रवणञ्चैव ह्रीर्म्मतिश्च जपो

---

-क्षणस्य विज्ञानस्य शुद्धी रागद्वेषमोहदोषैरसंस्पृष्टं विषयवि-ज्ञानमित्यर्थः। अत्रार्थे स्मृतिः-रागद्वेषवियुक्तैस्तु विषया-निन्द्रियैश्चरन्नित्यादेः । ३-तद्गतोऽन्तःकरणस्य सत्त्वस्य नैर्मल्यम् ॥ ४-यथाऽवगते भूमात्मनि ध्रुवाऽविच्छिन्ना स्मृतिरविस्मरणम्भवति ॥

५-सर्वेषामविद्याकृतानर्थपाशरूपाणामनेकजन्मान्तरानुभ-वभावनाकाठिनीकृतानां हृदयाश्रयाणां ग्रन्थीनां रागादीनाम् ॥
६-विशेषेण प्रमोक्षाणां विनाशो भवति ॥

---

(१) श्रीजाबालदर्शन ख० १ । श्लो० २० । २१ । २२ । प० ७६८ । पृ० १ । पं० ३ ॥

(२) श्रीजाबालदर्शनोपनिषद् । खं० २ । श्लो० १-५ । प० ५६८ । पृ० २ । पं० २ ॥

व्रतम् ॥ एते च नियमाः प्रोक्तास्तान्वक्ष्यामि क्रमाच्छृणु ॥ ६० ॥ वेदोक्तेन प्रकारेण कृच्छ्रचान्द्रायणादिभिः ॥ [१]शरीरशोषणं यत्तत्तप इत्युच्यते बुधैः ॥ ६१ ॥ को वा मोक्षः कथन्तेन संसारम्प्रतिपन्नवान् ॥ इत्यालोकनमर्थज्ञास्तपः शंसन्ति पण्डिताः ॥ ६२ ॥ यदृच्छालाभतो नित्यम्प्रीतिर्या जायते नृणाम्। तत्सन्तोषं विदुः प्राज्ञाः परिज्ञानैकतत्पराः ॥ ॥ ६३ ॥ ब्रह्मादिलोकपर्यन्ताद्विरक्त्या यल्लभेत्प्रियम् ॥ सर्वत्र विगतस्नेहः सन्तोषम्परमं विदुः ॥ ६४ ॥ श्रौते स्मार्त्ते च विश्वासो यस्तदास्तिक्यमुच्यते ॥ ६५ ॥ न्यायार्जितधनं श्रान्ते श्रद्धया वैदिके जने ॥ अन्यद्वा यत्प्रदीयेत तद्दानम्प्रोच्यतेमया॥६६॥ (१) ईश्वरपूजनन्नाम प्रसन्नस्वभावेन यथाशक्ति विष्णुरुद्रादिपूजनम् ॥ ६७ ॥

---

१-श्रुतिस्मृतिप्रतिपादिते विधौ इदमित्थमेवेति ॥

---

(१) शाण्डिल्योपनिषद् खं० १ । मं० ६ । प० ५४३ । पृ० २ । पं० ५ ॥

(१) रागा[1]द्यपेतं हृदयं वागदुष्टानृतादिना ॥
हिंसादिरहितं कर्म यत्तदीश्वरपूजनम् ॥ ६८ ॥
सत्यञ्ज्ञानमनन्तञ्च परानन्दम्परं ध्रुवम् ॥
प्रत्य[2]गित्यवगन्तव्यं वेदान्तश्रवणम्बुधाः॥६९॥
वेदलौकिकमार्गेषु कुत्सितं कर्म यद्भवेत् ॥
तस्मिन्भवति या लज्जा ह्रीः सैवेति प्रकीर्तिता॥
॥ ७० ॥ वैदिकेषु च सर्वेषु श्रद्धा या सा मति-
र्भवेत् ॥७१॥ गुरुणा चोपदिष्टोपि तत्र सम्ब-
न्धवर्जितः ॥ वेदोक्तेनैव मार्गेण मन्त्राभ्यासो
जपः स्मृतः ॥ ७२ ॥ कल्पसूत्रे तथा वेदे
धर्मशास्त्रे पुराणके ॥ इतिहासे च वृत्तिर्या
स जपः प्रोच्यते मया ॥ ७३ ॥ जपस्तु
द्विविधः प्रोक्तो वाचिको मानसस्तथा ॥
वाचिकोऽपांशुरुच्चैश्च द्विविधः परिकीर्त्तितः ॥

---

१-विषयभोगसंसर्गवाञ्छारहितम् ॥
२-प्रत्यक्प्रतिशरीरव्यापकम् । प्रत्यगात्मस्वरूपमित्यर्थः॥

---

(१) श्रीजाबालदर्शन० । ख० २। श्लो० ८-१६ । पं० ७६९ । पृ० १ । प० १ ॥

मानसो मननध्यानभेदाद्द्वैविध्यमाश्रितः ॥
॥ ७४ ॥ उच्चैर्जपस्तु सर्वेषां यथोक्तफलदो
भवेत् ॥ उच्चैर्जपादुपांशुश्च सहस्रगुण
उच्यते ॥ मानसश्च तथोपांशोः सहस्रगुण
उच्यते ॥ ७५ ॥ नीचैः श्रोत्रेण चेन्मन्त्रः
श्रुतश्चेन्निष्फलो भवेत् ॥ ७६ ॥
( १ ) व्रतन्नाम वेदोक्तविधिनिषेधानुष्ठान-
नैयत्यम् ॥ ७७ ॥

अथासनानि सलक्षणानि ।

( २ ) जानूर्वोरन्तरे कृत्वा सम्यक्पादतले
उभे ॥ समग्रीवशिरःकायः स्वस्तिकन्नि-
त्यमभ्यसेत् ॥ ७८ ॥
( ३ ) ऊर्वोरुपरि वै धत्ते यदा पादतले
उभे ॥ पद्मासनम्भवेदेतत्सर्वव्याधिविषापहम् ॥
॥ ७९ ॥ पद्मासनं सुसंस्थाप्य तदङ्गुष्ठद्वय-

( १ ) शाण्डिल्योपनिषद् खं० २ । मं० १५ । प० ५४४ । पृ० १ । पं० १ ॥
( २ ) श्रीजाबालदर्शनोप० । खं० ३ । श्लो० २ । प० ७६९ । पृ० २ । पं० ४ ॥
( ३ ) त्रिशिखिब्राह्मणोप० श्लो० ३९ । ४० । प० ४३३ । पृ० २ । पं० ८ ॥

म्पुनः ॥ व्युत्क्रमेणैव हस्ताभ्याम्बद्धपद्मासनं भवेत् ॥ ८० ॥

(१) योनिं वामेन सम्पीड्य मेढ्रादुपरि दक्षिणम् ॥ भ्रूमध्ये च मनो लक्ष्यं सिद्धासनमिदम्भवेत् ॥ ८१ ॥

(२) गुदन्नियम्य गुल्फाभ्यां व्युत्क्रमेण समाहितः ॥ योगासनम्भवेदेतदिति योगविदो विदुः ॥ ८२ ॥

(३) वामाङ्घ्रिमूलकन्दाधो अन्यं तदुपरि क्षिपेत् ॥ समग्रीवशिरः कायो वज्रासनमितीरितम् ॥ ८३ ॥

(४) प्रसार्य भुवि पादौ तु दोर्भ्यामङ्गुष्ठमादरात् ॥ जानूपरि ललाटं तु पश्चिमन्ताणमुच्यते ॥ ८४ ॥

---

१–गुददेशमेढ्रान्तरालस्थानम् ॥

(१) शाण्डिल्योपनिषद् खं० ३ । प० ५४४ । पृ०२ । पं०१ ॥

(२) त्रिशिखीब्राह्मणोपनि० । श्लो० ३८ । प० ४३३ । पृ० २ । प० ६ ॥

(३) योगकुण्डलिन्युपनि० अ० १ । श्लो० ६ । प० ७४१ । पृ० १ । प० १ ॥

(४) त्रिशिखीब्रा० । श्लो० ५० । ५२ । ५४ । प० ४३४ । पृ० २ । पं० २ । ५ । ६ ॥

( १ ) आसनं विजितं येन जितन्तेन जगत्त्रयम् ॥ ८५ ॥

अथ साङ्गप्राणायामः ।

( २ ) मरुज्जयो यस्य सिद्धस्सेवयेत्तं गुरुं सदा ॥ गुरुवक्त्रप्रसादेन कुर्यात्प्राणजयं बुधः ॥ ८६ ॥

( ३ ) देहमानं स्वाङ्गुलीभिष्पण्णवत्यङ्गुलायतम् ॥ प्राणः शरीरादधिको द्वादशाङ्गुलमानतः ॥ ८७ ॥ देहस्थमनिलं देहसमुद्भूतेन वह्निना ॥ न्यूनं समं वा योगेन कुर्वन्ब्रह्मविदिष्यते ॥ ८८ ॥

( ४ ) गुदात्तु द्व्यङ्गुलादूर्ध्वम्मेढ्रात्तु द्व्यङ्गुलादधः ॥ देहमध्यं विजानीहि मनुजानां हि सां[१]कृते ॥ ८९ ॥

१-मूलाधारम् इदमेव योनिस्थानम् ॥

( १-३ ) ९७ पृष्ठान्त टि०वत् ।

( २ ) योगशिखोप० श्लो० ८० । प० ६१२ । पृ० १ । प० ६॥

( ४ ) श्रीजाबालोपनिषद् अ० ४ । श्लो० २ । १ । ३ । ४ । प० ७० । पृ० २ । पं० २ । १ । ३ ॥

(१) देहमध्ये शिखिस्थानं तप्तजाम्बूनद-प्रभम् ॥ त्रिकोणम्मनुजानान्तु सत्यमुक्तं हि सांकृते ॥ ९० ॥

(२) कन्दस्थानम्मुनिश्रेष्ठ मूलाधारान्नवाङ्गुलम् ॥ चतुरंगुलमायामविस्तारम्मुनिपुंगव ॥ ९१ ॥ कुक्कुटाण्डवदाकारम्भूषितं तु त्वगादिभिः ॥ तन्मध्ये नाभिरित्युक्तं योगज्ञैर्म्मुनिपुङ्गव ॥ ९२ ॥

(३) तत्र चक्रं द्वादशारं तेषु विष्णवादिमूर्त्तयः । अहन्तत्र स्थितश्चक्रं भ्रामयामि स्वमायया ॥ ९३ ॥ अरेषु भ्रमते जीवः क्रमेण द्विजसत्तम । तन्तुपञ्जरमध्यस्था यथा भ्रमति लूतिका ॥ प्राणाधिरूढश्चरति जीवस्तेन विना नहि ॥ ९४ ॥

(४) तस्योर्ध्वं कुण्डलीस्थानं नाभेस्तिर्यगथोर्ध्वतः ॥ अष्टप्रकृतिरूपा सा चाष्टधा

(१-२-३) ९८ पृष्ठस्थ जाबालोपनिषद्वत् ।

(४) त्रिशिखीब्राह्मणोपनि० । श्लो० ६१-६७ । प० ४३५ । पृ० १ । प० ७ ॥

कुण्डलीकृता ॥ ९५ ॥ यथावद्वायुसा-
रञ्च ज्वलनादि च नित्यशः ॥ परितः कन्द-
पार्श्वे तु निरुध्यैव सदा स्थिता ॥ ९६ ॥
मुखेनैव समावेष्ट्य ब्रह्मरन्ध्रमुखन्तथा ॥
योगकालेन मरुता साग्निना बोधिता सती ॥
स्फुरिता हृदयाकाशे नागरूपा महोज्ज्व-
ला ॥ ९७ ॥

(१) कन्दमध्ये स्थिता नाडी सुषुम्णा
सुप्रतिष्ठिता ॥ पद्मसूत्रप्रतीकाशा ऋजुरूर्ध्व-
प्रवर्त्तिनी ॥ ९८ ॥ ब्रह्मणो विवरं यावद्विद्यु-
दाभासनालकम् ॥ वैष्णवी ब्रह्मनाडी च
निर्वाणप्राप्तिपद्धतिः ॥ ९९ ॥ इडा च
पिङ्गला चैव तस्याः सव्येतरे स्थिते ॥
इडासमुत्थिता कन्दाद्वामनासापुटावधि ॥
पिङ्गला चोत्थिता तस्माद्दक्षनासापुटाव-
धि॥१००॥ गान्धारी हस्तिजिह्वा च द्वे चान्ये
नाडिके स्थिते ॥ पुरतः पृष्ठतस्तस्य वाम-

(१) त्रिशिखीब्राह्मणोपनिषद् श्लो० ६७–७५। प० ४३५। पृ० १। पं० ४॥

तरदृशौ प्रति ॥ १०१ ॥ पूषायशस्विनी-
नाड्यौ तस्मादेव समुत्थिते ॥ सव्येतर-
श्रुत्यवधि पायुमूलादलम्बुषा ॥ १०२ ॥
अधोगता शुभा नाडी मेढ्रान्तावधिरायता ॥
पादाङ्गुष्ठावधिः कन्दादधो याता च कौशि-
की ॥ १०३ ॥ दशप्रकारभूतास्ताः कथिताः
कन्दसम्भवाः ॥ तन्मूला बहवो नाड्यः
स्थूलसूक्ष्माश्च नाडिकाः ॥ १०४ ॥ द्वासप्त-
तिसहस्राणि स्थूलाः सूक्ष्माश्च नाडयः ॥
संख्यातुं नैव शक्यन्ते स्थूलमूलाः पृथ-
ग्विधाः ॥ यथाऽश्वत्थदले सूक्ष्माः स्थूलाश्च
विततास्तथा ॥ १०५ ॥

( १ ) सरस्वती तु या नाडी सा जिह्वाऽ-
न्तं प्रसर्पति ॥ १०६ ॥

( २ ) प्राणापानौ समानश्च उदानो व्यान
एव च ॥ नागः कूर्मश्च कृकरो देवदत्तो

( १ ) योगशिखोपनिषद् । अ० ५ । श्लो० २३ । प० ६२४ । पृ० १ । प० ३ ॥

( २ ) त्रिशिखीब्राह्मणोपनि० श्लो० ७६-९३ । प० ४३६ । पृ० १ । प० ५ ॥

कुण्डलीकृता ॥ ९५ ॥ यथावद्वायुसारञ्च ज्वलनादि च नित्यशः ॥ परितः कन्दपार्श्वे तु निरुध्यैव सदा स्थिता ॥ ९६ ॥ मुखेनैव समावेष्ट्य ब्रह्मरन्ध्रमुखन्तथा ॥ योगकालेन मरुता साग्निना वोधिता सती ॥ स्फुरिता हृदयाकाशे नागरूपा महोज्ज्वला ॥ ९७ ॥

(१) कन्दमध्ये स्थिता नाडी सुषुम्णा सुप्रतिष्ठिता ॥ पद्मसूत्रप्रतीकाशा ऋजुरूर्ध्वप्रवर्त्तिनी ॥ ९८ ॥ ब्रह्मणो विवरं यावद्विद्युदाभासनालकम् ॥ वैष्णवी ब्रह्मनाडी च निर्वाणप्राप्तिपद्धतिः ॥ ९९ ॥ इडा च पिङ्गला चैव तस्याः सव्येतरे स्थिते ॥ इडासमुत्थिता कन्दाद्वामनासापुटावधि ॥ पिङ्गला चोत्थिता तस्माद्दक्षनासापुटावधि ॥ १०० ॥ गान्धारी हस्तिजिह्वा च द्वे चान्ये नाडिके स्थिते ॥ पुरतः पृष्ठतस्तस्य वामे-

(१) त्रिशिखीब्राह्मणोपनिषद् श्लो० ६७-७५ । प० ४३५ । पृ० १ । प० ४ ॥

तरद्दशौ श्रुति ॥ १०१ ॥ पूषायशस्विनी-
नाड्यौ तस्मादेव समुत्थिते ॥ सव्येतर-
श्रुत्यवधि पायुमूलादलम्बुषा ॥ १०२ ॥
अधोगता शुभा नाडी मेढ्रान्तावधिरायता ॥
पादाङ्गुष्ठावधिः कन्दादधो याता च कौशि-
की ॥ १०३ ॥ दशप्रकारभूतास्ताः कथिताः
कन्दसम्भवाः ॥ तन्मूला बहवो नाड्यः
स्थूलसूक्ष्माश्च नाडिकाः ॥ १०४ ॥ द्वासप्त-
तिसहस्राणि स्थूलाः सूक्ष्माश्च नाडयः ॥
संख्यातुं नैव शक्यन्ते स्थूलमूलाः पृथ-
ग्विधाः ॥ यथाऽश्वत्थदले सूक्ष्माः स्थूलाश्च
विततास्तथा ॥ १०५ ॥

(१) सरस्वती तु या नाडी सा जिह्वाऽ-
न्तं प्रसर्पति ॥ १०६ ॥

(२) प्राणापानौ समानश्च उदानो व्यान
एव च ॥ नागः कूर्मश्च कृकरो देवदत्तो

(१) योगशिखोपनिषद् । अ० ५ । श्लो० २३ । प० ६२४ । पृ० ४ । प० ३ ॥

(२) त्रिशिखीब्राह्मणोपनि० श्लो० ७६-९२ । प० ४३६ । पृ० १ । प० ५ ॥

धनञ्जयः ॥ १०७ ॥ चरन्ति दशनाडीषु दश प्राणादिवायवः ॥ प्राणादिपञ्चकं तेषु प्रधानन्तत्र च द्वयम् ॥ १०८ ॥ प्राण एवाथवा ज्येष्ठो जीवात्मानं बिभर्त्ति यः ॥ आस्यनासिकयोर्मध्यं हृदयं नाभिमण्डलम् ॥ पादाङ्गुष्ठमिति प्राणस्थानानि द्विजसत्तम ॥ १०९ ॥ अपानश्चरति ब्रह्मन् गुदमेढ्रोरुजानुषु ॥ समानः सर्वगात्रेषु सर्वव्यापी व्यवस्थितः ॥ ११० ॥ उदानः सर्वसन्धिस्थः पादयोर्हस्तयोरपि ॥ व्यानः श्रोत्रोरुकट्याञ्च गुल्फस्कन्धगलेषु च ॥ ॥ १११ ॥ नागादिवायवः पञ्च त्वगस्थ्यादिषु संस्थिताः ॥ तुंन्दस्थजलमन्नं च रसादीनि समीकृतम् ॥ ११२ ॥ तुन्दमध्यगतः प्राणस्तानि कुर्यात्पृथक्पृथक् ॥ इत्यादिचेष्टनम्प्राणः करोति च पृथक् स्थितम् ॥ ११३ ॥ अपानवायुर्मूत्रादेः करोति च विसर्जनम् ॥ प्राणापानादिचेष्टादि क्रियते

१-कुक्षिस्थजलम् ॥

व्यानवायुना ॥ ११४ ॥ उज्जीर्यते शरीरस्थ-मुदानेन नभस्वता ॥ पोषणादि शरीरस्य समानः कुरुते सदा ॥ ११५ ॥ उद्गारादि-क्रियो नागः कूर्मोऽक्ष्यादिनिमीलनः ॥ कृकरः क्षुतयोः कर्त्ता दत्तो[1] निद्रादिकर्मकृत् ॥ मृतगात्रस्य शोभादेर्धनञ्जय उदाहृतः ॥ ११६ ॥ नाडीभेदम्मरुद्भेदम्मरुतां स्थानमेव च ॥ चेष्टाश्च विविधास्तेषां ज्ञात्वैव द्विजसत्तम ॥ शुद्धौ यतेत नाडीनाम्पूर्वोक्तज्ञानसंयुतः ॥ ॥ ११७ ॥ विविक्तदेशमासाद्य सर्वसंबध-वर्जितः ॥ योगाङ्गद्रव्यसम्पूर्णं तत्र दारुमये शुभे ॥ ११८ ॥ आसने कल्पिते दर्भ-कुशकृष्णाजिनादिभिः ॥ तावदासनमुत्सेधे तावद्द्वयसमायते ॥ ११९ ॥ उपविश्यासने सम्यक् स्वस्तिकादि यथारुचि ॥ बद्ध्वा प्रागासनं विप्रो ऋजुकायः समाहितः ॥ ॥ १२० ॥ नासाग्रन्यस्तनयनो दन्तैर्दन्तान्न संस्पृशेत् ॥ रसनां तालुनि न्यस्य स्वस्थ-

---

१—देवदत्त इत्यर्थः ॥

चित्तो निरामयः ॥ १२१ ॥ आकुञ्चितशिरः किञ्चिन्निबध्नन्योगमुद्रया ॥ हस्तौ यथोक्तविधिना प्राणायामं समाचरेत् ॥ १२२ ॥ रेचनं पूरणं वायोः शोधनं रेचनं तथा ॥ चतुर्भिः क्लेदनं वायोः प्राणायाम उदीर्यते ॥ १२३ ॥

अथ रेचकादीनां लक्षणानि ।

( १ ) उत्क्षिप्य वायुमाकाशं शून्यं कृत्वा निरात्मकम् ॥ शून्यभावेन युञ्जीयाद्रेचकस्येति लक्षणम् ॥ १२४ ॥ वक्त्रेणोत्पलनालेन तोयमाकर्षयेन्नरः ॥ एवं वायुर्ग्रहीतव्यः पूरकस्येति लक्षणम् ॥१२५॥ नोच्छ्वसेन्न चनिःश्वसेन्नैव गात्राणि चालयेत् ॥ एवं भावं नियुञ्जीयात्कुम्भकस्येति लक्षणम् ॥१२६॥ ( २ ) बाह्यादापूरणं वायोरुदरे पूरको हि सः॥संपूर्णकुम्भवद्वायोर्धारणं कुम्भको भवेत्॥ बहिर्विरेचनं वायोरुदराद्रेचकः स्मृतः ॥१२७॥

---

( १ ) अमृतनादोपनिषत् श्लो० १२ । १३ । १४ । प० २२७ । पृ० २ । प० ९ ॥

( २ ) श्रीजाबालदर्शनोप० ख० ६ । श्लो० १२ । १३ । प०७७६। पृ० १ । पं० ६ ॥

अथ रेचकादिषु ध्यानानि।

(१) अतसीपुष्पसंकाशं नाभिस्थाने प्रतिष्ठितम् ॥ चतुर्भुजं महाविष्णुम्पूरकेण विचिन्तयेत् ॥ १२८ ॥ कुंभकेन हृदि स्थाने चिन्तयेत्कमलासनम् ॥ ब्रह्माणं रक्त-गौराभं चतुर्वक्त्रं पितामहम् ॥ १२९ ॥ रेचकेन च विद्वान्मां ललाटस्थं त्रिलोच-नम् ॥ शुद्धस्फटिकसङ्काशं निष्कलं पाप-नाशनम् ॥ १३० ॥

अथ मात्रालक्षणम्।

(२) जानु प्रदक्षिणीकृत्य न द्रुतं न विल-म्बितम् ॥ अङ्गुलिस्फोटनं कुर्यात्सा मात्रा परिगीयते ॥ १३१ ॥

अथाभ्यासक्रमः।

(३) हस्तेन दक्षिणेनैव पीडयेन्नासिकापु-टम् ॥ शनैश्शनैरथ बहिः प्रक्षिपेत्पिङ्गलाऽ-

---

(१) ध्यानबिन्दूपनि० श्लो० ३०। ३१। ३२। प० ३७३। पृ० १। पं० ३॥

(२) योगतत्त्वोपनिषद् श्लो० ४०। प० ३८९। पृ० १। पं० ५॥

(३) त्रिशिखिब्राह्मणो०। श्लो० ९४–९७। प० ४३७। पृ० १। प० ८॥

निलम् ॥ १३२ ॥ इडया वायुमापूर्य ब्रह्मन् षोडशमात्रया ॥ पूरितं कुम्भयेत्पश्चाच्चतुःषष्ट्या तु मात्रया ॥ १३३ ॥ द्वात्रिंशन्मात्रया सम्यग्रेचयेत्पिङ्गलानिलम् ॥ एवं पुनः पुनः कार्यं व्युत्क्रमादुत्क्रमेण तु ॥ १३४ ॥

(१) यया त्यजेत्तयाऽऽपूर्य धारयेदविरोधतः ॥ १३५ ॥

(२) प्रथमे दिवसे कार्यं कुम्भकानाञ्चतुष्टयम् ॥ प्रत्येकं दशसंख्याकं द्वितीये पञ्चभिस्तथा ॥ विंशत्यलं तृतीयेऽह्नि पञ्चवृद्ध्या दिनेदिने ॥ १३६ ॥

(३) प्रातर्मध्यन्दिने सायमर्धरात्रे च कुम्भकान् ॥ शनैरशीतिपर्यन्तं चतुर्वारं समभ्यसेत् ॥ एवं मासत्रयाभ्यासान्नाडीशुद्धिस्ततो भवेत् ॥ १३७ ॥

---

( १ ) योगतत्त्वोप० श्लो० २९ । प० २८९ । पृ० १ । पं०५ ॥

( २ ) योगकुण्डलिन्युप० अ० १ । श्लो० ५४।५५ । प०७४४ । पृ० १ । प० २ ॥

( ३ ) योगतत्त्वोपनिषद् श्लो० ४३।४४।प०३८९।पृ०१।प०५ ॥

( १ ) शरीरलघुता दीप्तिर्वह्नेर्जठरवर्तिनः ॥ नादाभिव्यक्तिरित्येतच्चिह्नं तच्छुद्धिसूचकम् ॥ यावदेतानि सम्पश्येत्तावदेवं समाचरेत् ॥ १३८ ॥

( २ ) कनीयसि भवेत्स्वेदः कम्पो भवति मध्यमे ॥ उत्तिष्ठत्युत्तमे प्राणरोधे पद्मासनं महत् ॥ १३९ ॥

( ३ ) हृदयाम्भोरुहश्चापि व्याकोचम्भवति स्फुटम् ॥ तत्र पश्येत्परात्मानं वासुदेवमकल्मषम् ॥ १४० ॥

( ४ ) बन्धत्रयेण संयुक्तः केवलप्राप्तिकारकः ॥ अथास्य लक्षणं सम्यक् कथयामि समासतः ॥ १४१ ॥

---

( १ ) श्रीजाबालदर्शन० खं० ५ । श्लो० १० । ११ । प० ७७५ । पृ० १ । पं० ६ ॥

( २ ) शाण्डिल्यो० ख० ४ । श्रु० ३ । प० ५४९ । पृ० १ । प० ६ ॥

( ३ ) त्रिशिखीब्रा० श्लो० ९९ । प० ४३७ । पृ० २ । पं० ४ ॥

( ४ ) योगशिखोप० अ० १ । श्लो० ८९ । प० ६११ । पृ० २ । पं० ८ ॥

( १ ) गुदम्पार्ष्ण्या तु सम्पीड्य पायुमाकुञ्चयेद्बलात् ॥ वारंवारं यथा चोर्ध्वं समायाति समीरणः ॥ प्राणापानौ नादबिन्दू मूलबन्धेन[1] चैकताम् ॥ १४२ ॥

( २ ) कण्ठमाकुञ्च्य हृदये स्थापयेद्दृढमिच्छया ॥ बन्धो जालन्धराख्योऽयममृताप्यायकारकः ॥

( ३ ) पूरकान्ते च कर्त्तव्यो बन्धो जालन्धराभिधः ॥ १४३ ॥

( ४ ) नाभेरूर्ध्वमधश्चापि त्राणं कुर्यात्प्रयत्नतः ॥

( ५ ) उडियानन्तु सहजं गुरुणा कथितं सदा ॥ १४४ ॥

---

१—पूरकादौ मूलबन्धः कर्त्तव्यः । अनुक्तकालत्वात् ।

---

( १ ) योगशिखोपनिषद् अ० १ । श्लो० १०५ । प० ६१२ । पृ० २ । पं० ८ ॥

( २।३।४ ) योगशिखोपनि० अ० १ । श्लो० १११।११०।१०९ प० ६१३ । पृ० १ । पं० ७ । ६ । ५ ॥

( ५ ) योगशिखोपनि० अ० १ । श्लो० १०८ । ११० । १०७ प० ६१० । पृ० १ । पं० ३ । ५ । २ ॥

( १ ) षण्मासमभ्यसेन्मृत्युञ्जयत्येव न संशयः ॥
( २ ) कुम्भकान्ते रेचकादौ कर्त्तव्यस्तूडियानकः ॥ १४५ ॥
( ३ ) अधस्तात्कुञ्चनेनाऽऽशु कण्ठसंकोचने कृते ॥ मध्ये पश्चिमतानेन स्यात्प्राणो ब्रह्मनाडिगः ॥ १४६ ॥
( ४ ) ब्रह्मग्रन्थिं ततो भित्त्वा रजोगुणसमुद्भवम् ॥ विष्णुग्रन्थिम्प्रयात्युच्चैः सत्वरं हृदि संस्थिताम् ॥ १४७ ॥ ऊर्ध्वं गच्छति यच्चास्ते रुद्रग्रन्थिं तदुद्भवम् ॥ भ्रुवोर्मध्यं तु सम्भिद्य पाति शीतांशुमण्डलम् ॥ १४८ ॥
( ५ ) ब्रह्मरन्ध्रम्प्रविश्यान्तस्ते यान्ति परमां गतिम् ॥

---

( १-२ ) १०८ पृष्टान्तिमटिप्पणीवत् ।
( ३ ) योगशिखोपनिषद् अ० १ । श्लो० १०२ । से० प० ६१३। पृ० १ । प० ८ ॥
( ४ ) योगकुण्डलिन्युपनि० अ० १ । श्लो० ६७ । ६८ । ६९ । प० ५५४ । पृ० २ । पं० ८ ॥
( ५ ) योगशिखोपनि० अ० ६ । श्लो० ३५ । प० ६२९ । पृ० १ । प० १ ॥

( १ ) तत्र पश्येत्परात्मानं वासुदेवमकल्मषम् ॥ १४९ ॥

( २ ) रेचकं पूरकम्मुक्त्वा कुम्भीकरणमेव यः॥ करोति त्रिषु कालेषु नैव तस्यास्ति दुर्लभम् ॥ १५० ॥

( ३ ) यावत्केवलसिद्धिस्स्यात्तावत्सहितमभ्यसेत् ॥ १५१ ॥

( ४ )यथा पर्वतधातूनां दह्यन्ते धमनान्मलाः ॥ तथेन्द्रियकृता दोषा दह्यन्ते प्राणधारणात् ॥ १५२ ॥

अथ कुम्भकभेदानाह ।

( ५ ) सूर्योज्जायी शीतली च भस्त्री चैव चतुर्थिका ॥ भेदैरेव समं कुम्भो यस्स्यात्स हितकुम्भकः ॥ १५३ ॥

---

( १ । २ ) त्रिशिखीब्राह्मणोप० श्लो० ९९ । १०७ । प०३३७ । ३३८ । पृ० २ । १ । पं० ५ । ४ ॥

( ३–५ ) योगकुण्डलिन्युपनिषद् अ० १ । श्लो० २० । २८ । प० ७४१ । पृ० २ । पं० ९ ॥

( ५ ) अमृतनादोप०। श्लो० ७। प० २२७ । पृ० २ । पं० ४ ।

अथ सूर्यभेदकुम्भकमाह ।

दक्षनाड्या समाकृष्य बहिष्ठं पवनं शनैः ॥
यथेष्टं पूरयेद्वायुं रेचयेदिडया ततः ॥ १५४ ॥
कपालशोधनेवाऽपि रेचयेत्पवनं शनैः ॥
चतुष्कं वातदोषन्तु कृमिदोषं निहन्ति
च ॥ १५५ ॥ पुनः पुनरिदं कार्यं सूर्यभेद-
मुदाहृतम् ॥ १५६ ॥

अथोज्जायाख्यमाह ।

मुखं संयम्य नाडीभ्यामाकृष्य पवनं शनैः ॥
यथा लगति कण्ठात्तु हृदयावधि सस्व-
नम् ॥ १५७ ॥ पूर्ववत्कुम्भयेत्प्राणं रेच-
येदिडया ततः ॥ शीर्षोदिताऽनलहरं गल-
श्लेष्महरं परम् ॥ १५८ ॥ सर्वरोगहरं पुण्य
देहाऽनलविवर्धनम् ॥ नाडीजलोदरं धातु-
गतदोषविनाशनम् ॥ गच्छतस्तिष्ठतः कार्य-
मुज्जायाऽऽख्यन्तु कुम्भकम् ॥ १५९ ॥

अथ शीतलीनामकुम्भकम् ।

जिह्वया वायुमाकृष्य पूर्ववत्कुम्भकादनु॥शनै-
स्तु घ्राणरन्ध्राभ्यां रेचयेदनिलं सुधीः ॥१६०॥

गुल्मप्लीहाऽऽदिकान्दोपान्क्षयं त्तं ज्वरं तृषाम् ॥ विषाणि शीतली नाम कुम्भकोऽयं निहन्ति हि ॥ १६१ ॥

अथ भस्त्राख्यमाह ।

ततः पद्माऽऽसनं बद्ध्वा समग्रीवोदरस्सुधीः ॥ मुखं संयम्य यत्नेन प्राणं घ्राणेन रेचयेत् ॥ १६२ ॥ यथा लगति कण्ठात्तु कपाले सस्वनं ततः ॥ वेगेन पूरयेत्किंचिद्धृत्पद्मावधि मारुतम् ॥ १६३ ॥ पुनर्विरेचयेत्तद्वत्पूरयेच्च पुनःपुनः ॥ यथैव लोहकाराणां भस्त्रा वेगेन चाल्यते ॥ १६४ ॥ तथैव स्वशरीरस्थं चालयेत्पवनं शनैः ॥ यथा भ्रमो भवेद्देहे तथा सूर्येण पूरयेत् ॥ १६५ ॥ यथोदरं भवेत्पूर्णं पवनेन तथा लघु ॥ धारयन्नासिकामध्यं तर्जनीभ्यां विना दृढम् ॥ १६६ ॥ कुम्भकं पूर्ववत्कृत्वा रेचयेदिडयाऽनिलम् ॥ कण्ठोत्थिताऽनलहरं शरीराग्निविवर्धनम् १६७ कुण्डलीबोधकं पुण्यं पापघ्नं शुभदं सुखम् ॥ ब्रह्मनाडीमुखान्तस्थकफाऽऽद्यर्गलनाश-

नम् ॥ १६८ ॥ गुणत्रयसमुद्भूतग्रंथित्रयवि-
भेदनम् ॥ विशेषेणैव कर्त्तव्यमस्त्राख्यं कुंभक-
न्त्विदम् ॥ १६९ ॥

( १ ) यथा सिंहो गजो व्याघ्रो भवेद्वश्य-
श्शनैःशनैः॥तथैव सेवितो वायुरन्यथा हन्ति
साधकम् ॥ १७० ॥ युक्तंयुक्तं त्यजेद्वायुं
युक्तयुक्तं प्रपूरयेत् ॥ युक्तंयुक्तं प्रबध्नीयादेवं
सिद्धिमवाप्नुयात् ॥ १७१ ॥

अथ मुद्रालक्षणानि तत्रादौ महामुद्रालक्षणम् ।

(२) पार्ष्णि वामस्य पादस्य योनिस्थाने
नियोजयेत ॥ प्रसार्य दक्षिणं पादं हस्ताभ्यां
धारयेद्दृढम् ॥ चिबुकं हृदि विन्यस्य पूरये-
द्वायुना पुनः ॥ कुम्भकेन यथाशक्त्या धार-
यित्वा तु रेचयेत् ॥ वामाङ्गेन समभ्यस्य
दक्षाङ्गेन ततोऽभ्यसेत् ॥ १७२ ॥

( १ ) योगचूडामण्युपनिषद् श्लो० ११८ । ११९ । प० ४५४ ।
पृ० १ । पं० ७ ॥

( २ ) योगतत्त्वोपनिषत् । श्लो० ११२-११७ । प० ३९३ ।
पृ० २ । पं० ७ ॥

अथ महाबन्धलक्षणम् ।

प्रसारितस्तु यः पादस्तमूरूपरि मानयेत् ॥
अयमेव महाबन्ध उभयत्रैवमभ्यसेत्॥ १७३॥

अथ महावेधलक्षणम् ।

महाबन्धस्थितो योगी कृत्वा पूरकमेकधीः ॥
वायूनां गतिमावृत्य निभृतं कर्णमुद्रया॥ १७४॥
पुटद्वयं समाक्रम्य वायुः स्फुरति सत्वरम् ॥
अयमेव महावेधः सिद्धैरारभ्यतेऽनिशम्॥ १७५॥

अथ विपरीतकरणीलक्षणम् ।

( १ ) करणी विपरीताख्या सर्वव्याधिविनाशिनी ॥ नित्यमभ्यासयुक्तस्य जाठराग्निविवर्धनी ॥ १७६ ॥ आहारो बहुलस्तस्य सम्पाद्यः साधकस्य च ॥ अल्पाहारो यदि भवेदग्निर्देहं हरेत्क्षणात् ॥ १७७ ॥ अधः शिरश्चोर्ध्वपादः क्षणं स्यात्प्रथमे दिने ॥ क्षणाच्च किञ्चिदधिकमभ्यसेत्तु दिनेदिने। १७८। वली च पलितश्चैव षण्मासार्धान्न दृश्यते ॥ याममात्रं तु यो नित्यमभ्यसेत्स तु काल-

( १ ) योगतत्त्वोपनिषत् । श्लो० १२२-१२७ । प० ३९४ । पृ० ७ । पं० १ ॥

जित् ॥ १७९ ॥ वज्रोलीमभ्यसेद्यस्तु स योगी सिद्धिभाजनम् ॥ लभ्यते यदि यस्यैव योगसिद्धिः करे स्थिता ॥ अतीतानागतं वेत्ति खेचरी च भवेद्ध्रुवम् ॥ १८० ॥

अथ शक्तिचालनमाह ।

( १ ) कुण्डल्येव भवेच्छक्तिस्तान्तु सञ्चालयेद्बुधः ॥ स्वस्थानादाभ्रुवोर्मध्यं शक्तिचालनमुच्यते ॥ १८१ ॥ तत्साधने द्वयं मुख्यं सरस्वत्यास्तु चालनम् ॥ प्राणरोधमथाभ्यासादृज्वी कुण्डलिनी भवेत् ॥१८२॥ तयोरादौ सरस्वत्याश्चलनं कथयामि ते ॥ अरुन्धत्येव कथिता पुराविद्भिस्सरस्वती ॥ १८३ ॥ तस्यास्सञ्चालनेनैव स्वयं चलति कुण्डली ॥ इडायां वहति प्राणे बद्ध्वा पद्मासनं दृढम् ॥ १८४ ॥ द्वादशाङ्गुलदैर्घ्यं च अंबरं चतुरङ्गुलम् ॥ विस्तीर्य तेन तन्नाडीं वेष्टयित्वा ततः

( १ ) योगकुण्डलिन्युपनिषद् अ० १ । श्लो० ७१३ । प०७४१। पृ० १ । प० २ ॥

सुधीः ॥ १८५ ॥ अङ्गुष्ठतर्जनीभ्यान्तु हस्ताभ्यां धारयेद्दृढम् ॥ स्वशक्त्या चालयेद्वामे दक्षिणेन पुनः पुनः ॥ मुहूर्त्तद्वय-पर्यन्तं निर्भयाच्चालयेत्सुधीः ॥ ऊर्ध्वमाकर्ष-येत्किञ्चित्सुषुम्नां कुण्डलीगताम् ॥ १८६ ॥

अथ प्रकारान्तरेण शक्तिचालनम् ।

(१) सति वज्रासने पादौ कराभ्यां धारये-द्दृढम् ॥ गुल्फदेशसमीपे च कन्दं तत्र प्रपी-ऽडयेत् ॥ १८७ ॥

(२) कुर्यादनन्तरं भस्त्रीं कुण्डलीमाशु बोधयेत् ॥ १८८ ॥

अथ षण्मुखीलक्षणम् ।

(३) स्वस्तिकासनमास्थाय समाहितमना-स्तथा ॥ अपानमूर्ध्वमुत्थाप्य प्रणवेन शनैश्शनैः ॥ १८९ ॥

---

(१) योगकुण्डलिन्युपनिषद् अ० १ । श्लो० ४८ । प० ७४३ । पृ० २ । पं० ५ ॥

(२) योगशिखोपनि० अ० १ । श्लो० ११४ । प० ६१२ । पृ० २ । पं० १ ॥

(३) श्रीजाबालदर्शन० ख० ६ । श्लो० ३२ । प० ७७७ । पृ० २ । पं० २ ॥

हस्ताभ्यां धारयेत्सम्यक् श्रोत्रादिकरणानि च ॥ अङ्गुष्ठाभ्यां मुने श्रोत्रे तर्जनीभ्यान्तु चक्षुषी ॥ १९० ॥ नासापुटाऽवधानाभ्यां प्रच्छाद्य करणानि वै ॥ आनन्दाऽऽविर्भवो यावत्तावन्मूर्धनि धारणात् ॥ १९१ ॥ प्राणः प्रयात्यनेनैव ब्रह्मरन्ध्रं महामुने ॥ ब्रह्मरन्ध्रं गते वायौ नादश्चोत्पद्यतेऽनघ ॥ १९२ ॥ शङ्खध्वनिनिभश्चादौ मध्ये मेघध्वनिर्यथा ॥ शिरोमध्यगते वायौ गिरिप्रस्रवणं यथा॥१९३॥ पश्चात्प्रीतो महाप्राज्ञस्साक्षादात्मोन्मुखो भवेत् ॥ पुनस्तज्ज्ञाननिष्पत्तिर्योगात्संसारनिह्नुतिः ॥ १९४ ॥

अथ वैष्णवीमुद्रालक्षणम् ।

(१) अन्तर्लक्ष्यं बहिर्दृष्टिर्निमेषोन्मेषवर्जिता ॥ एषा सा वैष्णवी मुद्रा सर्वतन्त्रेषु गोपिता ॥ १९५ ॥ अन्तर्लक्ष्यविलीनचित्तपवनो योगी सदा वर्त्तते दृष्ट्या निश्चल-

(१) शाण्डिल्योपनिषद् खं० ८ । श्लो० १४–१७ । प०५५० । पृ० २ । प० २ ॥

तारया बहिरधः पश्यन्न पश्यन्नपि ॥ मुद्रेयं खलु खेचरी भवति सा लक्ष्यैकताना शिवा शून्याऽशून्यविवर्जितं स्फुरति सा तत्त्वं पदं वैष्णवी ॥ १९६ ॥ अर्धोन्मीलितलोचनं स्थिरमना नासाऽग्रदत्तेक्षणश्चन्द्रार्कावपि लीनतामुपनयन्निष्यन्दभावोत्तरम् ॥ ज्योतीरूपमशेषबाह्यरहितं देदीप्यमानं परं तत्त्वं तत्परमस्ति वस्तुविषयं शाण्डिल्य विद्धीह तत् ॥ १९७ ॥

अथोन्मनीलक्षणम् ।

तारं ज्योतिषि संयोज्य किञ्चिदुन्नमयन्भ्रुवौ ॥ पूर्वाभ्यासस्य मार्गोऽयमुन्मनीकारकः क्षणात् ॥ १९८ ॥

अथ वैष्णवीमुद्राया विशेषलक्षणान्याह ।

(१)मूलाधारादारभ्य ब्रह्मरन्ध्रपर्यन्तं सुषुम्ना सूर्याभा तन्मध्ये तडित्कोटिसमा मृणालतन्तुसूक्ष्मा कुण्डलिनी तत्र तमोनिवृत्तिः ॥ तर्जन्यग्रोन्मीलितकर्णरन्ध्रद्वये फूत्कारशब्दो

(१) मण्डलब्राह्मणोपनिषद् ब्रा० १ । प० ४९७ । पृ० २।पं० ६॥

जायते ॥ तत्र स्थिते मनसि चक्षुर्मध्यनील-
ज्योतिः पश्यति ॥ १९९ ॥

(१) आदावग्निमण्डलम् । तदुपरि सूर्यम-
ण्डलम् ॥ तन्मध्ये सुधाचन्द्रमण्डलम् ।
तन्मध्येऽखण्डब्रह्मतेजोमण्डलम् ॥ तद्विद्यु-
ल्लेखावच्छुक्लभासुरम् ॥ २०० ॥

(२) जीवः पञ्चविंशकः स्वकल्पितचतु-
र्विंशतितत्त्वं परित्यज्य षड्विंशः परमात्मा[1]-
हमिति ॥ २०१ ॥

अथ पञ्चव्योमलक्षणानि ।

(३) बाह्याभ्यन्तरमन्धकारमयमाकाशम् ॥
बाह्याभ्यन्तरे कालानलसदृशं पराकाशम् ॥
सबाह्याभ्यन्तरेऽपरिमितद्युतिनिभं तत्त्वं महा-
काशम्॥सबाह्याभ्यन्तरे सूर्यनिभं सूर्याकाशम्॥
अनिर्वचनीयज्योतिः सर्वव्यापक ।नरतिश-

---

१–यत्पूर्वोक्तं विद्युल्लेखावच्छुक्लभास्वरं परमात्मस्वरूपं ब्रह्म तदेवाहमस्मीत्येवं लक्ष्यस्वरूपे मनसः स्थापनं कर्त्तव्यम् ।

---

( १–२–३ ) मण्डलब्राह्मणोपनिषद् ब्रा० २ । १ । ४ ।प०४५८ । ४६२ । पृ० २ । १० पं० ९ । ८ ॥

यानन्दलक्षण परमाकाशम् ॥ एवं तत्तल्लक्ष्य-
दर्शनात्तत्तद्रूपो भवति ॥ २०२ ॥

( १ ) बहिर्लक्ष्यन्तु नासाग्रे चतुष्षडष्टदश
द्वादशाङ्गुलीभिः क्रमान्नीलद्युतिश्यामत्वसह-
गरक्तभङ्गीस्फुरत्पीतशुक्लवर्णद्वयोपेतं व्योमत्वं
पश्यति स तु योगी ॥ २०३ ॥

अथ ससाधनखेचरीमुद्रालक्षणम् ।

( २ ) कपालकुहरे जिह्वा प्रविष्टा विपरीतगा ॥
भ्रुवोरन्तर्गता दृष्टिर्मुद्रा भवति खेचरी ॥ २०४ ॥

( ३ ) मेलनमनुः । ह्रीँभँसँपँफँसँक्षम् ॥ २०५ ॥

( ४ ) तस्याष्पडङ्गं कुर्वीत तया षट्स्वर-
भिन्नया । कुर्यादेवं करन्यासं सर्वसिद्ध्यादि-
हेतवे ॥ २०६ ॥

---

( १ ) मण्डलब्राह्मणोपनिषद् ब्रा० १ । प०४५७ । पृ०२।पं०२ ॥

( २ ) योगचूडामण्युप० श्लो० ५२ । प०४४९ । पृ०१ । पं०२ ॥

( ३-४ ) योगकुण्डलिन्युपनिषद् अ० ३ । प० ७४९ । ७४८ ।
० १ । २ । पं० ८ । २ ॥

(१) य इमां पञ्चलक्षाणि जपेदपि सुयन्त्रितः ॥ तस्य श्रीखेचरीसिद्धिस्स्वयमेव प्रवर्त्तते ॥ २०७ ॥

(२) स्नुहीपत्रनिभं शस्त्रं सुतीक्ष्णं स्निग्धनिर्मलम् ॥ समादाय ततस्तेन रोममात्रं समुच्छिनेत् ॥२०८॥ हित्वा सैन्धवपथ्याभ्यां[1] चूर्णिताभ्यां प्रकर्षयेत् ॥ पुनः सप्तदिने प्राप्ते रोममात्रं समुच्छिनेत् ॥ २०९ ॥ एवं क्रमेण षण्मासं नित्योद्युक्तस्समाचरेत् ॥ षाण्मासाद्रसनामूलं शिराबद्धं प्रणश्यति ॥ २१० ॥ अथ वागीश्वरीधाम शिरोवस्त्रेण वेष्टयेत् ॥ शनैरुत्कर्षयेद्योगी कालवेलाविधानवित् २११॥ पुनष्षण्मासमात्रेण नित्यं सङ्घर्षणान्मुने ॥ भ्रूमध्याऽवधि चाऽप्येति तिर्यक्कर्णबिलाऽवधि ॥ २१२ ॥ अधश्च चिबुकं मूलं प्रयाति

१–सैन्धवहरीतकीभ्यां वा खदिरहरीतिकीभ्याम् । ग्रन्थान्तराद्बोद्धव्यम् ॥

(१–२) योगकुण्डलिन्युप० अ० २ । श्लो० २९–३७ । प० ७४७ । ७४८ । पृ० २ । १ । पं० ३ । २ ॥

क्रमचारिता ॥ पुनस्संवत्सराणान्तु तृतीया देवलीलया ॥ २१३ ॥ केशान्तमूर्ध्वं क्रमति तिर्यक्छाखावधिर्मुने ॥ अधस्तात्कण्ठकूपान्तं पुनर्वर्षत्रयेण तु ॥ २१४ ॥ ब्रह्मरन्ध्रं समावृत्य तिष्टत्येव न संशयः ॥ तिर्यक् चूलितलं याति अधः कण्ठबिलाऽवधि ॥ शनैश्शनैर्मस्तकाच्च महावज्रकपाटभित् २१५॥ (१) अङ्गुल्यग्रेण सङ्घृष्य जिह्वामात्रं निवेशयेत् ॥ एवं वर्षत्रयं कृत्वा ब्रह्मद्वारं प्रविश्यति ॥ २१६ ॥

(२) स्वर्णजां रौप्यजां वापि लोहज वा शलाकिकाम् ॥ नियोज्य नासिकारन्ध्रं दुग्धसिक्तेन तन्तुना ॥ २१७ ॥ प्राणान्निरुध्य हृदय सुखमासनमात्मनः ॥ शनैस्सुमथनं कुर्याद्भ्रूमध्ये न्यस्य चक्षुषी ॥ २१८ ॥ षण्मासं मथनाऽवस्थाभावेनैव प्रजायते ॥ यथा सुषुप्तिर्बालानां यथा भावस्तथा भवेत् ॥ २१९ ॥ न सदा मथनं शस्त मासे

---

( १–२ ) योगकुण्डलिन्युपनिषद् अ० २ । श्लो० ४१ । ४४–४८ । प० ७४८ । ७४९ । पृ० २ । १ । पं० ७ । २ ॥

मासे समाचरेत् ॥ सदा रसनया योगी मार्गं न परिसंक्रमेत् ॥ २२० ॥ एवं द्वादशवर्षान्ते संसिद्धिर्भवति ध्रुवा ॥ २२१ ॥

(१) न रोगमरणं तस्य न निद्रा न क्षुधा तृषा ॥ न च मूर्च्छा भवेत्तस्य यो मुद्रां वेत्ति खेचरीम् ॥ २२२ ॥

अथ प्रत्याहारनिरूपणम् ।

(२) इन्द्रियाणां विचरतां विषयेषु स्वभावतः ॥ बलादाहरणं तेषां प्रत्याहारः स उच्यते ॥ २२३ ॥

(३) विषयेभ्य इन्द्रियार्थेभ्यो मनोनिरोधनम्प्रत्याहारः ॥ २२४ ॥

(४) शब्दादिविषयान्पञ्च मनश्चैवातिचञ्चलम् ॥ चिन्तयेदात्मनो रश्मीन्प्रत्याहारः स उच्यते ॥ २२५ ॥

---

(१) योगचूडामण्युपनिषद् श्लो० ५३।प०४४९।पृ०१।पं०३ ॥

(२) श्रीजाबालदर्शनोपनिषद् ख० ७ । श्लो० १ । २ । प० ७७८ । पृ० २ । पं० ८ ॥

(३) मण्डलब्राह्मणोपनि० ब्रा० १ । श्रु० १ । प० ४५६ । पृ० २ । पं० ८ ॥

(४) अमृतनादोप० श्लो० ५ । प० २२७ । पृ० २ । पं० २ ॥

( १ ) यद्यत्पश्यति चक्षुर्भ्यां तत्तदात्मेति भावयेत् ॥ यद्यच्छृणोति कर्णाभ्यां तत्तदात्मेति भावयेत् ॥ २२६ ॥ लभते नासया यद्यत्तत्तदात्मेति भावयेत् ॥ जिह्वया यद्रसं ह्यत्ति तत्तदात्मेति भावयेत् ॥ २२७ ॥ त्वचा यद्यत्स्पृशेद्योगी तत्तदात्मेति भावयेत् ॥ एवं ज्ञानेन्द्रियाणां तु तत्तत्सौख्यं तु साधयेत् ॥ २२८ ॥ याममात्रम्प्रतिदिनं योगी यत्नादतन्द्रितः ॥ यथा वा चित्तसामर्थ्यं जायते योगिनो ध्रुवम् ॥ २२९ ॥ दूरश्रुतिर्दूरदृष्टिः क्षणाद्दूरागमस्तथा ॥ वाक्सिद्धिः कामरूपत्वमदृश्यकरणी तथा ॥ २३० ॥ मलमूत्रादिलेपेन लोहादेः स्वर्णता भवेत् ॥ खे गतिस्तस्य जायेत सन्तताभ्यासयोगतः ॥ २३१ ॥ सदा बुद्धिमता भाव्यं योगिना योगसिद्धये ॥ एते विघ्ना महासिद्धेर्न रमेत्तेपु बुद्धिमान् ॥ २३२ ॥

---

( १ ) योगतत्त्वोप० श्लो० ६९-७५ । प० ३९१।पृ०१।पं०२ ॥

(१) पादाङ्गुष्ठगुल्फजङ्घाजानूरुपायुमेढ्र-नाभिहृदयकण्ठकूपतालुनासाऽक्षिभ्रूमध्यल-लाटमूर्धानः स्थानानि ॥ तेषु क्रमादारोहा-वरोहक्रमेण प्रत्याहरेत् ॥ २३३ ॥

अथ धारणलक्षणम् ।

(२) पादादि जानुपर्यन्तं पृथिवीस्थान-मुच्यते ॥ पृथिवीचतुरस्रञ्च पीतवर्णं लव-र्णकम् ॥ २३४ ॥ पार्थिवे वायुमारोप्य लकारेण समन्वितम् ॥ ध्यायंश्चतुर्भुजाकारं चतुर्वक्त्रं हिरण्मयम् ॥ २३५ ॥ धारयेत्पञ्च घटिकाः पृथिवीजयमाप्नुयात् ॥ पृथिवी-योगतो मृत्युर्न भवेत्तस्य योगिनः ॥ २३६ ॥ आजानोः पायुपर्यन्तमपां स्थानं प्रकीर्त्ति-तम् ॥ आपोऽर्धचन्द्रं शुक्लञ्च वंबीजं परि-कीर्त्तितम् ॥ २३७ ॥

(१) शाण्डिल्योपनिषद् खं० १० । प० ५५५ । पृ० १।पं०६॥
(२) योगतत्त्वोपनि० श्लो० ८४–१०३।प०२९२।पृ०१।पं०३ ॥

वारुणे वायुमारोप्य वकारेण समन्वितम् ॥ स्मरन्नारायणं देवं चतुर्बाहुं किरीटिनम् ॥ ॥ २३८ ॥ शुद्धस्फटिकसंकाशं पीतवाससमच्युतम् ॥ धारयेत्पञ्चघटिकाः सर्वपापैः प्रमुच्यते ॥ ततो जलाद्भयं नास्ति जले मृत्युर्न विद्यते ॥ २३९ ॥ आपायोर्हृदयान्तं च वह्निस्थानं प्रकीर्तितम् ॥ वह्निस्त्रिकोणं रक्तं च रेफाक्षरसमुद्भवम् ॥ २४० ॥ वह्नौ चानिलमारोप्य रेफाक्षरसमुज्ज्वलम् ॥ त्र्यक्षं च वरदं रुद्रं तरुणादित्यसन्निभम् ॥ ॥ २४१ ॥ भस्मोद्धूलितसर्वाङ्गं सुप्रसन्नमनुस्मरन् ॥ धारयेत्पञ्चघटिका वह्निनाऽसौ न दाह्यते ॥ न दह्यते शरीरं च प्रविष्टस्याग्निमण्डले ॥ २४२ ॥ आहृदयाद् भ्रुवोर्मध्यं वायुस्थानम्प्रकीर्त्तितम् ॥ वायुः षट्कोणकं कृष्णं यकाराक्षरभासुरम् ॥ २४३ ॥ मारुतं मारुतस्थाने यकाराक्षरभासुरम् ॥ धारयेत्तत्र सर्वज्ञमीश्वरं विश्वतोमुखम् ॥ २४४ ॥ धारयेत्पञ्च घटिका वायुवद्व्योमगो भवेत्॥

मरणं न तु वायोस्तु भयम्भवति योगिनः ॥ ॥ २४५ ॥ आभ्रूमध्यात्तु मूर्धान्तमाकाशस्थानमुच्यते ॥ व्योम वृत्तं च धूम्रं च हकाराक्षरभासुरम् ॥ २४६ ॥ आकाशे वायुमारोप्य हकारोपरि शङ्करम् ॥ बिन्दुरूपं महादेवं व्योमाकारं सदाशिवम् ॥ २४७ ॥ शुद्धस्फटिकसंकाशं धृतबालेन्दुमौलिनम् ॥ पञ्चवक्त्रयुतं सौम्यं दशबाहुं त्रिलोचनम् ॥ ॥ २४८ ॥ सर्वायुधैर्धृताकारं सर्वभूषणभूषितम् ॥ उमार्धदेहं वरदं सर्वकारणकारणम् ॥ ॥ २४९ ॥ आकाशधारणात्तस्य खेचरत्वम्भवेद्ध्रुवम् ॥ यत्र कुत्र स्थितो वापि सुखमत्यन्तमश्नुते ॥ २५० ॥ एवञ्च धारणाः पञ्च कुर्याद्योगी विचक्षणः ॥ ततो दृढशरीरः स्यान्मृतिस्तस्य न विद्यते ॥ ब्रह्मणः प्रलयेनाऽपि न सीदति महामतिः ॥ २५१ ॥ (१) विषयव्यावर्त्तनपूर्वकं चैतन्ये चेतस्स्थापनं धारणं भवति ॥ २५२ ॥

(१) मण्डलब्राह्मणोपनिषद् ब्रा० १ । खं० १ । प० ४५६ । पृ० २ । पं० ९ ॥

( १ ) इन्द्रियाणि मनो हृत्य मनसात्मनि योजयेत् ॥ २९३ ॥

( २ ) यत्रोपरमते चित्तं निरुद्धं योगसेवया ॥ तत्र चैवाऽऽत्मनाऽऽत्मानं पश्यन्नात्मनि तुष्यति ॥ २९४ ॥

अथ साङ्गसगुणध्याननिरूपणम् ।

( ३ ) वद्ध्वा योगासनम्पूर्वं हृद्देशे हृदयाञ्जलिः ॥ नासाग्रन्यस्तनयनो जिह्वां कृत्वा च तालुनि ॥ २९५ ॥ दन्तैर्दन्तानसंस्पृश्य ऊर्ध्वकायः समाहितः ॥ संयमेच्चेन्द्रियग्राममात्मबुद्ध्या विशुद्धया ॥ २९६ ॥

( ४ ) समभ्यसेत्तथा ध्यानं घटिकाषष्टिमेव च ॥ वायुन्निरुध्य चाकाशे देवतामिष्टदामिति ॥ २९७ ॥

---

( १ ) श्रीजाबालदर्शनोप० खं० ६ । श्लो० । प० ७१० । पृ० १ । पं० ७ ॥

( २ ) योगशिखोपनिषद् अ० ३ । श्लो० १४ । प० ६२० । पृ० १ । प० ४ ॥

( ३ ) त्रिशिखीब्राह्मणोपनिषद् श्लो० १४४ । १४५ । १४६ । प० ४४० । पृ० २ । पं० २ ॥

( ४ ) योगतत्त्वोपनिषद् श्लो० १०४ । प०३९३ । पृ०१।पं०७॥

(१) अब्जपत्रमधः पुष्पमूर्ध्वनालमधोमुखम् ॥ कदलीपुष्पसंकाशं सर्वदेवमयं शिवम् ॥ २५८ ॥ शतारं शतपत्राढ्यं विप्रकीर्णाम्बुकर्णिकम् ॥ तत्रार्कचन्द्रवह्नीनामुपर्य्युपरि चिन्तयेत् ॥ पद्मस्योद्घाटनं कृत्वा बोधचन्द्राग्निसूर्यकम् ॥ २५९ ॥

(२) हृत्पुण्डरीकं विरजं विशुद्धं विचिन्त्य मध्ये विशदं विशोकम् ॥ अचिन्त्यमव्यक्तमनन्तरूपं शिवं प्रशान्तममृतं ब्रह्मयोनिम् ॥ २६० ॥ तमादिमध्यान्तविहीनमेकं विभुं चिदानन्दमरूपमद्भुतम् ॥ उमासहायम्परमेश्वरम्प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् ॥ २६१ ॥

(३) स्फटिकरजतवर्णम्मौक्तिकीमक्षमालामममृतकलशविद्यां ज्ञानमुद्रां कराग्रे ॥ दधतमुर-

(१) ध्यानविन्दूपनि० श्लो० ३३ । ३४ । ३५ । प० ३७३ । पृ० १ । पं० ७ ॥

(२) कैवल्योपनिषद् श्लो० ४ । ५ । ६ । प० १९० । पृ० १ । पं० ४ ॥

(३) दक्षिणामूर्त्युप० प० ४६४ । पृ० १ । पं० १ ॥

गकक्ष्यं चन्द्रचूडं त्रिनेत्रं विधृतविविधभूषं दक्षिणामूर्त्तिमीडे ॥ २६२ ॥

अथवा विष्णुध्यानम् ।

( १ ) अष्टपत्रं विकसितं हृत्पद्मं तत्र संस्थितम् ॥ दिव्यध्वजाऽऽतपत्रैस्तु चिह्नितं चरणद्वयम् ॥ २६३ ॥ श्रीवत्सलाञ्छनं हृत्स्थं कौस्तुभं प्रभया युतम् ॥ चतुर्भुजं शङ्खचक्रशार्ङ्गपद्मगदाऽन्वितम् ॥ २६४ ॥ सुकेयूरान्वितं बाहुं कण्ठमालासुशोभितम् ॥ द्युमत्किरीटमभयं स्फुरन्मकरकुण्डलम् । २६५ । हिरण्मयं सौम्यतनुं स्वभक्तायाऽभयप्रदम् ॥ ध्यायेन्मनसि मां नित्यं वेणुशृङ्गधरन्तु वा ॥ २६६ ॥

( २ ) सगुणं ध्यानमेतत्स्यादणिमादिगुणप्रदम् ॥ २६७ ॥

---

( १ ) गोपालोत्तरतापिन्युप० श्लो० १५-१९ । प० ८०० । पृ० २ । पं० ६ ।

( २ ) योगतत्त्वोप० श्लो० १०५ । प० ३९३ । पृ० १ । पं० ८ ॥

अथ निर्गुणध्याननिरूपणम् ।

(१) निर्गुणमात्मयाथात्म्यम् ॥ २६८ ॥

(२) हृत्पुण्डरीकमध्ये तु भावयेत्परमेश्वरम् ॥ साक्षिणं बुद्धिवृत्तस्य परमप्रेमगोचरम् ॥ २६९ ॥ अगोचरं मनोवाचामवधूतादिसंप्लवम् ॥ सत्तामात्रप्रकाशैकप्रकाशं भावनातिगम् ॥ २७० ॥ अहेयमनुपादेयमसामान्यविशेषणम् ॥ ध्रुवं स्तिमितिगम्भीरं न तेजो न तमस्ततम् ॥२७१॥ निर्विकल्पं निराभासं निर्वाणमयसंविदम् ॥ ॥ २७२ ॥ नित्यः शुद्धो बुद्धमुक्तस्वभावः सत्यः सूक्ष्मः संविभुश्चाद्वितीयः ॥ आनन्दाब्धिर्यः परः सोऽहमस्मि प्रत्यग्धातुर्नात्र संशीतिरस्ति ॥ २७३ ॥

( ३ ) सर्वभूतेषु चैतन्यैकताननताध्यानम् ॥ २७४ ॥

---

( १ ) शाण्डिल्योप० अ० १ प० ५५५ । पृ० २ । पं० १ ॥

( २ ) मैत्रायण्युप० प्र० १ । श्रु० ८–११ । प० ३०६ । पृ० १ । प० ४ ॥

( ३ ) मण्डलब्रा० १ । श्रु० ८ । प० ४५६ । पृ० २ । पं० ९ ॥

( १ ) अङ्गुष्ठमात्रमात्मानमधुमज्ज्योतिरुत्तमम् ॥ प्रकाशयन्तमन्तस्थं ध्यायेत् कूटस्थमव्ययम् ॥ २७५ ॥

( २ ) निर्गुणध्यानयुक्तस्य समाधिश्च ततो भवेत् ॥ २७६ ॥

अथ समाधिलक्षणम् ।

दिनद्वादशकेनैव समाधिं समवाप्नुयात् ॥ वायुन्निरुध्य मेधावी जीवन्मुक्तो भवत्ययम् ॥ समाधिः समतावस्था जीवात्मपरमात्मनोः ॥ २७७ ॥

( ३ ) जीवात्मपरमात्मैक्यावस्था त्रिपुटीरहिता शुद्धचैतन्यात्मिका भवति ॥ २७८ ॥

अथ समाधिभेदानाह ।

(४) अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् ॥ आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् २७९

---

( १ ) योगकुण्डलिन्युप० श्लो० २६ । प० ७५१ । पृ० १ । पं० ३ ॥
( २ ) योगतत्त्वोप० श्लो० १०५ । प० ३९३ । पृ० १ । प० ९ ॥
( ३ ) शाण्डिल्योपनि० अ० १ । खं० १२ । प० ५५५ । पृ० २ । पं० २ ॥
( ४ ) सरस्वतीरहस्योप० श्लो० २२–३१ । प० ८५२ । पृ० २ । पं० ६ ॥

अपेक्ष्य नामरूपे द्वे सच्चिदानन्दतत्परः ॥ समाधिं सर्वदा कुर्य्याद्धृदये वाऽथ वा बहिः ॥ २८० ॥ सविकल्पो निर्विकल्पः समाधिर्द्विविधो हृदि ॥ दृश्यशब्दानुभेदेन सविकल्पः पुनर्द्विधा ॥ २८१ ॥ कामाद्याश्चित्तगा दृश्यास्तत्साक्षित्वेन चेतनम् ॥ ध्यायेद्दृश्यानुविद्धोऽयं समाधिः सविकल्पकः ॥ ॥ २८२ ॥ असङ्गसच्चिदानन्दः स्वप्रभो द्वैतवर्जितः ॥ अस्मीति शब्दविद्धोऽयं समाधिः सविकल्पकः ॥ २८३ ॥ स्वानुभूतिरसावेशाद्दृश्यशब्दाद्यपेक्षितुः ॥ निर्विकल्पः समाधिः स्यान्निवातस्थितदीपवत् ॥ २८४ ॥ हृदीव बाह्यदेशेऽपि यस्मिन्कस्मिंश्च वस्तुनि ॥ समाधिराद्यसन्मात्रान्नामरूपपृथक्कृतिः ॥ ॥ २८५ ॥ स्तब्धीभावो रसाऽऽस्वादात्तृतीयः पूर्ववन्मतः ॥ एतैस्समाधिभिष्षड्भिर्नयेत्कालं निरन्तरम् ॥ २८६ ॥

( १ ) अङ्गुष्ठमात्रमात्मानमधुमज्ज्योतिरुत्तमम् ॥ प्रकाशयन्तमन्तस्थं ध्याये कूटस्थमव्ययम् ॥ २७५ ॥

( २ ) निर्गुणध्यानयुक्तस्य समाधिश्च ततो भवेत् ॥ २७६ ॥

अथ समाधिलक्षणम् ।

दिनद्वादशकेनैव समाधिं समवाप्नुयात् ॥
वायुन्निरुध्य मेधावी जीवन्मुक्तो भवत्ययम् ॥
समाधिः समतावस्था जीवात्मपरमात्मनोः ॥ २७७ ॥

( ३ ) जीवात्मपरमात्मैक्यावस्था त्रिपुटीरहिता शुद्धचैतन्यात्मिका भवति ॥ २७८ ॥

अथ समाधिभेदानाह ।

(४) अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् ॥ आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् २७९

( १ ) योगकुण्डलिन्युप० श्लो० २६ । प०७५१ । पृ०१।पं०३ ॥
( २ ) योगतत्त्वोप० श्लो० १०५ । प० ३९३ । पृ० १ । पं०९॥
( ३ ) शाण्डिल्योपनि० अ० १।खं० १२।प०५५५।पृ०२।पं०२॥
( ४ ) सरस्वतीरहस्योप० श्लो० २२-३१ । प० ८५२ । पृ० २ । पं० ६ ॥

अपेक्ष्य नामरूपे द्वे सच्चिदानन्दतत्परः ॥ समाधिं सर्वदा कुर्य्याद्धृदये वाऽथ वा बहिः ॥ २८० ॥ सविकल्पो निर्विकल्पः समाधिर्द्विविधो हृदि ॥ दृश्यशब्दानुभेदेन सविकल्पः पुनर्द्विधा ॥ २८१ ॥ कामाद्याश्चित्तगा दृश्यास्तत्साक्षित्वेन चेतनम् ॥ ध्यायेद्दृश्यानुविद्धोऽयं समाधिः सविकल्पकः ॥ ॥ २८२ ॥ असङ्गसच्चिदानन्दः स्वप्रभो द्वैतवर्जितः ॥ अस्मीति शब्दविद्धोऽयं समाधिः सविकल्पकः ॥ २८३ ॥ स्वानुभूतिरसावेशाद्दृश्यशब्दाद्यपेक्षितुः ॥ निर्विकल्पः समाधिः स्यान्निवातस्थितदीपवत् ॥ २८४ ॥ हृदीव बाह्यदेशेऽपि यस्मिन्कस्मिंश्च वस्तुनि ॥ समाधिराद्यसन्मात्रान्नामरूपपृथक्कृतिः ॥ ॥२८५ ॥ स्तब्धीभावो रसाऽऽस्वादात्तृतीयः पूर्ववन्मतः ॥ एतैस्समाधिभिष्षड्भिर्नयेत्कालं निरन्तरम् ॥ २८६ ॥

( १ ) सलिले सैन्धवं यद्वत्साम्यं भवति योगतः ॥ तथाऽऽत्ममनसोरैक्यं समाधिरभिधीयते ॥ २८७ ॥ यदा सङ्क्षीयते प्राणो मानसं च प्रलीयते ॥ तदा समरसत्वं यत्समाधिरभिधीयते ॥ २८८ ॥ यत्समत्वं तयोरत्र जीवाऽऽत्मपरमाऽऽत्मनोः ॥ समस्तनष्टसङ्कल्पस्समाधिरभिधीयते ॥ २८९ ॥ प्रभाशून्यं मनश्शून्यं बुद्धिशून्यं निरामयम् ॥ सर्वशून्यं निराभासं समाधिरभिधीयते ॥ ॥ २९० ॥ स्वयमुच्चलिते देहे देही नित्यसमाधिना ॥ निश्चलं तं विजानीयात्समाधिरभिधीयते ॥ २९१ ॥ यत्रयत्र मनो याति तत्रतत्र परं पदम् ॥ तत्रतत्र परं ब्रह्म सर्वत्र समवस्थितम् ॥ २९२ ॥

( २ ) निर्विकल्पे स्थितो विद्वान्भूयो नाऽप्यनुशोचति ॥ २९३ ॥

---

( १ ) सौभाग्यलक्ष्म्युपनि० श्लो० १४–१९ । प० ८४७ । पृ० १ । पं० १ ॥

( २ ) सौभाग्यलक्ष्म्युपनिषद् । श्लो० १३ । प० ८४७ । पृ० १ । प० १ ॥

(१) भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ॥ क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥ २९४ ॥

अथ ज्ञानयोगलक्षणम् ।

(२) यत्तु चित्तस्य सततमर्थे श्रेयसि बन्धनम् ॥ ज्ञानयोगः स विज्ञेयः सर्वसिद्धिकरः शिवः ॥ २९५ ॥

अथ ज्ञानयोगाङ्गलक्षणानि ।

(३) सर्वं ब्रह्मेति वै ज्ञानादिन्द्रियग्रामसंयमः ॥ यमोऽयमिति संप्रोक्तोऽभ्यसनीयो मुहुर्मुहुः ॥ २९६ ॥ सजातीयप्रवाहश्च विजातीयतिरस्कृतिः ॥ नियमो हि परानन्दो नियमात्क्रियते बुधैः ॥ २९७ ॥ त्यागो हि महता पूज्यः सद्यो मोक्षप्रदायकः ॥ यस्माद्वाचो निवर्तन्ते अप्राप्य मनसा सह ॥२९८॥

---

(१) सरस्वतीरहस्योपनिषद्० श्लो० ३२ । प० ८५३ । पृ० १ । पं० ८ ॥

(२) त्रिशिखीब्राह्म० श्लो० २६ । प० ४३३ । पृ०१ । पं०२ ॥

(३) तेजोबिन्दूप० अ० १ । श्लो० १७–४९ । प० ३३८ । पृ० २ । पं० ३ ॥

यन्मौनं योगिभिर्गम्यं तद्भजेत्सर्वदा बुधः ॥
वाचो यस्मान्निवर्तन्ते तद्वक्तुं केन शक्यते ॥
॥ २९९ ॥ प्रपञ्चो यदि वक्तव्यः सोऽपि शब्द-
विवर्जितः ॥ इति वा तद्भवेन्मौनं सर्वं सहज-
संज्ञितम् ॥ गिरां मौनं तु बालानामयुक्तं
ब्रह्मवादिनाम् ॥ ३०० ॥ आदावन्ते च
मध्ये च जनो यस्मिन्न विद्यते ॥ येनेदं सततं
व्याप्तं स देशो विजनः स्मृतः ॥ ३०१ ॥
कल्पना सर्वभूतानां ब्रह्मादीनां निमेषतः ॥
कालशब्देन निर्दिष्टं ह्यखण्डानन्दमद्वयम् ॥
॥ ३०२ ॥ सुखेनैव भवेद्यस्मिन्नजस्रं ब्रह्म-
चिन्तनम् ॥ आसनं तद्विजानीयादन्य-
त्सुखविनाशनम् ॥ ३०३ ॥ सिद्धये सर्व-
भूतादिविश्वाधिष्ठानमद्वयम् ॥ यस्मिन्सिद्धिं
गताः सिद्धास्तत्सिद्धासनमुच्यते ॥ ३०४ ॥
यन्मूलं सर्वलोकानां यन्मूलं चित्तबन्धनम् ॥
मूलबन्धः सदा सेव्यो योग्योऽसौ ब्रह्मवा-
दिनाम् ॥ ३०५ ॥ अङ्गानां समता विद्या-
त्समब्रह्मणि लीयते ॥ नो चेन्नैव समानत्व-

मृजुत्वं शुष्कवृक्षवत् ॥ ३०६ ॥ दृष्टिं ज्ञानमयीं कृत्वा पश्येद्ब्रह्ममयं जगत् ॥ सा दृष्टिः परमोदारा न नासाग्रावलोकिनी ॥ ॥ ३०७ ॥ द्रष्टृदर्शनदृश्यानां विरामो यत्र वा भवेत् ॥ दृष्टिस्तत्रैव कर्त्तव्या न नासाग्रावलोकिनी ॥ ३०८ ॥ चिन्तादिसर्वभावेषु ब्रह्मत्वेनैव भावनात् ॥ निरोधः सर्ववृत्तीनां प्राणायामः स उच्यते ॥ ३०९ ॥ निषेधनं प्रपञ्चस्य रेचकाख्यः समीरितः ॥ ब्रह्मैवास्मीति या वृत्तिः पूरको वायुरुच्यते ॥ ॥ ३१० ॥ ततस्तद्वृत्तिनैश्चल्यं कुम्भकः प्राणसंयमः ॥ अयं चापि प्रबुद्धानामज्ञानां घ्राणपीडनम् ॥ ३११ ॥ विषयेष्वात्मतां दृष्ट्वा मनसश्चित्तरञ्जकम् ॥ प्रत्याहारः स विज्ञेयोऽभ्यसनीयो मुहुर्मुहुः ॥ ३१२ ॥ यत्रयत्र मनो याति ब्रह्मणस्तत्र दर्शनात् ॥ मनसा धारण चैव धारणा सा परा मता ॥ ॥ ३१३ ॥ ब्रह्मैवास्मीति सद्वृत्त्या निरालम्बतया स्थितिः ॥ ध्यानशब्देन विख्यातः

परमानन्ददायकः ॥ ३१४ ॥ निर्विकार-
तया वृत्त्या ब्रह्माकारतया पुनः ॥ वृत्तिवि-
स्मरणं सम्यक् समाधिरभिधीयते ॥ ३१५ ॥
इमं चाकृत्रिमानन्दं तावत्साधु समभ्यसेत् ॥
लक्ष्यो यावत्क्षणात्पुंसः प्रत्यक्त्वं संभवे-
त्स्वयम् ॥ ३१६ ॥ ततः साधननिर्मुक्तः
सिद्धो भवति योगिराट् ॥ तत्स्वं रूपं भवे-
त्तस्य विषयो मनसा गिराम् ॥ ३१७ ॥
समाधौ क्रियमाणे तु विघ्नान्यायान्ति वै
वलात् ॥ अनुसंधानराहित्यमालस्यं भोग-
लालसम् ॥ ३१८ ॥ लयस्तमश्च विक्षेप-
स्तेजः स्वेदश्च शून्यता ॥ एवं हि विघ्नबा-
हुल्यं त्याज्यं ब्रह्मविशारदैः ॥ ३१९ ॥ भाव-
वृत्त्या हि भावत्वं शून्यवृत्त्या हि शून्यता ॥
ब्रह्मवृत्त्या हि पूर्णत्वं तया पूर्णत्वमभ्यसेत्॥
॥ ३२० ॥ ये हि वृत्तिं विहायैनां ब्रह्माख्यां
पावनीं पराम् ॥ वृथैव ते तु जीवन्ति पशु-
भिश्च समा नराः ॥ ३२१ ॥ ये तु वृत्तिं
विजानन्ति ज्ञात्वा वै वर्धयन्ति ये ॥ ते वै

सत्पुरुषा धन्या वन्द्यास्ते भुवनत्रये ॥३२२॥
येषां वृत्तिः समा वृद्धा परिपक्वा च सा पुनः ॥ ते वै सद्ब्रह्मतां प्राप्ता नेतरे शब्दवादिनः ॥ ३२३ ॥ निमिषार्द्धं न तिष्ठन्ति वृत्तिं ब्रह्ममयीं विना ॥ यथा तिष्ठन्ति ब्रह्माद्याः सनकाद्याः शुकादयः ॥ ३२४ ॥
कारणं यस्य वै कार्यं कारणं तस्य जायते ॥ कारणं तत्त्वतो नश्येत्कार्याभावे विचारतः ॥ ३२५ ॥ अथ शुद्धं भवेद्वस्तु यद्वै वाचामगोचरम् ॥ उदेति शुद्धचित्तानां वृत्तिज्ञानं ततः परम् ॥ ३२६ ॥

( १ ) पुङ्खाऽनुपुङ्खविषये क्षणतत्परोऽपि ब्रह्माऽवलोकनधियं न जहाति योगी ॥ सङ्गीततालयवाद्यवशङ्गताऽपि मौलिस्थकुम्भपरिरक्षणधीर्नटीव ॥ ३२७ ॥

---

( १ ) वाराहोपनिषत् अ० २ । श्लो० ८१ । प० ८१६ । पृ० १ । पं० ९ ॥

यथा सँतः पुँरुषात्केशँलोमानि तथाऽक्षँरात्स-
म्भवतीह विश्वम् ॥ २ ॥

(१) यँथा सुदीप्तात्पावकाद्विँस्फुलिङ्गाः
सहस्रशः सम्भवन्ति सँरूपाः ।
तथाऽक्षराद्विविधाः सौम्यभाँवाः
प्रजायन्ते तत्र चैवाऽपियँन्ति ॥ ३ ॥

---

१–ननु भवत्वचेतनायाः पृथिव्या अचेतनानामोषधीनामुत्पत्तिः चेतनाद्ब्रह्मणः कथञ्जडकार्यस्योत्पत्तिरिति शङ्कानिरासाय दृष्टान्तान्तरमाह–सत इति–जीवतः ॥ २–चेतनत्वेन प्रसिद्धान्तरात् ॥ ३–केशलोमानि सम्भवन्तीत्यनुषङ्गः ॥ ४–न क्षरति न नश्यति इत्यक्षरः अविनाशि–ब्रह्मेत्यर्थः ॥ ५–अथ ब्रह्मणः सरूपत्वेनाऽपरोक्षत्वेन जीवरूपत्वेन यज्जननं तत्र दृष्टान्तमाह–यथा सुदीप्तादिति ॥६–अग्निकणाः॥ ७–ज्योतिष्ट्वेन सदृशरूपाः ॥ ८–अग्निकणा इव कारणरूपा एव जीवादयो जायन्ते ॥ ९–लीयन्ते, तत्रैव नीरतरङ्गयोरिव भेदानुभवो भ्रम इति परमानिष्कर्षः ॥

---

(१) मुण्डकोपनिषद् मु० २ । खं० १ । पत्र० २२ । पृ० १ । पं० १ ॥

भृगुवारे च संगृह्य द्रव्याण्येतानि पुत्रक।
हरिद्रां पङ्कजं चैव कस्तूरीं च मृगाङ्ककम्।।
श्रीखण्डं चाऽगुरुं चैव रोचनां कुसुमं समम्।
मर्दयेत् शीतलेनैव जलेनैव कुमारक।।
तेन कुर्यात् पुत्तलीं च चतुरङ्गुलमानतः।
सदा च सुन्दरीं देवीं द्विभुजां बगलामुखीम्।।
हस्ते वज्रधरां देवीं पानपात्रं च बिभ्रतीम्।
पीतवर्णा मदाऽऽघूर्णामर्धचन्द्रां च पुत्तलीम्।।
प्राणप्रतिष्ठां कुर्याद् वै संस्थाप्य विधिनाऽर्भक्।
अखण्डतण्डुलेनैव हरिद्राऽक्षतमेव च।।
कृत्वा चैकाक्षरीमन्त्रैरक्षतान् मूर्ध्नि निःक्षिपेत्।
प्रत्यहं युग्मपूजां च कुर्याच्चैव विचक्षणः।।
एवं कृत्वा तत्त्वलक्षं देवीप्रत्यक्षमाप्नुयात्।
यस्मै कस्मै न दातव्यं न वक्तव्यं कदाचन।।
एवं पूजाविधिं कृत्वा दुर्वासा मुनिराट् पुरा।
तत्त्वलक्षप्रकारेण ग्रन्थोक्तं फलमाप्नुयात्।।

।। इति सांख्यायने चतुर्विंशतिः पटलः।।

## ९. योगविधिवर्णनम्

योगशास्त्रस्य चित्तवृत्तिनिरोधपर्यवसितत्वात् अस्मिन्नेवाऽर्थे पतञ्जलिना सूत्रितत्वाच्च "योगश्चित्तवृत्तिनिरोधः" इति चित्तवृत्तीनां निरुद्धे सत्येव योगसिद्धेः। प्रकृतोपयोगिमन्त्रसाधने योगस्य करणत्वमवेक्ष्य किञ्चित् प्रस्तूयते। यतश्चित्तैकाग्र्यमापन्ने मन्त्रार्थसाक्षात्कारः। आदौ – अहिंसा-सत्यमस्तेयब्रह्मचर्याऽपरिग्रहशौचसन्तोषाऽऽदियमनियमान् अनुतिष्ठन् साधको जपादि कुर्वन्नासनमनुतिष्ठेत् –

आसनं च योगार्णवे

ततो गुह्ये वामपादपार्ष्णिं तु विनियोजयेत्।
तस्योपरि महादेवि दक्षपार्ष्णि निवेशयेत्।।
ऋजुकायशिरोग्रीवः काकचञ्चुपुटेन च।
अकारेण बहिर्वायुं जठरे परिपूरयेत्।।
अङ्गुलीभिर्दृढं बध्वा करणानि समाहितः।
अङ्गुष्ठाभ्यामुभे श्रोत्रे तर्जनीभ्यां विलोचने।।
नासारन्ध्रेमध्यमाभ्यामन्याभिर्वदनं दृढम्।
बध्वा मे प्राणमनसामेकत्वं तन्मनुं स्मरन्।।
धारयेन् मारुतं सम्यग् योगोऽयं योगिवल्लभः।

## योनिमुद्रा

इयं मुद्रा जपविधावपि कर्तव्या। ततः सिद्धासने उपविश्य प्राणायाममाचरेत्। यतो मनसो निरोधः प्राणाधीनत्वात्। हृदयमारभ्य नासाद्वारपर्यन्तं प्राणगतिः। अधोभागे अपानः, नाभिमण्डले समानः, कण्ठदेशे उदानः, सर्वशरीरवृत्तिः व्यानः। वामे यदा प्रवहति, तदा शीतांशुः, दक्षिणे भास्करः, साम्ये अग्निः। तद्गतिमूलास्तिस्रो नाड्यः। इडा पिङ्गला सुषुम्णेति प्रसिद्धाः। एतास्वेव योगः प्रवर्तते। नाडीत्रयेऽपि सुषुम्णैव मुख्या तन्मध्ये चित्रा नाडी, तन्मध्ये पञ्चभूताऽधिदेवता, ब्रह्म विष्णु रुद्रेश्वरसदाशिवसंज्ञकाः। चित्रायामेव षट्चक्राणां चिन्तनं योगिनः कुर्वन्ति। उक्तं च –

सुषुम्णा संनिविष्टा च तन्मध्ये चित्ररूपिणी।
तत्रैव ग्रथितं पद्ममूलादि पञ्च पद्मकम्।।
मूलद्वारं समाऽऽच्छाद्य स्थिता नागस्वरूपिणी।
वायुना भिद्यते मुक्तं दृढं चित्रा नयेत् ततः।। इत्यादि

मूलाऽऽधारे त्वगादिधातुवेष्टितं चतुर्दलं पाण्डुरवर्णं पद्मं, तत्कर्णिकामध्ये योनिः, तन्मध्ये सकलप्रपञ्चनिमित्तोपादानभूता कुण्डलिनी चिन्मयी शक्तिः। त्रिगुणिताऽऽदिरूपेण सूर्येन्दुवैश्वानराणां मूलभूता भ्रमति, या त्रिकोणमुत्थिता सुषुम्णा नाम नाडी वीणादण्डाख्यस्य पृष्ठवंशस्य पुरोभागमवलम्ब्य ब्रह्मरन्ध्रपर्यन्तमूर्ध्वाऽऽकारा तिष्ठति, प्राणायामस्य दृढतराऽभ्यासेन सा जागर्ति, यतोऽविद्यया निद्रिता, तेन सर्पाऽऽकृतिं परित्यज्य सुषुम्णामार्गेण ऊर्ध्वमुत्क्रामति, आधारात् स्वाधिष्ठानं ततो मणिपूरं ततोऽनाहतं, ततो विशुद्धं, ततः आज्ञां ततः सहस्रारं प्राप्य परमशिवे लीयते, मन्त्रविज्ञाने नादरूपा वर्णमयीति द्विधा स्मर्यते। मन्त्रार्थं मन्त्रचैतन्यं च तदैव सम्पद्यते, चक्राणां विशेषविवरणमुपरिष्टाद् वक्ष्यामः। अष्टकुम्भकमभ्यस्य मूलबन्धमुड्डीयानं जालंधराख्यं बन्धत्रयं सम्पाद्य प्राणान् नियन्तुं हठाऽभ्यासिनां प्रसस्तोपायः। प्रच्छर्दनविधारणाभ्यां वा प्राणस्येति सूत्रितत्वाच्च। ततः धारणासु च योग्यता मनसः। ततः **"क्षीयते प्रकाशाऽऽवरणम्"** इत्यादि सूत्रैः प्रत्यपादयन् माहात्म्यं प्राणानिरोधस्य। एवमनुष्ठिते विक्षेपाऽभावस्ततो देशबन्धश्चित्तस्य, धारणेति धारणाऽभ्यासः प्रवर्तते, बाह्ये आभ्यन्तरे च तद्विषयः। बाह्ये स्फुटः आभ्यन्तरे शाम्भवी-आदिमुद्राभिः।

**"अन्तर्लक्ष्यो बहिर्दृष्टिर्निमेषोन्मेषवर्जितः"।**
**एषा हि शाम्भवी मुद्रा सर्वतन्त्रेषु गोपिता।।**

तथा –

**त्यजेत् शैथिल्यमङ्गानां नासाग्रे रोपयेद् दृशौ।**
**मुखं विवृणुयात् किञ्चचिद् दन्तैर्दन्तान् न च स्पृशेत्।।**
**रसनामन्तरा कुर्याद् अनङ्गे धारयेन् मनः।**
**इयं सा परमा मुद्रा निरालम्बेति पञ्चमी।।**

अनङ्गे आधारस्थयोनिमण्डले। एवं धारणां कुर्वन् ध्यानाऽभ्यासे योग्यतां प्राप्नोति, ध्याने सिद्धे समाधिरिति पतञ्जलिक्रमः। अपरं च योगिनां चिन्तनक्रममेवाऽऽह –

इन्दुर्ललाटदेशे च तदूर्ध्वे बोधिनी स्वयम्।
तदूर्ध्वे भाति नादोऽसौ अर्धचन्द्राऽऽकृतिः परः।।
तदूर्ध्वे च महानादो लाङ्गलाऽऽकृतिरुज्ज्वलः।
तदूर्ध्वे च कला प्रोक्ता आज्ञीति योगिवल्लभा।।
उन्मनी तु तदूर्ध्वे च यद् गत्वा न निवर्तते।
(आज्ञाचक्रादूर्ध्वभागे सर्वमेतदवगन्तव्यम्।।)
सच्चिदानन्दविभवात् सकलात् परमेश्वरात्।
आसीच्छक्तिस्ततो नादो नादाद् बिन्दुसमुद्भवः।।
पराशक्तिमयः साक्षात् त्रिधाऽसौ भिद्यते पुनः।
बिन्दुर्नादस्तथा बीजं तस्य भेदाः समीरिताः।।
बिन्दुर्नादात्मको बीजं शक्तिर्नादस्तयोर्मिथः।
समवायः समाख्यातः सर्वाऽऽगमविशारदैः।।

पराशक्तिमयः पर शिवस्तेन शिवशक्तिमयो बिन्दुरयं ललाटोर्ध्वे स्थितः बिन्दुर्नादात्मकः शिवात्मकः। बीजं शक्तिबोधिनीरूपम्। नादस्तयोः समवायः सम्बन्धः क्षोभ्यक्षोभकरूपः, तेनाऽयं क्रियाशक्तिरूपः। एतात्तयोर्ध्वे महानादः पूर्वोपदर्शितः। तदूर्ध्वे च कला कलाशक्तिराज्ञीति तिर्यग्रेखारूपमात्राऽऽकारा इयं शक्तिः सृष्ट्यादावाविर्भूता।

यत्र गत्वा हि मनसो मनस्त्वं नैव विद्यते।
उन्मनी सा समाख्याता सर्वतन्त्रेषु गोपिता।।
सहस्रारकर्णिकायां चन्द्रमण्डलमध्यगा।
सर्वसंकल्परहिता कला सप्तदशी भवेत्।।

उन्मनी नाम तस्या हि भवपाशनिकृन्तनी।
ततो हि व्यापिका शक्तिराज्ञीति यां विदुर्जनाः।।
समनीमूर्ध्वस्तस्या उन्मनी तु तदूर्ध्वतः।

आज्ञाचक्रादूर्ध्वं द्वितीयबिन्दुः शिवरूपः, अर्धमात्रा बोधिनी शिवशक्ति समवायरूपा, अर्धचन्द्राकृतिर्नादः। तदूर्ध्वे समनी, ततः उन्मनीति सप्तकारणरूपाणि वर्तन्ते।

मूलाधारं स्वाधिष्ठानं, मणिपूरम्, अनाहतम्।
विशुद्धम् आज्ञाचक्रं च बिन्दुर्भूयः कलापदम्।।
निबोधिका तथोर्ध्वेन्दुं नादो नादान्त एव च।
उन्मनीं विष्णुवक्त्रम् च ध्रुवमाण्डलिकः शिवः।।
इत्येतत् कथितं देवि षोडशाऽऽधारमुत्तमम्।
अकुलेश्वरदेवस्य सम्बन्धः प्रथमः स्थितः।।
रूपाऽतीतः परो बिन्दुः शक्त्यावेष्टितभास्करः।
अतो नादो विरोधी च अर्धचन्द्रसमुत्क्रमात्।।
एतत्तु पञ्चमं प्रोक्तं ज्ञानरत्नं महोदयम्।
तत्र तद्दक्षिणं षट्कमाज्ञापूर्वं कुलोद्भवम्।।

इति षडाधाराः

सर्वमेतत् कुण्डलिन्या जागरणे सति ज्ञातुं शक्यते।

## १०. सहस्रार-निर्णयः

सुषुम्नानाड्यूर्ध्वे सहस्रदलपद्मं शुक्लवर्णम् अधोमुखम्, रक्तकिंजल्कशोभितम् अकारादिक्षकारान्तपञ्चाशद्वर्णैः शुक्लाभैर्विंशत्याऽऽवर्तनेन सहस्रसंख्याकैर्युक्तं सहस्रदलम्, एतत् कर्णिकायां हंसस्ततः परमशिवरूपो गुरुः ततः सूर्यमण्डलम् चन्द्रमण्डलं ततो महावायुः ततो ब्रह्मरन्ध्रम्, ततो महाशङ्खिनी, चन्द्रमण्डले विद्युदाकारं

त्रिकोणं तन्मध्ये मृणालतन्तुशतभागैकभागरूपा सूक्ष्मा चन्द्रस्य षोडशी कला, अधोमुखी रक्तवर्णा, तत्क्रोडे केशाग्र सहस्र भागैक भागरूप सूक्ष्मा निर्वाणकला रक्तवर्णा अधोमुखी, तद्वस्ताद् अव्यक्तनादात्मकनि-बोधिकाऽऽख्यवह्निः तदुपरि निर्वाणकला क्रोडे परबिन्दुः शिवशक्त्यात्मकः। अस्य केशाग्रकोटिभागैक भागरूप-सूक्ष्मतेजोहंसरूपा निर्वाणशक्तिः अस्या हंसो जीवः, बिन्दोर्मध्ये शून्यं ब्रह्मपदम्।

**मतान्तरम्** – सहस्रदलकर्णिकामध्ये चन्द्रमण्डले अकथादि त्रिकोणं, तन्मध्ये त्रिकोणसमीपे त्रिबिन्दुः तस्याऽधो बिन्दुर्हकारः पुरुषात्मकः, उर्ध्वबिन्दुद्वयरूपविसर्गः सकारः प्रकृतिरूपः। एतदुभयाऽऽत्मको हंसस्त्रिबिन्दुरूपेण प्रकाशते, तन्मध्ये अमा कला, तत्क्रोडे निर्वाणशक्तिः तस्या मध्ये परं ब्रह्म। उक्तं च –

**तेजोरूपा प्रिया तस्य ब्रह्मवर्त्मसुदुर्लभा।**
**परमं ब्रह्म यत्पादपङ्कजद्युतिवैभवम्।।**
**अमाषोडशभागेन देवि प्रोक्ता महाकला।**
**संस्थिता परमा माया देहिनां देहधारिणी।।**

**अन्यच्च संक्षेपेणाऽऽह उमानन्द**

**तन्मध्ये तु त्रिकोणं तु विद्युदाकारमुत्तमम्।**
**बिन्दुद्वयं च तन्मध्ये विसर्गरूपमव्ययम्।।**
**तन्मध्ये शून्यदेशे च शिवः परमसंज्ञकः।**

**षट् शिवास्तन्त्रशास्त्रेषु निर्दिष्टा**

**ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः।**
**ततः परशिवो देवि षट् शिवाः परिकीर्तिताः।।**

**श्रीशङ्कराचार्यैरप्युक्तम्** – "परमशिवपर्यङ्कनिलयाम्"। अयं सुन्दरीक्रमः। बगलाक्रमे उक्तम् – "पीतवासोमते पुत्र पञ्चप्रेतगतां स्मरेत्"

"बगलां सुन्दरीं ध्यायेत्", "सुधासिन्धोर्मध्ये" "मध्ये सुधाब्धिमणि-मण्डपरत्नवेदी" त्यादिभिरुभयोरभेदः। अस्यामवस्थायां शिवशक्त्योरभेद-मनुभवति योगी। इदमेव सामरस्याऽऽख्यं महामाहेश्वरैः कथ्यते। वेदान्तसम्प्रदायविद्भिराचार्यैरपि "तत्त्वमसि" "अहं ब्रह्मास्मि" इति वचनैरिदमेव परमं तत्त्वमुपदिश्यते। उक्तं च संङ्केतपद्धतौ -

**अकारः सर्ववर्णाऽऽद्यः प्रकाशः परमः शिवः।**
**हकारोऽन्त्यः कलारूपो विमर्शाऽऽख्यः प्रकीर्तितः।।**
**उभयोः सामरस्यं तु परस्मिन् महसि स्फुटम्।**

अयमेव परमपुरुषार्थपदवाच्यः यं प्राप्य कुतकृत्यो भवति। उक्तं हि गीतायाम् -

"एतद् बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत।"
।। इति विरम्यते।।

## ११. षट्चक्रनिरूपणम्

पूर्वं सुषुम्णा नाडी उक्ता, तदनन्तरे चित्रा नाम नाडी अतिसूक्ष्मा, तस्यामेव षट् चक्राणि ग्रथितानि । तेषु -

### प्रथम चक्र

(१) प्रथमं मूलाधाराऽऽख्यं चतुर्दलात्मकं पीतवर्णं, वं शं षं सं इति दलागताश्चत्वारो वर्णाः, पूर्वादिक्रमेण तेषां न्यासः, पार्थिवं लं बीजं, चतुष्कोणात्मक यन्त्रं, डाकिनी देवी, ब्रह्मदेवश्चक्राधिपत्येन ध्येयः, स्वयम्भूनामकं लिङ्गाऽऽख्यं ज्योतिः, सार्धत्रिवलयां कुण्डलिनीं तद्वेष्टितां चित्कलां चपलां तत्र चिन्तयेत्। तज्जागरणा हंसमन्त्रेण हुंकारेण वा गुरुपदिष्टमार्गेण, "यतोऽविद्यया सा सुप्ता" विसतन्तुनिभां चित्रान्तर्गतां तां कृत्वा सम्यगभ्यसेत्। मुहूर्तद्वयाऽभ्यासेन प्रकाशानुभूतिः सर्वाः सिद्धयश्चाऽऽविर्भवन्ति। यथा शरीरस्य कान्तिः नादव्यक्तिः, अग्निः

प्रदीप्तो भवति, इन्द्रियपाटवम्, नैरुज्यम्, दुःखराहित्यम्, अतीताऽनागतान् जानाति, अश्रुतशास्त्राणि वेत्ति, स्वेच्छाविहारित्वं जायते, स्तम्भक्षोभौ भवतः, बगलाया मुख्यं चिन्तनम् अत्रैव, "बीजं स्मरेत् पार्थिवम्" इति वचनात्।

## द्वितीय चक्र

(२) तदूर्ध्वे द्वितीयं षड्दलाख्यं पद्मं लिङ्गमूले स्वाधिष्ठानाऽऽख्यं बालाऽऽदित्यनिभं बं भं मं यं रं लं इति वर्णैर्युक्तं, विष्णुर्देवः, चक्राधिपा देवी राकिणी, वं वारुणं बीजम् अर्धचन्द्राकृति यन्त्रम, एतच्चिन्तनेन विगतजराऽऽमयः, शुचिः, बिन्दुधारणे दृढः, मृत्युभीतिरहितः, कान्तिमान्, अश्रुतशास्त्रज्ञानवान्, अनङ्गसदृशो योगी भवति जले चाऽव्याहतगतिः।

## तृतीय चक्र

(३) तृतीयं मणिपूराऽऽख्यं नीलाञ्जनप्रख्यं त्रिकोणयन्त्रं रं बीजभूषितं दशदलोपेतं डं ढं णं तं थं दं धं नं पं फं इति दश वर्णैः संयुतं, रुद्रो देवः, चक्राधिपा लाकिनी देवी, तत्त्वं वह्निः, एतच्चिन्तनेन वश्याऽऽकर्षणनिर्विषीकरणे तथा तिरस्करिणीविद्यायां सिद्धिः मृतशरीरोत्थापने प्रवेष्टुं च योगी समर्थो भवति पातालसिद्धिश्चेत्यादयः प्रभावा भवन्ति।

## चतुर्थ चक्र

(४) चतुर्थम् अनाहतं चक्रं तृतीयान् मणिपूरकाद् ऊर्ध्वं हृदयस्थितम् इन्द्रगोपकीटनिभं रक्तवर्णं, षटकोणयन्त्रे वायुबीजं यं, काकिनी चक्राधिपा देवी, ईश्वरो देवः, कं खं गं घं ङं. चं छं जं झं ञं टं ठं इति द्वादशवर्णैर्भूषितं, बाणाऽऽख्यं लिङ्ग चात्रैव, एतस्य चिन्तनेन त्रिकालविषयकं ज्ञानं, दूराच्छ्रवणं, योगिनां सिद्धानां च सम्मेलनं सिध्यति।

## पञ्चम चक्र

(५) कण्ठदेशे पञ्चमं विशुद्धाऽऽख्यं पद्मं धूम्राभं वृत्ताऽऽकारेण यन्त्रेण युक्तं हं बीजलसितं, व्योम तत्त्वं, जीववासोऽत्रैव अणुपरिमितः कलिकाकारः, शाकिनी देवी, सदाशिवो देवः, अं आं इं ईं उं ऊं ऋं ॠं लृं लॄं एं ऐं ओं औं अं अः इति क्रमेण वर्णन्यासः एतस्मिन् युक्तचित्तो योगी त्रिकालदर्शी, रोगरहितः, सदा युवा, कृष्णकेशः, वीतुमृत्युः सन् चिरं जीवति। एतदभ्यासी योगी यदि क्रुध्यति, सम्पूर्णं जगत् संचालयति, तं शमयितुं ब्रह्मादयोऽपि असमर्थाः भवन्ति।

## षष्ठ चक्र

(६) आज्ञानामकं षष्ठं चक्रं भ्रूमध्ये स्थितं शारदीयकमलसंकाशं प्रणवबीजेन युक्तं, मनसो वासोऽत्र, हाकिनी देवी, इतरलिङ्गम् अर्धनारीश्वरो देवः, हकारसकारयुक्तः, एतस्मिन् कृताभ्यासो योगी पूर्वजन्मकृतानि कर्माणि स्मरति, दूरदर्शनं श्रवणं च भवति, मृतश्चेन्मोक्षलाभः। हाकिन्या ऊर्ध्वं त्रिकोणं, प्रणवो मनः इतरलिङ्गम्, निरालम्बया मुद्रया खेचरीति नाम्न्या धारणया परमाऽऽनन्दसुखाप्तिः एतदुपरि सहस्राराख्यं पद्म्। कुण्डलिन्या ब्रह्मपदं प्राप्य कुलाऽमृतं रसं निपीय पुनस्तस्याः प्रत्यावर्तनम कार्यम्। यथा –

**पीत्वा दिव्यामृतौघं पुनरपि च विशेन् मध्यदेशं कुलस्य।**
**चक्रे चक्रे क्रमेणाऽमृतरसविसरैस्तर्पयेत् कुण्डलीं ताम्।।**

तथोक्तं श्रीशङ्कराचार्यै –

**सुधाधाराऽऽसारैश्चरणयुगलान्तर्विगलितैः ।**
**प्रपञ्चं सिञ्चन्ती पुनरपि रसाम्नायमहसा।।**
**अवाप्य स्वां भूमिं भुजगनिभमध्युष्टवलयम्।**
**स्वमात्मानं कृत्वा स्वपिषि कुलकुण्डे कुहरिणि।।**

इत्थं कुलाऽकुलयोर्विस्तारः धारणाध्यानविषय

## १२. नादाऽभ्यासवर्णनम्

सामरस्याऽभिधेयात् परमतत्त्वसकाशात् ज्ञानक्रिययोः सिसृक्षावशात् प्रादुर्भावः ज्ञानक्रियोपाधिमत्योः शिवशक्त्योः प्रथमः समुल्लासः बिन्दुः, तस्मान्नादः तस्माच्च क्रमेण सर्वा सृष्टिरिति सिद्धान्तः। स्थूलसूक्ष्मभेदेन षट्त्रिंशत्तत्त्वानि जायन्ते इत्यादि प्रस्तारः। अस्मिन् नादाभ्यासनाम्नि योगे नादाभ्यासेनैव परम तत्त्वसाक्षात्कारो मन्यते। स नादो द्विधा वर्णाऽऽत्मको ध्वन्यात्मको वा। वर्णाऽऽत्मकरूपेण विवृतस्य तस्य मन्त्राऽऽत्मकः परिणामः, यस्याऽभ्यासः मानसिकोपांशुवाचकभेदेन जपात्मकः प्रकारो, यस्येयता ग्रन्थेन उपदिष्टोऽपरो नादः तस्य विधिरिदानीं प्रदृश्यते – योनिमुद्राभ्यासशीलस्य योगिनः सुषुम्णाऽन्तर्गतः प्राणो भवति तेनाऽऽनन्दजनको नादः सहसाऽऽविर्भवति। तदुक्तम् –

आदौ मत्तालिमालागलपथविगलत्तारझंकारहारी।
नादोऽसौ वंशिकांस्याऽनिलभरितलसद्वंशनिस्वानतुल्यः।।
घण्टानादानुकारी तदनु जलनिधिध्वानधीरो गभीरः
गर्जत्पर्जन्यघोषः पर इह कुहरे वर्तते ब्रह्मनाड्याः।।१।।
विजितो भवतीह तेन वायुः, सहजो यस्य समुत्थितप्रणादः।
अणिमादिगुणा भवन्ति तस्याऽमितपुण्यस्य महासुखास्पदस्य।।२।।
सुरराजतनूजवैरिरन्ध्रे विनिरुध्य स्वकराऽङ्गुलिद्वयेन्।
जलधेरिव धीरनादमन्तः प्रसवन्तं सहसा शृणोति मर्त्यः।।३।।
(कर्णे – सुरराज इन्द्रः तस्य तनूजः अर्जुनः तस्य वैरी कर्णः)
परिभावयतोऽपि नादमेनं त्रिदशाऽधीशतनूजवैरिजातम्।
सततं भवतीह तस्य जन्तोर्गुणसम्पत्तिरपेतकल्मषस्य।।४।।
शृङ्गाण्यङ्गुलिभिर्निरुध्य विधिवत् कोदण्डयोः पण्डितः।
मध्ये बद्धमरुन्निरुध्य वृषभश्रेष्ठं च षष्ठेन्द्रियम्।।
साक्षात्तत्क्षणमेव पश्यति शनैस्त्रय्यन्तगीतं परम्।
योगी पश्यति दिव्यरूपममलं ब्रह्माऽऽख्यशुभ्रं महः।।५।।

## १३. नादसाधनरीतिः

नास्ति नादात् परो मन्त्रो, न देवः स्वात्मनः परः।
नानुसन्धेः परा पूजा, नहि तृप्तेः परं सुखम्।।

इति प्रमाणान्नादानुसन्धानस्य श्रैष्ठ्यं गम्यते। प्रथमं द्वे मुद्रे कर्णच्छिद्रमुद्रणार्थं निर्मापयितव्ये। तद्द्रव्याण्येवम् - कस्तूरिका एकरत्तिकापरिमिता, जायफलं द्विरत्तिकापरिमितम् जावित्री त्रिरत्तिका परिमिता, लवङ्गानि षट्रत्तिकापरिमितानि एतत् सर्व चूर्णीकृत्य जम्बुफलाऽऽकृत्या मुद्रानिर्माणं तदनन्तरं पट्टसूत्रैः संग्रथ्य अभ्यासकाले कर्णयोर्धारणीये। सूर्योदयात् प्रागुत्थाय शौचादिकार्यं कृत्वा स्वस्थेन मनसा अभ्यासः कर्तव्यः। चिणीति प्रथमः, चिंचिणीति द्वितीयः, घंटानादस्तृतीयः, शङ्खनादश्चतुर्थः पञ्चमस्तन्त्रीनादः, षष्ठस्तालनादः, सप्तमो वेणुनादः, अष्टमो मृदङ्गनादः, नवमो भेरीनादः, दशमो मेघनादः। मूलाधारादारभ्य सहस्रारपर्यन्तं शुद्धस्फटिकसंकाशं नादस्वरूपं चैतन्याऽऽत्मकं ध्येयत्वेनाऽभिमतम्। हंसमन्त्रस्य अभ्यासः। अभ्यासकर्तुः शरीरोपरि दश प्रभावास्चेत्थं भवन्ति।

प्रथमे चिंचिणीगात्रं, द्वितीये गात्रभञ्जनम्।
तृतीये खेदनं याति, चतुर्थे कम्पते शिरः।।
पञ्चमे स्रवते तालु, षष्ठेऽमृतनिषेवणम्।
सप्तमे गूढ़विज्ञानं, परा वाचा तथाऽष्टमे।।
अदृश्यं नवमे देहं दिव्यं, चक्षुस्तथाऽमलम्।
दशमे परमं ब्रह्म भवेद् ब्रह्मात्मसन्निधौ।।

इति

योगेन स्तब्धछिन्नाऽऽदिदोषदुष्टा मन्त्राश्चैतन्या भवन्ति, सिद्धिश्चाऽऽसीदति। "जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः" इत्यत्र पतञ्जलिना मन्त्रेण सिद्धयः प्रतिपादिताः। भोजेन मन्त्रसिद्धेरानुसङ्गिकं

प्रतिपादितं तच्च सूत्रकारविरुद्धमेवाऽवगन्तव्यम्। योगो द्विविधः सिद्ध्यात्मको, मोक्षाऽऽत्मकश्च, सिद्धिरूपो योगो लौकिकैश्वर्यप्रदः तस्माद् विरक्तस्य मोक्ष इति तत्त्वं लक्ष्यीकृत्य योगप्रवृत्तिः। योगसम्पन्न एव महाविद्यातत्त्वं सम्यग् वेत्ति, अतो महाविद्यासाधने उपयुज्यते।

## १४. कुण्डमण्डपविधिः

कर्मणः सिद्धौ साग्निकानामेवाऽधिकारः। ये च मुमुक्षवस्तेऽपि निष्कामतया देवताऽर्पणबुद्ध्या विहितं कर्म कुर्वन्तः सिद्धिं समियन्ति। तदुक्तं गीतायाम् –

**स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः।**

अग्निकार्ये कुण्डानामेव विधानं प्रधानम्। आदावतः कुण्डविधिः कथ्यते –

**विद्वेषे चाऽभिचारे च त्रिकोणं कुण्डमिष्यते।**
**द्विमेखलं कोणमुखं हस्तमात्रं तु सर्वतः।।**
**उच्चाटनं तु नैऋत्यां शत्रुपक्षस्य कारयेत्।**
**उत्सादनं तु वायव्यां देवानामपि कारयेत्।।**
**शत्रूणां तापने शस्तं योन्याऽऽख्यमग्निकोणगम्।**
**अर्धचन्द्रं च याम्यायां शत्रुणां मारणे स्थितम्।।**
**त्रिकोणं नैऋते कुण्डं रिपूणां व्याधिवर्धनम्।**
**दाहायाऽग्नौ च विद्वेषे कुण्डं पूर्णेन्दुसन्निभम्।।**
**चतुरस्रं तु कर्तव्यं द्वेषाऽदौ तु विचक्षणैः।**
**कुण्डं सुलक्षणं कृत्वा तत्र कार्याणि साधयेत।।**
**चतुरस्रे भवेद् वश्यमाकर्षे च त्रिकोणकम्।**
**कर्षणे स्तम्भने देवि, विद्वेषं च त्रिकोणकम्।।**
**अथैवोच्चाटनं प्रोक्तं षट्कोणे मारणं स्मृतम्।**
**उदीच्यां पौष्टिके कुण्डं वारुण्यां शान्तिकाऽऽदिषु।।**

पूरयेत्सकलं बाह्याच्चतुरस्रं पुरं तु तत् ।
रजनीरसमादाय पद्मषण्डमथोदकम् ॥ ७९ ॥
रोचनारसकर्पूरैर्नैशं चोदकमेव च ।
सुदिने पूजयित्वाऽऽदौ वागीशं विलिखेत्ततः ॥ ८० ॥
भूर्जे नेत्रेऽथ वा वस्त्रे सौवर्णोत्थशलाकया ।
त्रिलोहवेष्टितं कृत्वा यन्त्रं यो धारयेद्द्विज ॥ ८१ ॥
तस्याशु वाचि भूतिश्च धनमानौ रिपुक्षयः ।
अक्षयश्च महाघोरे संग्रामे स भवेद्द्विज ॥ ८२ ॥
न भयं विद्यते तस्य विषाहिज्वलनादितः ।
पूरयेदखिलान्कामान् धारणस्मरणादिभिः ॥ ८३ ॥
तस्मादेतत्प्रयत्नेन कुर्याद्बाह्वोर्गलेऽथ वा ।
सर्वकालजयार्थी वै पुमान्सद्वैष्णवः सदा ॥ ८४ ॥

इति श्रीपाञ्चरात्रे जयाख्यसंहितायां साधनविधिर्नाम द्वात्रिंशः पटलः ।

---

अथ योगाख्यानं नाम त्रयस्त्रिंशः पटलः ।

श्रीभगवान्—

अथ योगविभूत्यर्थं योगं युञ्जीत वैष्णवः ।
सुगुप्ते विजने देशे निर्द्वन्द्वे शुभलक्षणे ॥ १ ॥
जितदर्पां मतिं कृत्वा सर्वभूतहिते स्थितः ।
देवाग्निगुरुभक्तश्च सच्छास्त्राभिरतस्सदा ॥ २ ॥
भूतद्रोहपरित्यागी आस्ते यः संयतेन्द्रियः ।
आसने चोपविष्टस्तु सुशुभे लक्षणान्विते ॥ ३ ॥
शुभदारुसमुत्थे तु चतुर्विंशाङ्गुलायते ।
द्वादशाङ्गुलकोत्सेधे सुधौतेनापि वाससा ॥ ४ ॥
कुशैश्च मृदुभिश्छन्ने पवित्रेणाथ चर्मणा ।
तत्रोपविष्टः सततं योगाङ्गानि समभ्यसेत् ॥ ५ ॥

[ प्राणायामस्य त्रैविध्यम् ]

रेचकादिचतुर्भिस्तु मात्राभेदकृतैस्तु सः ।
कनीयान्मध्यमो ज्येष्ठः प्राणायामः प्रकीर्तितः ॥ ६ ॥
प्रत्याहारं ततः कुर्याच्चित्तसंयमनं तु सः ।
बुद्धिर्मनस्त्वहङ्कारस्त्रिभिश्चित्तं प्रकीर्तितम् ॥ ७ ॥

तथापि मनसः कुर्यात्प्रत्याहारं प्रयत्नतः ।
मनश्चतुर्विधं प्रोक्तं प्रत्याहारेण निर्जितम् ॥ ८ ॥
तिष्ठते लक्ष्यमार्गे तु अ(ना?)न्यथा तु कदाचन ।
ध्यानं लक्ष्यस्य निष्पत्तिश्चिन्तनं तत्प्रकीर्तितम् ॥ ९ ॥
धारणा तु ततो धार्या शीतदाहापनुत्तये ।
पञ्चधा पूर्ववत्सा तु प्रतिमन्त्रव्यवस्थया ॥ १० ॥
जपं निमीलिताक्षेण कुर्यान्मन्त्रं तु वाचकम् ।
वाच्यस्य प्रतिपत्त्यर्थं पिण्डबीजपदात्मकम् ॥ ११ ॥
त्रिविधं वै समुद्दिष्टं प्रागुक्तविधिभावितम् ।
योगोऽपि त्रिविधः प्रोक्तस्तं च कार्त्स्न्येन मे शृणु ॥ १२ ॥
प्राकृतं पौरुषं चैव ऐश्वर्यं च तृतीयकम् ।
ऊहस्तु कीर्त्यते तर्कस्तच्च सिद्धिविचारकम् ॥ १३ ॥
समाधिस्त्वात्मलाभः स्यादात्मजः परिकीर्तितः
स तु लक्ष्यं परित्यज्य मन्त्रोच्चारणवर्जितम् ॥ १४ ॥
सदा विभज्यते ब्रह्मन् कलांशविधिवर्जितम् ।
समाधौ परिनिष्पन्ने परमाप्नोति पूरुषम् ॥ १५ ॥
प्राणायामादितो यावत्समाध्यन्तं प्रकीर्तितम् ।
द्विगुणं त्रिगुणं चैव मात्राभेदेन संस्थितम् ॥ १६ ॥
योगासनस्थः कुर्वीत विधिमेव यथोदितम् ।
योगासनानि चत्वारि योगपट्टेन बन्धयेत् ॥ १७ ॥
पर्यङ्कं कमलं वाऽपि भद्रं वा स्वस्तिकं दृढम् ।
एषामेकतमे स्थित्वा ऋजुकायोर्ध्वतः क्रमात् ॥ १८ ॥
स्पष्टाङ्गसन्धिः कुर्वीत विस्तीर्णोरुः स(सु?)कन्धरः ।
बाहू परिसमौ कृत्वा किञ्चिदाकुञ्चयेच्छिरः ॥ १९ ॥
नाभौ जघनमध्ये वा हस्तौ कच्छपसंस्थितौ ।
सव्यस्य चोपरिस्थं तु वामे सव्यमथापि वा ॥ २० ॥
उत्तानौ तु करौ कृत्वा कच्छपीतां (?) नियोजयेत् ।
ग्रीवां तु बिभृयाद्यत्नान्नातिस्तब्धां न कुंचिताम् ॥ २१ ॥
किञ्चिन्निमीलयेन्नेत्रे नासाग्रमवलोकयेत् ।
समुद्गवत्पिधायास्यं दन्तैर्दन्तानसंस्पृशन् ॥ २२ ॥

सगर्भं योगमातिष्ठेन्निर्गर्भं वा सुयन्त्रितः ।
ततः प्रमथयेद्वायुं प्राणाख्यं चित्तसंयुतम् ॥ २३ ॥
रेचकादिचतुर्भेदैः प्राणायामः प्रकीर्तितः ।
चित्तं जयेत्सदा यत्नाद्दुर्जयं देवदानवैः ॥ २४ ॥
यद्यप्यभ्यासवैराग्यैश्चित्तं संयम्यते बलात् ।
तथापि यत्नादातिष्ठेत्पूर्वाधीनं तु वर्जयेत् ॥ २५ ॥
द्विविधास्ते तु विज्ञेयास्सन्निकृष्टा मनोगताः ।
सन्निकृष्टाः स्थानगताश्चित्तोपा(श्चैत्ता वा ?)सनया कृताः ॥ २६ ॥
न दंशमशकाकीर्णे निश्शब्दे गन्धवर्जिते ।
निमीलिताक्षस्सन्तिष्ठेत्सर्वेन्द्रियविवर्जितः ॥ २७ ॥
एवं परित्यजेत्सर्वानुपाधीन्सन्निकर्षजान् ।
वासनोत्थांश्च विविधान्सम्यग्लक्ष्यं समास्थितः ॥ २८ ॥
प्रत्याहरेत् सदा चित्तं विक्षिप्तं सर्ववस्तुषु ।
तामसं तत्तु बोद्धव्यं चित्तं सर्वत्रगं सदा ॥ २९ ॥
गतं रागादितो ज्ञेयमभ्यासाद्राजसं तु तत् ।
सात्त्विकं कथ्यते चित्तं संश्लिष्टं लक्ष्यगोचरे ॥ ३० ॥
संलीनं च ततो ज्ञेयं गुणातीतं तपोधन ।
ध्यानमेवंविधं कुर्यात्सगर्भं प्राणनिग्रहे ॥ ३१ ॥
उच्यते च ततो भूयस्त्रिविधं योगिनां हितम् ।
सकलं निष्कलं विष्णुं तृतीयं पररूपिणम् ॥ ३२ ॥
अन्यत्र त्रिविधं ज्ञेयं शब्दं व्योम सविग्रहम् ।
विग्रहं देवरूपस्य लक्ष्यरूपं विचिन्तयेत् ॥ ३३ ॥
ध्यानमेवं समुद्दिष्टं यावद्व्योमान्तिमं भवेत् ।
तावच्च भावयेल्लक्ष्यं यावल्लक्ष्यं न भावयेत् ॥ ३४ ॥
भावे ह्यभावमापन्ने स्वस्वभावः परः स्मृतः ।
स्थूलं पूर्वं समभ्यस्येत्ततः सूक्ष्मं ततः परम् ॥ ३५ ॥
एवं विलीयते चित्तं लक्ष्यं चोपाधिभिस्सह ।
विग्रहं देवदेवस्य ध्यायेद्धृत्पद्मगोचरे ॥ ३६ ॥
ततोऽन्यच्चिन्तयेल्लक्ष्यं स्थूलं सूक्ष्मं ततः परम् ।
एवमभ्यस्यमानस्य गुणोत्कर्षः प्रजायते ॥ ३७ ॥

चन्द्रार्काग्निमयं बिम्बं रविमण्डलसन्निभम् ।
शुक्लरूपधरश्चापि गुणोत्कर्षप्रदायकम् ॥ ३८ ॥
ततः सूक्ष्मतरं बिन्दुं राजमुद्गसमप्रभम् ।
तं विद्यात्सर्वमन्त्राणामूर्ध्वमाक्रम्य तिष्ठति ॥ ३९ ॥
ततस्तु राजकाबीजप्रमाणं चिन्तयेत्क्रमात् ।
उत्पादकमथास्यापि यस्यान्ते नादमाश्रितः ॥ ४० ॥
तं विलीय समुत्पन्नमश्ववालप्रमाणकम् ।
यस्सदा गच्छति व्योम्नि मनश्चागच्छते हृदि ॥ ४१ ॥
ततो विचिन्तयेत्सूक्ष्मं शिरोवालप्रमाणकम् ।
ब्रह्मनाडीमनेनाशु पश्यन्ति ध्यानसेचनात् ॥ ४२ ॥
ततोऽङ्गरोममात्रं तु बिसवालसमं ततः ।
ध्यायेन्नियममास्थाय ब्रह्मनाडीप्रकाशकम् ॥ ४३ ॥
तदा सा दृश्यते नाडी सादृश्यरहिता परा ।
तया यायात्परं स्थानं ब्रह्मरन्ध्रपथेन तु ॥ ४४ ॥
एवं तु निष्कलं ध्यायेत्सोऽपि लीनः परे पदे ।
परं त्वभ्यसमानस्य उन्मनस्त्वं प्रजायते ॥ ४५ ॥
ततस्तु व्यज्यते सत्ता स्वकीया ब्रह्मरूपिणी ।
शब्दरूपं [1]तु वा ध्यायेदेवं सकलनिष्कलम् ॥ ४६ ॥
नारायणात्मकं मन्त्रं प्रणवादिनमोन्तकम् ।
ध्यायेच्छब्दमयो ह्येष सकलः परमेश्वरः ॥ ४७ ॥
निष्कलं वर्णमेकं तु क्षौं ह्रीं(?)वाऽपि चिन्तयेत् ।
ततोऽपि निष्कलं बिन्दुं तन्मूर्धस्थं त्रिदैवतम् ॥ ४८ ॥
सा शक्तिस्तत उत्पन्ना प्रमाणार्धप्रमाणका ।
सा शक्तिर्लीयते नादे नादो याति लयं परे ॥ ४९ ॥
एवं हि ध्यानयोगेन परं पश्यन्ति शाश्वतम् ।
अथ वाऽऽलोकशब्दौ हि प्रथयित्वा विचिन्तयेत् ॥ ५० ॥
स्वयं विलीनो यत्रैव तत्रैव परमं पदम् ।

1 नवा C L नवा S

अथवा व्योमरूपं तु ध्येयं तत्त्वं सनातनम् ॥ ५१ ॥
बाह्यान्तरस्थं शिखातीतं त्रिव्योमं चिन्तयेत्सदा ।
मुख्येऽन्तस्थं परं ध्यात्वा न भूयो भवभाक्भवेत् ॥ ५२ ॥
एवं ध्यात्वा भवेन्मुक्तिर्मुक्तिस्तु सकले स्थिता ।
सकलो देवदेवस्य विग्रहो विष्णुरूपिणः ॥ ५३ ॥
शङ्खपद्मधरो देवो गदापद्मविभूषितः ।
चतुर्भुजश्चतुर्मूर्तिश्चतुर्वक्त्रः सुलोचनः ॥ ५४ ॥
लक्ष्मीवक्षाः खगारूढः सर्वरत्नोपशोभितः ।
कृष्णस्सुरोत्तमो विष्णुर्जिष्णुस्सर्वत्रगो हरिः ॥ ५५ ॥
हलहेतिर्हयग्रीवो [1]हरिरूपधरः प्रभुः ।
नृहरी क्रोडरूपी च शक्त्यङ्गश्च महेश्वरः ॥ ५६ ॥
एवमास्थाय[2] नियमं पिण्डवत्त्वं परित्यजेत् ।
परिज्ञाय पुरा पिण्डं(ण्ड?)पाक(त ?)लक्षणमुत्तमम् ॥ ५७ ॥
निरुद्धं सन्धिमार्गं तु कृत्वा देहसमीरणम् ।
मुक्त्वा सद्ब्रह्मरन्ध्रेणोत्क्रान्तिकरणेन तु ॥ ५८ ॥
ध्यात्वा परित्यजेद्देहं नित्याभ्यासरतो यदि ।
स ब्रह्मपरमभ्येति वासुदेवाख्यमव्ययम् ॥ ५९ ॥

नारदः—

भगवन् श्रोतुमिच्छामि एतत्संक्षेपतस्त्वहम् ।
लक्षणं देहपातस्य वायोर्गतिनिरोधनम् ॥ ६० ॥

श्रीभगवान्—

युक्ताहारविहारस्य क्रियासक्तस्य नारद ।
युक्तस्वप्नावबोधस्य समधातोः सदैव हि ॥ ६१ ॥
निर्वर्तते सदाशब्दो हृद्गतो दुन्दुभिस्स्वनः ।
[3]सृजच्छीतातपे काले न जानात्युष्णशीतलौ ॥ ६२ ॥
ध्यात्वा ज्योतिर्भ्रुवोर्मध्ये द्वादशान्तेऽथ नारद ।
प्रत्य (स्त)मेति वै [4]शब्दो न चोदेत्यथवा मुने ॥ ६३ ॥

---

1 हर V CL बल A 2 ध्याय A 3 स्पर्शोऽग्निनाऽतपे A 4 शीघ्र A

न जानाति समाधिस्थो ह्यादमाब्जं यदान्तरे ।
परिशुष्यति गात्रस्थं शोणितं श्लेष्मलक्षणम् ॥ ६४ ॥
न वेत्ति पार्थिवं गन्धं स बाह्याभ्यन्तरे यदा ।
पिण्डपातस्तदा विप्र बोद्धव्यो न चिरेण तु ॥ ६५ ॥
पार्थिव्या संस्थितश्चैव धारणायां समाहितः ।
न वेत्ति शब्दं प्रागुक्तं पञ्चाहात्पञ्चमे क्षणे ॥ ६६ ॥
स्थितस्समाधौ वाऽप्येतौ शीतोष्णौ नानुविन्दति ।
पतेद्दिनचतुष्केण पिण्डस्तत्कलिते क्षणे ॥ ६७ ॥
रूपध्यानं समासाद्य पूर्वोक्तविधिना यदि ।
न भाति हृदयाकाशे बहिर्वा ज्योतिषां पतिः ॥ ६८ ॥
पिण्डपातो ह्यवश्यं स्यात्तृतीयेऽह्नि तथा क्षणे ।
समाधौ यदि वायव्ये योगी नारद वर्तते ॥ ६९ ॥
न वेत्ति परमाह्लादं तृषितः परिकम्पते ।
दिनद्वयेन पिण्डस्य पातः स्याद्द्वितये क्षणे ॥ ७० ॥
स्थितो [1]गगनभावे तु प्रागुक्तविधिना यदि ।
न वेत्ति विविधं गन्धमन्तर्बाह्ये शुभाशुभम् ॥ ७१ ॥
तत्रैवास्य दिने पातः क्षणे प्रथमलक्षणे ।
ध्यात्वैवं मुनिशार्दूल योगी ध्यानैकमानसः ॥ ७२ ॥
स्वयमुत्क्रमते पिण्डाद्यायाद्ब्रह्मनिकेतनम् ।
प्रविशेत्पिण्डमन्यं वा प्राग्वत्सन्धानयोजितः ॥ ७३ ॥
कालो यद्देहपातस्य लक्षणेन समासतः ।
कथितः सारभूतस्य वायोस्संरोध उच्यते ॥ ७४ ॥
सगर्भं हृदयावासादुद्धृत्य कतलावधि ।
अप्रमेयविहीनं तु विकरालं नियोजयेत् ॥ ७५ ॥
प्रधानं कण्ठकूपे तु न याति हृदयं पुनः ।
स्मरेद्द्विजन्मपुटके(?)प्रधानं व्यापकोज्झितम् ॥ ७६ ॥
पन्धानं [2]नन्द............येत्पन थमवर्जितम् ।
रोधमार्गद्वयस्यैवं दद्यात्सव्येतरस्य तु ॥ ७७ ॥

1 भगन A 2 दन्तकोटिस्थं A

नेत्रनासाननाख्यस्य ततश्चाव्यक्तभास्वरम् ।
मन्त्रान्ते केवलं वाऽथ वषड् ध्यायेत्खरन्ध्रगम् ॥ ७८ ॥
प्राक्रमेत्परमात्मानं त्यक्त्वा पिण्डमिमं मुने ।
परिपक्वसमानं च आश्रयेच्छाश्वतं पदम् ॥ ७९ ॥
इत्येतत्कथितं सर्वं पंचरात्रार्थमुत्तमम् ।
सर्वस्वमिव विप्रेन्द्र रक्षणीयं प्रयत्नतः ॥ ८० ॥
सर्वोत्तमा संहितैषा सर्वविज्ञानदीपिका ।
नाख्येया दुष्टबुद्धीनां नराणां कलुषात्मनाम् ॥ ८१ ॥
मत्सराणामभक्तानां शठानां छद्मचारिणाम् ।
गर्वान्मे शास्त्रसद्वस्तुनिन्दकानां विशेषतः ॥ ८२ ॥
मद्भक्तदूषकाणां च शुष्कतर्करतात्मनाम् ।
शास्त्रापकर्तॄणामन्यदर्शने भावितात्मनाम् ॥ ८३ ॥
देयं विविक्तबुद्धीनां स्वधर्मनिरतात्मनाम् ।
संसारभयभीतानां मद्भक्तिनिरतात्मनाम् ॥ ८४ ॥
मच्छासनप्रपन्नानां ये पश्यन्ति सदा मुने ।
मद्भाविनो मत्समयाद्दृष्ट्या चातिविशुद्धया ॥ ८५ ॥
तेषां वाच्यमिदं शास्त्रं दीक्षां कृत्वा यथाविधि ।
प्रदर्श्य मन्त्रसंघं वा पूजितं मण्डलं पुरा ॥ ८६ ॥
शास्त्रार्थमनुवक्तव्यं शास्त्रमादौ प्रपूज्य च ।
येनाशु विविधा सिद्धिर्द्वयोर्भवति शाश्वती ॥ ८७ ॥

इति श्रीपाञ्चरात्रे जयाख्यसंहितायां योगाख्यानं नाम त्रयस्त्रिंशः पटलः ।

समाप्तेयं जयाख्यसंहिता ।

# षष्ठः पटलः

पार्वती उवाच

देव्याः पूजा समाख्याता तृतीयाया महेश्वर ।
तां कथय सुरश्रेष्ठ विस्तरेणाधुना प्रभो ! ॥ १ ॥
ज्ञानेन कर्मणा चेह देहशुद्धिर्द्विधा भवेत् ।
ज्ञानशुद्धिस्त्वया प्रोक्ता कर्मशुद्धिर्न दर्शिता ॥ २ ॥
विण्मूत्रपिच्छिलो देहः कथं देवमयो भवेत् ।
तन्मे वद महादेव प्रसादसुमुख प्रभो ॥ ३ ॥

ईश्वर उवाच

ज्ञानेन कर्मणा वापि सिद्धिर्भवति नान्यथा ।
ज्ञानयोगश्च वक्तव्यः कर्मयोगं शृणु प्रिये ॥ ४ ॥
ब्राह्मे मुहूर्ते उत्थाय साधकः स्थिरमानसः ।
पद्मासनसमासीनः प्राणायामपुरःसरम्[1] ॥ ५ ॥
ब्रह्मरन्ध्रे स्थिते पद्मे सहस्रदलशोभिते ।
विमले पूर्णचन्द्रस्य मण्डले चिन्तयेद् गुरुम् ॥ ६ ॥
शुद्धस्फटिकसङ्काशं श्वेताभरणभूषितम् ।
तादृक्प्रसूनमाल्यादिविभूषित[2]तनुं तथा ॥ ७ ॥
पद्मासनसमासीनं सर्वयोगनिषेवितम्[3] ।
वराभयकरं शान्तं त्रिनेत्रं[4] करुणामयम् ॥ ८ ॥

---

१. पुरःसरः–ख० ।

२. विभूषितं–ख० ।

३. निशेवितम्–ख० ।

४. द्विनेत्रम्–ख० ।

वामोरुगतया शक्त्या रक्तया वामपाणिना ।
धारयन्त्योत्पलं दक्षहस्तेनालिङ्गितं विभुम् ॥ ९ ॥
[1]परमानन्दसन्दोहसान्द्रमानसमीश्वरम् ।
आनन्दसान्द्ररक्ताक्षं स्मरेत् स्मितमुखाम्बुजम् ॥ १० ॥
बालाद्यं भुवनेशानी रमा चैवाथ खेचरी ।
शिवचन्द्रौ मातृकान्तं कालशक्राम्बुवह्नयः[2] ॥ ११ ॥
वायुश्च वामकर्णेन योजिता बिन्दुमालिनः[3] ।
चक्रं कृत्वाऽऽदिमं तेषु कर्णे वामाक्षि योजयेत् ॥ १२ ॥
शिवचन्द्रौ त्रिशूलाढ्यौ बिन्दुना परिमण्डितौ ।
चन्द्रशिवौ त्रिशूलाढ्यौ स्वर्गवन्तौ महेश्वरि ! ॥ १३ ॥
तस्मात् स्वगुरुनामान्ते आनन्दनाथ चालिखेत् ।
तथा शक्तिपदान्ते वै अम्बापदमतो लिखेत् ॥ १४ ॥
पादुकां पूजयामीति विधिना परिपूजयेत् ।

लं पृथिव्यात्मना ब्रह्मणा गन्धं कल्पयामि । गन्धतन्मात्रात्मने[4] घ्राणाय गन्धं गृहाण स्वाहा ।

अथाऽङ्गुष्ठकनिष्ठाभ्यां योजयेद् गन्धमुत्तमम् ॥ १५ ॥

हं आकाशात्मना सदाशिवेन पुष्पं कल्पयामि शब्दतन्मात्रात्मने श्रोत्रेन्द्रियाय पुष्पं गृहाण स्वाहा ।

अङ्गुष्ठतर्जनीयोगे पुष्पदानं तथैव हि ।

यं वाय्वात्मना ईश्वरेण धूपं कल्पयामि स्पर्शतन्मात्रात्मने त्वगिन्द्रियाय स्पर्शं गृहाण स्वाहा ।

अङ्गुष्ठमध्यमायोगं धूपदानं तथैव हि ॥ १६ ॥

---

१. सरमानन्द–ख० ।
२. शक्राद्य–ख० ।
३. नादिनः–ख० ।
४. तन्त्रे–ख० ।

वं वह्न्यात्मना रुद्रेण दीपं कल्पयामि रूपतन्मात्रात्मने चक्षुरिन्द्रियाय रूपं गृहाण स्वाहा ।

अङ्गुष्ठाभ्यां महेशानि दीपं दद्यात् समाहितः ।

वं अमृतात्मना विष्णुना नैवेद्यं कल्पयामि । रसतन्मात्रात्मने जिह्वेन्द्रियाय रसं गृहाण स्वाहा ।

अङ्गुष्ठानामिकायोगं नैवेद्यं तत्प्रतिष्ठितम् ॥ १७ ॥

एवं कुलगुरुं देवि पूजयित्वा विधानतः ।
योनिमुद्रां प्रदर्श्याथ प्रणमेत् सिद्धिहेतवे ॥ १८ ॥

नमस्ते भगवन्नाथ शिवाय गुरुरूपिणे ।
विद्यावतारसंसिध्यै स्वीकृतानेकविग्रह ॥ १९ ॥

नराय नररूपाय परमात्मैकरूपिणे ।
सर्वाज्ञानतमोभेदभानवे चिद्घनाय ते ॥ २० ॥

स्वतन्त्राय दयाक्लृप्तविग्रहाय शिवात्मने ।
परतन्त्राय भक्तानां भव्यानां भव्यरूपिणे ॥ २१ ॥

विवेकिनां विवेकाय विमर्शाय विमर्शिनाम्[1] ।
प्रकाशिनां प्रकाशाय ज्ञानिनां ज्ञानरूपिणे ॥ २२ ॥

पुरस्तात् पार्श्वयोः पृष्ठे नमस्कुर्यामुपर्यधः[2] ।
सदा मच्चित्तरूपेण विधेहि भवदासनम् ॥ २३ ॥

अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥ २४ ॥

नमोऽस्तु गुरवे तुभ्यं ब्रह्मविष्णुशिवात्मने ।
अविद्याग्रस्त-संसारसागरोत्तारहेतवे ॥ २५ ॥

---

१. अविमर्शिनाम्—क० ख० ।

२. नमस्कुर्यात्—ग० ।

गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः ।
गुरुरेव परं ज्ञानं [1]गुरुरेव परं तपः ॥ २६ ॥

अतः सर्वत्र देवेशि ! गुरुपूजा गरीयसी ।
अन्यदेवसपर्या वा चान्यदेवस्य कीर्तनम् ॥ २७ ॥

गुरुदेवं विना देवि तदग्रे क्रियते यदि ।
तदा नरकमाप्नोति सत्यमेतद् वदाम्यहम् ॥ २८ ॥

पूजिते गुरुपादे वै सर्वदेवः सुखी भवेत् ।
सर्वेषां मन्त्रतन्त्राणां पिताऽसौ यः सदाशिवः ॥ २९ ॥

यस्य भक्तिर्गुरौ नित्यं वर्तते देववत् प्रिये ।
तस्य सर्वार्थसिद्धिः स्यान्नाऽन्यथा खलु पार्वति ॥ ३० ॥

गुरुपादरजो मूर्ध्नि ध्यात्वा कर्म समारभेत् ।
ब्रह्मरन्ध्रे सहस्रारे कर्पूरधवलो गुरुः ॥ ३१ ॥

वराभयकरो नित्यो ब्रह्मरूपी सदानघः ।
जागर्त्ति परमेशानि ! निजस्थानप्रकाशकः ॥ ३२ ॥

कुलनाथं परित्यज्य ये शाक्ताः परसेविनः ।
तेषां दीक्षा च यागश्च ह्यभिचाराय कल्प्यते ॥ ३३ ॥

तस्मात् सर्वप्रयत्नेन कुलीनं गुरुमाश्रयेत् ।
कुलीनः सर्वविद्यानामधिकारीति गीयते ॥ ३४ ॥

दीक्षाप्रभुः स एवात्र सर्वतन्त्रेषु नापरः ।
गुरुमण्डलपूजां तु कुर्यात् सप्तसु पर्वसु ॥ ३५ ॥

---

१. गुरुरेव—क० ख० ।

देवी उवाच

विना योगं न सिध्येत कुण्डली च क्रमः प्रभो ।
मूलपद्मे कुण्डलिनी यावन्निद्रायिता प्रभो ॥ ३६ ॥
तावत् किञ्चिन्न सिध्येत मन्त्रयन्त्रार्चनादिकम् ।
जागर्त्ति यदि सा देवी बहुभिः पुण्यसञ्चयैः ॥ ३७ ॥
तदा प्रसादमायान्ति मन्त्रयन्त्रार्चनादयः ।
शिववद् विहरेल्लोके अष्टैश्वर्यसमन्वितः ॥ ३८ ॥
योगयोगाद्[1] भवेन्मुक्तिर्मन्त्रसिद्धिरखण्डिता ।
सिद्धे मनौ परावाप्तिरिति शास्त्रार्थनिर्णयः ॥ ३९ ॥
युक्तात्मा येन विहरेत् स्वर्गे मर्त्ये रसातले ।
जीवन्मुक्तश्च देहान्ते परं निर्वाणमाप्नुयात् ॥
तत् कात्स्न्र्येन परं योगं कथयस्व मयीश्वर ॥ ४० ॥

ईश्वर उवाच

कथयामि तव स्नेहाद् योगयोग्याऽसि पार्वति ।
संसारोत्तारणं मुक्तिर्योगशब्देन कथ्यते ॥ ४१ ॥
योगो हि ललिता देवी निश्चितं विद्धि पार्वति ।
न योगो [2]नभसः पृष्ठे न भूमौ न रसातले ॥ ४२ ॥
ऐक्यं जीवात्मनश्चाहुर्योगं योगविशारदाः ।
कामक्रोधलोभमोहमदमात्सर्यसंज्ञकाः ॥ ४३ ॥
तत्समूहाः षडाख्याता योगविघ्नकरा इमे ।
योगज्ञैरभिर्जित्वा[3] तान् योगिनो योगमा[4]प्नुयुः ॥ ४४ ॥

---

१. योगयोगेद्भवेत्–ग० ।
२. नभः–ख० ।
३. भित्वा–ग० ।
४. साधने–ग० ।

[१]यमं नियममासनप्राणायामौ ततः परम् ।
प्रत्याहारं धारणाख्यं ध्यानं सार्द्धं समाधिना ॥ ४५ ॥

अष्टाङ्गान्याहुरेतानि योगिनो योगसाधने ।
अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयाऽऽर्जवम् ॥ ४६ ॥

क्षमाधृतिमिताहारशौचं चेति यमा दश ।
तपः सन्तोष[२] आस्तिक्यं दानं देवस्य पूजनम् ॥ ४७ ॥

सिद्धान्तश्रवणं चैव ह्रीर्मतिश्च जपो हुतम् ।
दशैते नियमाः प्रोक्ता योगशास्त्रविशारदैः ॥ ४८ ॥

पद्मासनं स्वस्तिकाख्यं भद्रं वज्रासनं तथा ।
वीरासनमिति प्रोक्तं क्रमादासनपञ्चकम् ॥ ४९ ॥

ऊर्वोरुपरि विन्यस्य सम्यक् पादतले उभे ।
अङ्गुष्ठौ च निबध्नीयाद्धस्ताभ्यां व्युत्क्रमात् ततः ॥ ५० ॥

पद्मासनमिति प्रोक्तं योगिनां हृदयङ्गमम् ।
जानूर्वोरन्तरे सम्यक् कृत्वा पादतले उभे ॥ ५१ ॥

[३]ऋजुकायो वसेत् योगी स्वस्तिकं तत् प्रचक्षते ।
सीमन्याः पार्श्वयोर्न्यस्येद् गुल्फयुग्मं सुनिश्चलम् ॥ ५२ ॥

वृषणाधः पादपार्ष्णि पाणिभ्यां परि[४]बन्धयेत् ।
भद्रासनं समुद्दिष्टं योगिभिः परिकीर्त्तितम् ॥ ५३ ॥

ऊर्वोः पादौ क्रमान्न्यस्य जान्वोः प्रत्यङ्मुखाङ्गुलोः ।
करौ निबध्यादाख्यातं वज्रासनमनुत्तमम् ॥ ५४ ॥

---

१. 'यम्'इत्यारभ्य 'योगसाधन' इत्येतदन्तं नास्ति–ग० ।

२. सन्तोषं–ग० ।

३. कारो–ख० ।

४. परिपूजितम्–ग० ।

एकं पादमधः कृत्वा विन्यस्योरौ [1]तथेतरम् ।
ऋजुकायो वसेद् योगी वीरासनमितीरितम् ॥ ५५ ॥

इडया कर्षयेद् वायुं बाह्यं षोडशमात्रया ।
धारयेत् पूरितं योगी चतुःषष्ट्या च मात्रया ॥ ५६ ॥

सुषुम्नामध्यगं सम्यग् द्वात्रिंशन्मात्रया शनैः ।
नाड्या पिङ्गलया चैवं रेचयेद् योगवित्तमः ॥ ५७ ॥

प्राणायाममिमं प्राहुर्योगशास्त्रविशारदाः ।
भूयो भूयः क्रमात् तस्य [2]व्यत्यासेन समाचरेत् ॥ ५८ ॥

मात्रावृद्धिक्रमेणैव सम्यग् द्वादश षोडश ।
जपध्यानादिभिर्युक्तं सगर्भं तद् विदुर्बुधाः ॥ ५९ ॥

तदुपेतं[3] विगर्भं च प्राणायामं परं विदुः ।
क्रमादभ्यसतः पुंसो देहे स्वेदोद्गमोऽधमः ॥ ६० ॥

मध्यमः [4]कल्यसंयुक्तो भूमित्यागः परो मतः ।
उत्तमस्य गुणावाप्तिर्यच्छीलनकमिष्यते ॥ ६१ ॥

इन्द्रियाणां विचरतां विषयेषु निराकुलम् ।
बलादाहरणं तेभ्यः प्रत्याहारोऽयमीरितः ॥ ६२ ॥

अङ्गुष्ठगुल्फजानुषु सीमनीलिङ्गनाभिषु ।
हृद्ग्रीवाकण्ठदेशेषु लम्बिकायां ततो नसि ॥ ६३ ॥

भ्रूमध्ये स्तनके मूर्ध्नि द्वादशान्ते यथाविधि ।
धारणं प्राणमरुतोर्धारणेति निगद्यते ॥ ६४ ॥

---

१. अथेतरम्–ख० ।

२. वात्यासेन–ख० ।

३. तदुपेतं–क० ख० ।

४. कल्प–क० ख० ।

समाहितेन मनसा चैतन्यान्तरवर्त्तिना ।
आत्मन्यभीष्टदेवानां ध्यानं ध्यानमिहोच्यते ॥ ६५ ॥

[1]समत्वभावना नित्यं जीवात्मपरमात्मनोः ।
समाधिमाहुर्मुनयः प्रोक्तमष्टाङ्गलक्षणम् ॥ ६६ ॥

इति ते कथितं देवि ! कामादिषट्कनाशनम् ।
अथ ते कथयिष्यामि मन्त्रात्मयोगमुत्तमम् ।
दुर्लभं विषयासक्तैः सुलभं संयमात्मनाम् ॥ ६७ ॥

समाधिः संविदुत्पत्तिः परजीवैकतां प्रति ।
यदि जीवः पराद् भिन्नः कार्यतामेति सुव्रते ॥ ६८ ॥

[2]सुचित्तं च [3]प्रसह्यैव घटवत् परमेश्वरि ।
विनाशित्वं भयं चैव द्वितयाविति ते श्रुतिः ॥ ६९ ॥

नित्यः सर्वगतो ह्यात्मा कूटस्थो दोषवर्जितः ।
एकः सन् भिद्यते भ्रान्त्या मायया न स्वरूपतः ॥ ७० ॥

तस्माद् द्वैतं न मे चाऽस्ति न प्रपञ्चो न संसृतिः ।
यथाकाशो घटाकाशो महाकाश इतीरितः ॥ ७१ ॥

तथा भ्रान्तिर्द्विधा प्रोक्ता ह्यात्मा जीवेश्वरात्मना ।
नाहं देहो न च प्राणो नेन्द्रियाणि तथैव च ॥ ७२ ॥

न मनो नैव बुद्धिश्च नैव चित्तमहङ्कृतिः ।
नाहं पृथ्वी न सलिलं न च वह्निस्तथाऽनिलः ॥ ७३ ॥

न चाकाशो न शब्दश्च न च स्पर्शस्तथा रसः ।
न हि गन्धो न रूपं च न मायाऽहं न संसृतिः ॥ ७४ ॥

---

१. ममत्व–क० ख० ।
२. स्वचित्तञ्च–क० ख० ।
३. प्रसज्यैव–क० ख० ।

सदा साक्षिस्वरूपाद् वा ब्रह्म चैवास्मि केवलः ।
[1]सोऽहं ब्रह्म न संसारी न मत्तोऽन्यत् कदाचन ॥ ७५ ॥

इति विद्यात् स्वमात्मानं समाधिः परिकीर्तितः ।
समाधौ [2]सुखरूपोऽसौ तुरीयस्वर एव हि ॥ ७६ ॥

तुरीयांशः पराशक्तिर्बिन्द्वात्मा ब्रह्म केवलम् ।
प्रज्ञात्मानं[3] वदन्त्येके [4]एकेऽपि ब्रह्म केवलम् ॥ ७७ ॥

जीवमीश्वरभावेन विद्यात् सोऽहमिति ध्रुवम् ।
यथा [5]फेनतरङ्गादि समुद्रादुत्थितं पुनः ॥ ७८ ॥

समुद्रे लीयते यद्वज्जगदात्मनि लीयते ।
यस्यैवं परमात्मा स[6] पृथग्भूतः प्रकाशितः ॥ ७९ ॥

स याति परमं भावं स्वयं साक्षात् परामृतम् ।
यदा मनसि चैतन्यं भाति सर्वात्मकं सदा ॥ ८० ॥

योगिनो व्यवधानेन तदा सम्पद्यते स्वयम् ।
यदा भूतानि सर्वाणि स्वात्मन्येवाभिपश्यति ॥ ८१ ॥

सर्वभूतेषु चात्मानं ब्रह्म सम्पद्यते तदा[7] ।
यदा सर्वाणि भूतानि समाधिस्थो न पश्यति ॥ ८२ ॥

एकीभूतः परेणासौ तदा भवति केवलः ।
तदा जन्मजरादुःखव्याधीनामेव भेषजम् ॥ ८३ ॥

---

१. सोऽयं–ख० ।
२. स्वस्वरूपोऽसौ–क० ख० ।
३. प्रज्ञात्मा न–क० ख० ।
४. एकोऽपि–ग० ।
५. फेण–क० ख० ।
६. सम्पृ–ग० ।
७. सदा–क० ख० ।

केवलं ब्रह्मविज्ञानं जायतेऽसौ तदा शिवः ।
तस्माद् विज्ञानतो मुक्तिर्नान्यथा भवकोटिभिः ॥ ८४ ॥

मन्त्रौषधिबलैर्यद्वज्जीर्यते भक्षितं विषम् ।
तद्वत् सर्वाणि कर्माणि जीर्यन्ति ज्ञानिनः क्षणात् ॥ ८५ ॥

देहाभिमाने गलिते विदिते परमात्मनि ।
यत्र यत्र मनो याति तत्र तत्र समाधयः ॥ ८६ ॥

अहं ब्रह्म न चान्योऽस्मि मुक्तोऽहमिति भावयेत् ।
सच्चिदानन्दरूपोऽहं नित्यं मुक्तस्वभाववान् ॥ ८७ ॥

एवं समाधियुक्तो यः समाधये[1] स कल्प्यते ।
सदाशिवोऽहमित्युक्त्वा स्वेच्छया विहरेद् यतिः ॥ ८८ ॥

लिप्यते न स पापेन बध्यते न च कर्मणा ।
[2]यथाऽग्निविद्रुतं स्वर्णं मालिन्यं दहति क्षणात् ॥ ८९ ॥

तथा ब्रह्मार्पितात्माऽसौ सर्वकर्माणि दह्यति ।
आत्मस्थां देवतां त्यक्त्वा बहिर्देवं विचिन्वते ॥ ९० ॥

करस्थं कौस्तुभं त्यक्त्वा भ्रमते काचतृष्णया ।
न योगेन न यन्त्रेण न मन्त्रेण विना हि सः ॥ ९१ ॥

द्वयोरभ्यासयोगेन ब्रह्मसंसिद्धिकारणम् ।
तमःपरिवृते गेहे घटो दीपेन दृश्यते ॥ ९२ ॥

एवं मायावृतो ह्यात्मा मनुना गोचरीकृतः ।
एतत् ते कथितं देवि ! ब्रह्मज्ञानमिदं महत् ॥ ९३ ॥

विज्ञाय गुरुतो जप्त्वा संसारसागरं तरेत् ।
यत्र यत्र मृतश्चायं गङ्गायां श्वपचालये ॥ ९४ ॥

---

१. स समाधये–ग० ।
२. यथा गिरिद्रुतं–ख० ।

ब्रह्मविद् ब्रह्मभूयाय कल्पते नान्यथा प्रिये ।
विश्वं शरीरमित्युक्तं पञ्चभूतात्मकं प्रिये ॥ ९५ ॥

चन्द्रसूर्याग्नितेजोभिर्जीवब्रह्मैक्यरूपकम् ।
तिस्रः कोट्यस्तदर्द्धेन शरीरे नाड्यो मताः[1] ॥ ९६ ॥

तासु मुख्या दश प्रोक्तास्तासु तिस्रो व्यवस्थिताः ।
प्रधाना मेरुदण्डेऽत्र चन्द्रसूर्याग्निरूपिणी ॥ ९७ ॥

इडा वामे स्थिता नाडी शुक्ला तु चन्द्ररूपिणी ।
शक्तिरूपा तु सा नाडी साक्षादमृतविग्रहा ॥ ९८ ॥

पिङ्गलाख्या च या दक्षे पुंरूपा सूर्यविग्रहा ।
दाडिमीकुसुमप्रख्या विषाख्या चापरा मता ॥ ९९ ॥

मेरुमध्यस्थिता या तु मूलादाब्रह्मरन्ध्रगा ।
सर्वतेजोमयी सा तु सुषुम्ना वह्निरूपिणी ॥१००॥

तस्या मध्ये विचित्राख्या अमृतस्राविणी शुभा ।
सर्वदेवमयी सा तु योगिनां हृदयङ्गमा ॥१०१॥

विसर्गाद् बिन्दुपर्यन्तं व्याप्य तिष्ठति तत्त्वतः ।
मूलाधारे त्रिपुराख्ये इच्छाज्ञानक्रियात्मके ॥१०२॥

मध्ये स्वयम्भुलिङ्गं तु कोटिसूर्य[2]समप्रभम् ।
तदूर्ध्वे तत्तुरीयं तु ध्यायेद् बन्धूकसन्निभम् ॥ १०३॥

तदूर्ध्वे तच्छिखाकारा कुण्डली रक्तविग्रहा ।
सा एव हि परा सूक्ष्मा महात्रिपुरसुन्दरी ॥१०४॥

चैतन्यं सर्वभूतानां शब्दब्रह्म यदुच्यते ।
तत्प्राप्य कुण्डलीरूपं प्राणिनां देहमध्यगम् ॥१०५॥

---

१. नताः–ख० ।
२. सूर्य–ख० ।

सर्वतेजोमयं तत्तु सच्चिदानन्दमव्ययम् ।
तद्बाह्ये हेमवर्णाभं रसवर्णं चतुर्दलम् ॥१०६॥

द्रुतहेमसमप्रख्यं पद्मं तत्र विभावयेत् ।
तदूर्ध्वेऽग्निसमप्रख्यं[1] षड्दलं हीरकप्रभम् ॥१०७॥

वादिलान्तषड्वर्णेन युक्तं स्वाधिष्ठानसंज्ञकम् ।
मूलमाधारषट्कानां मूलाधारं ततो विदुः ॥१०८॥

स्वशब्देन परं लिङ्गं स्वाधिष्ठानं ततो विदुः ।
तदूर्ध्वे नाभिदेशे तु [2]मणिपूरं महत्पुरम् ॥१०९॥

हेमाभं वैद्युताभं च बहुतेजोमयं तथा ।
मणिवद् भिन्नं तत् पद्मं[3] मणिपूरं ततो विदुः ॥११०॥

दशभिश्च दलैर्युक्तं डादिफान्ताक्षरान्वितम् ।
विष्णुनाऽधिष्ठितं पद्मं विश्वालोकनकारणम् ॥१११॥

तदूर्ध्वेऽनाहतं पद्ममुद्यदादित्यसन्निभम् ।
कादिठान्तं दलैरर्कपत्रैश्च समलङ्कृतम् ॥११२॥

तन्मध्ये बाणलिङ्गं तु सूर्यायुतसमप्रभम् ।
शब्दब्रह्ममयः शब्दो [4]मोहितस्तत्र दृश्यते ॥११३॥

तेनाहताख्यं तत्पद्मं योगिभिः परिकीर्त्यते ।
आनन्दसदनं तत्तु पुरुषाधिष्ठितं परम् ॥११४॥

तदूर्ध्वे तु विशुद्धाख्यं दलैः षोडशभिर्युतम् ।
स्वरैः षोडशकैर्युक्तं धूम्रवर्णं महत्प्रभम् ॥११५॥

---

१. प्रोक्षं–ख० ।
२. नाल–ग० ।
३. पूरं–क० ख० ।
४. अनाहतः–क० ख० ।

विशुद्धिं तनुते यस्माज्जीवस्य हंसलोकनात् ।
विशुद्धं पद्ममाख्यातम् आकाशाख्यं महाद्भुतम् ॥११६॥
आज्ञाचक्रं तदूर्ध्वे तु आत्मनाऽधिष्ठितं परम् ।
हक्षादिद्विदलं पद्मं चन्द्रेणाऽधिष्ठितं तु तत् ॥११७॥
आज्ञासंक्रमणं तत्र गुरोराज्ञेति कीर्तितम् ।
कैलासाख्यं तदूर्ध्वे तु [1]रोधिनी तु तदूर्ध्वत. ॥११८॥
सहस्राराम्बुजं देवि ! बिन्दुस्थानं तदूर्ध्वतः ।
आदौ पूरकयोगेन स्वाधारे योजयेन्मनः ॥११९॥
[2]गुदमेढ्रान्तरे शक्तिं तामाकुञ्च्य प्रबोधयेत् ।
लिङ्गभेदक्रमेणैव बिन्दुस्थानं समानयेत् ॥१२०॥
शम्भुना तां परां शक्तिमेकीभावं विचिन्तयेत् ।
तदुद्भवामृतं वक्त्रद्रुतं लाक्षारसोपमम् ॥१२१॥
पाययित्वा च तां शक्तिं [3]पराख्यां योगसिद्धिदाम् ।
षट्चक्रदेवतास्तत्र सन्तर्प्याऽमृतधारया ॥१२२॥
आनयेत् तेन मार्गेण मूलाधारं पुनः सुधीः ।
यातायातक्रमेणैव तत्र कुर्यान्मनोलयम् ॥१२३॥
एवमभ्यास[भ्यस्य]मानन्तु अहन्यहनि पार्वति ।
जरामरणदुःखाद्यैर्मुच्यते भवबन्धनैः ।
इत्युक्तं परमे योगं योनिमुद्राप्रबन्धनम् ॥१२४॥
अथापरं प्रवक्ष्यामि समाधिं भवनाशनम् ।
अथवा परमेशानि ! यथोक्तध्यानयोगतः ॥१२५॥

---

१. बोधिनी–क० ख० ।
२. गुद मेढ्रान्तरे–क० ख० ।
३. परोक्षां–क० ख० ।

हृत्पद्मकलिकामध्ये ध्यायेद् देवीमनन्यधीः ।
त्रिपुरात्मकमात्मानं भावयेन्न्यस्तविग्रहः ॥१२६॥
ऐक्यं सम्भावयेन्नित्यं स्वगुरुदेवतात्मनाम् ।
अहं देवो न चान्योऽस्मि ब्रह्मैवाहं न शोकभाक् ॥१२७॥
सच्चिदानन्दरूपोऽहं शुद्धिबुद्धिस्वभाववान् ।
प्रणवं पूर्वमुद्धृत्य तदिति परतस्ततः ॥१२८॥
सदिति तु समालोच्य कर्म कुर्याद् विचक्षणः ।
स्मरणात् कर्मणामाद्यं ब्रह्मभूयाय कल्पते ॥१२९॥
सर्वमङ्गलसम्पन्नो बहिर्निर्गत्य साधकः ।
[1]त्यक्त्वा मूत्रपुरीषे च करपादौ विशोधयेत् ॥१३०॥
मुखं प्रक्षाल्य देवेशि ! नासारन्ध्रद्वयं ततः ।
नेत्राञ्जनं विधायैव शुद्धस्थानं समाश्रयेत् ॥१३१॥
नेत्राञ्जनमकृत्वैव संपश्येत् सौरमण्डलम् ।
जन्मार्जितफलं नश्येत् का कथा तस्य दुर्मतेः ॥१३२॥
त्रितत्त्वेन त्रिधाऽऽचम्य दन्तधावनमाचरेत् ।
दन्तका[2]ष्ठमखादित्वा पूजयेद् यस्तु देवताम् ॥१३३॥
तत्पूजा विफला देवि मृते च नरकं व्रजेत् ।
क्लीमात्मकं कामदेवं सर्वान्ते जनमालिखेत् ॥१३४॥
प्रियाय हृदयान्तोऽयं मनुर्दन्तविशुद्धये ।
चतुर्दशस्वरैर्वक्त्रं क्षालयेच्छुद्धिहेतवे ॥१३५॥

इति गन्धर्वतन्त्रे षष्ठः पटलः ॥ ६ ॥



१. त्यक्त–क० ख० ।
२. काठ–क० ख० ।

# कुण्डलिनीस्तोत्रम्



श्रीशिव उवाच—

ॐ तडित्कोटिप्रभदीप्ति-चन्द्रकोटि सुशीतलाम्
सार्द्धत्रिवलयाकार- स्वयम्भूलिङ्गवेष्टिताम्।। १।।
उत्थापयेन्महादेवीं महारक्तां मनोन्मनीम्।
श्वासोच्छ्रासादुद्गच्छन्तीं द्वादशाङ्गुलरूपिणीम्।। २।।
योगिनीं खेचरीं वायुरूपां मूलाम्बुजस्थिताम्।
चातुर्वर्णस्वरूपां तां वकारादि- समस्तकाम्।। ३।।
कोटि कोटि- सहस्रार्क-किरणोऽलमोहिनीम्।
महासूक्ष्मपथप्रान्त-रान्तरान्तर-गामिनीम्।। ४।।
त्रैलोक्यरक्षितां वाक्य-देवताशब्दरूपिणीम्।
महाबुद्धिप्रदां देवीं सहस्रदलगामिनीम्।। ५।।
महासूक्ष्मपथे तेजोमयीं सत्यस्वरूपिणीम्।
कालरूपां ब्रह्मरूपां सर्वत्र सर्वविन्मयीम्।। ६।।
जन्मोद्धारिणी रक्षिणीह तरुणी वेदादिबीजादिना
नित्यं चेतसि भाव्यते भुवि कदा मद्वाक्यसञ्चारिणी।
मां पातु प्रियदा सदा सविपदं संख्यातय श्रीधरे
धात्री त्वं स्वयमादिदेववनिता दीनातिदीनं परम्।। ७।।
रक्ताभामृत चन्द्रिका लिपिमयी सर्पाकृतिर्निद्रिता
जग्रद्धर्म-समाश्रिता भगवती त्वं वांशलोकाश्रया।
मांसोद्गन्धक-दोषजालजड़ितं वेदादिकार्यान्वितं
संपाल्यामल - कोटिचन्द्रकिरणे नित्यं शरीरं कुरु।। ८।।

सिध्यर्थी निजदोषवित् खलगति-र्व्याधीयते विद्यमा
कुण्डला कुलमार्गयुक्तनगरी सायाह्नमाज्ञाश्रया।
यद्येवं भजति प्रभात समये मध्याह्नकालेऽथवा
नित्यं यः कुलकुण्डली-निजपदाम्भोजं स सिद्धो
भवेत्।। ९।।

यो वाकाश्चतुर्द्दलेऽतिविमले वाञ्छाफलोन्मूलके
नित्यं सम्प्रति नित्यदेशघटिता सङ्केतिता भाविता।
विद्या कुन्तलमालिनी स्वजननी सारक्रिया भाव्येत,
यै-स्तैः सिद्धकुलोद्भवैः प्रणतिभिः कीर्त्या परं
शम्भूभिः।। १०।।

वाचा शङ्करमोहिनी त्रिवलयाच्छायापटोद्गामिनी
संसारादिमहासुखप्रहननी नेत्रस्थिता योगिनी।
सर्वाग्रन्थिविनोदिनी सुभुजगा सूक्ष्मातिसूक्ष्मा परा
ब्रह्मज्ञानबिनोदिनी कुलकुठाराघातिनी भाव्यते।। ११।।

वन्देश्रीकुलकुण्डलीं त्रिवलिभिः सार्द्धं स्वयम्भूप्रियां
प्रवेष्टयासुरसारचित्तचपला वाला वला निष्फला।
या देवी परिभाति वेदवदना सम्भावना भावना
तामिष्टां शिरसि स्वयम्भुवनितां सम्भावयामि
क्रियाम्।। १२।।

वाणी कोटिमृदङ्गनादनदना निःश्रेणिकोटिध्वनिः
प्राणेशी रसधाममूलक मलोल्लासैकपूर्णानना।
आषाढ़ोद्भवमेघराजनियुतध्वान्तान्तरस्थायिनी
माता सा परिपातु सूक्ष्मपथगे मां योगिनं
शङ्करु।। १३।।

त्वामाश्रित्य नराव्रजन्ति सहसा बैकुण्ठकैलासयो-
रानन्दैक विलासिनीं शशिपदानन्दाननाकारिणीम्।
मातः श्रीकुलकुण्डलि प्रियकले काले कुलोद्दीपने
भूतस्थां प्रणमामि रुद्रवनितां मामुद्धरत्वं
पथि।। १४।।

कुण्डलीशक्तिमार्गस्थं स्तोत्राष्टकं महाफलम्।
यः पठेत् प्रातरुत्थाय स योगी भवति
ध्रुवम्।। १५।।

क्षणादेव हि पाठेन कविनाथो भवेदिह।
परत्र कुण्डलीयोगाद् ब्रह्मलीनो भवेन्महान्।। १६।।

इति ते कथितं नाथ कुण्डलीकोमलस्तवम्।
एतत्स्तोत्र प्रसादेन देवेषु गीष्पतिगुरुः ।। १७।।

सर्वे देवाः सिद्धियुक्ता अस्याः स्तोत्रप्रसादतः।
द्वापरार्द्धचिरंजीवी ब्रह्मा सर्वसुरेश्वः।। १८।।

त्वञ्चापि मम सन्निध्ये स्थितो भगवतीपतिः।
मां बिद्धि परमां शक्तिं स्थूलसूक्ष्मस्वरूपिणीम्।। १९।।

सर्वप्रकाशकरणीं विन्ध्यपर्वतवासिनीम्।
हिमालयसुतां सिद्धां सिद्धमन्त्रस्वरूपिणीम्।। २०।।

वेदान्तशक्तितन्त्रस्थां कुलतन्त्रार्थगामिनीम्।
रुद्रयामलमध्यस्थां स्थितिस्थायक भावनाम्।। २१।।

पञ्चमुद्रास्वरूपाञ्च शक्तियामलमलिनीम्।
रत्नमालावलाकाढ्यां चन्द्रसूर्यप्रकाशिनीम्।। २२।।

सर्वभूतमहाबुद्धीदायिनीं दानवापहाम्।
स्थित्युत्पत्तिलयकरीं करुणासागरस्थिताम्।। २३।।
महामोहनिवासाढ्यां दामोदरशरीरगाम्।
छत्रचामररत्नाढ्यांमहाशलकरां पराम्।। २४।।
ज्ञानदां बुद्धिदां विद्यां रत्नमालाकलापदाम्।
सर्वतेजः स्वरूपां मामनन्त कोटि विग्रहाम्।। २५।।
दरिद्र धनदां लक्ष्मीं नारायणमनोरमाम्।
सदा भावय शम्भो त्वं योगनायकपण्डित।। २६।।
इति श्रीरुद्रयामले उत्तरखण्डे कुण्डलिनीस्तोत्रं समाप्तम्।



# प्रकीर्णांशः

अथ योनिमुद्रालक्षणम्, तदुक्तं-यन्त्रमन्त्रावल्याम्।

देव्युवाच—

योनिमुद्रा च कथिता यत्नेता न प्रकाशिता।
साम्प्रतं श्रोतुमिच्छामि मुद्रायाश्चैव लक्षणम्।।
योनिमुद्रा च किं नाम फलं तस्याश्च किं प्रभो[1]।
विधानं किं स्वरूपञ्च कथयस्व जगत् प्रभो !।।

श्री शिव उवाच—

शृणु देवि ! महाभागे ! मुद्रां ज्ञानस्वरूपिणीम्।
यां ज्ञात्वा साधकाः सर्वे ज्ञानपीयूषसागरे।।
निमज्जन्ति कुलैः सार्द्धं सकृदभ्यासमात्रतः।।
षण्णवत्यङ्गुलायामं शवीरमुभयात्मकम्।।
गुद-ध्वजान्तरे कन्दमुत्सेधाद् द्वयङ्गुलं प्रिये !।
तस्य द्विगुणविस्तारं वृत्तरूपेण शोभितम्।।
नाड्यस्तत्र समुत्पन्ना मुख्यास्तिस्तस्तु भाविनि !।
इड़ा वामे स्थिता नाड़ी पिङ्गला दक्षिणे स्थिता।।
तयोर्मध्यगता नाड़ी सुषुम्ना वंशमाश्रिता[2]।
पादाङ्गुष्ठद्वयं याता शिखाम्यां शिरसा पुनाः।।
ब्रह्मस्थानं समापन्ना सोमसूर्याग्निरूपिणी।
तस्या मध्यगता नाड़ी चित्राख्या योगिवल्लभा।
ब्रह्मरन्ध्रं विदुस्तस्यां[3] पद्मसूत्रनिभं परम्।
आधारांश्च विदुस्तत्र मतभेदादनेकधा।।
दिवामार्गमिदम् प्राहुरमृतानन्दकारणम्।
इड़ायां सञ्चरेच्चन्द्रः पिङ्गलायां दिवाकरः।।

---

१ कीदृशम्। २ पृष्ठवंशगा। ३ तन्त्र।

ज्ञातौ योगनिदानज्ञैः सुषुम्नायाञ्च तावुभौ[१]।
आधारकन्दमध्यस्थं त्रिकोणमतिसुन्दरम्।।
त्रिकोणमध्ये देवेशि ! कामबीजञ्च सुन्दरम्।
कामबीजोद्भवन्तत्र स्वयम्भूलिङ्गमुत्तमम्।।
तत्र विद्युल्लताकारा कुण्डली परदेवता।
परिस्फुरति सर्वात्मा सुप्ताहि-सदृशाकृतिः।।
विभर्ति कुण्डलीशक्तिरात्मानं हंसमाश्रिता।
हंसः प्राणाश्रयो नित्यं प्राणा नाड़ी-समाश्रयाः।।
आधारादुद्गतो वायुर्यथावत् सर्वदेहिनाम्।
देहं व्याप्य स्वनाड़ीभिः प्रयाणं कुरुते वहिः।।
द्वादशाङ्गुलमानेन तस्मात् प्राणः समीरितः।
रम्ये मृद्वासने शुद्धे पटाजिनकुशोत्तरे।।
बद्ध्वैकमासनं योगी योगमार्गपरो भवेत्।
इड़याकर्षये द्वायुं वाह्यं तयैव मुद्रया।।
धारयेत् पूरितं तेन उभाम्यां कुम्भकेन च।
नाड्या पिङ्गलया चैनं रेचयेच्च शनैः शनैः।।
भूयो भूयः क्रमात्तस्य प्रभ्यासेन समाचरेत्।
एवमभ्यस्यतः पुंसो देहे स्वेदोद्गमोऽधमः।।
मध्यम ........ कम्पनं युक्ता भूमिदेशात् परो मतः।
एवं क्रमेण नाड़ीनां शोधनं कल्पयेद्बुधः।।
ततो गुह्ये वामपार्ष्णि हे देवि ! विनिवेशयेत्।
तस्योपरि महादेवि ! दक्षपार्ष्णिं निवेशयेत्।।
ऋजुकायाशिरोग्रीवः काकचञ्चुपुटेन च।
आकारेण बहिर्वायुं जाठरं परिपूरयेत्।।
अङ्गुलीभिर्दृढ़ं बद्धा कारणानि समाहितः।
अङ्गुष्ठाभ्यामुभे श्रोते तर्जनीभ्यां विलोचने।।

---

१ शृणु सर्वे विधानञ्च सुषुम्नायाञ्च तावुभौ।

नासारन्ध्रे च मध्याभ्यामन्याभिर्वदनं दृढ़म्।
बद्धात्मप्राणमनसामेकत्वं समनुस्मरन्।।
धारयेन्मारुतं सम्यक् योगोऽयं योगिवल्लभः।
नादः स जायते सम्यक् क्रमादभ्यस्यतः शनैः।।
मत्त-भृङ्गावली-गीत-सदृशं प्रथमो ध्वनिः।
वंशीकांस्यानिलापूर्ण- वंशध्वनिनिभोऽपरः।।
घण्टारवसमः पश्चात् घनमेघस्वनोऽपरः।
प्रसुप्त-भुजगाकारां कुण्डलीं पवदेवताम्।।
सुषुम्नामुखमाविश्यावेष्टितां परिचिन्तयेत्।
कन्दावस्थित-योन्यान्तु क्रमन्तं रक्तवर्णकम्।।
कामं शिवस्वरूपञ्च चिन्तयेत् साधकोत्तमः।
तस्योपरि पुनर्ध्यायेत् चित्कलां हंसमाश्रिताम्।।
प्रदीपकलिकाकारां कुण्डल्याभेदरूपिणीम्।
चित्कलया कुण्डलिनीं तेजोरूपां जगन्मयीम्।।
हंसेन च महादेवी ब्रह्मरन्ध्रं नयेत् सुधीः।
षट्चक्र-सन्धि-मार्गेण सुषुम्ना-वर्त्मना तथा।।
ऊद्ध्वं नयेत् कुण्डलिनीं जीवात्म-सहिता पराम्।
आधारोस्थित-मारुतान् ब्रह्मरन्ध्रे शनैःशनैः।।
तेनैव मरुता देवि ! पद्मान्यूर्ध्व मुखानि च ।
मारयेत् साधको योगी ज्ञानमात्रेण चेतसा।।
आधारकन्दे पद्मं वै वेदपत्रं सुशोभनम्।
स्वाधिष्ठाने लिङ्गमूले षड्दलं परिचिन्तयेत्।।
मणिपूरे नाभिदेशे दिग्दलं सुरसुन्दरि !।
अनाहते हृदि ध्यायेत् द्वादशारं सुलक्षणम्।।
विशुद्धाख्ये महाचक्रे षोडशच्छदपङ्कजम्।

